मुपैति, आध्मातबस्तिरिवाततश्च शोफो भवति, त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासा भक्तारुचिश्च पच्यमानलिङ्गं, वेदनोपशान्तिः पाण्डुताऽल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्याऽवपीडिते प्रत्युन्नमनं, बस्ताविवोदकसंचरणं पूयस्य प्रपीडयत्येकमन्तमन्ते चावपीडिते, मुहुर्मुहुस्तोदः कण्डूरुन्नतता[1] व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्कलिङ्गम् । कफजेषु तु रोगेषु गम्भीरगतित्वाद्[2]भिघातजेषु वा केषुचिदसमस्तं पक्कलक्षणं दृष्ट्वा पक्कमपक्कमिति मन्यमानो भिषङ्मोहमुपैति; तत्र हि त्वक्सवर्णता शीतशोफता स्थैर्यमल्परुजताऽश्मवच्च घनता, न तत्र मोहमुपेयादिति ॥ ५ ॥

भवन्ति चात्र—

आमं विपच्यमानं च सम्यक् पक्कं च यो भिषक् ॥
जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ ६ ॥

[3]वातादृते नास्ति रुजा न पाकः पित्तादृते नास्ति कफाच्च पूयः ॥
तस्मात् समस्तान् परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः ७
कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य ॥
पचत्यतः शोणितमेव पाको मतोऽपरेषां विदुषां द्वितीयः[4] ॥ ८ ॥

तत्र, आमच्छेदे मांससिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति । स यदा भयमोहाभ्यां पक्कमप्यपक्कमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः

१ 'कण्डूरनुन्नतता' इति पा० । २ 'गम्भीरानुगतत्वात्' इति ता. । ३ 'नर्ते रुजा वातमृते च पित्तं पाक कफ चापि विना न पूय· । तस्माद्धि पाकं परिपाककाले प्रयान्ति शोफास्त्रिभिरेव दोषै·' इति ता. । ४ अस्याग्रे ताडपत्रपुस्तके 'द्रव्याणां चन्दनादीनां दग्धानां श्वेतता यथा । तद्वत् पित्तोष्मणा दग्ध रक्त पूयमिहोच्यते' इत्यधिकः पाठ उपलभ्यते ।

स्वमाश्रयमवदार्योत्सङ्गं महान्तमवकाशं कृत्वा नाडीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति ॥ ९ ॥

भवति चात्र—

यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ १० ॥
प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदातुरं भिषक् ॥
मद्यपं पाययेन्मद्यं तीक्ष्णं यो वेदनाऽसहः ॥ ११ ॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥
तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्मणि ॥ १२ ॥
प्राणो ह्याभ्यन्तरो नृणां बाह्यप्राणगुणान्वितः ॥
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥ १३ ॥

अल्पो महान् वा क्रियया विना यः समुच्छ्रितः पाकमुपैति शोफः ॥
विशालमूलो विषमं विदग्धः स कृच्छ्रतां यात्यवगाढदोष. ॥ १४ ॥
आलेपविस्रावणशोधनैस्तु सम्यक् प्रयुक्तैर्यदि नोपशाम्येत् ॥
पच्येत शीघ्रं सममल्पमूलः स पिण्डितश्चोपरि चोन्नतः स्यात् १५
कक्षं समासाद्य यथैव वह्निर्वाय्वीरितः संदहति प्रसह्य ॥
तथैव पूयोऽप्यविनिःसृतो हि मांसं सिराः स्नायु च खादतीह १६

आदौ विम्लापनं कुर्याद्द्वितीयमवसेचनम् ॥
तृतीयमुपनाहं तु चतुर्थीं पाटनक्रियाम् ॥ १७ ॥
पञ्चमं शोधनं कुर्यात् षष्ठं रोपणमिष्यते ॥
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ १८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने आमपक्वैषणीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

१ 'ऽवेदनासहः' इति पा० ।

# अष्टादशोऽध्यायः ।

अथातो व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

आलेप आद्य उपक्रमः, एष सर्वशोफानां सामान्यः प्रधानतमश्च, तं च प्रतिरोगं वक्ष्यामः; ततो बन्धः प्रधानं, तेन शुद्धिर्व्रणरोपणमस्थिसंधिस्थैर्यं च ॥ ३ ॥

तत्र प्रतिलोममालिम्पेत् । प्रतिलोमे हि सम्यगौषधमवतिष्ठतेऽनुप्रविशति च रोमकूपान् स्वेदवाहिभिश्च सिरामुखैर्वीर्यं प्राप्नोति ४

न च शुष्यमाणमुपेक्षेत, अन्यत्र पीडयितव्यात्; शुष्को ह्यपार्थको रुक्करश्च ॥ ५ ॥

स त्रिविधः—प्रलेपः, प्रदेह, आलेपश्च । प्रलेपप्रदेहयोरन्तरं—तत्र प्रलेपः शीतस्तनुरविशोषी विशोषी वा; प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च; मध्यमोऽत्रालेपः । तत्र, रक्तपित्तप्रसादकृदालेपः, प्रदेहो वातश्लेष्मप्रशमनः शोधनो रोपणः शोफवेदनापहश्च, तस्योपयोगः क्षताक्षतेषु; यस्तु क्षतेषूपयुज्यते स भूयः 'कल्क' इति संज्ञां लभते निरुद्धालेपनसंज्ञः, तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति ॥ ६ ॥

अविदग्धेषु शोफेषु हितमालेपनं भवेत् ॥
यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥ ७ ॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् ॥
दाहप्रशमनं श्रेष्ठं रुजाकण्डूविनाशनम् ॥ ८ ॥
मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् ॥
संशोधनाय तेषां हि कुर्यादालेपनं भिषक् ॥ ९ ॥

---

१ 'आलेपनीयमध्याय' इति च. । २ 'ऽरुष्करश्च' इति पा० । ३ 'तत्र संशोध्य काय' इति च. ।

(षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातिके ॥
अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत् ॥ १० ॥)

तस्य प्रमाणं महिषार्द्रचर्मोत्सेधमुपदिशन्ति ॥ ११ ॥

न चालेपं रात्रौ प्रयुञ्जीत, मा भूच्छैत्यविहतोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति ॥ १२ ॥

प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ॥
पित्तरक्ताभिघातोत्थे सविषे च विशेषतः ॥ १३ ॥
न च पर्युषितं लेपं कदाचिदवचारयेत् ॥
उपर्युपरि लेपं च न कदाचित् प्रदापयेत् ॥ १४ ॥
ऊष्माणं वेदनां दाहं घनत्वाज्जनयेत् स हि ॥
न च तेनैव लेपेन प्रदेहं दापयेत् पुनः ॥
शुष्कभावात् स निर्वीर्यो युक्तोऽपि स्यादपार्थकः ॥ १५ ॥

अत ऊर्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः; तद्यथा—क्षौमकार्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्मान्तर्वल्ककालाबूशकललताविदलरज्जुतूलफलसन्तानिकालौहानीति, तेषां व्याधिं कालं चावेक्ष्योपयोगः; प्रकरणतश्चैषामादेशः ॥ १६ ॥

तत्र कोशदामस्वस्तिकानुवेल्लितमु(प्र)तोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्दश बन्धविशेषाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ १७ ॥

तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्, दाम संबाधेऽङ्गे, सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्, अनुवेल्लितं शाखासु, ग्रीवामेढ्रयोः मु(प्र)तोलीं, वृत्तेऽङ्गे मण्डलम्, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकां, यमलव्रणयोर्यमकं, हनुशङ्खगण्डेषु खट्वाम्, अपाङ्गयोश्चीनं, पृष्ठोदरोरःसु विबन्धं, मूर्धनि वितानं, चिबुकनासौष्ठांसब-

१ हाराणचन्द्रसंमतोऽय पाठ. । २ 'शैत्यात्तु श्लेष्मण ऊर्ध्वं विवृतरोमकूपत्वादूष्माण निरेति' इति ता. ।

स्तिषु गोफणां, जत्रुण ऊर्ध्वं पञ्चाङ्गीमिति; यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात् ॥ १८ ॥

यन्त्रणमूर्ध्वमधस्तिर्यक् च ॥ १९ ॥

तत्र घनां कवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमनाविद्धमसंकुचितं मृदु पट्टं निवेश्य बध्नीयात्। न च व्रणस्योपरि कुर्याद्ग्रन्थिमाबाधकरं च ॥ २० ॥

न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्वीत; यस्मादतिस्नेहात् क्लेदो, रौक्ष्याच्छेदो, दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति[1] ॥ २१ ॥

तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति—गाढः, समः, शिथिल इति ॥ २२ ॥

पीडयन्नरुजो गाढः, सोच्छ्वासः शिथिलः स्मृतः ॥
नैव गाढो न शिथिलः समो बन्धः प्रकीर्तितः ॥ २३ ॥

तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरुशिरःसु गाढः, शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरःसु समः, अक्ष्णोः सन्धिषु च शिथिल इति ॥ २४ ॥

तत्र पैत्तिकं गाढस्थाने समं बध्नीयात्, समस्थाने शिथिलं, शिथिलस्थाने नैव, एवं शोणितदुष्टं च, श्लैष्मिकं शिथिलस्थाने समं, समस्थाने गाढं, गाढस्थाने गाढतरम्, एवं वातदुष्टं च ॥ २५ ॥

तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयात्, रक्तोपद्रुतमप्येवं; श्लैष्मिकं हेमन्तवसन्तयोस्त्र्यहात्, वातोपद्रुतमप्येवम्। एवमभ्यूह्य बन्धविपर्ययं च कुर्यात् ॥ २६ ॥

तत्र, समशिथिलस्थानेषु गाढं बद्धे विकेशिकौषधनैरर्थक्यं शोफवेदनाप्रादुर्भावश्च, गाढसमस्थानेषु शिथिलं बद्धे विकेशिकौषध-

१ अस्याग्रे 'युक्तस्नेहत्वादाशु सम्यगुपरोहः' इति ताडपत्रपुस्तकेऽधिकः पाठ उपलभ्यते।

पतनं पट्टसंचाराद्व्रणवर्त्मावघर्षणमिति; गाढशिथिलस्थानेषु समं बद्धे गुणाभाव इति ॥ २७ ॥

अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवं च ॥ २८ ॥

अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातपप्रभृतिभि-[1]र्विशेषैरभिहन्यते व्रणः, विविधवेदनोपद्रुतश्च दुष्टतामुपैति, आलेपनादीनि चास्य विशोषमुपयान्ति ॥ २९ ॥

चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम् ॥
अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति ॥ ३० ॥
सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति ॥
सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः ॥ ३१ ॥

अबन्ध्याः-पित्तरक्ताभिघातविषनिमित्ता यदा शोफदाहपाकरागतोदवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुथितप्रशीर्णमांसाश्च भवन्ति ॥ ३२ ॥

कुष्ठिनामग्निदग्धानां पिडका मधुमेहिनाम् ॥
कर्णिकाश्चोन्दुरुविषे विषजुष्टाश्च ये व्रणाः ॥ ३३ ॥
मांसपाके न बध्यन्ते गुदपाके च दारुणे ॥
स्वबुद्ध्या चापि विभजेत् कृत्याकृत्यांश्च बुद्धिमान् ॥ ३४ ॥
देशं दोषं च विज्ञाय व्रणं च व्रणकोविदः ॥
ऋतूंश्च परिसंख्याय ततो बन्धान्निवेशयेत् ॥ ३५ ॥
ऊर्ध्वं तिर्यगधस्ताच्च यन्त्रणा त्रिविधा स्मृता ॥
यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः ॥ ३६ ॥
घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम् ॥
विकेशिकामौषधं च नातिस्निग्धं समाचरेत् ॥ ३७ ॥
प्रक्लेदयत्यतिस्निग्धा तथा रूक्षा क्षिणोति च ॥
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥ ३८ ॥

---

१ '°वातरजोवर्षमक्षिकाप्रभृतिभिरभिघातविशेषैरभिहन्यते व्रण.' इति ता. ।

विषमं च व्रणं कुर्यात् स्तम्भयेत् स्रावयेत्तथा ॥
यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥ ३९ ॥
पित्तजे रक्तजे वाऽपि सकृदेव परिक्षिपेत् ॥
असकृत् कफजे वाऽपि वातजे च विचक्षणः ॥ ४० ॥
तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ॥
सर्वांश्च बन्धान् गूढान्तान् सन्धींश्च विनिवेशयेत् ॥ ४१ ॥
ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः ॥
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता ॥ ४२ ॥
उत्तिष्ठतो निषण्णस्य शयनं चाधिगच्छतः ॥
गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥ ४३ ॥
ये चैव स्युर्मांससंस्था वै त्वग्गताश्च तथा व्रणाः ॥[1]
सन्ध्यस्थिकोष्ठप्राप्ताश्च सिरास्नायुगतास्तथा ॥ ४४ ॥
तथाऽवगाढगम्भीराः सर्वतो विषमस्थिताः ॥
नैते साधयितुं शक्या ऋते बन्धाद्भवन्ति हि ॥ ४५ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणालेपनबन्धविधि-
र्नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ।

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

व्रणितस्य प्रथममेवागारमन्विच्छेत्; तच्चागारं प्रशस्तवास्त्वा-[2]
दिकं कार्यम् ॥ ३ ॥

---

१ 'व्रणा ये स्युर्मांससंस्था त्वचि जातास्तथा व्रणाः' इति पा० । २ 'प्रश-
स्तवास्तुसुनिविष्ट शुच्यवातातपं च' इति ताडपत्रपुस्तके पाठः ।

प्रशस्तवास्तुनि गृहे शुचावातपवर्जिते ॥
निवाते न च रोगाः स्युः[1] शारीरागन्तुमानसाः ॥ ४ ॥

तस्मिन् शयनमसंबाधं स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं च कुर्वीत ॥ ५ ॥

सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी ॥
प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं च तच्छिरः ॥ ६ ॥

तस्मिन् सुहृद्भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्टमासीत ॥७॥

सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः ॥
आश्वासयन्तो बहुशः स्वनुकूलाः प्रियंवदाः ॥ ८ ॥

न च दिवानिद्रावशगः स्यात् ॥ ९ ॥

दिवा[2]स्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा ॥
श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥ १० ॥

उत्थानसंवेशनप[3]रिवर्तनचङ्क्रमणोच्चैर्भाषणाद्यास्वात्मचेष्टास्वप्रमत्तो व्रणं संरक्षेत् ॥ ११ ॥

स्थानासनं चङ्क्रमणं दिवास्वप्नं तथैव च ॥
व्रणितो न निषेवेत शक्तिमानपि मानवः ॥ १२ ॥
उत्था[4]नाद्यासनं स्थानं शय्या चातिनिषेविता ॥
प्राप्नुयान्मारुताद्ङ्गरुजस्तस्माद्विवर्जयेत् ॥ १३ ॥

गम्यानां च स्त्रीणां संदर्शनसंभाषणसंस्पर्शनानि दूरत एव परिहरेत् ॥ १४ ॥

स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ॥
ग्राम्यधर्मकृतान्दोषान् सोऽसंसर्गेऽप्यवाप्नुयात् ॥ १५ ॥

नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटुकगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीनि परिहरेत् ॥ १६ ॥

---

१ 'न भवन्ति चिरं रोगा' इति च. । २ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते । ३ "परिमार्जनादिषु' इति ता. । ४ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते ।

तक्रान्तो नवधान्यादिर्योऽयं वर्ग उदाहृतः ॥
दोषसंजननो ह्येष विज्ञेयः पूयवर्धनः ॥ १७ ॥

मद्यपश्च मैरेयारिष्टासवसीधुसुराविकारान् परिहरेत् ॥ १८ ॥

मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णं च वीर्यतः ॥
आशुकारि च तत् पीतं क्षिप्रं व्यापादयेद्व्रणम् ॥ १९ ॥

वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टभोजनश्रवणदर्शनेर्ष्यामर्षभयशोकध्यानरात्रिजागरणविषमाशनशयनोपवासवाग्व्यायामस्थानचङ्क्रमणशीतवातविरुद्धाध्यशनाजीर्णमक्षिकाद्या बाधाः परिहरेत् ॥ २० ॥

व्रणिनः संप्रतप्तस्य कारणैरेवमादिभिः ॥
क्षीणशोणितमांसस्य भुक्तं सम्यङ्ग जीर्यति ॥ २१ ॥
अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत् ॥
ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥ २२ ॥

सदा नीचनखरोम्णा शुचिना शुक्लवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यमिति । तत् कस्य हेतोः ? हिंसाविहाराणि हि महावीर्याणि रक्षांसि पशुपतिकुबेरकुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति, सत्कारार्थं जिघांसूनि वा कदाचित् ॥ २३ ॥

भवति चात्र—

तेषां सत्कारकामानां प्रयतेतान्तरात्मना ॥
धूपबल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत् ॥ २४ ॥

ते तु संतर्पिता आत्मवन्तं न हिंस्युः । तस्मात् सततमतन्द्रितो जनपरिवृतो नित्यं दीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृते वेश्मनि संपन्मङ्गलमनोऽनुकूलाः कथाः शृण्वन्नासीत ॥ २५ ॥

संपदाद्यनुकूलाभिः[१] कथाभिः प्रीतमानसः ॥
आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् ॥ २६ ॥

१ 'संपन्मङ्गलयुक्ताभि॰' इति ता. ।

ऋग्यजुःसामाथर्ववेदाभिहितैरपरैश्चाशीर्विधानैरुपाध्याया भिषजश्च सन्ध्ययो रक्षां कुर्युः ॥ २७ ॥

सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च ॥
द्विरह्नः कारयेद्धूपं दशरात्रमतन्द्रितः[1] ॥ २८ ॥

छत्रामतिच्छत्रां लाङ्गू(ङ्ग)लीं जटिलां ब्रह्मचारिणीं लक्ष्मीं गुहामतिगुहां वचामतिविषां शतवीर्यां सहस्रवीर्यां सिद्धार्थकांश्च शिरसा धारयेत् ॥ २९ ॥

व्यज्येत बालव्यजनैर्व्रणं न च विघट्टयेत् ॥
न तुदेन्न च कण्डूयेच्छयानः परिपालयेत् ॥ ३० ॥
अनेन विधिना युक्तमादावेव निशाचराः ॥
वनं केशरिणाऽऽक्रान्तं वर्जयन्ति मृगा इव ॥ ३१ ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ ३२ ॥
तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः ॥
बालमूलकवार्ताकपटोलैः कारवेल्लकैः ॥ ३३ ॥
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः ॥
अन्यैरेवंगुणैर्वाऽपि मुद्गादीनां रसेन वा ॥
शक्तून् विलेपीं कुल्माषाञ्जलं चापि शृतं पिबेत् ॥ ३४ ॥
दिवा न निद्रावशगो निवातगृहगोचरः ॥
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥ ३५ ॥
( व्रणे श्वयथुरायासात् स च रागश्च जागरात् ॥
तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात्[2] ॥ ३६ ॥ )
एवंवृत्तसमाचारो व्रणी संपद्यते सुखी ॥
आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥ ३७ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणितोपासनीयो नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

१ 'सप्तरात्र' इति ता. । २ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते ।

# विंशतितमोऽध्यायः।

अथातो हिताहितीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

यद्वायोः पथ्यं तत् पित्तस्यापथ्यमित्यनेन हेतुना न किंचिद्द्रव्यमेकान्तेन हितमहितं वाऽस्तीति केचिदाचार्या ब्रुवते। तत्तु न सम्यक्; इह खलु यस्माद्द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति ॥ ३ ॥

तत्र, एकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि; एकान्ताहितानि तु दहनपचनमारणादिषु प्रवृत्तान्यनलक्षारविषादीनि, संयोगादपराणि विषतुल्यानि भवन्ति; हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ४ ॥

अतः सर्वप्राणिनामयमाहारार्थं वर्ग उपदिश्यते; तद्यथा—रक्तशालिषष्टिककङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकासनपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमयववैणवैणहरिणकुरङ्गमृगमातृकाश्वदंष्ट्राकरालक्रकरकपोतलावतित्तिरिकपिञ्जलवर्तीरवर्तिकामुद्गवनमुद्गमकुष्ठककलायमसूरमङ्गल्यचणकहरेण्वाढकीसतीनाश्चिल्लिवास्तुकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः, गव्यं घृतं, सैन्धवं, दाडिमामलकमित्येष वर्गः सर्वप्राणिनां[1] सामान्यतः पथ्यतमः ॥ ५ ॥

तथा ब्रह्मचर्यनिवातशयनोष्णोदकस्नाननिशास्वप्नव्यायामाश्चैकान्ततः पथ्यतमाः ॥ ६ ॥

एकान्तहितान्येकान्ताहितानि तु प्रागुपदिष्टानि, हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ७ ॥

---

१ 'सर्वव्रणिनां' इति पा०।

संयोगतस्त्वपराणि विषतुल्यानि भवन्ति। तद्यथा–वल्लीफलकव-ककरीराम्लफललवणकुलत्थपिण्याकदधितैलविरोहिपिष्टशुष्कशाका-जाविकमांसमद्यजाम्बवचिलिचिममत्स्यगोधावराहांश्च नैकध्यमश्नी-यात् पयसा ॥ ८ ॥

रोगं सात्म्यं च देशं च कालं देहं च बुद्धिमान् ॥
अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तेः प्रयोजयेत् ॥ ९ ॥
अवस्थान्तरबाहुल्याद्रोगादीनां व्यवस्थितम् ॥
द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे ॥ १० ॥
द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः ॥
दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम् ॥ ११ ॥
एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु ॥
एकान्तहिततां विद्धि वत्स सुश्रुत नान्यथा ॥ १२ ॥

अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः—नवविरूढधान्यैर्व-सामधुपयोगुडमाषैर्वा ग्राम्यानूपौदकपिशितादीनि नाभ्यवहरेत्; न पयोमधुभ्यां रोहिणीशाकं जातुकशाकं वाऽश्नीयात्, बलाकां वारुणीकुल्माषाभ्यां, काकमाचीं पिप्पलीमरिचाभ्यां; नाडीभङ्गशा-ककुक्कुटदधीनि च नैकध्यं; मधु चोष्णोदकानुपानं[1]; पित्तेन चाममांसानि; सुराकृशरापायसांश्च नैकध्यं; सौवीरकेण सह तिलशष्कुलीं; मत्स्यैः सहेक्षुविकारान्; गुडेन काकमाचीं, मधुना मूलकं, गुडेन वाराहं मधुना च सह विरुद्धं; क्षीरेण मूलकम्, आम्रजाम्बवश्वा-विच्छूकरगोधाश्च; सर्वांश्च मत्स्यान् पयसा, विशेषेण चिलिचिमं; कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा; लकुचफलं पयसा दध्ना माषसूपेन वा, प्राक् पयसः पयसोऽन्ते वा ॥ १३ ॥

अतः कर्मविरुद्धान् वक्ष्यामः—कपोतान् सर्षपतैलभृष्टान्[2] नाद्यात्; कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व्यग्निसिद्धा [3]एरण्डतैलसिद्धा

१ 'मधु चान्तरिक्षोदकानुपानम्' इति च.। २ 'सर्षपतैलसिद्धान्' इति ता.। ३ 'एरण्डतैलसिद्धेनाग्निना वा नाद्यात्' इति ता.।

वा नाद्यात्; कांस्यभाजने दशरात्रपर्युषितं सर्पिः; मधु[1] चोष्णैरुष्णे वा; मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीं; तिलकल्कसिद्धमुपोदिकाशाकं; नारिकेलेन वराहवसापरिभृष्टां बलाकां; भासमङ्गारशूल्यं नाश्नीयादिति ॥ १४ ॥

अतो मानविरुद्धान् वक्ष्यामः—मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्; स्नेहौ मधुस्नेहौ जलस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ ॥ १५ ॥

अत ऊर्ध्वं रसद्वन्द्वानि रसतो वीर्यतो विपाकतश्च विरुद्धानि वक्ष्यामः—तत्र मधुराम्लौ रसवीर्यविरुद्धौ मधुरलवणौ च, मधुरकटुकौ च सर्वतः, मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ च, अम्ललवणौ रसतः, अम्लकटुकौ रसविपाकाभ्याम्, अम्लतिक्तावम्लकषायौ च सर्वतः, लवणकटुकौ रसविपाकाभ्यां, लवणतिक्तौ लवणकषायौ च सर्वत, कटुतिक्तौ रसवीर्याभ्यां कटु[2]कषायौ च, तिक्तकषायौ रसतः ॥ १६ ॥

तरतमयोगयुक्तांश्च भावानतिस्निग्धानतिरूक्षानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत् ॥ १७ ॥

भवन्ति चात्र—

विरुद्धान्येवमादीनि वीर्यतो यानि कानिचित् ॥
तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम् ॥ १८ ॥
व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति ॥
विरुद्धरसवीर्याणि भुञ्जानोऽनात्मवान्नरः ॥ १९ ॥
यत्किंचिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् ॥
रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥ २० ॥
विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ॥
वमनं शमनं वाऽपि पूर्वं वा हितसेवनम् ॥ २१ ॥

---

१ 'मधु चोष्णमुष्णेन वा, दधि मद्यं वा' इति, च. । २ 'कटुकषायौ तिक्तकषायौ च रसत.' इति पा० ।

सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च ॥
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ २२ ॥

अथ वातगुणान् वक्ष्यामः—

पूर्वः समधुरः स्निग्धो लवणश्चैव मारुतः ॥
गुरुर्विदाहजननो रक्तपित्ताभिवर्धनः ॥ २३ ॥
क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये ॥
तेषामेव विशेषेण सदा रोगविवर्धनः ॥ २४ ॥
वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् ॥
तेषामेव विशेषेण व्रणक्लेदविवर्धनः ॥ २५ ॥
मधुरश्चाविदाही च कषायानुरसो लघुः ॥
दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्धनः ॥ २६ ॥
रक्तपित्तप्रशमनो न च वातप्रकोपणः ॥
विशदो रूक्षपरुषः खरः स्नेहबलापहः ॥ २७ ॥
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ॥
सद्यः प्राणक्षयकरः शोषणस्तु शरीरिणाम् ॥ २८ ॥
उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च ॥
कषायानुरसः शीतो दोषाणां चाप्रकोपणः ॥ २९ ॥
तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्धनः ॥
क्षीणक्षयविषार्तानां विशेषेण तु पूजितः ॥ ३० ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने हिताहितीयो
नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशतितमोऽध्यायः ।

अथातो व्रणप्रश्नमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ अस्मिन्नध्याय उल्लिखिताङ्कानुसारेण श्लोकानां त्रयोदश,-'मत्स्यपरिपचने' इत्यारभ्य चतुर्दश,-पञ्चदश,-षोडशसंख्यात्मकानि गद्यानि तथा ९–१२ किञ्च २३–३० संख्यात्मकानि पद्यानि ताडपत्रपुस्तके न दृश्यन्ते ।

वातपित्तश्लेष्माण एव देहसंभवहेतवः । तैरेवाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिः, अतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्रलयहेतवः[1] । तदेभिरेव शोणितचतुर्थैः संभवस्थितिप्रलयेष्वप्यविरहितं शरीरं[2] भवति ॥ ३ ॥

भवति चात्र—

नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् ॥
शोणितादपि वा नित्यं देह एतैस्तु धार्यते ॥ ४ ॥

तत्र 'वा' गतिगन्धनयोः, इति धातुः, 'तप' संतापे, 'श्लिष' आलिङ्गने, एतेषां कृद्विहितैः प्रत्ययैर्वातः पित्तं श्लेष्मेति च रूपाणि भवन्ति ॥ ५ ॥

दोषस्थानान्यत ऊर्ध्वं वक्ष्यामः—तत्र समासेन वातः श्रोणिगुदसंश्रयः; तदुपर्यधो नाभेः पक्वाशयः, पक्वामाशयमध्यं पित्तस्य; आमाशयः श्लेष्मणः ॥ ६ ॥

अतः परं पञ्चधा विभज्यन्ते । तत्र वातस्य वातव्याधौ वक्ष्यामः; पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्वोक्तं च; श्लेष्मण उरः शिरः कण्ठो जिह्वामूलं सन्धय इति पूर्वोक्तं च; एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम् ॥ ७ ॥

भवति चात्र—

विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ॥
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ ८ ॥

तत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निः ? आहोस्वित्[3] पित्त-

---

१ 'भवन्ति' इति ता. । २ अस्याग्रे 'भवन्ति' इति तिङन्तं पदं ताडपत्रपुस्तके दृश्यते । ३ 'उताहो' इति ता. ।

मेवाग्निरिति ?। अत्रोच्यते—न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते[1], आग्नेयत्वात् पित्ते दहनपचनादिष्वभिप्रवर्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति; क्षीणे ह्यग्निगुणे[2] तत्समानद्रव्योपयोगात्, अतिवृद्धे शीतक्रियोपयोगात्, आगमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति ॥ ९ ॥

तच्चादृष्टहेतुकेन[3] विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्विधम[4]न्नपानं पचति, विवेचयति च दोषरसमूत्रपुरीषाणि; तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति, तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा; यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा, स रसस्य रागकृदुक्तः; यत्[5] पित्तं हृदयस्थं तस्मिन् साधकोऽग्निरिति संज्ञा, सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः; यद्दृष्ट्यां[6] पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा, स रूपग्रहणाधिकृतः; यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा, सोऽभ्यङ्गपरिषेकावगाहालेपनादीनां[7] क्रियाद्रव्याणां पक्ता छायानां च प्रकाशकः ॥ १० ॥

भवति चात्र—

पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ॥
उष्णं कटुरसं चैव विदग्धं चाम्लमेव च ॥ ११ ॥

अत ऊर्ध्वं श्लेष्मस्थानान्यनुव्याख्यास्यामः । तत्र, आमाशयः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्ध्वगतित्वात्तेजसः, चन्द्र इव आदित्यस्य, चतुर्विधस्याहारस्याधारः; स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरो भवति ॥ १२ ॥

१ 'लक्ष्यते' इति ता. । २ 'चाग्निगुणे' इति ता. । ३ 'तत्त्वदृष्टहेतुकेन' इति ता. ४ 'चतुर्विधमप्यन्नपान' इति ता. । ५ 'यत्त हृदिस्थ पित्त' इति ता. । ६ 'यत्तु दृष्ट्यां' इति ता. । ७ 'परिषेकादीनां पाचयिता' इति ता. ।

माधुर्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ॥
आमाशये संभवति श्लेष्मा मधुरशीतलः ॥ १३ ॥

स तत्रस्थ[1] एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणाऽनुग्रहं करोति; उरःस्थस्त्रिकसन्धारणमात्मवीर्येणान्नरससहितेन हृदया[2]वलम्बनं करोति; जिह्वामूलकण्ठस्थो[3] जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्तते, शिरः[4]स्थः स्नेहसंतर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्येणानुग्रहं करोति; सन्धिस्थः श्लेष्मा सर्वसन्धिसंश्लेषात् सर्वसन्ध्यनुग्रहं करोति ॥ १४ ॥

भवति चात्र—

श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च ॥
मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः ॥ १५ ॥

शोणितस्य स्थानं यकृत्प्लीहानौ, तच्च प्रागभिहितं; तत्रस्थमेव शेषाणां शोणितस्थानानामनुग्रहं करोति ॥ १६ ॥

भवति चात्र—

अनुष्णशीतं मधुरं स्निग्धं रक्तं च वर्णतः ॥
शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत् ॥ १७ ॥

एतानि खलु दोषस्थानानि; ए[5]षु संचीयन्ते दोषाः । प्राक् संचयहेतुरुक्तः । तत्र संचितानां खलु दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति । तत्र प्रथमः क्रियाकालः ॥ १८ ॥

अत ऊर्ध्वं प्र[6]कोपणानि वक्ष्यामः । तत्र बलवद्विग्रहातिव्यायामव्यवायाध्ययनप्रपतनप्रधावनप्रपीड[7]नाभिघातलङ्घनप्लवनप्रतरणरा-

१ 'स तत्र स्थित· स्वशक्त्या' इति ता. । २ 'हृदयावरण च' इति ता. । ३ 'कण्ठस्थस्तु' इति ता. । 'कण्ठस्थो' इति च. । ४ 'शिरस्थस्तु' इति ता. । ५ 'अत्र' इति च. । ६ 'प्रकोपकारणानि' इति ता. । ७ "°प्रपीडन°" इति ताडपत्रपुस्तके न दृश्यते ।

त्रिजागरणभारहरणगजतुरगरथपदातिचर्याकटुकषायतिक्तरूक्षलघु-शीतवीर्यशुष्कशाकवल्लूरवरकोद्दालककोरदूषश्यामाकनीवारमुद्गमसूराढकीहरेणुकलायनिष्पावानशनविषमाशनाध्यशनवातमूत्रपुरीषशुक्रच्छर्दिक्षवथूद्गारबाष्पवेगविघातादिभिर्विशेषैर्वायुः प्रकोपमापद्यते॥

स शीताभ्रप्रवातेषु घर्मान्ते च विशेषतः ॥
प्रत्यूषस्यपराह्णे च जीर्णेऽन्ने च प्रकुप्यति ॥ २० ॥

क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्णलघुविदाहितिलतैलपिण्याककुलत्थसर्षपातसीहरितकशाकगोधामत्स्याजाविकमांसदधितक्रकूर्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वरप्रभृतिभिः पित्तं प्रकोपमापद्यते ॥ २१ ॥

तदुष्णैरुष्णकाले च घनान्ते च विशेषतः ॥
मध्याह्ने चार्धरात्रे च जीर्यत्यन्ने च कुप्यति ॥ २२ ॥

दिवास्वप्नाव्यायामालस्यमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधे[2]त्कटमाषमहा[3]माषगोधूम-तिल-पिष्ट-विकृतिदधिदुग्धकृशरापायसेक्षु-विकारानूपौदकमांसवसाबिसमृणालकसेरुकशृङ्गाटकमधुर-वल्ली-फलसमशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ॥ २३ ॥

स शीतैः शीतकाले च वसन्ते च विशेषतः ॥
पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥ २४ ॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिराहारैर्दिवास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिर्विशेषैरसृक् प्रकोपमापद्यते ॥ २५ ॥

यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति ॥
तस्मात्तस्य यथादोषं कालं विद्यात् प्रकोपणे ॥ २६ ॥

---

१ "°वराह°" इति ता. । २ 'नैषधोत्कट' इति ताडपत्रपुस्तके पठ्यते । ३ 'महामाषे'ति ताडपत्रपुस्तके न पठ्यते ।

तेषां प्रकोपात् कोष्ठतोदसंचरणाम्लीकापिपासापरिदाहान्नद्वेषहृदयोत्क्लेदाश्च[1] जायन्ते। तत्र द्वितीयः क्रियाकालः ॥ २७ ॥

अत ऊर्ध्वं प्रसरं वक्ष्यामः—तेषामेभिरातङ्कविशेषैः प्रकुपितानां किण्वोदकपिष्टसमवाये[2] इवोद्रिक्तानां प्रसरो भवति। तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये। स हि रजोभूयिष्ठः; रजश्च प्रवर्तकं सर्वभावानाम्। यथा—महानुदकसंचयोऽतिवृद्धः सेतुमवदार्यापरेणोदकेन[3] व्यामिश्रः सर्वतः प्रधावति, एवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वाऽनेकधा प्रसरन्ति। तद्यथा—वातः, पित्तं; श्लेष्मा, शोणितं, वातपित्ते, वातश्लेष्माणौ, पित्तश्लेष्माणौ, वातशोणिते, पित्तशोणिते, श्लेष्मशोणिते, वातपित्तशोणितानि, वातश्लेष्मशोणितानि, पित्तश्लेष्मशोणितानि, वातपित्तकफाः, वातपित्तकफशोणितानीति; एवं पञ्चदशधा प्रसरन्ति ॥२८॥

कृत्स्नेऽर्धेऽवयवे वाऽपि यत्राङ्गे कुपितो भृशम् ॥
दोषो विकारं[4] नभसि मेघवत्तत्र वर्षति ॥ २९ ॥
नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति ॥
निष्प्रत्यनीकः कालेन हेतुमासाद्य कुप्यति ॥ ३० ॥

तत्र वायोः पित्तस्थानगतस्य पित्तवत्[5] प्रतीकारः, पित्तस्य च कफस्थानगतस्य कफवत्, कफस्य च वातस्थानगतस्य वातवत्; एष क्रियाविभागः ॥ ३१ ॥

एवं प्रकुपितानां प्रसरतां वायोर्विमार्गगमनाटोपौ, ओषचोषपरिदाहधूमायनानि पित्तस्य, अरोचकाविपाकाङ्गसादाश्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति; तत्र तृतीयः क्रियाकालः ॥ ३२ ॥

---

१ "°हृदयोत्क्लेदा जायन्ते' इति च.। '°हृदयोत्क्लेदा भवन्ति' इति ता.। २ "°पिष्टकिण्वोदकसमवाय इवाभ्युद्गतानां' इति ता.। 'पर्युषितकिण्वोदकपिष्टसमवाय' इति हाराणचन्द्रसंमतः पाठः। ३ 'अपरैरुदकैर्व्यामिश्रैः' इति ता.। ४ 'दोषो विकारं सृजति मेघो वृष्टिमिवाम्बरे' इति ता.। ५ 'पित्तवत् क्रिया' इति ता.।

अत ऊर्ध्वं स्थानसंश्रयं वक्ष्यामः। एवं प्रकुपिताः[1] तांस्तान् शरीरप्रदेशानागम्य तांस्तान् व्याधीन् जनयन्ति। ते[2] यदोदरसन्निवेशं कुर्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीञ्जनयन्ति; बस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन्; मेढ्रगता निरुद्धप्रकशोपदंशशूकदोषप्रभृतीन्; गुदगता भगन्दरार्शःप्रभृतीन्; वृषणगता वृद्धीः; ऊर्ध्वजत्रुगतास्तूर्ध्वजान्[3]; त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च; मेदोगता ग्रन्थ्यपच्यर्बुदगलगण्डालजीप्रभृतीन्; अस्थिगता विद्रध्यनुशयीप्रभृतीन्; पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन्; सर्वाङ्गगता ज्वरसर्वाङ्गरोगप्रभृतीन्[4]; तेषामेवमभिसंनिविष्टानां पूर्वरूपप्रादुर्भावः; तं[5] प्रतिरोगं वक्ष्यामः। तासु[6] पूर्वरूपगतेषु चतुर्थः क्रियाकालः॥ ३३॥

अत ऊर्ध्वं व्याधेर्दर्शनं वक्ष्यामः—शोफार्बुदग्रन्थिविद्रधिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातीसारप्रभृतीनां च। तत्र पञ्चमः क्रियाकालः॥ ३४॥

अत ऊर्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः, ज्वरातिसारप्रभृतीनां च दीर्घकालानुबन्धः। तत्राप्रतिक्रियमाणेऽसाध्यतामुपयान्ति॥ ३५॥

भवति चात्र—

संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम्॥
व्यक्तिं भेदं च यो वेत्ति दोषाणां स भवेद्भिषक्॥ ३६॥

---

१ 'प्रसृता' इति ता.। २ 'ये दोषास्त्वधः सन्निवेशं कुर्वन्ति ते' इति ता.। ३ 'ऊर्ध्वगा गलगण्डापचीप्रभृतीन्;' इति ता.। ४ 'एवमन्येष्वपि स्थानेषु रोगाणां दोषसन्निवेश जानीयान्' इति ताडपत्रपुस्तकेऽधिकः पाठ उपलभ्यते। ५–६ ताडपत्रपुस्तके 'त प्रतिरोगं वक्ष्यामः' इति तथा 'पूर्वरूपगतेषु' इति च वाक्यावयवौ नोपलभ्येते।

संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ॥
ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥ ३७ ॥
सर्वैर्भावैस्त्रिभिर्वाऽपि द्वाभ्यामेकेन वा पुनः ॥
संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति ॥ ३८ ॥
संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ॥
शेषदोषाविरोधेन सन्निपाते तथैव च ॥ ३९ ॥
वृणोति यस्माद्रूढेऽपि व्रणवस्तु न नश्यति ॥
आदेहधारणात्तस्माद्व्रण इत्युच्यते बुधैः[१] ॥ ४० ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने व्रणप्रश्नाध्यायो नामैकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः ।

अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माणीत्यष्टौ व्रणवस्तूनि । अत्र सर्वव्रणसन्निवेशः ॥ ३ ॥

तत्र, आद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचरः, शेषाः स्वयमवदीर्यमाणा दुरुपचाराः ॥ ४ ॥

तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः, शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति ॥ ५ ॥

सर्वे एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिश्चोपक्रान्ताः; अनात्मवतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति, प्रवृद्धत्वाद्दोषाणाम् ॥ ६ ॥

---

१ 'जन्तोर्व्रणस्तस्मान्निरुच्यते' इति ता. ।

तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोपद्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि । तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतीकारे प्रयतेति ॥ ७ ॥

अत ऊर्ध्वं सर्वस्रावान् वक्ष्यामः—तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटे भिन्ने विदारिते वा सलिलप्रकाशो भवत्यास्रावः किंचिद्विस्रः पीतावभासश्च; मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च; सिरागतः सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः पक्वासु च तोयनाडीभिरिव तोयागमनं पूयस्य, आस्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च; स्नायुगतः स्निग्धो घनः सिंघाणकप्रतिमः सरक्तश्च; अस्थिगतोऽस्थन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति, आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च; संधिगतः पीड्यमानो न प्रवर्तते, आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति, आस्रावश्चात्र पिच्छिलोऽवलम्बी स[3]रुधिरोन्मथितश्च; कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति; मर्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते । तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि

१ 'अत्रातिसंवृतातिकठिनातिमात्रावसन्नात्यर्थवेदनावानिति वातेन, अतिविवृतात्युष्णरक्तपूतिमांससिरास्नायुप्रतिपूर्णपूतिपूयास्राव्यमनोज्ञदर्शनगन्धात्यर्थदाहपाकरागवेदनावानिति पित्तेन, शेषा कफेन' इति पाठः । २ 'दोषोच्छ्रायमवेक्ष्य यथास्वं प्रकुर्वीत' इति ता. । ३ 'सफेनपूयरुधिरोन्मिश्रश्च' इति पा० ।

मारुताद्भवन्ति; पित्ताद्गोमेदकगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि; पित्तवद्रक्तादतिविस्रत्वं च; कफान्नवनीतकासीसमज्जपिष्टतिलनालिकेरोदकवराहवसासन्निभत्वानि; सन्निपातान्नालिकेरोदकैर्वारुकरसकाञ्जिकप्रसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषसवर्णत्वानीति ॥ ८ ॥

श्लोकौ चात्र भवतः—

पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ॥
क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात्स्रवन् ॥ ९ ॥
आमाशयात् कलायाम्भोनिभश्च त्रिकसन्धिजः ॥
स्रावानेतान् परीक्ष्यादौ ततः कर्माचरेद्भिषक् ॥ १० ॥

अत ऊर्ध्वं सर्वव्रणवेदना वक्ष्यामः—तोदनभेदनताडनच्छेदनायामनमन्थनविक्षेपणचुमुचुमायननिर्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणस्तम्भनपूरणस्वप्नाकुञ्चनाङ्कुशिकाः संभवन्ति, अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्; ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनाविशेषास्तं पैत्तिकमिति विद्यात्; पित्तवद्रक्तसमुत्थं जानीयात्; कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यं च यत्र तं श्लैष्मिकमिति विद्यात्; यत्र सर्वासां वेदनानामुत्पत्तिस्तं सान्निपातिकमिति विद्यात् ॥ ११ ॥

अत ऊर्ध्वं व्रणवर्णान् वक्ष्यामः—भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य; नीलः पीतो हरितः श्यावः कृष्णो रक्तः पिङ्गलः कपिल इति रक्तपित्तसमुत्थयोः; श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य; सर्ववर्णोपेतः सान्निपातिक इति ॥ १२ ॥

भवति चात्र—

न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः ॥
सर्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक् ॥ १३ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने व्रणास्रावविज्ञानीयो नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशतितमोऽध्यायः ।

अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

तत्र, वयःस्थानां दृढानां प्राणवतां सत्त्ववतां (आत्मवतां) च सुचिकित्स्या व्रणाः; एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं[1] तस्य सुखसाधनीयतमाः ; तत्र, वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति; दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादिविशेषान्न प्राप्नोति; प्राणवतां वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते; सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति; तस्मादेतेषां सुखसाधनीयतमाः ॥ ३ ॥

त एव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः ॥ ४ ॥

स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः ॥ ५ ॥

अक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः, अधोभागाश्चोर्ध्वभागनिर्वाहिणो, रोमान्तोपनखमर्मजङ्घास्थिसंश्रिताश्च, भगन्दरमपि चान्तर्मुखं सेवनीकुटकास्थिसंश्रितम् ॥ ६ ॥

---

१ 'गुणपञ्चकं' इति पा० ।

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ॥ ७ ॥

अव्रपाटिकानिरुद्धप्रकशसन्निरुद्धगुदजठराणि, ग्रन्थिक्षतक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते, शर्करा सिकतामेहो वातकुण्डलिकाऽष्ठीला दन्तशर्करोपकुशः कण्ठशालूकं निष्कोषणदूषिताश्च दन्तवेष्टा विसर्पास्थिक्षतोरः-[1]क्षतव्रणग्रन्थिप्रभृतयश्च याप्याः ॥ ८ ॥

साध्या[2] याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ॥
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ ९ ॥
याप[3]नीयं विजानीयात् क्रिया धारयते तु[4] यम् ॥
क्रियायां तु निवृत्तायां सद्य एव विनश्यति ॥ १० ॥
प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम् ॥
प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः ॥ ११ ॥

अत ऊर्ध्वमसाध्यान् वक्ष्यामः—मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूयवेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः, केचित् कठिना गोशृङ्गवदुद्गतमृदुमांसप्ररोहाः, अपरे दुष्टरुधिरास्राविणस्तनुशीतपिच्छिलास्राविणो वा मध्योन्नताः, केचिदवसन्नशुषिरपर्यन्ताः शणतूलवत् स्नायुजालवन्तो दुर्दर्शनाः, वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः, पीतासितमूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः, त एवोभयतोभागव्रणमुखेषु पूयरक्तनिर्वाहिणः, क्षीणमांसानां च[5] सर्वतोगतयश्चाणुमुखा मांसबुद्बुदवन्तः, सशब्दवातवाहिनश्च शिरःकण्ठस्थाः, क्षीणमांसानां च पूयरक्तनिर्वाहिणोऽरोचकाविपाककास-

१ 'विसर्पास्थिक्षतोर क्षतयश्च' इत्येव पाठस्ताडपत्रपुस्तके दृश्यते न तत्र ततः पर 'व्रणग्रन्थिप्रभृतय' इत्यधिक पठ्यते। २ ताडपत्रपुस्तके 'भवन्ति चात्र' इत्युक्त्वा तदनन्तर 'साध्या याप्यत्वमायान्ति' इत्यादिनवमदशमैकादशश्लोका उक्ताः। ३ 'एव याप्यं' इति ता.। ४ 'हि तम्' इति ता.। ५ हाराणचंद्रसंमतोऽयं पाठः।

श्वासोपद्रवयुक्ताः, भिन्ने[1] वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति ॥ १२ ॥

भवति चात्र—

वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥
आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसंभवः ॥ १३ ॥
अमर्मोपहिते देशे सिरासन्ध्यस्थिवर्जिते ॥
विकारो योऽनुपर्येति तदसाध्यस्य लक्षणम् ॥ १४ ॥
क्रमेणोपचयं प्राप्य धातूननुगतः शनैः ॥
न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः ॥ १५ ॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च ॥
निहन्त्यौषधवीर्याणि मन्त्रान्[2] दुष्टग्रहो यथा ॥ १६ ॥
अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते ॥
अबद्ध[3]मूलः क्षुपको यद्वदुत्पाटने सुखः ॥ १७ ॥
त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडकी समः ॥
अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते ॥ १८ ॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥ १९ ॥
रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥
त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ॥ २० ॥
दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः ॥
हर्षात् क्रोधाद्भयाद्वाऽपि व्रणो रूढोऽपि दीर्यते ॥ २१ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने कृत्याकृत्यविधिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

१ 'भिन्ने च' इति ता. । २ 'बलवत्त्वात्तथैव च' इति ता. । ३ 'अलब्धमूलः' इति ता ।

# चतुर्विंशतितमोऽध्यायः ।

अथातो व्याधिसमुद्देशीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

द्विविधास्तु व्याधयः—शस्त्रसाध्याः, स्नेहादिक्रियासाध्याश्च । तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते, स्नेहादिक्रियासाध्येषु शस्त्रकर्म न क्रियते ॥ ३ ॥

अस्मिन् पुनः शास्त्रे सर्वतन्त्रसामान्यात् सर्वेषां व्याधीनां यथास्थूलमवरोधः क्रियते । प्रागभिहितं 'तद्दुःखसंयोगा व्याधय' ( सू. अ. १ ) इति । तच्च दुःखं त्रिविधम्—आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकमिति । तत्तु सप्तविधे व्याधावुपनिपतति । ते पुनः सप्तविधा व्याधयः; तद्यथा—आदिबलप्रवृत्ताः, जन्मबलप्रवृत्ताः, दोषबलप्रवृत्ताः, संघातबलप्रवृत्ताः, कालबलप्रवृत्ता, दैवबलप्रवृत्ताः, स्वभावबलप्रवृत्ता इति ॥ ४ ॥

तत्र, आदिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः; तेऽपि द्विविधाः—मातृजाः, पितृजाश्च । जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्गुजात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते तेऽपि द्विविधाः—रसकृताः, दौहृदापचारकृताश्च । दोषबलप्रवृत्ता[१] ये आतङ्कसमुत्पन्ना मिथ्याहाराचारकृताश्च; तेऽपि द्विविधाः—आमा-

---

१ 'दोषबलप्रवृत्ता नाम ये आतङ्का अपचारकृता', ते द्विविधाः—शारीरा मानसाश्च । कालबलप्रवृत्ता नाम ये शीतोष्णवातवर्षाप्रभृतिभिः समुत्पन्नाः । तेऽपि द्विविधा.—व्यापन्ना अव्यापन्नाश्च । संघातबलप्रवृत्ता ये आगन्तव आधिभौतिकाः, ते द्विविधाः—दुर्बलस्य बलवद्विग्रहाच्छस्त्रादिकृताश्च । दैवबलप्रवृत्ता ये औपसर्गात्, ते द्विविधा—अभिचाराभिषङ्गजा' । स्वभावबलप्रवृत्ता नाम क्षुत्पिपासाजरामृत्युनिद्राप्रभृतय इति; तेऽपि द्विविधा.—कालकृता अकालकृताश्च; तत्र परिरक्षणकृताः कालकृताः, अपरिरक्षणकृता अकालकृताः । अत्र सर्वव्याध्युपरोधः' इति ता. ।

शयसमुत्थाः, पक्वाशयसमुत्थाश्च; पुनश्च द्विविधाः—शारीरा, मानसाश्च । त एते आध्यात्मिकाः ॥ ५ ॥

संघातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात्; तेऽपि द्विविधाः–शस्त्रकृता, व्यालकृताश्च । एते आधिभौतिकाः ॥ ६ ॥

कालबलप्रवृत्ता ये शीतोष्णवातवर्षातपप्रभृतिनिमित्ताः; तेऽपि द्विविधाः—व्यापन्नर्तुकृताः, अव्यापन्नर्तुकृताश्च । दैवबलप्रवृत्ता ये देवद्रोहाद[1]भिशप्तका अथर्वणकृता उपसर्गजाश्च, तेऽपि द्विविधाः—विद्युदशनिकृताः, पिशाचादिकृताश्च; पुनश्च द्विविधाः—संसर्गजा, आकस्मिकाश्च । स्वभावबलप्रवृत्ता ये क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः; तेऽपि द्विविधाः—कालजा, अकालजाश्च; तत्र परिरक्षणकृताः कालजाः, अपरिरक्षणकृता अकालजाः । एते आधिदैविकाः । अत्र सर्वव्याध्यवरोधः ॥ ७ ॥

सर्वेषां च व्याधीनां वातपित्तश्लेष्माण एव मूलं; तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च । यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तन्ते । दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विक[2]ल्पः । दोषदूषितेष्वत्यर्थं धातुषु संज्ञा—रसजोऽयं, शोणितजोऽयं, मांसजोऽयं, मेदोजोऽयं, अस्थिजोऽयं, मज्जजोऽयं, शुक्रजोऽयं व्याधिरिति ॥ ८ ॥

तत्र, अन्ना[3]श्रद्धारोचकाविपाकाङ्गमर्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालजवलीपलित[4]दर्शनप्रभृतयो रसदोषजा विकाराः; कुष्ठविसर्पपिडकामशकनीलिकातिलकालकन्य-

---

१ 'अभिशस्तकाः' इति पा० । २ 'विकल्पा भवन्ति' इति पा० । ३ ताडपत्रपुस्तकेऽत्र 'अश्रद्धा' इत्येवं पदं दृश्यते 'अन्नाश्रद्धा' इति तु न दृश्यते । ४ ताडपत्रपुस्तकेऽत्र 'वलीपलिततिमिरदर्शनप्रभृतयः' इति पाठ उपलभ्यते ।

च्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्बुदाङ्गमर्दासृग्दररक्तपित्तप्रभृतयो रक्तदोषजाः, गुदमुखमेढ्रपाकाश्च; अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डिकालजीमांससंघातौष्ठप्रकोपगलगण्डगण्डमालाप्रभृतयो मांसदोषजाः; ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः; अध्यस्थ्यधिदन्तास्थितोदशूलकुनखप्रभृतयोऽस्थिदोषजाः; तमोदर्शनमूर्च्छाभ्रमपर्वस्थूलमूलारुर्जन्मनेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः; क्लैब्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषाः[1]; त्वग्दोषाः सङ्गोऽतिप्रवृत्तिरयथाप्रवृत्तिर्वा मलायतनदोषाः; इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः; इत्येष समास उक्तः; विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्यामः ॥ ९ ॥

भवति चात्र—

कुपितानां हि दोषाणां शरीरे परिधावताम् ॥
यत्र सङ्गः खवैगुण्याद्[2]व्याधिस्तत्रोपजायते ॥ १० ॥

भूयोऽत्र जिज्ञास्यं, किं वातादीनां ज्वरादीनां च नित्यः संश्लेषः परिच्छेदो वा? इति; यदि नित्यः संश्लेषः स्यात्तर्हि नित्यातुराः सर्व एव प्राणिनः स्युः; अथाप्य[3]न्यथा वातादीनां ज्वरादीनां च, 'अन्यत्र वर्तमानानामन्यत्र लिङ्गं न भवति' इति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति तन्न। अत्रोच्यते—दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति; अथ च न (नित्यः) संबन्धः; यथाहि विद्युद्वाताशनिवर्षाण्याकाशं प्रत्याख्याय न भवन्ति, सत्यप्याकाशे कदाचिन्न भवन्ति, अथ च निमित्त[4]तस्तत एवोत्पत्तिरिति; तरङ्गबुद्बुदाद-

१ 'तद्दोषजाः,' इति पा०। २ 'स्ववैगुण्यात्' इति पा०। ३ 'अथवा' इति पा०। ४ ताडपत्रपुस्तकेऽत्र 'निमित्ततो भवन्ति' इति पाठ उपलभ्यते।

यश्चोदकविशेषा एव; वातादीनां ज्वरादीनां च नाप्येवं संश्लेषो न परिच्छेदः शाश्वतिकः, अथ च निमित्ततं[1] एवोत्पत्तिरिति ॥ ११ ॥

भवति चात्र—

विकारपरिमाणं च संख्या चैषां पृथक् पृथक् ॥
विस्तरेणोत्तरे तन्त्रे सर्वाबाधाश्च[2] वक्ष्यते ॥ १२ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने व्याधिसमुद्देशीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशतितमोऽध्यायः ।

अथातोऽष्टविधशस्त्रकर्मीयमध्यायं[3] व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

छेद्या[4] भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकः ॥
व्रणवर्त्मार्बुदान्यर्शश्चर्मकीलोऽस्थिमांसगम् ॥ ३ ॥
शल्यं जतुमणिर्मांससंघातो गलशुण्डिका ॥
स्नायुमांससिराकोथो वल्मीकं शतपोनकः ॥ ४ ॥
अध्रुषश्चोपदंशाश्च मांसकन्द्यधिमांसकः ॥
भेद्या[5] विद्रधयोऽन्यत्र सर्वजाद्ग्रन्थयस्त्रयः ॥ ५ ॥

---

१ ताडपत्रपुस्तकेऽत्र 'निमित्ततस्तेभ्य एवोत्पत्ति' इति पाठ उपलभ्यते । २ 'सर्वबाधां प्रचक्ष्महे' इति ता. । 'सर्वा बाधाश्च वक्ष्यते' इति च. । ३ 'अष्टविधशस्त्रकर्मण्यमध्याय' इति पा० । ४ 'छेद्यास्तु भगन्दरार्शोऽर्बुद-दुष्टव्रणनाडीचर्मकीलतिलकालकमेदोग्रन्थय श्लेष्मनिमित्ताश्चामयास्तथा मांस-सिरास्नायुकोथमांसकन्द्यो मांसास्थिगतमपि च शल्यमुत्सङ्गः शतपोनको जतु-मणिर्वल्मीकमध्रुषोऽधिमासमांससघातगलशुण्डिका इत्येवमादयो विकाराः' इति ता.। ५ भेद्यास्तु सर्वजमृते विद्रधयोऽनुशयीविदारिके प्रमेहपिडका विसर्पा-स्तथा ग्रन्थयश्चादितस्त्रयस्त्रयो वृद्धयोऽवमन्थपुष्करिके नाड्यः स्तनरोगाश्च सहो-पदंशैः शोफाश्चासर्वसराः प्रायशः क्षुद्ररोगास्तालुपुप्पुटतुण्डिकेरीगिलायुप्रभृ-तयोऽन्तःपूयशल्याः पञ्च मेदःसमुत्थाना अश्मरीहेतोर्बस्तिश्च' इति च. ।

आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः ॥
प्रमेहपिडकाः शोफः स्तनरोगोऽवमन्थकः ॥ ६ ॥
कुम्भीकाऽनुशयी नाड्यो वृन्दौ पुष्करिकाऽलजी ॥
प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥ ७ ॥
तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिणः ॥
बस्तिस्तथाऽश्मरीहेतोर्मेदोजा ये च केचन ॥ ८ ॥
लेख्यां[1]श्चतस्रो रोहिण्यः किलासमुपजिह्विका ॥
मेदोजो दन्तवैदर्भो ग्रन्थिर्वर्त्माधिजिह्विका ॥ ९ ॥
अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा ॥
वेध्यां[2]ः सिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥ १० ॥
एष्यां[3] नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये ॥
आहार्याः[4] शर्करास्तिस्रो दन्तकर्णमलोऽश्मरी ॥ ११ ॥
शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे ॥
स्राव्या[5] विद्रधयः पञ्च भवेयुः सर्वजादृते ॥ १२ ॥
कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः ॥
पाल्यामयाः श्लीपदानि विषजुष्टं च शोणितम् ॥ १३ ॥
अर्बुदानि विसर्पाश्च ग्रन्थयश्चादितश्च ते ॥
त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ॥ १४ ॥
सु(शु)[6]षिरो गलशालूकं कण्टकाः कृमिदन्तकः ॥
दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ॥ १५ ॥

---

१ 'लेख्याश्चतस्रो रोहिण्यो व्रणनेत्रवर्त्मार्शोऽधिजिह्वोपजिह्वामांसोच्छ्रायाः किलासा दन्तवैदर्भः पञ्च मेदोजाश्च' इति ता । २ 'वेध्यास्तु सिरोदरवृद्धिप्रभृतयः' इति च । ३ 'एष्यास्तु गतिमन्तो नाड्यः शल्यानि च' इति च । ४ 'आहार्यास्तु दन्तान्तःशर्कराऽश्मरीमूढगर्भकर्णमलशल्यानि पादशर्करा च' इति च. । ५ 'विस्राव्या विद्रधिः सर्वा भवेदन्यत्र सर्वजात्' इति ता. । ६ 'सौषिरो' इति च. ।

पित्तासृक्कफजाश्चौष्ठ्याः क्षुद्ररोगाश्च भूयशः ॥
सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः ॥ १६ ॥
सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रिताः ॥
न क्षाराग्निविषैर्जुष्टा न च मारुतवाहिनः ॥ १७ ॥
नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ॥
पांशुरोमनखादीनि चलमस्थि भवेच्च यत् ॥ १८ ॥
अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ॥
रुजश्च विविधाः कुर्युस्तस्मादेतान् विशोधयेत् ॥ १९ ॥
ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥
सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा ॥ २० ॥
शणजक्षौमसूत्राभ्यां स्नाय्वा बालेन वा पुनः ॥
मूर्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥ २१ ॥
सीव्येद्गोफणिकां वाऽपि सीव्येद्वा तुन्नसेवनीम् ॥
ऋजुग्रन्थिमथो वाऽपि यथायोगमथापि वा ॥ २२ ॥

---

१ 'सीव्या मेदःसमुत्थाश्च भित्त्वा सुलिखिता गदाः । कफग्रन्थिरल्पपालिः कर्णः सद्योव्रणाश्च ये' । इति च. । 'शिरोललाटाक्षिकूटकर्णौष्ठनासागण्डकृकाटिकाबाहूदरस्फिक्पायुप्रजननमुष्कादिषु प्रदेशेष्वचलेषु मांसवत्सु च सीव्येत् । जानुकूर्परसन्ध्यादिषु च प्रचलेष्वल्पमांसेषु न सीव्येत्' इति ता.। २ 'वायुनिर्वाहिणोऽन्तर्लोहितशल्या' सविषाश्च' इति ता । ३ 'तत्र सीव्य व्रणमभिसमीक्ष्य चलास्थिपांसुतृणरोमशुष्करक्तादिकमाकृष्यापोह्योत्कृत्य यथास्थान स्थापयित्वा, स्नायुसूत्रबालानामन्यतमेन सीव्येच्छणाश्मन्तकमूर्वातसीनां वल्कलैर्वा । सूच्यस्तु तिस्र उपदिश्यन्ते–द्व्यङ्गुला, त्र्यङ्गुला, धनुर्वक्रेति । तत्र मांसलेष्ववकाशेषु त्र्यस्रा त्र्यङ्गुला च, सन्धिष्वल्पमांसेषु च द्व्यङ्गुला वृत्ता च, पक्वामाशयमर्मसु धनुर्वक्राऽर्धतृतीयाङ्गुला च । गोफणिका, तुन्नसेवनी, वेल्लितकमृजुग्रन्थिबन्धश्चेति समासेन सेवनविकल्पाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः । तेषां प्रहारमासाद्योपयोग बुद्ध्वा नातिसन्निकृष्टां नातिविप्रकृष्टामनल्पग्राहिणीमनतिग्राहिणीं वा सूची पातयेत् ॥' इति च. ।

देशेऽल्पमांसे सन्धौ च सूची वृत्ताऽङ्गुलद्वयम् ॥
आयता ऽयङ्गुला ऽयस्रा मांसले चाऽपि पूजिता ॥ २३ ॥
धनुर्वक्रा हिता मर्मफलकोशोदरोपरि ॥
इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः ॥ २४ ॥
कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः ॥
[1]नातिदूरे निकृष्टे वा सूचीं कर्मणि पातयेत् ॥ २५ ॥
दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम् ॥ २६ ॥
अथ क्षौमपिचुच्छन्नं [2]सुस्यूतं प्रतिसारयेत् ॥
प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः ॥ २७ ॥
शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः ॥
ततो व्रणं यथायोगं बद्ध्वाऽऽचारिकमादिशेत् ॥ २८ ॥
एतदष्टविधं कर्म समासेन प्रकीर्तितम् ॥
चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥ २९ ॥
हीनातिरिक्तं तिर्यक् च गात्रच्छेदनमात्मनः ॥
एताश्चतस्रोऽष्टविधे कर्मणि व्यापदः स्मृताः ॥ ३० ॥
अज्ञानलोभाहितवाक्ययोगभयप्रमोहैरपरैश्च भावैः ॥
[3]यदा प्रयुञ्जीत भिषक् कुशस्त्रं तदा स [4]शेषान् कुरुते विकारान् ३१
तं क्षारशस्त्राग्निभिरौषधैश्च भूयोऽभियुञ्जानमयुक्तियुक्तम् ॥
जिजीविषुर्दूरत एव वैद्यं विवर्जयेदुग्रविषाहितुल्यम् ॥ ३२ ॥
तदेव युक्तं त्वति मर्मसन्धीन् हिंस्यात् सिराः स्नायुमथास्थि चैव ॥
मूर्खप्रयुक्तं पुरुषं क्षणेन प्राणैर्वियुञ्ज्यादथवा कदाचित् ॥ ३३ ॥

---

१ 'दूरे निपतिता बाध सन्निकृष्टे विलुञ्चनम् ॥ अल्पग्रहात्तद्वदेव व्रणे कुर्यादतस्त्यजेत् ॥' इति च. । २ 'संस्यूत' इति पा. । तथा च 'सम्यक् सीवितमवेक्ष्य मधुघृतयुतैरञ्जनमधुकरोध्रप्रियङ्गुशल्लकीफलरसाञ्जनक्षौममसीचूर्णैः प्रतिसार्य बन्धेनोपचरेत् ॥' इति च. । ३ 'वैद्यो यदा शस्त्रमतिप्रयुञ्जेत् सशेषदोषान् कुरुते विकारान् ॥' इति ता. । ४ 'सशेषान्' इति हा. ।

भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं संलयनोष्णते[1] च ॥
स्रस्ताङ्गता मूर्च्छनमूर्ध्ववातस्तीव्रा रुजो वातकृताश्च तास्ताः ॥३४॥
मांसोदकाभं रुधिरं च गच्छेत् सर्वेन्द्रियार्थोपरमस्तथैव ॥
दशार्धसंख्येष्वपि विक्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम् ॥३५॥
सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेद्धै क्षततश्च वायुः ॥
करोति रोगान् विविधान् यथोक्तांश्छिन्नासु भिन्नास्वथवा सिरासु[2]॥
कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च ॥
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं मनुजं व्यवस्येत् ॥३७॥
शोफातिवृद्धिस्तुमुला रुजश्च बलक्षयः पर्वसु भेदशोफौ ॥
क्षतेषु सन्धिष्वचलाचलेषु स्यात् सन्धिकर्मोपरतिश्च लिङ्गम्॥३८॥
घोरा रुजो यस्य निशादिनेषु सर्वास्ववस्थासु न[3] शान्तिरस्ति ॥
तृष्णाऽङ्गसादौ श्वयथुश्च रुक्[4] च तमस्थिविद्धं मनुजं व्यवस्येत् ३९
यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वभिताडितेषु ॥
स्पर्शं न जानाति विपाण्डुवर्णो यो मांसमर्मण्यभिताडितः स्यात् ॥
आत्मानमेवाथ जघन्यकारी शस्त्रेण यो हन्ति हि कर्म कुर्वन् ॥
तमात्मवानात्महनं कुवैद्यं विवर्जयेदायुरभीप्समानः ॥ ४१ ॥

तिर्यक्प्रणिहिते शस्त्रे दोषाः पूर्वमुदाहृताः ॥
तस्मात् परिहरन् दोषान् कुर्याच्छस्त्रनिपातनम् ॥ ४२ ॥
मातरं पितरं पुत्रान् बान्धवानपि चातुरः ॥
अप्येतानभिशङ्केत[5] वैद्ये विश्वासमेति च ॥ ४३ ॥
विसृजत्यात्मनाऽऽत्मानं न चैनं परिशङ्कते ॥
तस्मात् पुत्रवदेवैनं पालयेदातुरं भिषक् ॥ ४४ ॥

---

१ हाराणचन्द्रस्तु 'संलपनोष्णते च' इति पठति तथा चक्रपाणिश्चापि ।
२ 'सिरासु छिन्नास्वथ विक्षतासु' इति ता.। ३ '°च नैति शान्तिम्' इति पा.। ४ 'रूक्षः' इति ता.। ५ 'अप्येतान् शङ्कते नित्यं' इति ता.।

धर्मार्थौ कीर्तिमित्यर्थं सतां ग्रहणमुत्तमम् ॥
प्राप्नुयात् स्वर्गवासं च हितमारभ्य कर्मणा ॥ ४५ ॥
कर्मणा कश्चिदेकेन द्वाभ्यां कश्चित्रिभिस्तथा ॥
विकारः साध्यते कश्चिच्चतुर्भिरपि कर्मभिः ॥ ४६ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थानेऽष्टविधशस्त्रकर्मीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशतितमोऽध्यायः।

अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

'शल,' 'श्वल' आशुगमने धातू; तयोराद्यस्य शल्यमिति रूपम् ॥ ३ ॥

तद्द्विविधं शारीरमागन्तुकं च ॥ ४ ॥

सर्वशरीराबाधकरं शल्यं, तदिहोपदिश्यत इत्यतः शल्यशास्त्रम् ॥ ५ ॥

तत्र शारीरं दन्तरोमनखादि धातवोऽन्नमला दोषाश्च दुष्टाः; आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति ॥ ६ ॥

अधिकारो हि लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु; तत्रापि विशेषतो लोहेष्वेवं, विशसनार्थोपपन्नत्वाल्लोहस्य; लोहानामपि दुर्वारत्वादणु-

---

१ 'धर्मार्थौ' इत्यादिश्लोकस्ताडपत्रपुस्तके न दृश्यते। २ 'कीर्तिप्रीत्यर्थं' इति पा.। ३ 'शल् हिंसायां धातुः; तस्य शल्यमिति रूपम् ॥' इति पाठोऽस्मिन् स्थले 'भानुमत्यां' स्वीकृतश्चक्रपाणिना तथा ताडपत्रेऽपि। ४ 'लोहमयेष्वेव' इति पा.। ५ 'निर्वाहित्वादणु°' इति च.।

मुखत्वाद्दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः। स च द्विविधः कर्णी, श्लक्ष्णश्च; प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्याख्याताः, व्यालमृगपक्षिवक्त्रसदृशाश्च[1] ॥ ७ ॥

सर्वशल्यानां[2] तु महतामणूनां वा पञ्चविधो गतिविशेष ऊर्ध्वमधोऽर्वाचीनस्तिर्यगृजुरिति ॥ ८ ॥

तानि वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते, धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु ॥ ९ ॥

तत्र शल्यलक्षणमुच्यमानमुपधारय । तद्विविधं—सामान्यं, वैशेषिकं च। श्यावं पिडकाचितं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्राविणं बुद्बुदवदुन्नतं मृदुमांसं च व्रणं जानीयात् सशल्योऽयमिति; सामान्यमेतल्लक्षणमुक्तम्। वैशेषिकं तु—त्वग्गते विवर्णः शोफो भवत्यायतः कठिनश्च; मांसगते शोफाभि(ति)वृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च; पेश्यन्तरस्थेऽप्येतदेव[3] चोषशोफवर्जं; सिरागते सिराध्मानं सिराशूलं सिराशोफश्च; स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च; स्रोतोगते स्रोतसां स्वकर्मगुणहानिः; धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्दः पिपासा हृल्लासश्च; अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च; अस्थिविवरगतेऽस्थिपूर्णताऽस्थिनिस्तोदः संहर्षो बलवांश्च[4]; सन्धिगतेऽस्थिवच्चेष्टोपरमश्च; कोष्ठगत आटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखात्, मर्मगते मर्मविद्धवच्चेष्टते[5]। सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥ १० ॥

---

१ इदं सप्तमसंख्यात्मक गद्य ताडपत्रपुस्तके नोपलभ्यते। २ 'शरीरे सर्वशल्यानां गतयः पञ्चधा स्मृताः। ऋज्वागतमवाञ्चीन तिर्यगूर्ध्वमधोगतम्' इति ताडपत्रपुस्तके पाठः। ३ 'मांसानां पेश्यन्तरस्थे' इति ता.। ४ 'अस्थिचूर्णपूर्णता संहर्षो वेगवांश्च' इति ता.। ५ 'मर्मविद्धवदाचक्षीत' इति ता.।

महान्त्यल्पानि[1] वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति, विशेषतः कण्ठस्रोतःसिरात्वक्पेश्यस्थिविवरेषु; दोषप्रकोप[2]व्यायामाभिघाताजीर्णेभ्यः प्रचलितानि पुनर्बाधन्ते ॥ ११ ॥

तत्र, त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्[3]माषयवगोधूमगोमयमृदितायां त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणाऽऽशु विसरति घृतमुपशुष्यति चालेपो यत्र तत्र शल्यं विजानीयात्; मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्, कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमानं यत्र संरम्भं वेदनां वा जनयति तत्र शल्यं विजानीयात्; कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवमेव परीक्षेत; सिराधमनीस्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायात्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्; अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपाचरेत्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसरणाकुञ्चनबन्धनपीडनैर्भृशमुपाचरेत्; यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, मर्मप्रनष्टे त्वनन्यभावान्मर्मणामुक्तं परीक्षणं भवति ॥ १२ ॥

सामान्य[4]लक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्लवनप्रतरणव्यायामैर्जृम्भोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात् ॥ १३ ॥

भवन्ति चात्र—

---

१ 'मृदून्यल्पानि वा' इति च । २ 'दोषप्रकोपव्यायामादभिघातात् क्षतादपि स्थानाच्च चलित शल्यं पुनराबाधकरं भवेत् ॥' इति ता. । ३ 'मृद्गोमयचूर्णप्रमृदितायां' इति ता. । ४ 'सर्वस्थानगते सामान्यलक्षणमपि च' इति च.।

यस्मिंस्तोदादयो[1] देशे सुप्तता गुरुताऽपि च ॥
घट्टते[2] बहुशो यत्र शूयते रुज्यतेऽपि च ॥ १४ ॥
आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति ॥
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्दिशेत् ॥ १५ ॥
अल्पाबाधमशूनं[3] च नीरुजं निरुपद्रवम् ॥
प्रसन्नं मृदुपर्यन्तं निराघट्टमनुन्नतम्[4] ॥ १६ ॥
एषण्या सर्वतो दृष्ट्वा यथामार्गं[5] चिकित्सकः ॥
प्रसाराकुञ्चनाच्चूनं निःशल्यमिति निर्दिशेत् ॥ १७ ॥
अस्थ्यात्मकं भज्यते[6] तु शल्यमन्तश्च शीर्यते ॥
प्रायो निर्भुज्यते शार्ङ्गमायसं चेति निश्चयः ॥ १८ ॥
वार्क्षवैणवतार्णानि निर्ह्रियन्ते तु नो यदि ॥
पचन्ति रक्तं मांसं च क्षिप्रमेतानि देहिनाम् ॥ १९ ॥
कानकं राजतं ताम्रं रैतिकं[7] त्रपुसीसकम् ॥
चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात् ॥ २० ॥
स्वभावशीता मृदवो ये चान्येऽपीदृशा[8] मताः ॥
द्रवीभूताः शरीरेऽस्मिन्नेकत्व यान्ति धातुभिः ॥ २१ ॥
विषाणदन्तकेशास्थिवेणुदारूपलानि तु ॥
शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि च ॥ २२ ॥
द्विविधं पञ्चगतिमं[9] त्वगादिव्रणवस्तुषु ॥
यो वेत्ति [10]विष्टितं शल्यं स राज्ञः [11]कर्तुमर्हति ॥ २३ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने प्रनष्टशल्यविज्ञानीयो
नाम षड्विंशतितमोऽध्याय. ॥ २६ ॥

---

१ ताडपत्रपुस्तकेऽयं श्लोको न दृश्यते । २ 'घट्टिते' इति पा. । ३ 'अल्पामयमशून' इति ता. । ४ '°मवेदनम्' इति ता. । ५ 'यथालाभ' इति ता. । ६ 'भिद्यते' इति च. । ७ 'कृष्णायस्त्रपुसीसकम् ॥ इति ता. । ८ '°प्येवमादयः' इति ता. । ९ 'पञ्चगतिकं' इति ता. । १० 'यो वेत्त्यधिष्ठित शल्य' इति च. । ११ अयं त्रयोविशतितम. श्लोकस्ताडपत्रपुस्तके न दृश्यते ।

# सप्तविंशतितमोऽध्यायः।

अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शल्यं[1] द्विविधमवबद्धमनवबद्धं च ॥ ३ ॥

तत्र समासेनानवबद्धशल्योद्धरणार्थं पञ्चदश[2] हेतून् वक्ष्यामः। तद्यथा—स्वभावः, पाचनं, भेदनं, दारणं, पीडनं, प्रमार्जनं, निर्ध्मा[3]पनं, वमनं, विरेचनं, प्रक्षालनं, प्रतिमर्शः, प्रवाहणम्, आचूषणम्, अयस्कान्तो, हर्षश्चेति[4] ॥ ४ ॥

तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति[5]। मांसावगाढं शल्यमविदह्यमानं पाचयित्वा प्रकोथात्तस्य पूयशोणितवेगाद्गौरवाद्वा पतति[6]। पक्वमभिद्यमानं भेदयेद्दारयेद्वा। भिन्नमनिरस्यमानं पीडनीयैः पीडयेत् पाणिभिर्वा। अणून्यक्षिशल्यानि परिषेचनाध्मापनैर्[7]बालवस्त्रपाणिभिः प्रमार्जयेत्[8] आहारशेषश्लेष्म[9]हीनाणुशल्यानि श्वसनोत्कासनप्रधमनैर्निर्धमेत्। अन्नशल्यानि[10] वमनाङ्गुलिप्रतिमर्शप्रभृतिभिः। विरेचनैः पक्वाशयगतानि। व्रणदोषाशयगतानि प्रक्षालनैः। वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम्[11]। मारुतोदकसविषरुधिरदुष्टस्तन्येष्वाचूषणमास्येन विषाणैर्वा[12]।

---

१ इदं सूत्र ताडपत्रपुस्तके न दृश्यते। २ ताडपत्रपुस्तके 'नवहेतून् वक्ष्यामः' इति पठ्यते, तत्र भेदनदारणपीडनवमनविरेचनप्रक्षालनानि न पठ्यन्ते। एतान्परित्यज्य शेषा नवसंख्याकास्ते पठ्यन्ते। ३ 'निर्धमन' इति ता.। ४ 'हर्षणमिति' इति ता.। ५ 'एष स्वभावो नाम' इति ता.। ६ 'पतति एतत् पाचन नाम' इति ता.। ७ 'परिषेचनोपधमन०' इति ता.। ८ 'प्रमार्जयेदेतत् प्रमार्जन नाम' इति ता। ९ 'आहारशेषं कण्ठगत श्लेष्मासिघाणकं निश्वासोत्कसनाभ्यां निर्धमेत्, एतन्निर्धमन नाम' इति ता.। १० 'अन्नशल्यानि वमनाङ्गुलिस्पर्शनप्रभृतिभिः प्रमृज्योद्धरेत्, एष प्रतिमर्शो नाम' इति ता.। ११ 'विरेचनैर्वा प्रवाहणेनोद्धरेत्, एतत्प्रवाहणं नाम' इति ता.। १२ 'मारुतोदकस्तन्यरुधिरविषशल्यान्याचूषणेनोद्धरेदास्येन विषाणेन वा, एतदाचूषण नाम' इति ता.।

अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन । हृद्यवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति ॥ ५ ॥

सर्वशल्यानां तु महतामणूनां वा द्वावेवाहरणहेतू भवतः— प्रतिलोमोऽनुलोमश्च ॥ ६ ॥

तत्र प्रतिलोममर्वाचीनमानयेत्[1], अनुलोमं पराचीनम्[2] ॥ ७ ॥

उत्तुण्डितं[3] छित्त्वा निर्घातयेच्छेदनीयमुखम् ॥ ८ ॥

छेदनीयमुखान्यपि[4] कुक्षिवक्षःकक्षावंक्षणपर्शुकान्तरपतितानि च हस्तशक्यं यथामार्गेण हस्तेनैवापहर्तुं प्रयतेत ॥ ९ ॥

हस्तेनैवोपहर्तुमशक्यं[5] विशस्य शस्त्रेण यन्त्रेणापहरेत् ॥ १० ॥

भवति चात्र—

शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत् ॥
संरक्षेदस्य मर्माणि मुहुराश्वासयेच्च तम् ॥ ११ ॥

ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृतप्रभृतिभिः संस्वेद्यावदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्ध्वाऽऽचारिकमुपदिशेत् । (सिरास्नायुविलग्नं शलाकादिभिर्विमोच्यापनयेत्; श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं; दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा । ) ॥ १२ ॥

हृदयमभितो वर्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गं; दुरुपहरमन्यतोऽपबाध्यमानं[6] पाटयित्वोद्धरेत्[7] ॥ १३ ॥

अस्थिविवरप्रविष्टमस्थिविदष्टं[8] वाऽवगृह्य पादाभ्यां यन्त्रेणापहरेत्, अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्य-

---

१ 'मपनयेत्' इति च. । २ अस्याग्रे 'तिर्यग्गत यतः सुखाहार्यं भवति ततश्छित्त्वाऽपहरेत्' इत्यधिक पठ्यतेऽष्टाङ्गसंग्रहे । ३ 'अनुलोममनुण्त्तुडत छेदयित्वा च्छेदनीयमुखम्' इति च. । ४ 'अच्छेदनीयमुखान्यपि' इति ता. । ५ '°वाहर्तुमशक्य' इति ता. । ६ 'दुरपहर°' इति च. । 'दुराहरण०' इति ता. । ७ 'पाटयित्वाऽपहरेत्' इति च. । ८ अस्याग्रे केषुचित्पुस्तकेषु 'सिरास्नायुविलग्न शलाकादिर्विमोच्यापनयेत्, श्वयथुग्रस्तवारङ्ग समवपीड्य श्वयथु,

वारङ्गं प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतश्चास्य पञ्चाङ्ग्यामुपसंयतस्याश्वस्य वक्त्रकविके बध्नीयात्, अथैनं कशया ताडयेद्यथोन्नामयन् शिरो वेगेन शल्यमुद्धरति; दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्बद्ध्वो-द्धरेत् ॥ १४ ॥

[2]एकदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव यन्त्रेण ॥ १५ ॥

[3]विमृदितकर्णानि कर्णवन्त्यनाबाधकरदेशोत्तुण्डितानि पुरस्ता-देव ॥ १६ ॥

जातुषे[4] कण्ठासक्ते कण्ठे नाडीं प्रवेश्याग्नितप्तां च शलाकां, तयाऽ-वगृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतं शल्यमुद्धरेत् ॥ १७ ॥

अजातुषं तु जतुमधूच्छिष्ट[5]प्रलिप्तया शलाकया पूर्वकल्पेनेत्येके १८

अस्थिशल्यमन्यद्वा तिर्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकदीर्घ-सूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठात् पूर्णकोष्ठं च वामयेत्, वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्; मृदुना वा दन्तधावनकूर्चकेनापहरेत् प्रणुदेद्वाऽन्तः। क्षतकण्ठाय च मधु-सर्पिषी लेढुं प्रयच्छेत्त्रिफलाचूर्णं वा मधुशर्कराविमिश्रम् ॥ १९ ॥

---

दुर्बलवारङ्गकुशादिभिर्बद्ध्वा' इत्यधिकः पाठ उपलभ्यते। अयं पाठो वाग्भट-समतो वर्तते। यथा—'सिरास्नायुविलग्नं तु चालयित्वा शलाकया। बद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत्' इति।

१ 'एवमशक्य गुणेन परिवेष्ट्य बद्ध्वाऽश्ववक्त्रकटकेऽश्व कशया ताडयेत्। यथोन्नामयञ् शिरोवक्त्र वेगेन शल्यमपहरति, पञ्चाङ्ग्यां वृक्षशाखायां वा बद्ध्वा पूर्ववदुद्धरेत्' इति ता.। २ अयं पाठस्ताडपत्रपुस्तके न दृश्यते। ३ 'विमृदितकर्णानि कर्णवन्ति' इत्ययं पाठस्ताडपत्रपुस्तके न दृश्यते। ४ 'जातुषे कण्ठसक्ते कण्ठनाडीं प्रवेश्याग्नितप्तया शलाकया विगृह्य शीता-भिरद्भिः परिषिच्य स्थिरीभूत शल्यमुद्धरेत्' इति ता.। ५ 'अजातुषं तु जतुना लिप्तया शलाकया पूर्वकल्पेनास्थिशल्यमन्यद्वा तिर्यक्कण्ठसक्तमवेक्ष्य च' इत्यादि ता.।

उदकपूर्णोदरमवाक्शिरसमवपीडयेद्धुनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखात् ॥ २० ॥

ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धं स्कन्धे मुष्टिनाऽभिहन्यात्, [1]स्नेहं मद्यं पानीयं वा पाययेत् ॥ २१ ॥

बाहुरज्जुलतापाशैः[2] कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि, लालास्रावं फेनागमनं संज्ञानाशं चापादयति, तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं विदध्याद्रसं च वातघ्नं दद्यादिति[3] ॥ २२ ॥

भवन्ति चात्र—

शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान् ॥
तथा यन्त्रपृथक्त्वं च सम्यक् शल्यमथाहरेत् ॥ २३ ॥
कर्णवन्ति तु शल्यानि दुःखोहार्याणि[4] यानि च ॥
आददीत भिषक् तस्मात्तानि युक्त्या समाहितः ॥ २४ ॥
एतैरुपायैः शल्यं तु नैव निर्ह्रियते[5] यदि ॥
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥ २५ ॥
शोथपाकौ रुजश्चोग्राः कुर्याच्छल्यमनाहृतम् ॥
वैकल्यं मरणं चापि तस्माद्यत्नाद्विनिर्हरेत् ॥ २६ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने शल्यापनयनीयो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

# अष्टाविंशतितमोऽध्यायः ।

अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं[6] व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥

---

१ 'स्नेहं सुखोदकं वा' इति ताडपत्रपुस्तके पाठः । २ 'पाशशल्ये तु' इति पा० । ३ इदं द्वाविंशतिसंख्याकं गद्यं ताडपत्रपुस्तके नोपलभ्यते । ४ 'दुःखान्याहरणे विदुः' इति पा० । ५ 'निर्हार्यते' इति पा० । ६ 'विपरीतव्रणविज्ञानीय' इति ता. ।

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ॥
ख्यापयन्ति भविष्यत्वं तथा[1] रिष्टानि पञ्चताम् ॥ ३ ॥
तानि सौक्ष्म्यात् प्रमादाद्वा तथैवाशु व्यतिक्रमात् ॥
गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसंभवात् ॥ ४ ॥
ध्रुवं[2] तु मरणं रिष्टे ब्राह्मणैस्तत् किलामलैः ॥
रसायनतपोजप्यतत्परैर्वा निवार्यते ॥ ५ ॥
नक्षत्रपीडा बहुधा यथा कालं[3] विपच्यते ॥
तथैवारिष्टपाकं च ब्रुवते बहवो[4] जनाः ॥ ६ ॥
असिद्धिमाप्नुयाल्लोके प्रतिकुर्वन् गतायुषः ॥
अतो[5]ऽरिष्टानि यत्नेन लक्षयेत् कुशलो भिषक् ॥ ७ ॥
गन्धवर्णरसादीनां विशेषाणां स्वभावतः[6] ॥
वैकृतं यत् तदाचष्टे व्रणिनः पक्वलक्षणम् ॥ ८ ॥
कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः ॥
लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः ॥ ९ ॥
लाजातसीतैलसमाः किंचिद्विस्राश्च गन्धतः ॥
ज्ञेयाः प्रकृतिगन्धाः स्युरतो[7]ऽन्यद्गन्धवैकृतम् ॥ १० ॥
मद्या[8]गुर्वाज्यसुमनः पद्मचन्दनचम्पकैः ॥
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥ ११ ॥
श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणैः ॥
सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥ १२ ॥
कुङ्कुमश्यामकङ्कुष्ठसवर्णाः पित्तकोपतः ॥
न दह्यन्ते न चूष्यन्ते[9] भिषक् तान् परिवर्जयेत् ॥ १३ ॥

१ 'रिष्टानि मरण तथा' इति ता.। २ 'ध्रुव हि रिष्टमरणं' इति ता.। ३ 'कालात्' इति ता.। ४ 'बहुधा जना.' इति पा०। ५ 'तस्माद्यत्नेन रिष्टानि' इति ता.। ६ 'स्वभावत' इत्यत्र 'समासतः' इति पा०। ७ '°स्तु ततो°' इति ता.। ८ 'मद्याज्ययो' सुमनसां पद्मचदनयोरपि ॥ सुगन्धा' इति ता.। ९ 'शुष्यन्ति' इति ता ।

कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः ॥
[1]दूयन्ते वाऽपि दह्यन्ते भिषक् तान् परिवर्जयेत् ॥ १४ ॥
[2]कृष्णास्तु ये तनुस्रावा वातजा मर्मतापिनः ॥
स्वल्पामपि न कुर्वन्ति रुजं तान् परिवर्जयेत् ॥ १५ ॥
क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः ॥
त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये ॥
ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः ॥
दह्यन्ते चान्तरत्यर्थं बहिः शीताश्च ये व्रणाः ॥ १७ ॥
दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥
[3]शक्तिध्वजरथाः कुन्तवाजिवारणगोवृषाः ॥ १८ ॥
येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ॥
चूर्णावकीर्णा इव ये भान्ति चानवचूर्णिताः ॥ १९ ॥
प्राणमांसक्षयश्वासकासारोचकपीडिताः ॥
प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥ २० ॥
क्रियाभिः सम्यगारब्धा न सिद्ध्यन्ति च ये व्रणाः ॥
वर्जयेत्तानपि प्राज्ञः संरक्षन्नात्मनो यशः ॥ २१ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतव्रणविज्ञानीयो नामाष्टाविंशतितमोऽध्याय. ॥ २८ ॥

---

## एकोनत्रिंशत्तमोऽध्यायः ।

अथातो विपरीताविपरीतस्वप्ननिदर्शनीयमध्यायं[4] व्याख्यास्यामः ॥ १ ॥

---

१ 'दह्यन्ते वेदनावन्तो भिषक् तानपि वर्जयेत्' इति ता. । २ 'कृष्णा ये त्वरुणस्रावा' इति ता. । ३ 'शक्तिकुन्तध्वजरथा वाजिवारणपक्षिणः ।' इति ता. ४ 'विपरीतस्वप्ननिदर्शनीयं व्याख्यास्यामः' इति ताडपत्रपुस्तके पाठः । 'विपरीताविपरीतदूतशकुनस्वप्ननिदर्शनीयमध्याय' इति हाराणचन्द्रसंमत. पाठः ।

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

दूतदर्शनसंभाषा वेषाश्चेष्टितमेव च ॥
ऋक्ष वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥ ३ ॥
देशो[1] वैद्यस्य वाग्देहमनसां च विचेष्टितम् ॥
कथयन्त्यातुरगतं शुभं वा यदि वाऽशुभम् ॥ ४ ॥
पाख(ष)ण्डाश्रमवर्णानां सपक्षाः[2] कर्मसिद्धये ॥
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ ५ ॥
नपुंसकं स्त्री बहवो नैककार्या[3] असूयकाः ॥
गर्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः ॥ ६ ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥
पाशदण्डायुधधराः पाण्डुरेतरवाससः ॥ ७ ॥
आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवाससः[4] ॥
न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ॥ ८ ॥
रूक्षनिष्ठुरवक्तारस्त्वमङ्गल्याभिधायिनः[5] ॥
छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ॥ ९ ॥
वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ॥
स्रोतोवरोधहृद्गण्डमूर्धोरःकुक्षिपाणयः[6] ॥ १० ॥
कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ॥
विलिखन्तो महीं किंचिन्मुञ्चन्तो लोष्टभेदिनः ॥ ११ ॥
तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपना ॥
फलं पक्वमसारं वा गृहीत्वाऽन्यच्च तद्विधम् ॥ १२ ॥
नखैर्नखान्तरं वाऽपि करेण चरणं तथा ॥
उपानच्चर्महस्ता वा विकृतव्याधिपीडिताः ॥ १३ ॥

---

१ 'गेहे' इति ता. २ 'सवर्णा.' इति ता. । ३ 'रुदन्त्यः सन्ध्ययोस्तथा' इति ता. । ४ "मलिनध्वस्तवाससः' इति पा० । ५ "वादाश्चाप्यमाङ्गल्याः" इति पा० । ६ अय चरणस्ताडपत्रपुस्तके न दृश्यते ।

वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः[1] ॥
याम्यां दिशि प्राञ्जलयो विषमैकपदे स्थिताः ॥ १४ ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥
दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ॥
ज्वलयन्तं[2] पचन्तं वा क्रूरकर्मणि चोद्यतम् ॥ १५ ॥
नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ॥
प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव वा ॥ १६ ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥
वैद्यस्य पैत्र्ये दैवे वा कार्ये चोत्पातदर्शने ॥ १७ ॥
मध्याह्ने चार्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ॥
आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च ॥ १८ ॥
चतुर्थ्यां[3] वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १९ ॥
स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ॥
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥ २० ॥
त एव कफरोगेषु कर्मसिद्धिकराः स्मृताः ।
एतेन शेषं व्याख्यातं बुद्ध्या[4] संविभजेत्तु तत् ॥ २१ ॥
रक्तपित्तातिसारेषु प्रमेहेषु तथैव च ॥
प्रशस्तो[5] जलरोधेषु दूतवैद्यसमागमः ॥ २२ ॥
विज्ञायैवं विभागं तु शेषं बुध्येत पण्डितः ॥
शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः ॥ २३ ॥
स्वस्यां जातौ स्वगोत्रो वा दूतः कार्यकरः स्मृतः ॥
गोयानेनागतस्तुष्टः पादाभ्यां[6] शुभचेष्टितः ॥ २४ ॥

---

१ 'विवृत्तेक्षणाः' इति ता.। २ अयं चरणस्ताडपत्रपुस्तके न दृश्यते। ३ 'नवम्यामथ षष्ठ्यां वा पक्षसन्धिदिनेषु च' इति ता.। ४ स्वबुद्ध्या विभजेद्भिषक्' इति ता. ५ 'प्रशस्तजलसरोधो वैद्यातुरसमागमः' इति ता.। ६ 'पद्भ्यां वाऽक्लिष्टचेष्टितः' इति ता.।

स्मृतिमान्[1] विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान् ॥
अलङ्कृतो मङ्गलवान्[2] दूतः कार्यकरः स्मृतः ॥ २५ ॥
स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम् ॥
उपसर्पति[3] यो वैद्यं स च कार्यकरः स्मृतः ॥ २६ ॥
मांसोदकुम्भातपत्रविप्रवारणगोवृषाः[4] ॥
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ २७ ॥
स्त्री पुत्रिणी सवत्सा गौर्वर्धमानमलङ्कृता[5] ॥
कन्या मत्स्याः फलं चामं स्वस्तिकं मोदका दधि ॥ २८ ॥
हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः[6] ॥
अप्रशान्तोऽनलो वाजी हंसश्चापः शिखी तथा ॥ २९ ॥
ब्रह्मदुन्दुभिजीमूतशङ्खवेणुरथस्वनाः ॥
सिंहगोवृषनादाश्च[7] ह्रे(हे)षितं गजबृंहितम् ॥ ३० ॥
शस्तं हंसरुतं नृणां कौशिकं चैव वामतः ॥
प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः ॥ ३१ ॥
पत्रपुष्पफलोपेतान् सक्षीरान्नीरुजो द्रुमान् ॥
आश्रिता[8] वा नभोवेश्मध्वजतोरणवेदिकाः ॥ ३२ ॥
दिक्षु शान्तासु[9] वक्तारो मधुरं पृष्ठतोऽनुगाः ॥
वामा वा दक्षिणा वाऽपि शकुनाः कर्मसिद्धये ॥ ३३ ॥
शुष्केऽशनिहतेऽपत्रे वल्लीनद्धे सकण्टके ॥
वृक्षेऽथवाऽश्मभस्मास्थिविट्तुषाङ्गारपांशुषु ॥ ३४ ॥
चैत्यवल्मीकविषमस्थिता दीप्तखरस्वराः ॥
पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः ॥ ३५ ॥

---

१ 'धृतिमांश्च विधिज्ञश्च कालज्ञ· प्रतिपत्तिमान्' इति ता.। २ 'मङ्गलवाग्' इति ता.। ३ उपसर्पन्ति ये वैद्य ते च कार्यकराः स्मृता ' इति ता.। ४ 'मासकुम्भोदकच्छत्र' इति ता. ५ 'वर्धमानाः स्वलङ्कृता' इति पा.। ६ 'सुमना नृपः' इति पा.। ७ 'सिंहमेघनिनादाश्च' इति ता.। ८ 'आस्थिता' ता.। ९ 'शस्तासु' इति ता.।

पुन्नामानः खगा वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥
दक्षिणाद्वामगमनं प्रशस्तं श्वश्रृगालयोः ॥
वामं नकुलचाषाणां नोभयं शशसर्पयोः ॥ ३६ ॥
भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥
दर्शनं वा रुतं वाऽपि न गोधाकृकलासयोः ॥ ३७ ॥
दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ॥
कुलत्थतिलकार्पासतुषपाषाणभस्मनाम् ॥ ३८ ॥
पात्रं नेष्टं तथाऽङ्गारतैलकर्दमपूरितम् ॥
प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ॥ ३९ ॥
शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ॥
नेष्यन्ते पतितान्तस्थदीनान्धरिपवस्तथा ॥ ४० ॥
मृदुः शीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ॥
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ॥ ४१ ॥
ग्रन्थ्यर्बुदादिषु सदा छेदशब्दस्तु पूजितः ॥
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥ ४२ ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ॥
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥ ४३ ॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ॥
छर्द्यां वातपुरीषाणां शब्दो वै गर्दभोष्ट्रयोः ॥ ४४ ॥

---

१ 'पुंसंज्ञाः पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥ प्रस्थाने...... विपरीता. प्रवेशने' ॥ इति ता. । २ अयं चरणस्ताडपत्रपुस्तके न दृश्यते । ३ विना सुरया मद्याना' इति ता । ४ 'प्रतिलोमो न शस्यते' इति ता । ५ रक्तपित्तातिसारेषु' इत्यादेरुक्तचरणस्याग्रे ताडपत्रपुस्तके 'एतेन शेषं व्याख्यातं स्वबुद्ध्या विभजेत्तु तम्' ॥ इत्यय चरणो दृश्यते । ६ अयं चरणस्ताडपत्रपुस्तके न दृश्यते । ७ अयं श्लोकस्ताडपत्रपुस्तके न दृश्यते ।

प्रतिषिद्धं तथा भग्नं[1] क्षुतं स्खलितमाहतम् ॥
दौर्मनस्यं च वैद्यस्य यात्रायां न[2] प्रशस्यते ॥ ४५ ॥
प्रवेशेऽप्येतदुद्देशादावेक्ष्य[3] च तथाऽऽतुरे ॥
प्रतिद्वारं गृहे चास्य पुनरेतन्न गण्यते ॥ ४६ ॥
केशभस्मास्थिकाष्ठाश्मतुषकार्पासकण्टकाः[4] ॥
खट्वोर्ध्वपादा मद्यापो वसा तैलं तिलास्तृणम् ॥ ४७ ॥
नपुंसकव्यङ्गभग्ननग्नमुण्डासिताम्बराः[4] ॥
प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥ ४८ ॥
भाण्डानां संकरस्थानां स्थानात् संचारणं तथा ॥
निखातोत्पाटनं भङ्गः पतनं[5] निर्गमस्तथा ॥ ४९ ॥
वैद्यासनावसादो वा रोगी वा स्यादधोमुखः ॥
वैद्य संभाषमाणोऽङ्गं कुड्यमास्तरणानि वा ॥ ५० ॥
प्रमृज्याद्वा[6] धुनीयाद्वा करौ पृष्ठं शिरस्तथा ॥
हस्तं चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥ ५१ ॥
यो वैद्यमुन्मुखः[7] पश्यन्नुन्मार्ष्टि स्वाङ्गमातुरः ॥
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥ ५२ ॥
भवने[8] पूज्यते वाऽपि यस्य वैद्यः स सिध्यति ॥
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च ॥ ५३ ॥
आतुरस्य ध्रुवं तस्माद्दूतादीन् लक्षयेद्भिषक्[9] ॥
स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च ॥ ५४ ॥

---

१ 'लग्नं' इति पा० । २ 'यात्राया नैव पूजितम्' इति ता. । ३ 'प्रवेशेप्येषमेतत्स्यादावेक्ष्य च यथाऽऽतुरम् ॥ प्रतिद्वार गृहे वाऽस्य इद भूयो न पूज्यते' ॥ इति ता. । ४ अमू श्लोकौ ( ४७।४८ ) ताडपत्रपुस्तके न दृश्येते । ५ 'पतन' इत्यत्र 'शस्त्राणां' इति ता. पा० । ६ 'प्रमृद्याद्वा' पा० । ७ 'वैद्यं मुहुर्मुहु पृच्छन्मार्ष्टि य. स्वाङ्गमातुर ' इति ता. । ८ 'भूयः सम्पूज्यतेवापि' इति ता. । ९ 'सम्परीक्षयेत्' इति ता. ।

सुहृदो[1] यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ॥
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः ॥ ५५ ॥
वराहैर्महिषैर्वाऽपि यो यायाद्दक्षिणामुखः ॥
रक्ताम्बरधरा[2] कृष्णा हसन्ती मुक्तमूर्धजा ॥ ५६ ॥
यं चाकर्षति[3] बद्ध्वा स्त्री नृत्यन्ती[4] दक्षिणामुखम् ।
अन्तावसायिभिर्यो[5] वाऽऽकृष्यते दक्षिणामुखः ॥ ५७ ॥
परिष्वजेरन्[6] यं वाऽपि प्रेताः प्रव्रजिता(न)स्तथा ॥
मुहुराघ्रायते[7] यस्तु श्वापदैर्विकृताननैः ॥ ५८ ॥
पिबेन्मधु च तैलं च यो वा पङ्केऽवसीदति ॥
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥ ५९ ॥
निरम्बरश्च यो रक्तां धारयेच्छिरसा स्रजम् ॥
यस्य वंशो नलो वाऽपि तालो वोरसि जायते ॥ ६० ॥
यं वा मत्स्यो ग्रसेद्यो वा जननीं[8] प्रविशेन्नरः ॥
पर्वताग्रात् पतेद्यो वा श्वभ्रे वा तमसाऽऽवृते ॥ ६१ ॥
ह्रियेत स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ॥
पराजीयेत[9] बध्येत काकाद्यैर्वाऽभिभूयते ॥ ६२ ॥
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ॥
यः पश्येद्देवतानां वा प्रकम्पमवनेस्तथा[10] ॥ ६३ ॥
यस्य छर्दिर्विरेको वा दशनाः प्रपतन्ति वा ॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ॥ ६४ ॥

---

१ 'पश्यन्ति सुहृदो यास्तु स्वप्नान्स्वयमथापि वा' इति ता. । २ 'कृष्णरक्ताम्बरधरा' ता. । ३ 'य वाऽकर्षति' इति ता । ४ 'हसन्तं इति ता. । ५ 'अन्तेनिवासिभिर्यो वा' इति ता. । ६ 'परिष्वजेयुयञ्चापि' इति ता. । ७ 'मूर्धन्याघ्रायते' इति पा० । ८ 'ज्वलन' इति ता. । ९ 'पराजीयेत युद्धे वा इति ता. । १० 'प्रकम्पम्पतन तथा' इति ता. ।

पुष्पाढ्यं कोविदारं वा चितां[1] वा योऽधिरोहति ॥
कार्पासतैलपिण्याकलोहानि लवणं तिलान् ॥ ६५ ॥
लभेताश्नीत[2] वा पक्कमन्नं यश्च पिबेत् सुराम् ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥ ६६ ॥
यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतस्तथा ॥
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥ ६७ ॥
ज्वरितानां शुना सख्यं कपिसख्यं तु शोषिणाम् ॥
उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्तनम्[3] ॥ ६८ ॥
मेहातिसारिणां तोयपानं[4] स्नेहस्य कुष्ठिनाम् ॥
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे, मूर्ध्नि शिरोरुजि ॥ ६९ ॥
शष्कुलीभक्षणं[5] छर्द्यामध्वा श्वासपिपासयोः ॥
हारिद्रं भोजनं वाऽपि यस्य[6] स्यात् पाण्डुरोगिणः ॥ ७० ॥
रक्तपित्ती[7] पिबेद्यस्तु शोणितं स विनश्यति ॥

---

१ 'योऽधिरोहति मानव·' इति पा०। २ 'लभेताश्नीत वा' इत्याद्युक्त श्लोकार्धक ताडपत्रपुस्तके न दृश्यते। ३ 'तु नर्तनम्' इति ता.। ४ 'तोय स्नेहपान तु कुष्ठिनः' इति ता.। ५ 'पिपासाश्वासयोरध्वा छर्द्यां शष्कुलिभक्षणम्' इति ता.। ६ 'यद्भवेत्' इति ता.। ७ 'रक्तपित्ती पिबेद्यस्तु' इत्यादिश्लोककार्धानन्तनतर ताडपत्रपुस्तके दशश्लोका अधिकाः पठिता दृश्यन्ते ते यथा—'यो नरो नरो बहुभिर्मुण्डैः क्रुद्धैश्च प्रतिबाध्यते ॥ ११ ॥ हन्येत बहुभि· शस्त्रैर्ब्राह्मण यो न पश्यति ॥ दन्तप्रक्षालनस्नान स्वप्ने केशविलेखनम् ॥ १२ ॥ रोगागमनिमित्त तद्धन्वन्तरिवचो यथा ॥ अपर्वणीक्षुगण्डानि गुड यो वा विभक्षयेत् ॥ १३ ॥ प्रतिपुद्धो विजानीयादङ्गव्याधिमुपस्थितम् ॥ अयुक्त यानमारुह्य शुष्कवृक्षञ्च सर्वत· ॥ १४ ॥ प्लवते तोयमध्ये वा स रोगं प्राप्नुयान्महत् ॥ तिलकल्केन मासेन वसया कर्दमेन वा ॥ गात्र यस्यावलिप्येत स रोग प्राप्नुयान्महत् ॥ १५ ॥ चाण्डालैर्वा श्वपाकैर्वा चोरैः प्रव्रजितैस्तथा ॥ अन्यैश्च नीचबीभत्सै· प्रहारो न प्रशस्यते ॥ १६ ॥ मद्यस्यान्नस्य मासस्य तिलतैलस्य सर्पिषः ॥ स्वप्ने किञ्चिद्यदि प्राश्य पश्येद्व्याधिमुपस्थितम् ॥ १७ ॥ रक्त·

स्वप्नानेवंविधान्[1] दृष्ट्वा प्रातरुत्थाय यत्नवान् ॥ ७१ ॥
दद्यान्माषांस्तिलांल्लोहं विप्रेभ्यः काञ्चनं तथा ॥
जपेच्चापि शुभान् मन्त्रान् गायत्रीं त्रिपदां तथा ॥ ७२ ॥
दृष्ट्वा तु प्रथमे यामे स्वप्याद् ध्यात्वा पुनः शुभम् ॥
जपेद्वाऽन्यतमं वेदं[2] ब्रह्मचारी समाहितः ॥ ७३ ॥
न चाचक्षीत कस्मैचिद्दृष्ट्वा स्वप्नमशोभनम् ॥
देवतायतने चैव वसेद्रात्रित्रयं तथा ॥
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रविमुच्यते[3] ॥ ७४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ॥
देवान् द्विजान्गोवृषभान् जीवतः सुहृदो नृपान् ॥ ७५ ॥
समिद्धमग्निं साधूंश्च[4] निर्मलानि जलानि च ॥
पश्येत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७६ ॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च ॥
लभेत धनलाभाय व्याधेरपगमाय च ॥ ७७ ॥
महाप्रासादसफलवृक्षवारणपर्वतान्[5] ॥
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ ७८ ॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ॥
तरेत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७९ ॥
उरगो वा जलौको वा भ्रमरो वाऽपि यं दशेत् ॥
आरोग्यं निर्दिशेत्तस्य धनलाभं च बुद्धिमान् ॥ ८० ॥

---

वर्णेन्तु यत्किञ्चित्सर्वं तन्न प्रशस्यते रक्त यद्दामक मांसं चन्दनञ्च प्रशस्यते ॥ १८ ॥ यद्वा शुक्लेन वर्णेन सर्वमेतत्प्रशस्यते ॥ कार्पासमेद्यथो भस्म (?) दधि चैवात्र वार्जितम् ॥ १९ ॥ यत्तु कृष्णेन वर्णेन सर्वमेतन्न शस्यते ॥ भूमिलाभो हिरण्यञ्च हस्ती चैव प्रशस्यते' ॥ १ 'स्वप्नानेवविधान्' दृष्ट्वा' इत्यादयो 'दुःस्वप्नात् प्रविमुच्यते' इत्यन्ताश्चत्वार' श्लोकास्ताडपत्रपुस्तके न दृश्यन्ते । २ 'देव' इति पा० । ३ 'परिमुच्यते' इति पा० । ४ 'विप्रांश्च' इति पा० । ५ 'प्रासादान् सफलान् वृक्षान् वारणान् पर्वतांस्तथा' इति ता०।

एवं रूपाञ् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः ॥
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥ ८१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतस्वप्ननिदर्शनीयो नामैकोनत्रिंशत्तमोऽध्याय ॥ २९ ॥

---

## त्रिंशत्तमोऽध्यायः।

अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यामः[1] ॥ १ ॥
यथोवाच[2] भगवान् धन्वन्तरिः ॥ २ ॥
शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ॥
तत्त्वरिष्टं[3] समासेन, व्यासतस्तु निबोध मे ॥ ३ ॥
शृणोति विविधाञ् शब्दान् यो दिव्यानामभावतः[4] ॥
समुद्रपुरमेघानामसंपत्तौ च निःस्वनान्[5] ॥ ४ ॥
तान् स्वनान्नावगृह्णाति मन्यते चान्यशब्दवत् ॥
ग्राम्यारण्यस्वनांश्चापि विपरीताञ्[6] शृणोति च ॥ ५ ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु[7] कुप्यति ॥
न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥ ६ ॥
यस्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत् ॥
संजातशीतपिडको यश्च दाहेन पीड्यते ॥ ७ ॥

---

१ 'पञ्चेन्द्रियार्थविप्रतिपत्ति व्याख्यास्याम.' इति ता.। २ 'यथोवाच भगवान् धन्वन्तरि.' इति प्रस्तुते ग्रन्थेऽस्मिन् सर्वेषु स्थानेषु सर्वेषामप्याध्यायानामारम्भे ........यन्मूर्धन्य सूत्र दृश्यते तथा ताडपत्रलिखिते सौश्रुतग्रन्थे न कस्मिन्नपि स्थाने न कस्याप्यध्यायस्यारम्भे तन्मूर्धन्यं सूत्र दृश्यते। ३ 'तदरिष्ट' इति ता.। ४ 'दिव्यानसतो बहून्' इति ता.। ५ 'तान्स्वनान्' इति ता। ६ 'गृण्हाति विपरीतवत्' इति ता.। ७ 'द्विषच्छब्देन रमते सुहृच्छब्देन कुप्यति' इत्यत्र ताडपत्रपुस्तकस्थः पाठो दृश्यते।

उष्णगात्रोऽतिमात्रं च यः शीतेन प्रवेपते ।
प्रहारान्नाभिजानाति योऽङ्ग[1]च्छेदमथापि वा ॥ ८ ॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ॥
[2]वर्णान्यता वा राज्यो वा यस्य गात्रे भवन्ति हि ॥ ९ ॥
स्नातानुलिप्तं यं चापि भजन्ते नीलमक्षिकाः ॥
[3]सुगन्धिर्वाऽति योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥ १० ॥
विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ॥
उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥ ११ ॥
यस्य दोषाग्निसाम्यं च कुर्युर्मिथ्योपयोजिताः ।
यो वा रसान्न संवेत्ति गतासु तं प्रचक्षते ॥ १२ ॥
सु[4]गन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ॥
गृह्णीते वाऽन्यथा गन्धं शान्ते दीपे च नीरुजः ॥ १३ ॥
यो वा गन्धं न जानाति गतासुं तं विनिर्दिशेत् ॥
द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा ॥ १४ ॥
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति ॥ १५ ॥
[5]रात्रौ सूर्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् ॥
अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान् ॥ १६ ॥
तडित्वतोऽसितान् यो वा निर्मले गगने घनान् ॥
विमानयानप्रासादैर्यश्च संकुलमम्बरम् ॥ १७ ॥
यश्चानिलं मूर्तिमन्तमन्तरिक्षं च पश्यति ॥
धूमनीहारवासोभिरावृतामिव मेदिनीम् ॥ १८ ॥

---

१ 'यः स गच्छेद्यमालयम्' इति ता । २ 'वर्णान्यभावो' इति ता. । ३ 'सुगन्धो वाऽति चा' इति ता. । ४ 'सुरभि दुरभिं वेत्ति दुरभि सुरभिं तथा ॥ यो वा गन्ध न गृण्हाति शान्ते दीपे च मानव.' ॥ इति ता. । ५ 'रात्रौ चन्द्र ज्वलन्त वा सूर्य वा चन्द्रवर्चसम्' ॥ इति ता. ।

प्रदीप्तमिव लोकं च यो वा प्लुतमिवाम्भसा ॥
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ॥ १९ ॥
न पश्यति सनक्षत्रां[1] यश्च देवीमरुन्धतीम् ॥
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम् ॥ २० ॥
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति ॥
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम् ॥ २१ ॥
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ॥
पिशाचोरगनागानां भूतानां विकृतामपि ॥ २२ ॥
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ॥
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात्[2] ॥ २३ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने पञ्चेन्द्रियार्थविप्रतिपत्तिर्नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशत्तमोऽध्यायः।

अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
श्यावा लोहितिका नीला पीतिका वाऽपि मानवम् ॥
अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥ ३ ॥
ह्रीरपक्रमते यस्य प्रभास्मृतिधृतिश्रियः ॥
अकस्माद्यं भजन्ते वा स गतासुरसंशयम्[3] ॥ ४ ॥
यस्याधरौष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः ॥
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ ५ ॥

---

१ 'स्वनक्षत्र' इति ता.। २ अत-पर ताडपत्रपुस्तके व्रणप्रश्नव्रणास्रावादिदशाध्यायानुक्रमसंसूचक श्लोकद्वय दृश्यते। ३ 'स परासुरसशयम्' इति ता.।

आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा ॥
खञ्जनप्रतिमा[1] वाऽपि तं गतायुषमादिशेत् ॥ ६ ॥
कृष्णा स्तब्धाऽवलिप्ता वा जिह्वा शूना च यस्य वै ॥
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥ ७ ॥
कुटिला स्फुटिता वाऽपि शुष्का वा यस्य नासिका ॥
[2]अवस्फूर्जति मग्ना वा न स जीवति मानवः ॥ ८ ॥
संक्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते[3] च लोचने ॥
स्यातां[4] वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥ ९ ॥
केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ ॥
[5]लुण्डन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥ १० ॥
नाहरत्यन्नमास्यस्थं न धारयति यः शिरः ॥
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥ ११ ॥
बलवान् दुर्बलो वाऽपि संमोहं योऽधिगच्छति ॥
उत्थाप्यमानो बहुशस्तं पक्वं भिषगादिशेत् ॥ १२ ॥
उत्तानः सर्वदा शेते पादौ विकुरुते च यः ॥
विप्रसारणशीलो वा न स जीवति मानवः ॥ १३ ॥
शीतपादकरोच्छ्वासश्छिन्नो[7]च्छ्वासश्च यो भवेत् ॥
काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्जयेत् ॥ १४ ॥
निद्रा न छिद्यते यस्य यो वा जागर्ति सर्वदा ॥
मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता ॥ १५ ॥

---

१ 'खञ्जनप्रतिभा' इति ता.। २ 'भग्ना वा स्फुरते वापि स परासुरसंशयम्' इति ता.। ३ 'सुप्ते च लोचने' इति ता.। ४ 'यस्य स्यातां स्रुते वापि स परासुरसशयम्' इति ता.। ५ 'लुण्ठन्ति' इति च.। 'लुलन्ति' इति पा०। ६ 'स परासुरसशयम्' इति ता.। 'त धीर परिवर्जयेत्' इति पा०। ७ 'छिन्नश्वासश्च' इति ता.। 'छिन्नश्वासश्च' इति चक्रसंमत· पाठः।

उत्तरौष्ठं च यो लिह्यादु[१]त्कारांश्च करोति यः ॥
प्रेतैर्वा भाषते सार्धं प्रेतरूपं तमादिशेत् ॥ १६ ॥
खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्तते ॥
पुरुषस्याविषार्तस्य सद्यो जह्यात् स जीवितम् ॥ १७ ॥
वाताष्ठीला तु हृदये यस्योर्ध्वमनुयायिनी ॥
रुजान्नविद्वेषकरी स [२]परासुरसंशयम् ॥ १८ ॥
अनन्योपद्रवकृतः शोफः पादसमुत्थितः ॥
पुरुषं हन्ति, नारीं तु मुखजो, गुह्यजो द्वयम् ॥ १९ ॥
अतिसारो ज्वरो हिक्का छर्दिः शूनाण्डमेढ्रता ॥
श्वासिनः कासिनो वाऽपि यस्य तं क्षीणमादिशेत् ॥ २० ॥
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ॥
बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशयः ॥ २१ ॥
श्यावा जिह्वा भवेद्यस्य सव्यं चाक्षि निमज्जति ॥
मुखं च जायते पूति यस्य तं परिवर्जयेत् ॥ २२ ॥
वक्त्रमापूर्यतेऽश्रू[३]णां स्विद्यतश्चरणावुभौ ॥
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ २३ ॥
अतिमात्रं लघूनि स्युर्गा[४]त्राणि गुरुकाणि वा ॥
यस्याकस्मात् स विज्ञेयो गन्ता वैवस्वतालयम् ॥ २४ ॥
पङ्कमत्स्यवसातैलघृतगन्धांश्च ये नराः ॥
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् ॥ २५ ॥
यूका ललाटमायान्ति बलिं नाश्नन्ति वायसाः ॥
येषां चापि रतिर्नास्ति यातारस्ते यमालयम् ॥ २६ ॥
ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः ॥
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ॥ २७ ॥

---

१ 'उद्गारांश्च' इति ता.। २ 'स गतायुर्न संशयः' इति पा०। ३ 'नेत्रे चास्रेण पूर्येते' इति ता.। ४ 'गात्राण्यतिगुरूणि वा' इति ता.।

क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ॥
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥ २८ ॥
प्रवाहिका शिरःशूलं कोष्ठशूलं च दारुणम् ॥
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ २९ ॥
विषमेणोपचारेण कर्मभिश्च पुराकृतैः ॥
अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥ ३० ॥
प्रेता भूताः पिशाचाश्च रक्षांसि विविधानि च ॥
मरणाभिमुखं[1] नित्यमुपसर्पन्ति मानवम् ॥ ३१ ॥
तानि भेषजवीर्याणि प्रतिघ्नन्ति[2] जिघांसया ॥
तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषाम् ॥ ३२ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने छायाविप्रतिपत्तिर्नामैकत्रिंशत्तमोऽध्याय ॥ ३१ ॥

---

## द्वात्रिंशत्तमोऽध्यायः ।

अथातः[3] स्वभावविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

स्वभावसिद्धानां शरीरैकदेशानामन्यथाभावित्वं[4] मरणाय । तद्यथा—शुक्लानां कृष्णत्वं, कृष्णानां शुक्लता, रक्तानामन्यवर्णत्वं[5], स्थिराणां मृदुत्वं, मृदूनां[6] स्थिरता, चलानामचलत्वम्, अचलानां चलता, पृथूनां संक्षिप्तत्वं, संक्षिप्तानां पृथुता, दीर्घाणां ह्रस्वत्वं,

---

१ 'मरणीय नर' इति ता.। २ 'प्रतिनिघ्नन्ति सर्वदा' इति ता.। ३ अस्मिन्स्थले 'अथातः स्वभावविप्रपत्ति व्याख्यास्याम.' इत्येव ताडपत्रपुस्तके पठ्यते। ४ 'अन्यथात्व' इति ता.। ५ 'रक्तानामन्यवर्णत्व' इति ताडपत्रपुस्तके न दृश्यते। तथाच 'स्थिराणां मृदुत्व, इत्यत्र 'स्थिराणामस्थिरत्व' इति पाठान्तर दृश्यते। ६ 'मृदूना स्थिरतां' इति ताडपत्रपुस्तके न दृश्यते।

ह्रस्वानां दीर्घता, अपतन[1]धर्मिणां पतनधर्मित्वं, पतनधर्मिणामपत-
नधर्मित्वमकस्मात्, शैत्यौष्ण्यस्नैग्ध्यरौक्ष्यप्रस्तम्भवैवर्ण्या[2]वसादनं
चाङ्गानाम् ॥ ३ ॥

स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामव[3]स्रस्तोत्क्षिप्तभ्रान्तावक्षिप्त-
पतितविमुक्तनिर्ग[4]तान्तर्गतगुरुलघुत्वानि, प्रवालवर्णव्यङ्गप्रादुर्भावो
वाऽप्यकस्मात्, सिराणां च दर्शनं ललाटे, नासावंशे वा पिडको-
त्पत्तिः, ललाटे वा प्रभातकाले स्वेदः, नेत्ररोगाद्विना वाऽश्रुप्रवृत्तिः,
गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयनं वा [5]कपोत-
कङ्ककाकप्रभृतीनां, मूत्रपुरीषवृद्धिरभुञ्जानानां, त[6]त्प्रणाशो वा
भुञ्जानानां, स्तनमूलहृदयोरःसु च शूलोत्पत्तयः, मध्ये शूनत्वम-
न्तेषु परिम्लायित्वं विपर्ययो वा, त[7]थाऽर्धाङ्गे श्वयथुः शोषोऽङ्गपक्ष-
योर्वा, नष्टहीनविकलविकृतस्वरता वा, विवर्णपुष्पप्रादुर्भावो वा
दन्तमुखनखशरीरेषु, यस्य वाऽप्सु कफपुरीषरेतांसि निमज्जन्ति,
यस्य वा दृष्टिमण्डले भिन्नविकृतानि रूपाण्यालोक्यन्ते, स्नेहाभ्य-
क्तकेशाङ्ग इव यो भाति, यश्च दुर्बलो भक्तद्वेषातिसाराभ्यां पीड्यते,
कासमानश्च तृष्णाभिभूतः, क्षीणश्छर्दिभक्तद्वेषयुक्तः सफेनपूयरुधि-
रोद्गामी हतस्वरः शूला[8]भिपन्नश्च मनुष्यः, शूनकरचरणवदनः
क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणिपादो [9]ज्वरकासाभिभूतः, यस्तु
पूर्वाह्णे भुक्तमपराह्णे छर्दयत्यविदग्धमतिसार्यते वा स श्वासान्म्रियते,
[10]बस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्कः, स्तब्धमेढ्रो भग्नग्रीवः

---

१ 'अपतनधर्मणां पतनधर्मत्व' इति पा. । २ '°पसर्पण' इति ता. । ३ '°भ्रंशोत्क्षिप्त°' इति च. । ४ '°निर्गमप्रतिगमन°' इति च. । ५ 'कपोतकङ्कगृध्रप्रभृतीनां' इति ता. । ६ 'तत्प्रणाशो भुञ्जानानां वा' इति ताडपत्रपुस्तके न दृश्यते । ७ 'तथाऽर्धाङ्गे श्वयथुः शोषोऽङ्गपक्षयोर्वा' इति ताडपत्रपुस्तके न दृश्यते । ८ 'शूलाभिहतश्च' इति ता. । ९ 'ज्वरकासाभिभूत.' इति ताडपत्र पुस्तके न दृश्यते । १० 'बस्तवद्विलपमानो भूयश्च' इति पाठस्ताडपत्रपुस्तके उपलभ्यते ।

प्रनष्टमेहनश्च मनुष्यः, प्राग्विशुष्यमाणहृदय आर्द्रशरीरः, यश्च लोष्टं लोष्टेनाभिहन्ति काष्ठं काष्ठेन, तृणानि वा छिनत्ति, अधरोष्ठं दशति, उत्तरोष्ठं वा लेढि, आलुञ्चति वा कर्णौ केशांश्च, देवद्विजगुरुसुहृद्वैद्यांश्च द्वेष्टि, यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीडयन्ति जन्मर्क्षं वा, यस्योल्काशनिभ्यामभिहन्यते होरा[1] वा, गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावो वेति ॥ ४ ॥

भवन्ति चात्र—

चिकित्स्यमानः सम्यक्[2] च विकारो योऽभिवर्धते ॥
प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ॥ ५ ॥
निवर्तते महाव्याधिः सहसा यस्य देहिनः ॥
न चाहारफलं यस्य दृश्यते स विनश्यति ॥ ६ ॥
एतान्यरिष्टरूपाणि[3] सम्यग् बुध्येत यो भिषक् ॥
साध्यासाध्यपरीक्षायां स राज्ञः संमतो भवेत् ॥ ७ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने स्वभावविप्रतिपत्तिर्नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशत्तमोऽध्यायः ।

अथातोऽवारणीयमध्यायं[4] व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्यताम् ॥
रसायनाद्विना[5] वत्स! तान् शृण्वेकमना मम ॥ ३ ॥

---

१ 'होरा वा' इति ता. पुस्तके न दृश्यते। २ 'सम्यक्तु' इति ता.। ३ 'एतानि रिष्टरूपाणि' इति ता.। ४ 'अथातोऽवारणीय व्याख्यास्यामः' इति ता.। ५ 'रसायनैर्विना' इति ता.।

वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरम् ॥
अश्मरी मूढगर्भश्च तथैवोदरमष्टमम् ॥ ४ ॥
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ॥
प्राणमांसक्षयः[2] शोषस्तृष्णा च्छर्दिर्ज्वरस्तथा ॥ ५ ॥
अतीसारश्च मूर्च्छा च हिक्का श्वासस्तथैव च ॥
एतैरुपद्रवैर्जुष्टान् सर्वानेव विवर्जयेत् ॥ ६ ॥
शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ॥
नरं रुजार्तमन्तश्च[3] वातव्याधिर्विनाशयेत् ॥ ७ ॥
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ॥
पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ ८ ॥
प्रभिन्नप्रस्रुताङ्गं च रक्तनेत्रं हतस्वरम् ॥
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह[4] कुष्ठिनम् ॥ ९ ॥
तृष्णारोचकशूलार्तमतिप्रस्रुतशोणितम् ॥
शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत्[5] ॥ १० ॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च ॥
भगन्दरात् प्रस्रवन्ति यस्य[6] तं परिवर्जयेत् ॥ ॥ ११ ॥
प्रशूननाभिवृषणं रुद्धमूत्रं[7] रुगन्वितम् ॥
अश्मरी क्षपयत्याशु सिकताशर्करान्विता[8] ॥ १२ ॥
गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः ॥
हन्यात्[9] स्त्रियं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः ॥ १३ ॥

---

१ 'वातव्याधि प्रमेहश्च कुष्ठान्यथ भगन्दरम् ॥ अर्शोऽश्म मूढगर्भाश्च भवत्युदरमष्टमम् ॥ अष्टावेते महान्तः स्युर्व्याधयो दुस्तराः सदा' ॥ इति ता. । २ 'प्राणमांसक्षय शोफस्तृष्णा छर्दिर्ज्वरस्तथा ॥ अतिसारश्च मूर्च्छा च हिक्काश्वासस्तथैव च ॥ एतैरुपद्रवैर्जुष्टान्सर्वानेतान्विवर्जयेत्' ॥ इति ता. । ३ 'रुजार्तिमन्तश्च नरं' इति ता । ४ 'हन्ति हि कुष्ठिनम्' इति ता. । ५ 'दुर्नामा क्षपयेन्नरम्' ॥ इति ता. । ६ 'स नश्यति भगन्दरी' इति ता. । ७ 'बद्धमूत्ररुजातुरम्' इति ता. । ८ 'सिकताशर्करान्वितम्' ॥ इति ता. । ९ 'हन्युः' इति ता. ।

पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम् ॥
विरिक्तं पूर्यमाणं[1] च वर्जयेदुदरार्दितम् ॥ १४ ॥
यस्ताम्यति[2] विसंज्ञश्च शेते निपतितोऽपि वा ॥
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ १५ ॥
यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ॥
नित्यं वक्रेण चोच्छ्वस्यात्तं ज्वरो हन्ति मानवम् ॥ १६ ॥
हिक्काश्वासपिपासार्तं मूढं विभ्रान्तलोचनम् ॥
संततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ १७ ॥
आविलाक्षं[3] प्रताम्यन्तं निद्रायुक्तमतीव च ॥
क्षीणशोणितमांसं च नरं नाशयति ज्वरः ॥ १८ ॥
श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम् ॥
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥ १९ ॥
शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥ २० ॥
श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढताः ॥
भवन्ति[4] दुर्बलत्वं च गुल्मिनो मृत्युमेष्यतः[5] ॥ २१ ॥
आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृडन्वितम् ॥
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥ २२ ॥
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः ॥
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ २३ ॥

---

१ 'विवर्जयेदुदरिणम्विरिक्तो योऽभिपूर्यते' ॥ इति ता. । २ 'विसंज्ञस्ताम्यते यस्तु शेते निपतितो यथा' ॥ इति ता. । ३ 'आविलाक्ष प्रताम्यन्तं' इत्यादि-श्लोकस्ताडपत्रपुस्तके न दृश्यते । तथा च ताडपत्रपुस्तके दशमश्लोकादन्यथा-श्लोकानुक्रमो दृश्यते यथा—एकादशश्लोकादनन्तर दशमश्लोकः । दशमादग्रे द्वादशः। द्वादशादनन्तर चतुर्दशः। चतुर्दशस्याग्रे च त्रयोदशः श्लोकः । इति । ४ 'जायते' इति ता. । ५ 'मरणाय वै' इति ता. ।

लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ॥
रक्ता[1]नां च दिशां द्रष्टा रक्तपित्ती विनश्यति ॥ २४ ॥
अर्वा[2]ङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः ॥
जाग[3]रिष्णुरसंदेहमुन्मादेन विनश्यति ॥ २५ ॥
बहुशोऽपस्मरन्तं तु प्रक्षीणं चलितभ्रुवम् ॥
नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ २६ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थानेऽवारणीयो नाम त्रयस्त्रिंशत्तमोऽध्याय ॥ ३३ ॥

## चतुस्त्रिंशत्तमोऽध्यायः।

अ[4]थातो युक्तसेनीयमध्यायं व्याख्या[5]स्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
नृपतेर्युक्तसेनस्य परा[6]नभिजिगीषतः ॥
भिषजा रक्षणं कार्यं यथा तदु[7]पदेक्ष्यते ॥ ३ ॥
विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः ॥
रक्षितव्यो विशेषेण विषादेव नराधिपः ॥ ४ ॥
पन्थानमुदकं छायां भक्तं यवसमिन्धनम्।
दूषयन्त्यरयस्तच्च जानीयाच्छोधयेत्त[8]था ॥ ५ ॥
तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥
एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते ॥ ६ ॥

---

१ 'लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिक' ॥ इति ता.। २ 'अवाङ्मी वाऽप्युदङ्मी वा' इति च.। ३ 'जागरूको ह्यसन्देह°' इति ता.। ४ 'अथातो युक्तसेनीयं व्याख्यास्याम.' ॥ इति ता.। ५ ताडपत्रपुस्तकेऽतःपरं चाधिकः पाठ उपलभ्यते यथा—'धन्वन्तरिं महाप्राज्ञं सर्वशास्त्रविशारदम् ॥ चरणावुपसंगृह्य सुश्रुतः परिपृच्छति' ॥ इति ता.। ६ 'परानभिजिघांसतः' ॥ इति ता.। ७ 'तद्ब्रूहि तन्मुने ॥ तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः' ॥ इति ता.। ८ 'जानीयाच्छोधयेदपि' ॥ इति च.।

तत्रैकः कालसंयुक्तः[1] शेषा आगन्तवः स्मृताः ॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ॥ ७ ॥
रक्षेतां नृपतिं नित्यं यत्तौ[2] वैद्यपुरोहितौ ॥
ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्वेदमभाषत ॥ ८ ॥
पुरोहितमते तस्माद्वर्तेत भिषगात्मवान् ॥
संकरः[3] सर्ववर्णानां प्रणाशो धर्मकर्मणाम् ॥
प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः ॥ ९ ॥
पुरुषाणां नृपाणां च केवलं तुल्यमूर्तिता ॥ १० ॥
आज्ञा त्यागः क्षमा धैर्यं विक्रमश्चाप्यमानुषः ॥
तस्माद्देवमिवाभीक्ष्णं वाङ्मनःकर्मभिः शुभैः ॥ ११ ॥
चिन्तयेन्नृपतिं वैद्यः श्रेयांसीच्छन् विचक्षणः ॥
स्कन्धावारे च महति राजगेहादनन्तरम्[4] ॥ १२ ॥
भवेत्सन्निहितो वैद्य सर्वोपकरणान्वितः ॥
तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् ॥ १३ ॥
उपसर्पन्त्यमोहेन विषशल्यामयार्दिताः ॥
स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्वबहिष्कृतः ॥ १४ ॥
वैद्यो ध्वज इवाभाति नृपतद्विद्यपूजितः[5] ॥
वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ॥ १५ ॥
एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥
गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक् ॥ १६ ॥
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥
वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः ॥ १७ ॥

---

१ 'कालसंज्ञस्तु' इति पा० । २ 'यत्नात्' इति ता. । ३ 'संकरः सर्ववर्णानांविनाशो धर्मकर्मणाम् ॥ प्रजानामपि कृच्छ्राणि भवन्ति नृपनाशतः' ॥ इति ता. । ४ 'राजवेश्मसमीपतः' ॥ इति ता. । ५ 'नृपतद्विधपूजितः' ॥ इति ता. ।

उद्गातृहोतृब्रह्माणो यथाऽध्वर्युं विनाऽध्वरे ॥
वैद्यस्तु गुणवानेकस्तारयेदातुरं[1] सदा ॥ १८ ॥
प्लवं प्रतितरैर्[2]हीनं कर्णधार इवाम्भसि ॥
तत्त्वा[3]धिगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती ॥ १९ ॥
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ॥ २० ॥
सत्यधर्मपरो यश्च स भिषक् पाद उच्यते ॥
आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्म[4]वानपि ॥ २१ ॥
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥
प्रशस्तदेशसंभूतं प्रशस्तेऽहनि चोद्धृतम् ॥ २२ ॥
युक्तमात्रं मनस्कान्तं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकारि विपर्यये ॥
समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥ २३ ॥
स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे ॥
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥ २४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने युक्तसेनीयो नाम
चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशत्तमोऽध्यायः ।

अथात आतुरोपक्रमणीयमध्या[5]यं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
आतुरमुपक्रममाणेन भिषजाऽऽयुरादावेव परीक्षित[6]व्यम्;

---

१ 'यापयेदातुरम्' इति च । २ 'परिचरन्धीर' इति ता । 'प्रतिचरैः' इति पा० । ३ 'तीर्थाधिगतशास्त्रार्थो' इति पा० । ४ 'द्रव्यवान्मित्रवानपि' इति ता. । ५ ताडपत्रपुस्तके 'अध्यायं' इति पद न पठ्यते । ६ 'तावत्परीक्ष्यम्' इति च. ।

सत्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान्[1] परीक्षेत ॥ ३ ॥

तत्र महापाणिपादपार्श्व[2]पृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं, विस्तीर्णभ्रूस्तनान्तरोरस्कं, ह्रस्वजङ्घामेढ्रग्रीवं, गम्भीरसत्त्वस्वरनाभिम्, अनुच्चैर्बद्धस्तनम्, उपचितमहारोमशकर्णं, पश्चान्मस्तिष्कं[3], स्नातानुलिप्तं मूर्धानुपूर्व्या विशुष्यमाणशरीरं[4] पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति । तमेकान्तेनोपक्रमेत् । एभिर्लक्षणैर्विपरीतैरल्पायुः; मिश्रैर्मध्यमायुरिति[5] ॥ ४ ॥

भवन्ति चात्र—

गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः ॥
उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥ ५ ॥
गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते ॥
शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥ ६ ॥
मध्यमस्यायुषो ज्ञानमत ऊर्ध्वं निबोध मे ॥
अधस्ता[6]दक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ॥ ७ ॥
द्वे वा तिस्रोऽधिका वाऽपि पादौ कर्णौ च मांसलौ ॥
नासाग्रमूर्ध्वं च भवेदूर्ध्वं[7] लेखाश्च पृष्ठतः ॥ ८ ॥
यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ॥
जघन्यस्यायुषो ज्ञानमत ऊर्ध्वं निबोध मे ॥ ९ ॥
ह्रस्वानि यस्य पर्वाणि सुमहच्चापि मेहनम् ॥
[8]तथोरस्यवलीढानि न च स्यात्पृष्ठमायतम् ॥ १० ॥

---

१ "°देशादीन् परीक्षेत' इति च. । २ अस्मिन्स्थले ताडपत्रपुस्तके, 'पार्श्व' शब्दो नोपलभ्यते । ३ 'पार्श्वमस्तिष्क' इति च. । ४ 'विशुष्यमाणशरीरं' इति पदं ताडपत्रपुस्तके नोपलभ्यते ! 'विशुष्यमाणावयव' इति पा० । ५ 'मध्यमायुषमिति' पा० । ६ 'अधस्ताद्धस्तयोर्यस्य' इति ता. । ७ 'भवेद्रेखा व्यक्ताश्च' इति ता. । ८ 'अवलीढः स्वरो यस्य' इति चक्रपाणिसंमतः पाठः । 'अवलीढमुरो यस्य' इति ता. ।

ऊर्ध्वं च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ॥
हसतो जल्पतो वाऽपि दन्तमांसं प्रदृश्यते ॥
प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम् ॥ ११ ॥

अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः। तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि, तदवयवाः प्रत्यङ्गानीति। तत्र, स्वैरङ्गुलैः पदाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते; प्रदेशिन्यास्तु मध्यमानामिकाकनिष्ठिका यथोत्तरं पञ्चमभागहीनाः; चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते[१] प्रपदपादतले; पञ्चचतुरङ्गुलायतविस्तृता[२] पार्ष्णिः; चतुर्दशाङ्गुलायतः पादः; चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि; अष्टादशाङ्गुला जङ्घा, जानूपरिष्टाच्च द्वात्रिंशदङ्गुलम्, एते पञ्चाशत्; जङ्घायामसमावूरू; द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलभ्रूनयनान्तराणि; चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि; द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि; इन्द्रबस्तिपरिणाहांसपीठकूर्परान्तरायाम. षोडशाङ्गुलः; चतुर्विंशत्याङ्गुलो हस्तः; द्वात्रिंशदङ्गुलपरिमाणौ भुजौ; द्वात्रिंशत्परिणाहावूरू; मणिबन्धकूर्परान्तरं षोडशाङ्गुल; तलं षट्चतुरङ्गुलायामविस्तारम्; अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले; अर्धपञ्चाङ्गुले[३] प्रदेशिन्यनामिके; सार्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ, चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवं; त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा; नयनत्रिभागपरिणाहा तारका, नवमस्तारकांशो दृष्टिः; केशान्तमस्तकान्तरमेकादशाङ्गुलं, मस्तकादवटुकेशान्तो दशाङ्गुलः; कर्णावटून्तरं चतुर्दशाङ्गुलं, पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः; अष्टादशा-

---

१ 'षट्पञ्चागुलविस्तृते' इति च. । २ 'एवम्' इति पा० । ३ 'सार्धचतुरङ्गुले' इति पा० ।

ङ्गुलविस्तारमुरः; तत्प्रमाणा पुरुषस्य कटी; सविंशमङ्गुलशतं पुरुषायाम इति ॥ १२ ॥

भवन्ति चात्र श्लोकाः—

पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे ॥
समत्वागतवीर्यौ तौ जानीयात् कुशलो भिषक् ॥ १३ ॥
देहः स्वैरङ्गुलैरेष यथावदनुकीर्तितः ॥
युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना ॥ १४ ॥
दीर्घमायुरवाप्नोति वित्तं च महदृच्छति ॥
मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम् ॥ १५ ॥

अथ सारान् वक्ष्यामः—स्मृतिभक्तिप्रज्ञाशौचशौर्योपेतं कल्याणाभिनिवेशं[1] सत्त्वसारं विद्यात्; स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण; अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रं च मज्ज्ञा; महाशिरःस्कन्धं दृढदन्तहन्वस्थिनखमस्थिभिः; स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा; अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोपचितं च मांसेन; स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन; सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादिति । एषां पूर्वं पूर्वं प्रधानमायुःसौभाग्ययोरिति ॥ १६ ॥

विशेषतो[2]ऽङ्गप्रत्यङ्गप्रमाणादथ सारतः ॥
परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्मसु ॥ १७ ॥

व्याधिविशेषास्तु प्रागभिहिताः; सर्वे एवैते त्रिविधाः—साध्याः, याप्याः, प्रत्याख्येयाश्च । तत्रैतान् भूयस्त्रिधा परीक्षेत—किमयमौपसर्गिकः, प्राक्केवलः, अन्यलक्षण इति । तत्र, औपसर्गिको नाम यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति, स तन्मूल[3] एवोपद्रवसंज्ञः; प्राक्केवलो नाम यः प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽ-

१ "°निवेशिन' इति पा० । २ 'सामान्यतोऽङ्गप्रत्यङ्ग°' इति ता. । चक्रसम्मतोऽपि पाठ इत्येव । ३ 'तन्मूलमूलक' इति पा० ।

मुपद्रवश्च; अन्यलक्षणो नाम यो भविष्यद्व्याधिख्यापकः, स पूर्वरूपसंज्ञः। तत्र, सोपद्रवमन्योन्याविरोधेनोपक्रमेत, बलवन्तमुपद्रवं वा; प्राक्केवलं यथास्वं प्रतिकुर्वीत; अन्यलक्षणे त्वादिव्याधौ [1]प्रयतेत॥ १८॥

भवति चात्र—

नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः॥
अनुक्तमपि दोषाणां लिङ्गैर्[2]व्याधिमुपाचरेत्॥ १९॥
प्रागभिहिता ऋतवः॥ २०॥
शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्॥
कृत्वा कुर्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्॥ २१॥
अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया॥
[3]क्रिया हीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति॥ २२॥
या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च॥
सा क्रिया, न तु या व्याधिं हरत्यन्यमुदीरयेत्॥ २३॥

प्रागभिहितोऽग्निरन्नस्य पाचक। स [4]चतुर्विधो भवति—दोषानभिपन्न एकः; विक्रियामापन्नस्त्रिविधो भवति—विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः [5]सर्वसाम्यादिति। तत्र, यो यथाकालमुपयुक्तमन्नं सम्यक् पचति स समः, समैर्दोषैः; [6]यः कदाचित् सम्यक् पचति, कदाचिदाध्मानशूलोदावर्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा, स विषमः; यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्धमानोऽत्यग्निरित्या-

---

१ 'प्रयतेत' इति स्थाने 'यथावत्प्रयतेत' इति ताडपत्रपुस्तके पठ्यते। २ 'दोषमुपाचरेत्' इति ता.। ३ 'हीनातिरिक्ता च कृता' इति ता.। ४ 'स पञ्चविधो भवति—समो दोषाभिपन्नो विक्रियामापन्न इति ता.। ५ 'सर्वैः समैरिति' ता.। ६ 'यस्तु कदाचिदसम्यक्पचत्याध्मानशूलातिसारप्राहणानि' इति ता.।

भाष्यते, स मुहुर्मुहुः प्रभूतमप्युपयुक्तमन्नमाशुतरं पचति, पाकान्ते च गलताल्वोष्ठशोषदाहसंतापाञ्जनयति;[1] यस्त्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति, स मन्दः ॥ २४ ॥

विषमो[2] वातजान् रोगांस्तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ॥ २५ ॥

तत्र,[3] समे परिरक्षणं कुर्वीत; विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्वीत; तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च; एवमेवात्यग्नौ, विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिः; मन्दे कटुतिक्तकषायैर्वमनैश्च ॥ २६ ॥

जाठरो[4] भगवानग्निरीश्वरोऽन्नस्य पाचकः ॥
सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥ २७ ॥
प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः ॥
ध्मायते पाल्यते चापि स्वां स्वां गतिमवस्थितैः ॥ २८ ॥

वयस्तु त्रिविधं—बाल्यं,[5] मध्यं, वृद्धमिति । तत्रोनषोडशवर्षीया बालाः । ते त्रिविधाः—क्षीरपाः, क्षीरान्नादा, अन्नादा इति । तेषु[6] संवत्सरपराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतोऽन्नादा

---

१ '°सन्तापाञ्जनयति' इत्यन्तस्य वाक्यस्याग्रे 'अस्यैवभस्मक इति व्यपदिशन्ति' इत्यधिक ताडपत्रपुस्तके पठ्यते । २ 'भवति चात्र' इत्युक्त्वा ततः परम् 'विषमो वातजान् रोगांस्तीक्ष्ण०' इत्यादिश्लोकस्ताडपत्रपुस्तके पठितोऽस्ति । ३ 'तत्र समे परिरक्षण कुर्वीत, विषमं लवणोष्णाम्लैः क्रियाविशेषैरुपचरेत्; तीक्ष्णं मधुरस्निग्धयुक्तैर्विरेचनैश्च, एवमेवात्याग्नि, विशेषेण माहिषैश्च दधिक्षीरसर्पिर्भिरिति, मन्दं कटुतिक्तकषायैर्वमनैश्च' इति ता० । ४ औदर्यो भगवानग्नि°' इति च० । ताडपत्रपुस्तके 'भवति चात्र' इत्युक्त्वा ततः परम् 'औदर्य० पाचकोऽन्नस्य' इत्यादिश्लोक पठित० । ५ 'बाल,' इति ता० । ६ 'तेषु संवत्सरपराः' इत्यारभ्य 'परतोऽन्नादाः इत्यन्तः पाठ० स्ताडपत्रपुस्तके नोपलभ्यते ।

इति। षोडशसप्तत्योरन्तरे मध्यं वयः। तस्य विकल्पो—वृद्धिः, यौवनं, संपूर्णता[1], परिहाणिरिति। तत्र, आविंशतेर्वृद्धिः, आत्रिंशतो यौवनम्, आचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यसंपूर्णता, अत[2] ऊर्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति। सप्ततेरूर्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते ॥ २९ ॥

तत्रोत्तरोत्तरासु वयोवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्ति, ऋते च परिहाणेः; तत्राद्यापेक्षया प्रतिकुर्वीत ॥ ३० ॥

भवन्ति चात्र—

बाले विवर्धते श्लेष्मा मध्यमे पित्तमेव तु ॥
भूयिष्ठं वर्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥ ३१ ॥
अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत् ॥
तत्साध्येषु विकारेषु मृद्वीं कुर्यात् क्रियां शनैः ॥ ३२ ॥
देहः स्थूलः, कृशो, मध्य, इति प्रागुपदिष्टः[3] ॥ ३३ ॥
कर्शयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ ॥
रक्षणं चैव मध्यस्य कुर्वीत सततं भिषक् ॥ ३४ ॥

बलमभिहितगुणं[4]; दौर्बल्यं तु स्वभावदोषजरादिभिरवेक्षितव्यम्। यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् ॥ ३५ ॥

केचित्[5] कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः।
तस्मात् स्थिरत्वं[6] व्यायामैर्बलं वैद्यः प्रतर्कयेत् ॥ ३६ ॥

---

१ 'सपूर्णतेति' इति ता.। २ 'अत ऊर्ध्वं हानिर्भवति' इति ता.। ३ 'प्रागभिहित.' इति ता.। ४ 'बलत्वनभिहतगुण' इति ता.। ५ ताडपत्रपुस्तके 'भवति चात्र' इत्युक्त्वा ततः परम् 'केचित् कृशाः' इत्यादिश्लोकः पठितः। ६ 'स्थिरत्वव्यायामैर्बल' इति ता.। चक्रसम्मतोऽपि पाठ इत्येव।

सत्त्वं तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम् ॥ ३७ ॥

सत्त्ववान् सहते सर्वं संस्तभ्यात्मानमात्मना ॥
राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ॥ ३८ ॥

सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति ॥ ३९ ॥

यो रसः कल्पते यस्य सुखायैव निषेवितः ॥
व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत् ॥ ४० ॥

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः ॥ ४१ ॥

देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र, बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः; आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः; उभयदेशलक्षणः साधारण इति ॥ ४२ ॥

भवन्ति चात्र—

समाः साधारणे यस्माच्छीतवर्षोष्ममारुताः ॥
दोषाणां समता जन्तोस्तस्मात्साधारणो मतः ॥ ४३ ॥

---

१ 'व्यसनभयाभ्युदय०' इति ता. । 'व्यसनाभ्युदयक्रियादिस्थानेष्ववैक्ल्यकरम्' इति पा० । २ 'स्तभ्यमानोऽपि' इति ता । ३ '°जातिरोगर्तुव्यायाम°' इति ता. । ४ '°रसदवास्वप्नप्रभृतीनि°' इति ता. । ५ 'यान्यनाबाधकराणि' इति ता. । ६ ताडपत्रपुस्तके 'भवति चात्र' इत्युक्त्वा ततोऽनन्तरम् 'यो रसः कल्पते' इत्यादिश्लोक. किञ्चिन्मात्रपाठभेदेनप्रयुक्तः पठितः स यथा—'यो रसः कल्पितो यस्य सुखतां याति सेवित.' इति ता. । ७ 'इति' इत्यव्ययस्याग्रे ताडपत्रपुस्तके 'त्रिविधो भवति' इत्यधिक पठ्यते । ८ 'निम्नोन्नतबहूदकनदी°' इति ता. । ९ 'बव्हाकाशसम.' इति ता. । १० अस्मिन्स्थले 'उभयलक्षणः' इति पाठस्ताडपत्रपुस्तके तथा चक्रपाणिदत्तविरचितायां भानुमतीव्याख्यायां चाप्युपलभ्यते ।

न[1] तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः।
स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः॥ ४४॥
उचिते वर्तमानस्य नास्ति देशकृतं भयम्॥
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति॥ ४५॥
देशप्रकृतिसात्म्यर्तुविपरीतोऽचिरोत्थितः॥
संपत्तौ भिषगादीनां बलसत्त्वायुषां तथा॥ ४६॥
केवलः[2] समदेहाग्नेः सुखसाध्यतमो गदः॥
अतोऽन्यथा त्वसाध्यः स्यात्कृच्छ्रो व्यामिश्रलक्षणः॥ ४७॥
क्रियायास्तु[2] गुणालाभे क्रियामन्यां प्रयोजयेत्॥
पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः॥ ४८॥
गुणालाभेऽपि[3] सपदि यदि सैव क्रिया हिता॥
कर्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि॥ ४९॥
यं[3] एवमेनं विधिमेकरूपं बिभर्ति कालादिवशेन धीमान्।
स मृत्युपाशाञ्जगतो गदौघाञ्छिनत्ति भैषज्यपरश्वधेन॥ ५०॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने आतुरोपक्रमणीयो
नाम पञ्चत्रिंशोऽध्यायः॥ ३५॥

---

१ ताडपत्रपुस्तके 'न तथा बलवन्तः' इत्यादिश्चतुश्चत्वारिंशत्संख्याकः श्लोकः 'देशप्रकृतिसात्म्यर्तु०' इत्यादिषट्चत्वारिंशत्संख्याकश्लोकानन्तरं पठित उपलभ्यते। २ अत्रत्याः षट्चत्वारिंशत्सप्तचत्वारिंशदष्टचत्वारिंशत्संख्याकाः श्लोकास्ताडपत्रपुस्तके 'समाः साधारणे यस्मात्' इत्याद्यत्रत्यत्रिचत्वारिंशत्संख्याकश्लोकानन्तरं पठिता उपलभ्यन्ते। ३ अत्र चक्रपाणिदत्तः 'गुणालाभे' इत्यमुं पाठं नानुमन्यते 'गुणलाभे' इत्यमुमेव पाठमनुमन्यते। ताडपत्रपुस्तकेऽत्रत्यौ इ०......।

# षट्त्रिंशत्तमोऽध्यायः ।

अथातो भूमिप्रविभागीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायनतसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधग्रहणाय परीक्षेत । तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसंबाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्येष भूमिपरीक्षाविशेषः सामान्यः ॥ ३ ॥

विशेषतस्तु तत्र, अश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा; स्निग्धा शीतलाऽऽसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा; नानावर्णा लध्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा; रूक्षा भस्मरासभवर्णा तनुवृक्षाल्परसकोटरवृक्षप्रायाऽनिलगुणभूयिष्ठा; मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा ॥ ४ ॥

अत्र केचिदाहुराचार्याः—प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति; तत्तु न सम्यक्, सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीत, आग्नेया-

१ 'भूमिप्रविभागविज्ञानीयं व्याख्यास्यामः' इति ता । २ '°श्मशानाघातदेवायतन°' इति ता. । ३ 'भूमिमौषधार्थं' इति पा । ४ 'तस्यां जातमपि हि कृमि०' इति ता. । ५ '°मार्गैरनुपहतमेकसारं पुष्टमवगाढमूलञ्चौदीच्या चौषधमादद्यादित्येष भूमिविभागः' इति ता. । ६ 'स्थूलवृक्षतृणशस्यप्राया' इति ता । ७ '°पाण्डुरवृक्षप्ररोहा°' इति ता. । ८ 'सर्वतोऽसारवृक्षा' इति ताडपत्रपुस्तके नोपलभ्यते । ९ '°सारफलान्याददीत तत्तु न सम्यक्, कस्मात्' इति ता. ।

न्याग्नेयेषु, एवं[1]मव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जा[2]तान्यतिमधुरस्निग्धशीतानि जायन्ते । ए[3]तेन शेषं व्याख्यातम् ॥ ५ ॥

त[4]त्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीत, अग्न्याकाशमारुतगुणभूयि[5]ष्ठायां वमनद्रव्याणि, उभयगुणभूयिष्ठायामुभयतोभा[6]गानि, आकाशगुणभूयिष्ठायां संशमनानि, एवं वलवत्तराणि भवन्ति ॥ ६ ॥

सर्वा[7]ण्येव चाभिनवानि, अन्यत्र मधुघृतगुडपिप्पलीविडङ्गे[8]भ्यः ७

विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् ।
शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् ॥ ८ ॥

( स[9]र्वाण्येव सक्षीराणि वीर्यवन्ति, ) तेषामसंपत्तावति[10]क्रान्तसंवत्सराण्याददीतेति ॥ ९ ॥

भवन्ति चात्र—

गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ॥
मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥ १० ॥
सर्वावयवसाध्येषु पलाशलवणादिषु ॥
व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते ॥ ११ ॥

---

१ 'एवमव्यापन्नानि भवन्ति' इति ता. । २ 'जातानि मधुरतराणि स्निग्धतराणि शीततराणि भवन्ति । आग्नेयान्यौषधान्याग्नेयेष्वृतुषु गृहीतान्यग्निगुणभूयिष्ठायां भूमावुष्णतराणि कटुतराणि रूक्षतराणि भवन्ति' इति ता. । ३ 'एतेन शेष व्याख्यातम्' इत्येतद्वाक्य ताडपत्रपुस्तके न दृष्टिपथमायाति । ४ 'तत्राप्पृथिवीगुणभूयिष्ठायां भूमौ' इति ता. । ५ '°भूयिष्ठायाञ्च' इति ता. । ६ 'उभयतो भागहराणि' इति ता. । ७ 'सर्वाण्येव वाभिनवानि' इति ता । ८ '°विडङ्गेभ्य इति' इति ता. । ९ ताडपत्रपुस्तके तु 'सर्वाण्येव सक्षीराणि वीर्यवन्ति,' इत्याद्यारभ्य 'ग्राह्यमेव विनिर्दिशेत्' इत्यन्तः पाठो न दृश्यते । किंच 'प्लोतमृद्भाण्ड०' इत्यादिसप्तदश्लोकानन्तर 'गोपालास्तापसा व्याधा' इत्यादिदशमश्लोको दृश्यते । १० 'अनतिक्रान्तसंवत्सराणि' इति ता. ।

गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते ॥
तस्माद्भूमिस्वभावेन बीजिनः षड्सायुताः ॥ १२ ॥
अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः ॥
रसः स एव चाव्यक्तो व्यक्तो भूमिरसाद्भवेत् ॥ १३ ॥
सर्वलक्षणसंपन्ना भूमिः साधारणा स्मृता ॥
द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः ॥ १४ ॥
विगन्धेनापरामृष्टमविपन्नं रसादिभिः ॥
नवं द्रव्यं पुराणं वा ग्राह्यमेवं विनिर्दिशेत् ॥ १५ ॥
जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् ॥
क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् ॥ १६ ॥
प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् ॥
प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥ १७ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने भूमिप्रविभागीयो
नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

अथातो मिश्रकमध्यायं[१] व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम् ॥
अहिंस्रा चैव रास्ना च प्रलेपो वातशोफजित्[२] ॥ ३ ॥

---

१ ताडपत्रपुस्तके त्वातुरोपक्रमणीयाध्यायानन्तरं मिश्रकसंज्ञकाध्यायस्तदनन्तरं भूमिप्रविभागविज्ञानीयस्तदनन्तरं द्रव्यसंग्रहणीयाध्यायश्च, इत्येवं प्रकारेणाध्यायानुक्रमो दृश्यते । तथा च, अयमेवाध्यायानुक्रमश्चक्रपाणिदत्तविरचिताया भानुमत्यामपि दृश्यते । २ 'वातशोफहा' इति ता. ।

दूर्वा च नलमूलं च मधुकं चन्दनं तथा ॥
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोफहृत्[1] ॥ ४ ॥
आगन्तुजे रक्तजे च ह्येषं[2] एव विधिः स्मृतः ॥
विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा ॥ ५ ॥
अजगन्धाऽश्वगन्धा च काला सरलया सह ॥
एकैषिकाऽजशृङ्गी च प्रलेपः श्लेष्मशोफहृत् ॥ ६ ॥
एते वर्गास्त्रयो लोध्रं पथ्या पिण्डीतकानि च ॥
अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत्[3] ॥ ७ ॥
स्निग्धाम्ललवणो वाते कोष्णः, शीतः पयोयुतः ॥
पित्ते, चोष्णः कफे क्षारमूत्राढ्यस्तत्प्रशान्तये ॥ ८ ॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः ॥
सक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥ ९ ॥
चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः ॥
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम्[4] ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥ १० ॥
द्रव्याणां पिच्छिलानां तु त्वङ्मूलानि प्रपीडनम् ॥
यवगोधूममाषाणां चूर्णानि च समासतः ॥ ११ ॥
शङ्खिन्यङ्कोठसुमनः[5]करवीरसुवर्चलाः ॥
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥ १२ ॥
अजगन्धाऽजशृङ्गी च गवाक्षी लाङ्गलाह्वया ॥
पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥ १३ ॥
कटुत्रिकं यवक्षारो लवणानि मनःशिला ॥
कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा[6] ॥ १४ ॥

---

१ 'पित्तशोफहा' इति ता। २ 'लेप एषोऽभिपूजित' इति ता.।
३ 'शोफे सर्वकृते हित.' इति ता.। ४ 'पुरीषाणि विदारणे' इति ता.।
५ 'सुमनाः' इति ता.। ६ 'सुराह्विका' इति ता.।

संशोधनीनां वर्तीनां द्रव्याण्येतानि निर्दिशेत् ॥
एतैरेवौषधैः[1] कुर्यात्कल्कानपि च शोधनान् ॥ १५ ॥
अर्कोत्तमां स्नुहीक्षीरं[2] पिष्ट्वा क्षारोत्तमानि च ॥
जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम् ॥ १६ ॥
पूर्वोद्दिष्टानि चान्यानि कुर्यात् संशोधनं घृतम् ॥
मयूरको राजवृक्षो निम्बः कोशातकी तिलाः ॥ १७ ॥
बृहती कण्टकारी च हरितालं मनःशिला ॥
शोधनानि[3] च योज्यानि तैले द्रव्याणि शोधने ॥ १८ ॥
कासीसे सैन्धवे किण्वे वचायां रजनीद्वये ॥
शोधनाङ्गेषु चान्येषु चूर्णं कुर्वीत शोधनम् ॥ १९ ॥
सालसारादिसारेषु पटोलत्रिफलासु च ॥
रसक्रिया विधातव्या शोधनी शोधनेषु च ॥ २० ॥
श्रीवेष्टके सर्जरसे सरले देवदारुणि ॥
सारेष्वपि च कुर्वीत मतिमान् व्रणधूपनम् ॥ २१ ॥
कषायाणामनुष्णानां वृक्षाणां[4] त्वक्षु साधितः ॥
शृतः शीतकषायो वा रोपणार्थं[5] प्रशस्यते ॥ २२ ॥
सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा ॥
क्षीरिप्ररोहेष्वपि च वर्तयो रोपणाः स्मृताः ॥ २३ ॥
समङ्गा सोमसरला सोमवल्कः सचन्दनः ॥
काकोल्यादिश्च कल्कः स्यात् प्रशस्तो व्रणरोपणे ॥ २४ ॥
पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ॥
काकोल्यादिश्च योज्यः स्याद्भिषजा रोपणे घृते ॥ २५ ॥

---

१ 'द्रव्येष्वेतेषु कुर्वीत' इति ता. । २ 'सुधाक्षीरं' इति पा. । ३ 'शोधनानि च यानि स्युस्तैले योज्यानि शोधने' इति ता. । ४ 'द्रव्याणां' इति ता. । ५ 'रोपणार्थे प्रशस्यते' इति ता. ।

कालानुसार्यागुरुणी हरिद्रे[1] देवदारु च ॥
प्रियङ्गवश्च रोध्रं च तैले योज्यानि रोपणे ॥ २६ ॥
कङ्गुका त्रिफला रोध्रं कासीसं श्रवणाह्वया ॥
धवाश्वकर्णयोस्त्वक् च रोपणं[2] चूर्णमिष्यते ॥ २७ ॥
प्रियङ्गुका सर्जरसः पुष्पकासीसमेव च ॥
त्वक्चूर्णं धवजं चैव रोपणार्थं प्रशस्यते ॥ २८ ॥
त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ॥
रसक्रियां रोपणार्थे विदधीत यथाक्रमम् ॥ २९ ॥
अपामार्गोऽश्वगन्धा च तालपत्री सुवर्चला ॥
उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥ ३० ॥
कासीसं[3] सैन्धवं किण्वं कुरुविन्दो मनःशिला ॥
कुक्कुटाण्डकपालानि सुमनोमुकुलानि च ॥ ३१ ॥
फले[4] शैरीषकारञ्जे धातुचूर्णानि यानि च ॥
व्रणेपूत्सन्नमांसेषु[5] प्रशस्तान्यवसादने ॥ ३२ ॥
समस्तं वर्गमर्धं वा यथालाभमथापि वा ॥
प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥ ३३ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने मिश्रकाध्यायो नाम सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

---

१ 'हरिद्रा भद्रदारु च' इति ता. । २ 'रोपणे' इति ता. । तथा च 'प्रियङ्गुका' इत्याद्यष्टाविंशतिसंख्याकः श्लोकस्ताडपत्रपुस्तके नोपलभ्यते । ३ 'कासीस सैन्धव कुष्ठ कुरुविन्दं मन शिला' इति ता. । ४ 'फले शैरीषकारञ्जे' इत्यादिश्लोकार्धान्तरम् 'सुवर्चिकाऽथ कासीसं सैन्धव क्षारमेव च' इत्यय श्लोकार्धस्ताडपत्रपुस्तके अधिकः पठित उपलभ्यते । ५ 'व्रणेषूत्सन्नमांसेषु' इत्यादिश्लोकार्धानन्तरम् 'आलेपनानि चूर्णानि प्रदद्यात्सकलानि वै' इत्ययं श्लोकार्धस्ताडपत्रपुस्तके अधिकः पठित उपलभ्यते ।

## अष्टत्रिंशत्तमोऽध्यायः।

अथातो द्रव्य[1]संग्रहणीयमध्यायं व्याख्यास्यामः ॥ १ ॥ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

समा[2]सेन सप्त[3]त्रिंशद्द्रव्यगणा भवन्ति ॥ ३ ॥

तद्यथा—विदारिगन्धा विदारी विश्वदेवा सहदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डो हंसपादी वृश्चिकाल्यृ[4]षभी चेति ॥ ४ ॥

विदारिगन्धादिरयं गणः पित्तानिलापहः ॥
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासविनाशनः ॥ ५ ॥

आरग्वधमदनगोपघोण्टाकण्टकीकुटजपाठापाटलामूर्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासी—कुरुण्टकगुडूचीचित्रकशार्ङ्ग(र्ङ्गे)ष्टाकरञ्जद्वयपटोलकिराततिक्त[5]कानि सुषवी चेति ॥ ६ ॥

आरग्वधादिरित्येष गणः श्लेष्मविषापहः ॥
मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः ॥ ७ ॥

सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकं चेति ॥ ८ ॥

सालसारादिरित्येष गणः कुष्ठविनाशनः ॥
मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥ ९ ॥

वरुणार्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरेयकद्वयबिम्बीवसुकवसिरचित्रकशतावरीबिल्वाजशृङ्गीदर्भा बृहतीद्वयं चेति ॥ १० ॥

---

१ 'द्रव्यसग्रहणीय व्याख्यास्याम.' इति ता.। २ 'समासेन' इति सुबन्त पदं ताडपत्रपुस्तके नोपलभ्यते। ३ 'पञ्चत्रिंशद्द्रव्यगणा' इति ता.। ४ 'वृश्चिकाल्यृषभी शृगालविन्ना चेति' इति ता.। ५ '०तिक्तकाः सुषवी च' इति ता.।

वरुणादिर्गणो ह्येष कफमेदोनिवारणः ॥
विनिहन्ति शिरःशूलगुल्माभ्यन्तरविद्रधीन्[1] ॥ ११ ॥

वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरण्टिकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति ॥ १२ ॥

वीरतर्वादिरित्येष गणो वातविकारनुत्[2] ॥
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ १३ ॥

लोध्रसावरलोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुकशल्लकीजिङ्गिनीकदम्बसालाः[3] कदली चेति ॥ १४ ॥

एष रोध्रादिरित्युक्तो मेदःकफहरो गणः ॥
योनिदोषहरः स्तम्भी वर्ण्यो[4] विषविनाशनः ॥ १५ ॥

अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेता[5]वृश्चिकाल्यलवणास्तापसवृक्षश्चेति ॥ १६ ॥

अर्कादिको गणो ह्येष कफमेदोविषापहः ॥
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ १७ ॥

सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकुठेरककासमर्दक्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विषमुष्टिकश्चेति ॥ १८ ॥

सुरसादिर्गणो ह्येष कफहृत् कृमिसूदनः ॥
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ १९ ॥

मुष्ककपलाशधवचित्रकमदनवृक्षकशिंशपावज्रवृक्षास्त्रिफला चेति ॥ २० ॥

---

१ "°विद्रधी." इति ता.। २ "°विकारहृत्" इति ता.। ३ "°कदम्बाः कदली चेति" इति ता.। ४ 'बल्यो' इति ता.। ५ "°क्षुद्रश्वेताभल्लूकमहाश्वेता°" इति ता.।

मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत्[1] ॥
मेहार्शःपाण्डुरोगाश्मशर्करानाशनः[2] परः ॥ २१ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पली[3]हरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गु[4]भार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति ॥ २२ ॥

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ॥
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ २३ ॥

एलातगर[5]कुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकवालुकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकागुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरं चेति २४

एलादिको वातकफौ निहन्याद्विषमेव च ॥
वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥ २५ ॥

वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरं[6] चेति ॥ २६ ॥
हरिद्रादारुहरिद्राकलशीकुटजबीजानि मधुकं चेति ॥ २७ ॥

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ ॥
आमातिसारशमनौ विशेषाद्दोषपाचनौ[7] ॥ २८ ॥

श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्यकक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्रिसुधाः सुवर्णक्षीरी चेति ॥ २९ ॥

---

१ 'शुक्रदोषहा' इति ता.। २ "°शर्कराश्मरिनाशन" इति ता.। ३ ताडपत्रपुस्तकपठिते पिप्पल्यादिवर्गे 'हस्तिपिप्पली' न पठितोपलभ्यते। ४ "°महानिम्बहिङ्गु°" इति ता.। ५ ताडपत्रपुस्तकपठिते एलादिद्रव्यगणे 'चोच.' 'उशीर'चैते द्रव्ये नोपलभ्येते। ६ 'नागर चेति' इति ता.। ७ 'कफमेदोविशोषणौ' इति ता.

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः ॥
आनाहोदरविड्भेदी तथोदावर्तनाशनः ॥ ३० ॥
बृहतीकण्टकारिकाकुटजफलपाठा मधुकं चेति ॥ ३१ ॥
पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ॥
कफारोचकहृद्रोगमूत्रकृच्छ्ररुजापहः ॥ ३२ ॥
पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठाः कटुरोहिणी चेति ॥ ३३ ॥
पटोलादिर्गणः पित्तकफारोचकनाशनः ॥
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥ ३४ ॥
काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकार्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकं चेति ॥ ३५ ॥
काकोल्यादिरयं पित्तशोणितानिलनाशनः ॥
जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ ३६ ॥
ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गुतुत्थकं चेति ॥ ३७ ॥
ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ॥
अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः ॥ ३८ ॥
सारीवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरं चेति ॥ ३९ ॥
सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ॥
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥ ४० ॥
अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकं चेति ॥ ४१ ॥
अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः ॥
विषोपशमनो दाहं निहन्त्याभ्यन्तरं भृशम् ॥ ४२ ॥

---

१ 'एष श्यामादिको नाम्ना' इति ता. । २ 'आनाहोदरहा भेदी' इति ता. । ३ "°हृल्लास°" इति पा० । ४ "°शूलकगुल्मनुत्' इति ता. ।

परूषकद्राक्षाकट्फलदाडिमराजादनकतकफलशाकफलानि त्रिफलाचेति ॥ ४३ ॥

परूषकादिरित्येष गणोऽनिलविनाशनः ॥
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥ ४४ ॥

प्रियङ्गुसमङ्गाधातकीपुन्नागनागपुष्पचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोजपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति ॥ ४५ ॥

अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकबिल्वपेशिकासावररोध्रपलाशनन्दीवृक्षाः पद्मकेशराणि चेति ॥ ४६ ॥

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ॥
सन्धानीयौ हितौ पित्ते व्रणानां चापि रोपणौ ॥ ४७ ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षमधुककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयप्रियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति ॥ ४८ ॥

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः ॥
रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥ ४९ ॥

गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकं चेति ॥ ५० ॥

एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥
हृल्लासारोचकवमीपिपासादाहनाशनः ॥ ५१ ॥

उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकं चेति॥

उत्पलादिरयं दाहपित्तरक्तविनाशनः ॥
पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः ॥ ५३ ॥

मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकबिभीतककुष्ठहैमवतीवचापाठाकटुरोहिणीशार्ङ्गष्टातिविषाद्राविडीभल्लातकानि चित्रकश्चेति ५४

एष मुस्तादिको नाम्ना गणः श्लेष्मनिषूदनः ॥
योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥ ५५ ॥

हरीतक्यामलकबिभीतकानीति त्रिफला ॥ ५६ ॥
त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी ॥
चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ ५७ ॥
पिप्पलीमरिचशृङ्गवेराणीति त्रिकटुकम् ॥ ५८ ॥
त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ॥
निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि ॥ ५९ ॥
आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति ॥ ६० ॥
आमलक्यादिरित्येष गणः सर्वज्वरापहः ।
चक्षुष्यो दीपनो वृष्य. कफारोचकनाशनः ॥ ६१ ॥
त्रपुसीसताम्ररजतसुवर्णकृष्णलोहानि लोहमलश्चेति ॥ ६२ ॥
गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः ॥
पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥ ६३ ॥

लाक्षारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति ॥ ६४ ॥

कषायतिक्तमधुरः कफपित्तार्तिनाशनः ॥
कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः[1] ॥ ६५ ॥
पञ्च पञ्चमूलान्यत[2] ऊर्ध्वं वक्ष्यामः ।—

तत्र त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा चेति कनीयः ॥ ६६ ॥

कषायतिक्तमधुरं[3] कनीयः पञ्चमूलकम् ॥
वातघ्नं पित्तशमनं बृंहणं बलवर्धनम् ॥ ६७ ॥

---

१ ताडपत्रपुस्तके–'दुष्टव्रणविशोधन.' इत्यन्तश्लोकानन्तरम् 'एभिर्लेपांस्तथा तैलान्सर्पीष्यपि च पानकान्। रसक्रियां कषायाश्च भिषक्कुर्वीत कर्मसु' ॥ इत्यधिकोऽय श्लोक उपलभ्यते। २ 'पञ्च पञ्चकान् वक्ष्याम –तत्रैरण्डबृहत्यौ पृथक्पर्णीविदारिगन्धे चेति कनीयान्' इति ता.। ३ ताडपत्रपुस्तके नाय श्लोको दृष्टिपथमायाति ।

बिल्वाग्निमन्थटिण्टुकपाटला[1]: काश्मरी चेति महत् ॥ ६८ ॥

[2]सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम् ॥
मधुरानुरसं चैव पञ्चमूलं महत् स्मृतम् ॥ ६९ ॥

[3]अनयोर्दशमूलमुच्यते ॥ ७० ॥

गणः श्वासहरो ह्येष कफपित्तानिलापहः ॥
आमस्य पाचनश्चैव सर्वज्वरविनाशनः ॥ ७१ ॥

विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्ली[4]संज्ञः ॥ ७२ ॥

करमर्दीत्रिकण्टकसैरीयकशता[5]वरीगृध्रनख्य इति कण्टक[6]संज्ञः ७३

[7]रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ ॥
सर्वमेहहरौ चैव शुक्रदोषविनाशनौ ॥ ७४ ॥

कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ॥ ७५ ॥

[8]मूत्रदोषविकारं च रक्तपित्तं तथैव च ॥
अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत् ॥ ७६ ॥

[9]एषां वातहरावाद्यावन्त्यः पित्तविनाशनः ॥
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्तितौ ॥ ७७ ॥

[10]त्रिवृतादिकमन्यत्रोपदेक्ष्यामः ॥ ७८ ॥

समासेन गणा ह्येते प्रोक्तास्तेषां तु विस्तरम् ॥
चिकित्सितेषु वक्ष्यामि, ज्ञात्वा[11] दोषबलाबलम् ॥ ७९ ॥

---

१ "°पाटलीकाश्मर्याणि चेति महान्' इति ता । २ ताडपत्रपुस्तके नेक्ष्यते श्लोकोऽयम् । ३ ताडपत्रपुस्तके—इद गद्यात्मक सूत्र ततोऽनन्तरीयः श्लोकश्च न दृश्येते । ४ "°वल्लीसज्ञा' इति ता । ५ ताडपत्रपुस्तके तु शतावरी न पठिता तत्र मातुलुङ्गी पठिता । ६ "°कण्टकसज्ञाः' इति ता. ७ ताडपत्रपुस्तके नाय श्लोकोऽवलोक्यते । ८ ताडपत्रपुस्तके नाय श्लोक उपलभ्यते । ९ 'तेषा' इति ता । १० ताडपत्रपुस्तके-एतद्गद्यसूत्र न पठ्यते । ११ "°ज्ञात्वा रोगबलाबलम्' इति ता. ।

एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान् ॥
प्रविभज्य यथान्यायं कुर्वीत मतिमान् भिषक्[1] ॥ ८० ॥
धूमवर्षा[2]निलक्लेदैः सर्वर्तुष्वनभिद्रुते ॥
ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम् ॥ ८१ ॥
[3]समीक्ष्य दोषभेदांश्च भिन्नान् मिश्रान् प्रयोजयेत् ॥
पृथङ्मिश्रान् समस्तान्वा गणं वा व्यस्तसंहतम् ॥ ८२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यसंग्रहणीयो
नामाष्टत्रिंशोऽध्याय ॥ ३८ ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्पली करञ्जप्रपुन्नाडकोविदारकर्बुदारा[5]रिष्टाश्वगन्धाविदुलबन्धु[6]जीवकश्वेताशणपुष्पीबिम्बीवचामृगेर्वारवश्चित्रा चेत्यूर्ध्वभागहराणि । तत्र, कोविदारपूर्वाणां फलानि, कोविदारादीनां मूलानि ॥ ३ ॥

त्रिवृ[7]ताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नु[8]क्सुवर्णक्षीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकबिभीतकनीलिनीचतु[9]रङ्गुलैरण्डपूती-

---

१ ताडपत्रपुस्तकेऽयमशीतितम॰ श्लोक॰ ६५–६६ सख्याकश्लोकयोर्मध्य एव प्राक् पठितो दृश्यते। २ ताडपत्रपुस्तके नाय श्लोकोऽनलोक्यते। ३ ताडपत्रपुस्तके–श्लोकोऽय नोपलभ्यते। ४–५ ताडपत्रपुस्तके–एतेषूर्ध्वभागहरेषु द्रव्येषुलोध्रमधिक पठ्यते कर्बुदारस्तु नैव पठ्यते। ६ "°विदुलबन्धुमधूकजीवन्तीबिम्बीफलामृगैर्वारुच्चित्राश्वेताशणपुष्पीवचाश्चेत्यूर्ध्वभागहराणि' इति ता.। ७ 'त्रिवृता°" इति ता.। ८ "°स्नुही°" इति ता.। ९ "°पञ्चाङ्गुलपूतिकारग्वध°" इति ता.।

कमहावृक्षसप्तच्छदार्का[1] ज्योतिष्मती चेत्यधोभागहराणि । तत्र तिल्वकपूर्वाणां मूलानि, तिल्वकादीनां पाटलान्तानां त्वचः, कम्पिल्लकफलरजः[2], पूगादीनामेरण्डान्तानां फलानि, पूतीकारग्वधयोः पत्राणि, शेषाणां क्षीराणीति ॥ ४ ॥

कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि । एषां स्वरसा इति ॥ ५ ॥

पिप्पलीविडङ्गापामार्गशिग्रुसिद्धार्थकशिरीषमरिचकरवीरबिम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मतीकरञ्जार्कालर्कलशुनातिविषाशृङ्गवेरतालीशतमालसुरसार्जकेङ्गुदीमेषशृङ्गीमातुलुङ्गीमुरङ्गीपीलुजातीशालतालमधूकलाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि । तत्र करवीरपूर्वाणां फलानि, करवीरादीनामर्कान्तानां मूलानि, तालीशपूर्वाणां कन्दाः, तालीशादीनामर्जकान्तानां पत्राणि, इङ्गुदीमेषशृङ्गयोस्त्वचः, मातुलुङ्गीमुरङ्गीपीलुजातीनां पुष्पाणि, शालतालमधूकानां साराः, हिङ्गुलाक्षे निर्यासौ, लवणानि पार्थिवविशेषाः; मद्यान्यासुतसंयोगाः, शकृद्रसमूत्रे[3] मलाविति ॥ ६ ॥

संशमनान्यत ऊर्ध्वं वक्ष्यामः—तत्र भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्तगलकच्छुराशल्लकीकुबेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्येरण्डाश्मभेदकालर्कार्कशतावरीपुनर्नवावसुकवशिरकाञ्चनकभार्गीकार्पासीवृश्चिकालीपत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ॥ ७ ॥

चन्दनकुचन्दनह्रीबेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवलकह्लारकुमुदोत्पलकन्द(द)लीदूर्वामूर्वाप्रभृतीनि काकोल्यादिः

---

१ "°सप्तच्छदार्कज्योतिष्मती' इति ता. । २ 'कम्पिल्लकरज' एतद्द्रव्यं ताडपत्रपुस्तकेऽधोभागहरद्रव्येषु न सगृहीतं वर्तते । ३ 'गोमूत्रशकृद्रसौ' इति ता. ।

सारिवादिरञ्जनादिरुत्पलादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥ ८ ॥

कालेयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पासरलारास्ना-प्रकीर्योदकीर्येङ्गुदीसुमनःकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातकलाम-ज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्व-चादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः ॥९॥

तत्र सर्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विद-ध्यात्[१]। तत्र, व्याधिबलादधिकमौषधमुपयुक्तं तमुपशम्य व्याधिं व्याधिमन्यमावहति; अग्निबलादधिकमजीर्णं विष्टभ्य वा पच्यते; पुरुषबलादधिकं ग्लानिमूर्च्छामदानावहति संशमनम्; एवं संशोध-नमतिपातयति। हीनमेभ्यो दत्तमकिंचित्करं भवति। तस्मात् सममेव विदध्यात् ॥ १० ॥

भवन्ति चात्र—

रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्बलः ॥
तस्मै दद्याद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु ॥ ११ ॥
चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम् ॥
अव्याधिदुर्बलस्यापि शोधनं हि तदा भवेत् ॥ १२ ॥
स्वयं प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम् ॥
भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम् ॥ १३ ॥
व्याध्यादिषु तु मध्येषु क्राथस्याञ्जलिरिष्यते ॥
बिडालपदकं चूर्णं देयः कल्कोऽक्षसंमितः ॥ १४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

१ चक्रस्तु 'तसमीक्ष्य भिषग्दद्यात्' इति पठति व्याख्यानयति च 'समी-क्ष्येति सम्यग्बलं निरूप्य' इति।

# चत्वारिंशत्तमोऽध्यायः ।

अथातो द्रव्यरसगुणवीर्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

केचिदाचार्या ब्रुवते—द्रव्यं प्रधानं, कस्मात्? व्यवस्थितत्वात्, इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा—आमे फले ये रसादयस्ते पक्के न सन्ति; नित्यत्वाच्च, नित्यं हि द्रव्यमनित्या[1] गुणाः, यथा कल्कादिप्रविभागः, स एव संपन्नरसगन्धो व्यापन्नरसगन्धो वा भवति; स्वजात्यवस्थानाच्च[2], यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि; पञ्चेन्द्रियग्रहणाच्च, पञ्चभिरिन्द्रियैर्गृह्यते[3] द्रव्यं न रसादयः; आश्रयत्वाच्च, द्रव्यमाश्रिता रसादयः; आरम्भसामर्थ्याच्च, द्रव्याश्रित आरम्भः, यथा—'विदारिगन्धादिमाहृत्य संक्षुद्य विपचेत्' इत्येवमादिषु न रसादिष्वारम्भः; शास्त्रप्रामाण्याच्च, शास्त्रे[4] हि द्रव्यं प्रधानमुपदेशे योगानां, यथा—'मातुलुङ्गाग्निमन्थौ च' इत्यादौ न रसादय उपदिश्यन्ते; क्रमापेक्षितत्वाच्च रसादीनां, रसादयो हि द्रव्यक्रममपेक्षन्ते, यथा—तरुणे तरुणाः संपूर्णे संपूर्णा इति; एकदेशसाध्यत्वाच्च, द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते, यथा—महावृक्षक्षीरेणेति; तस्माद्द्रव्यं प्रधानं, न रसादयः, कस्मात्? निरवयवत्वात् । द्रव्यलक्षणं तु 'क्रियागुणवत् समवायिकारणम्' इति ॥ ३ ॥

नेत्याहुरन्ये, रसास्तु प्रधानं; कस्मात्? आगमात्, आगमो हि शास्त्रमुच्यते; शास्त्रे हि रसा अधिकृताः, यथा-रसायत्त आहार इति,

१ 'नित्यं हि द्रव्यमनित्य हि गुणाः । यथा कल्कादिप्रविभागात्तदेव संपन्नरसगन्ध व्यापन्नरसगन्ध वा भवति' इति ता. । २ 'जातिव्यवस्थानाच्च' इति ता. । ३ 'पञ्चेन्द्रियैर्गृह्यते द्रव्य न रसादय.' इति ता. । ४ 'शास्त्र ह्याह—द्विविध द्रव्य स्थावर जङ्गम च' इति ता. ।

तस्मिंस्तु[1] प्राणाः; उपदेशाच्च, उपदिश्यन्ते हि रसाः, यथा—मधुराम्ललवणा वातं[2] शमयन्ति, अनुमानाच्च, रसेन ह्यनुमीयते द्रव्यं, यथा—मधुरमिति; ऋषिवचनाच्च, ऋषिवचनं वेदो यथा—किंचिदिज्यार्थं मधुरमहारेदिति, तस्माद्रसाः प्रधानं; रसेषु[3] गुणसंज्ञा। रसलक्षणमन्यत्रोपदेक्ष्यामः ॥ ४ ॥

नेत्याहुरन्ये, वीर्यं प्रधानमिति। कस्मात्? तद्वशेनौषधकर्मनिष्पत्तेः। इहौषधकर्माण्यूर्ध्वाधोभागोभयभागसंशोधनसंशमनसाङ्ग्राहिकाग्निदीपनपीडनलेखनबृंहणरसायनवाजीकरणश्वयथुकरविलयनदहनदारणमादनप्राणघ्नविषप्रशमनादीनि वीर्यप्राधान्याद्भवन्ति। तच्च[7] वीर्यं द्विविधमुष्णं शीतं च, अग्नीषोमीयत्वाज्जगतः। केचिदष्टविधमाहुः—शीतमुष्णं[8] स्निग्धं रूक्ष विशदं पिच्छिलं मृदु तीक्ष्णं चेति। एतानि[9] वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म कुर्वन्ति। यथा तावन्महत्पञ्चमूलं[10] कषायं तिक्तानुरसं वातं शमयति, उष्णवीर्यत्वात्; तथा कुलत्थः[11] कषायः, कटुकः पलाण्डुः, स्नेहभावाच्च; मधुरश्चेक्षुरसो वातं वर्धयति, शीतवीर्यत्वात्, कटुका पिप्पली पित्तं शमयति, मृदुशीतवीर्यत्वात्, अम्लमामलकं[12] लवणं सैन्धवं च; तिक्ता काकमाची पित्तं वर्धयति, उष्णवीर्यत्वात्, मधुरा[13] मत्स्याश्च; कटुकं मूलकं श्लेष्माणं वर्धयति, स्निग्धवीर्यत्वात्; अम्लं कपित्थं श्लेष्माणं शमयति, रूक्षवीर्यत्वात्, मधुरं[14] क्षौद्रं च, तदेतन्निदर्शनमात्रमुक्तम् ५

१ ताडपत्रपुस्तके 'तस्मिस्तु प्राणा' इत्येतद्वाक्य न वर्तते। २ ताडपत्रपुस्तके 'वात शमयन्ति' इति वाक्यांशानन्तर 'अतो रसा· प्रधानम्' इत्येतद्वाक्यमुपलक्ष्यते। ३ 'रसेपु तु गुणमज्ञा' इति ता.। ४ 'प्राधान्यात्' इति ता.। ५ 'इह त्वौषधकर्माणि वीर्यप्राधान्येन भवन्ति तद्यथा ऊर्ध्वाधोभागोभय०' इति ता.। ६ '०श्वयथुहर०' इति ता। ७ 'तत्तु' इति ता.। ८ 'उष्ण शीतं स्निग्धं रूक्षं गुरु लघु मृदु तीक्ष्णञ्चेति' इति ता.। ९ 'एतानि खलु वीर्याणि' इति ता.। १० "बृहत्पञ्चमूलं कषायं तिक्तं वातं शमयत्यूष्णवीर्यत्वात्' इति ता। ११-१२-१३-१४ ताडपत्रपुस्तके एतान्युपवाक्यानि नोपलभ्यन्ते।

भवन्ति चात्र—

ये रसा वातशमना भवन्ति यदि तेषु वै ॥
रौक्ष्यलाघवशैत्यानि न[1] ते हन्युः समीरणम् ॥ ६ ॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै ॥
तैक्ष्ण्यौष्ण्यलघुताश्चैव न[2] ते तत्कर्मकारिणः ॥ ७ ॥
ये रसाः श्लेष्मशमना भविन्ति यदि तेषु वै ॥
स्नेहगौरवशैत्यानि न ते तत्कर्मकारिणः ॥ ८ ॥

तस्माद्वीर्यं प्रधानमिति ॥ ९ ॥

नेत्याहुरन्ये, विपाकः प्रधानमिति । कस्मात्? सम्यङ्मिथ्याविपक्वत्वात्; इह सर्वद्रव्याण्यभ्यवहृतानि सम्यङ्मिथ्याविपक्वानि गुणं दोषं वा जनयन्ति । तत्राहुरन्ये—प्रति रसं पाक[3] इति । केचित्त्रिविधमिच्छन्ति—मधुरमम्लं कटुकं चेति । तत्तु न सम्यक्, भूतगुणादामाच्चान्यो[4]ऽम्लो विपाको नास्ति; पित्तं हि विदग्धमम्लतामुपैत्याग्नेयत्वात्; यद्येवं लवणोऽप्यन्यः पाको भविष्यति, श्लेष्मा[5] हि विदग्धो लवणतामुपैतीति । मधुरो[6] मधुरस्याम्लोऽम्लस्यैवं सर्वेषामिति केचिदाहुः[7]; दृष्टान्तं चोपदिशन्ति,—यथा तावत्[8] क्षीरमुखागतं पच्यमानं मधुरमेव स्यात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभाव-

१–२ 'नेते' इति ता. । ३ 'प्रतिरस पाक इति विपाक.' इति ता. । भानुमतीव्याख्याकारेण चक्रपाणिदत्तेनासिस्थलेऽयं पाठ. सङ्गृहीतो यथा 'प्रतिरसं पाक इति, मधुरोमधुरस्याम्लोऽम्लोऽम्लस्यैवं सर्वेषामिति, दृष्टान्तं चोपदिशन्ति यथा शालियवमुद्गादय. प्रकीर्णा स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति'। इति । ४ 'भूतगुणाच्चान्योऽम्लो०' इति ता. । ५ ताडपत्रपुस्तके 'श्लेष्मा हि विदग्धो लवणतामुपैति' इति वाक्यानन्तरम् 'तस्मादसिद्धान्त एष प्रतिरसं पाकोऽम्लोऽम्लस्येति' इत्यधिकं वाक्यमुपलभ्यते । ६ ताडपत्रपुस्तके 'मधुरो मधुरस्य' इति वाक्यमेव नोपलभ्यते । ७ ताडपत्रपुस्तके 'केचिदाहु.' इति वाक्य नैव दृष्टिपथमायाति । ८ ताडपत्रपुस्तके 'तावत् क्षीरमुखागतं पच्यमानं मधुरमेव स्यात्तथा' इत्येतद्वाक्यं नैव पठ्यते ।

मुत्तरकालेऽपि न परित्यजन्ति तद्वदिति । केचिद्वदन्ति-अबलवन्तो बलवतां वशमायान्तीति । एवमेनवस्थितिः, तस्मादसिद्धान्त एषः । आगमे हि द्विविध एव पाको मधुरः कटुकश्च । तयोर्मधुराख्यो गुरुः, कटुकाख्यो लघुरिति । तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च; पृथिव्यापश्च गुर्व्यः, शेषाणि लघूनि; तस्माद्द्विविध एव पाक इति ॥ १० ॥

भवन्ति चात्र—

द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः ॥
निर्वर्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥ ११ ॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु ॥
निर्वर्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥ १२ ॥
पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः ॥
चतुर्णामपि सामग्र्यमिच्छन्त्यत्र विपश्चितः ॥ १३ ॥
तद्द्रव्यमात्मना किंचित्किंचिद्वीर्येण सेवितम् ॥
किंचिद्रसविपाकाभ्यां दोषं हन्ति करोति वा ॥ १४ ॥
पाको नास्ति विना वीर्याद्वीर्यं नास्ति विना रसात् ॥
रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठतमं स्मृतम् ॥ १५ ॥
जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम् ॥
अन्योन्यापेक्षिकं जन्म यथा स्याद्देहदेहिनोः ॥ १६ ॥
वीर्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः ॥
रसेषु न भवन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥ १७ ॥

---

१ 'केचित्पुनर्वदन्ति' इति ता. । २ 'एवमनवस्थित' पाक.' इति ता. । ३ ताडपत्रपुस्तके 'तस्मादसिद्धान्त एषः' इति वाक्यं नोपलभ्यते । ४ ताडपत्रपुस्तके 'आगमे हि' इत्यभावे 'आगमस्त्वाह' इति पठ्यते । ५ 'पाको भवति' इति ता. । ६ 'श्रेष्ठमत.' इति पा० ।

द्रव्ये[1] द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः ॥
श्रेष्ठं द्रव्यमतो ज्ञेयं, शेषा भावास्तदाश्रयाः ॥ १८ ॥
अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः ॥
आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥ १९ ॥
प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः ॥
नौषधीर्हेतुभिर्विद्वान् परीक्षेत कदाचन[2] ॥ २० ॥
सहस्रेणापि[3] हेतूनां नाम्बष्ठादिर्विरेचयेत् ॥
तस्मात्तिष्ठेत्तु मतिमानागमे न तु हेतुषु ॥ २१ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने द्रव्यगुणरसवीर्यविपाकविज्ञानीयो नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशत्तमोऽध्यायः।

अथातो द्रव्यविशेषविज्ञानीयमध्यायं[4] व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

तत्र पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद्द्रव्याभिनिर्वृत्तिः,[5] उत्कर्षस्त्वभिव्यञ्जको[6] भवति—इदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति[7] ॥ ३ ॥

तत्र स्थूल[8]सान्द्रमन्दस्थिरगुरुकठिनं गन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवं; तत् स्थैर्यबलगौरवसंघातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति; ॥ ( १ ) ॥

---

१ 'द्रव्ये द्रव्ये च' इति ता.। २ 'कथचन' इति ता.। ३ ताडपत्रपुस्तके 'सहस्रेणापि हेतूना' इत्यादिश्लोकानन्तर प्रस्तुतचतुर्थदशकान्तः पातिनामध्यायानामनुक्रमश्लोकानभिधाय चत्वारिशत्तमाध्यायस्य परिसमाप्तिः कृता। ४ ताडपत्रपुस्तके 'अध्याय' इति शब्दो न वर्तते। ५ 'द्रव्याभिनिर्वृत्तिर्भवति' इति ता.। ६ 'उत्कर्षस्त्वभिव्यञ्जको भवति' इति वाक्य ताडपत्रपुस्तके न दृश्यते। ७ वायव्यमिदमाकाश्यमिति' इति ता.। ८ हाराणचन्द्रैस्त्वस्मिन्स्थले 'स्थूलसारसान्द्र°' इत्यादि पठ्यते।

शीतस्तिमितस्निग्धमन्दगुरुसरसान्द्रमृदुपिच्छिलं रसबहुलमीष[1]त्कषायाम्ललवणं मधुररसप्रायमाप्यं; तत् स्नेहनह्लादनक्लेदनबन्धनविष्यन्दनकरमिति; ॥ (२) ॥

उष्ण[2]तीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपबहुलमीषदम्ल[3]लवणं कटुकरसप्रायं विशेषतश्चोर्ध्वगतिस्वभावमिति तैजसं; तद्दहनपचनदा[4]रणतापनप्रकाशनप्रभावर्णकरमिति; ॥ ( ३ ) ॥

सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्श[5]बहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयं; तद्वैशद्यलाघवग्लपनविरूक्षणविचा[6]रणकरमिति; ॥ ( ४ ) ॥

श्लक्ष्णसूक्ष्ममृ[7]दुव्यवायिविशदविविक्तमव्यक्तरसं शब्द[8]बहुलमाकाशीय, तन्मार्दवशौषिर्यलाघवकरमिति ॥ (५) ॥ ४ ॥

अनेन निदर्शनेन नानौ[9]षधीभूतं जगति किंचिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं चाभिसमीक्ष्य स्ववीर्यगुणयुक्तानि द्रव्याणि कार्मु[10]काणि भवन्ति। तानि यदा कुर्वन्ति स कालः, यत् कुर्वन्ति तत् कर्म, येन कुर्वन्ति तद्वीर्यं, यत्र कुर्वन्ति तदधिकरणं, यथा कुर्वन्ति स उपायः, यन्निष्[11]पादयन्ति तत् फलमिति ॥ ५ ॥

तत्र, विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि, पृथिव्यापो गु[12]र्व्यः, [13]तानि गुरुत्वादधो गच्छन्ति, त[14]स्माद्विरेचनमधोगुणभूयिष्ठमनुमानात्;

---

१ रसगुणबहुल०' इति ता । २ 'तीक्ष्णोष्णरूक्षसूक्ष्मखरलघुविशद' इति ता । ३ 'ईषदम्लप्राय विशेषतश्चोर्ध्वगतिस्वभावमिति' इति ता । ४ ताडपत्रपुस्तके 'दारण' शब्दो नैव दृश्यते । ५ 'स्पर्शगुणबहुल०' इति ता. । ६ ताडपत्रपुस्तके 'विचारण' शब्दो न दृश्यते । ७ ताडपत्रपुस्तके 'मृदु' शब्दो न दृश्यते । ८ 'शब्दगुणबहुलमाकाश्य तस्मात्तन्मार्दव°' इति ता. । ९ 'नानौषधभूत' इति ता. । १० 'कर्मकराणि' इति पा. । ११ 'यदभिनिष्पादयन्ति' इति ता. । १२ 'आपो हि गुरुत्वात्' इति ता. । १३ तानीत्यभावे 'ता' इति पा. । १४ 'तस्माद्विरेचनद्रव्याण्यम्बुगुणभूयिष्ठानि' इति ता. ।

वमनद्रव्याण्यग्निवायुगुणभूयिष्ठानि, अग्निवायू हि लघू, लघुत्वाच्च तान्यूर्ध्वमुत्तिष्ठन्ति, तस्माद्वमनमप्यूर्ध्वगुणभूयिष्ठम्; उभयगुणभू-[1]यिष्ठमुभयतोभागम्; आकाशगुणभूयिष्ठं संशमनं; सांग्राहिकमनिलगुणभूयिष्ठम्, अनिलस्य शोषणात्मकत्वात्; दीपनमग्निगुणभूयिष्ठं, तत्समानत्वात्; लेखनमनिलानलगुणभूयिष्ठं, बृंहणं पृथिव्यम्बुगुणभूयिष्ठम्; एवमौषधकर्माण्यनुमानात् साधयेत् ॥ ६ ॥

भवन्ति चात्र[2]—

भूतेजोवारिजैर्द्रव्यैः[3] शमं याति समीरणः ॥
भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम् ॥ ७ ॥
खतेजोनिलजैः श्लेष्मा शममेति शरीरिणाम् ॥
वियत्पवनजाताभ्यां वृद्धिमभ्येति मारुतः ॥ ८ ॥
आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्यते ॥
वसुधाजलजाताभ्यां बलासः परिवर्धते ॥ ९ ॥
एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितम्[4] ॥
द्विशो वा बहुशो वाऽपि ज्ञात्वा दोषेषु[5] चाचरेत् ॥ १० ॥

तत्र य इमे गुणा[6] वीर्यसंज्ञकाः शीतोष्ण[7]स्निग्धरूक्षमृदुतीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णो[8]ष्णावाग्नेयौ, शीतपिच्छिलावम्बुगुणभू-

१ 'उभयगुणभूयिष्ठं द्रव्यमुभयतोभागहरम्' इति ता । २ 'भवन्ति चात्र श्लोकाः' इति ता. । ३ अस्मिन्स्थले ताडपत्रपुस्तकेऽयपाठविशेषः सगृहीतो दृश्यते यथा–'मह्यम्ब्वग्न्यात्मकैर्द्रव्यैस्त्रिभिः शाम्यति मारुतः ॥ खेरभूम्यम्बुजैः पित्तं चतुर्भिः सम्प्रशाम्यति ॥ कफः खतेजोऽनिलजैस्त्रिभिः शाम्यति देहिनाम् ॥ खवायुजाभ्यां द्रव्याभ्यां वृद्धिमाप्नोति मारुतः ॥ आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्यते ॥ मह्यम्बुजाभ्यां द्रव्याभ्यां कफश्चातिविवर्धते ॥' इति । ४ 'व्यवस्थितम्' इति ता. । ५ 'दोषेऽवचारयेत्' इति ता. । ६ 'गुणा अष्टौ वीर्यसंज्ञकाः' इति ता. । ७ 'शीतोष्णस्निग्धरूक्षगुरुलघुमृदुतीक्ष्णास्तेषां' इति हा पा० । ८ पण्डितहाराणचन्द्रोऽस्मिन्स्थले 'तीक्ष्णोष्णावाग्नेयौ गुरुशीतौ पृथिव्यम्बुगुणभूयिष्ठौ' इति पठति ।

यिष्ठौ, पृथिव्यम्बुगुणभूयिष्ठः स्नेहः[1], तोयाकाशगुणभूयिष्ठं मृदुत्वं, वायुगुणभूयिष्ठं रौक्ष्यं, क्षितिसमीरणगुणभूयिष्ठं वैशद्यं; विपाकावुक्तगुणौ[2]। तत्र, उष्णस्निग्धौ[3] वातघ्नौ, शीतमृदुपिच्छिलाः पित्तघ्नाः, तीक्ष्णरूक्षविशदाः श्लेष्मघ्नाः, गुरुपाको वातपित्तघ्नः, लघुपाकः श्लेष्मघ्नः। तेषां मृदुशीतोष्णाः स्पर्शग्राह्याः, पिच्छिलविशदौ चक्षुःस्पर्शाभ्यां, स्निग्धरूक्षौ चक्षुषा, तीक्ष्णो मुखे दुःखोत्पादनात्। गुरुपाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन च, लघुर्बद्धविण्मूत्रतया मारुतकोपेन च। तत्र तुल्यगुणेषु भूतेषु रसवैशेष्यमुपलक्षयेत्; तद्यथा—मधुरो गुरुश्च पार्थिवः, मधुरः स्निग्धश्चाप्य इति ॥ ११ ॥

भवति चात्र—

गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा[4] ॥
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः ॥ १२ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने द्रव्यविशेषविज्ञानीयो
नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

---

१ 'अम्बुगुणभूयिष्ठ स्नेह' इति हा। 'पृथिवीसोमगुणभूयिष्ठ' स्नेहः' इति ता. पा०। २ ताडपत्रपुस्तके 'विपाकावुक्तगुणौ तत्र' इत्यनन्तरं पुरोनिर्दिष्टोऽयं पाठविशेषः संगृहीतो दृश्यते यथा—कर्माण्युष्णस्य—दहनपाचनमूर्च्छनस्वेदनवमनविरेचनानि। शीतस्य—प्रह्लादनविष्यन्दनस्थिरीकरणप्रसादनक्लेदनजीवनानि। स्निग्धस्य—स्नेहनबृंहणसन्तर्पणवाजीकरणवयःस्थापनानि। रूक्षस्य—अनिलवृद्धिसंग्रहणपीडनविरूक्षणोपरोहणानि। विशदस्य—क्लेदाचूषणविरूक्षणोपरोहणानि। पिच्छिलस्य—उपलेपनपूरणबृंहणसंश्लेषणवाजीकरणानि। मृदो.—रक्तमासप्रसादनसुस्पर्शनानि। तीक्ष्णस्य—सग्रहाचूषणावदारणस्रावणानि'। ३ 'गुरूष्णस्निग्धा वातघ्नाः, मृदुशीतौ पित्तघ्नौ, लघुरूक्षतीक्ष्णाः श्लेष्मघ्नाः' इति हा. पा०। ४ 'तान् विदुः' इति ता. पा०

# द्विचत्वारिंशत्तमोऽध्यायः ।

अथातो रस[1]विशेषविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः, तस्मादाप्यो रसः । परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्ति, उत्कर्षाप[2]कर्षात्तु ग्रहणम् । स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा[3] विभज्यते, तद्यथा—मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति । ते च भूयः परस्परसंसर्गात्त्रिषष्टिधा भिद्यन्ते । तत्र, भूम्यम्बुगुणबाहुल्यान्मधुरः[4], भूम्यग्निगुणबाहुल्यादम्लः, तोयाग्निगुणबाहुल्याल्लवणः, वाय्वग्नि[5]गुणबाहुल्यात् कटुकः[6] वाय्वाकाशगुणबाहुल्यात्तिक्तः[6], पृथिव्यनिलगुणबाहुल्यात् कषाय[7] इति ॥ ३ ॥

तत्र, मधुराम्ललवणा वातघ्नाः, मधुरतिक्तकषायाः पित्तघ्नाः, कटुतिक्तकषायाः श्लेष्मघ्नाः ॥ ४ ॥

तत्र, वायो[8]रात्मैवात्मा, पित्तमाग्नेयं श्लेष्मा सौम्य इति ॥ ५ ॥

त एते रसाः स्वयोनिवर्धना, अन्ययोनिप्रशमनाश्च ॥ ६ ॥

केचिदाहुः—अग्नीषोमीयत्वाज्जगतो रसा[9] द्विविधाः—सौम्या आग्नेयाश्च । मधुरतिक्तकषायाः सौम्याः; कट्वम्ल[10]लवणा आग्नेयाः । तत्र मधुराम्ललवणाः स्निग्धा गुरवश्च, कटुतिक्तकषाया रूक्षा लघवश्च; सौम्याः शीताः, आग्नेया[11] उष्णाः ॥ ७ ॥

---

१ ताडपत्रपुस्तके 'रसविशेषविज्ञानीय व्याख्यास्याम" इति पठ्यते । २ 'उत्कर्षात्तु ग्रहणम्' इति ता । ३ 'षड्विधो भवति' इति ता. । ४ 'तत्रोदकबाहुल्यान्मधुरः । तोयाग्निबाहुल्यादम्लः । भूम्यग्निबाहुल्याल्लवणः' । इति ता. । ५–६–७ ताडपत्रपुस्तके कटुतिक्तकषायाणां कार्यपदार्थानां वाय्वग्निप्रभृतयः कारणपदार्था गुणशब्दोत्तरा नाभिहिताः सन्ति । ८ ताडपत्रपुस्तके 'वायुरात्मैवात्मा' इति पठ्यते । ९ 'द्विविधा रसाः' इति ता. । १० 'कट्वम्ललवणास्त्वाग्नेया', इति ता. । ११ 'आग्नेयास्तूष्णाः' इति ता. । 'आग्नेयाश्चोष्णा' इति पा० ।

तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्य[1]गुणलक्षणो वायुः, तस्य समानयोनिः कषायो रसः, सोऽस्य शैत्याच्छैत्यं वर्धयति, रौक्ष्याद्रौक्ष्यं, लाघवाल्लाघवं, वैशद्याद्वैशद्यं[2] वैष्टम्भ्याद्वैष्टम्भ्यमिति, ॥ (१) ॥

औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं, तस्य समानयोनिः कटुको रसः; सोऽस्य औष्ण्यादौष्ण्यं वर्धयति, तैक्ष्ण्यात्तैक्ष्ण्यं, रौक्ष्याद्रौक्ष्यं, लाघवाल्लाघवं, वैशद्याद्वैशद्यमिति ॥ (२) ॥

माधुर्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षणः श्लेष्मा; तस्य समानयोनिर्मधुरो रसः, सोऽस्य माधुर्यान्माधुर्यं[3] वर्धयति, स्नेहात् स्नेहं, गौरवाद्गौरवं, शैत्याच्छैत्यं, पैच्छिल्यात् पैच्छिल्यमिति ॥ (३) ॥

तस्य पुनरन्ययोनिः[4] कटुको रसः; स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्यमभिभवति[5], रौक्ष्यात् स्नेहं, लाघवाद्गौरवम्, औष्ण्याच्छैत्यं, वैशद्यात् पैच्छिल्यमिति। तदेतन्निदर्शनमात्रमुक्तं भवति ८

रसलक्षणमत ऊर्ध्वं वक्ष्यामः—तत्र, यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखोपलेपं जनयति श्लेष्माणं चाभिवर्धयति स मधुरः; यो दन्तहर्षमुत्पादयति मुखास्रावं जनयति श्रद्धां चोत्पादयति सोऽम्लः; यो भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्दवं चापादयति[6] स लवणः; यो जिह्वाग्रं बाधते उद्वेगं जनयति[7] शिरो गृह्णीते[8] नासिकां च स्रावयति स कटुकः; यो गले चोषमुत्पादयति[9] मुखवैशद्यं जनयति भक्तरुचिं चापादयति हर्षं च स तिक्तः; यो वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं[10] कर्षति पीडयति च स कषाय इति ॥ ९ ॥

---

१ ताडपत्रपुस्तके वैष्टम्भ्यशब्दोनास्ति। २ ताडपत्रपुस्तके 'वैशद्याद्वैशद्यमिति' इत्येव पाठ उपलभ्यते, तत- परं तत्र 'वैष्टम्भ्याद्वैष्टम्भ्यम्' इत्यधिकः पाठो नोपलभ्यते। ३ 'माधुर्यमभिवहति' इति ता.। ४ 'तस्य पुनर्विपरीत.' इति ता.। ५ 'कटुत्वान्माधुर्य०' इति ता.। ६ 'मार्दवं चोत्पादयति' इति ता.। ७ 'जिह्वामुद्वेजयति' इति ता.। ८ 'गृह्णाति' इति ता.। ९ 'शोषमुत्पादयति' इति ता.। १० 'हृदयं पीडयति' इति ता.।

रसगुणानत ऊर्ध्वं वक्ष्यामः—तत्र, मधुरो रसो रसरक्तमांसमेदोऽस्थिमज्जौजःशुक्रस्तन्य[1]वर्धनश्चक्षुष्यः केश्यो वर्ण्यो बलकृत्सन्धानः शोणित[2]रसप्रसादनो बालवृद्धक्षतक्षीणहितः षट्पदपिपीलिकानामिष्टतमस्तृष्णामूर्च्छादाहप्रशमनः [3]षडिन्द्रियप्रसादनः कृमिक[4]फकरश्चेति; स एवंगुणोऽप्येक एवात्यर्थमा[5]सेव्यमानः कासश्वासालसकवमथुवदनमाधुर्यस्वरोपघातकृमिगलगण्डानापादयति तथाऽर्बुदश्लीपदबस्तिगुदोपलेपाभिष्यन्दप्रभृतीञ्[6]जनयति ॥ (१) ॥

अम्लो जरणः पाचनो दीप[7]नः पवननिग्रहणोऽनुलोम[8]नः कोष्ठविदाही बहिःशीतः क्ले[9]दनः प्रायशो हृद्यश्चेति; स[10] एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्षनयनसंमीलनरोमसंवेजनकफविलयनशरीरशैथिल्यान्यापादयति, तथा क्षताभिहतदग्धदष्टभग्नरुग्णशूनप्रच्युता[11]वमूत्रितविसर्पितच्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिद[12]हति कण्ठमुरो हृदयं चेति ॥ (२) ॥

ल[13]वणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्वरसप्र[14]त्यनीको मार्गविशोधनः सर्वशरीरावयवमार्दवकरश्चेति; [15]स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशो[16]फवैवर्ण्य-

---

१ 'स्तन्य' शब्दस्ताडपत्रपुस्तके नोपलभ्यते । २ 'शोणितप्रसादनो' इति ता. । ३ 'इन्द्रियप्रसादनश्चेति' इति ता. । ४ 'कृमिकफकरश्चेति' इति क्रियाविशेषबोधको वाक्यांशस्ताडपत्रपुस्तके नोपलभ्यते । ५ '°मुपसेव्यमान°' इति ता. । ६ '°नुपजनयति' इति ता. । ७ 'दीपन' शब्दस्ताडपत्रपुस्तके नोपलभ्यते । ८ 'अनुलोमनो विदाही' इति ता. । ९ 'प्रीणनप्रायशो' इति ता । १० 'स खलु एवगुणो' इति ता. । ११ 'प्रच्युतावमथितपरिसर्पित°' इति ता. । १२ 'परिदहति कण्ठमुरो हृदय चेति वाक्य ताडपत्रपुस्तके नोपलभ्यते । १३ 'लवणस्तु' इति ता. । १४ 'सर्वरसप्रत्यनीकभूतो' इति ता. । १५ 'स खल्वेवगुणो' इति ता. । १६ '°शोफकरः स्वरोपघातेन्द्रियोपतापानुपजनयति तथाक्षिमुखपाक०' इति ता. ।

पुंस्त्वोपघातेन्द्रियोपतापमुखाक्षिपाकरक्तपित्तवातशोणिताम्लीकाप्रभृतीनापादयति ॥ (३) ॥

कटुको[1] दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफक्रिमि[2]विषकुष्ठकण्डूप्रशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्य[3]शुक्रमेदसामुपहन्ता चेति; स[4] एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रममदगलताल्वोष्ठशोषदाहसंतापबलविघातकम्पतोदभेदकृत् करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलाना[5]पादयति ॥ (४) ॥

तिक्त[6]श्छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णामूर्च्छाज्वर[7]प्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसापूयोपशोषणश्चेति; स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्दितशिरः[8]शूलभ्रमतोदभेदच्छेदास्यवैरस्यान्यापादयति ॥ (५) ॥

कषाय[9]ः संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति; स[10] एवंगुणोऽप्येक एवात्यर्थ[11]मुपसेव्यमानो हृत्पीडास्यशोषोदराध्मानवाक्य[12]ग्रहमन्यास्तम्भगात्रस्फुरणचुमुचुमायनाकुञ्चनाक्षेपणप्रभृतीञ्जनयति ॥ १० ॥

अतः सर्वेषामेव द्रव्याण्युपदेक्ष्यामः । तद्यथा—काकोल्यादिः क्षीरघृतवसामज्जशालिषष्टिकयवगोधूममाषशृङ्गाटककसेरुकत्रपुसैर्वारुकर्कारुकालाबूकालिन्दकतकगिलोड्यप्रियालपुष्करबीजकाश्मर्यमधू-

---

१ 'कटुकस्तु' इति ता० । २ '°कफक्रिमि°' इत्यमू शब्दौ ताडपत्रपुस्तके नोपलभ्येते । ३ 'स्तन्यशुक्रकफमेदसामुपहन्ता' इति ता. । ४ 'स खल्वेवगुणो' इति ता. । ५ 'वातशूलानुपजनयति' इति ता. । ६ 'तिक्तस्तु रोचनो' इति ता. । ७ 'ज्वर' शब्दस्ताडपत्रपुस्तके नोपलभ्यते । ८ 'शिरःशूलानुपजनयति' इति ता. । ९ 'कषायस्तु' इति ता. । १० 'स खल्वेवंगुणो' इति ता. । ११ 'अत्यर्थमुपयुज्यमानो' इति ता. । १२ '°वाक्यग्रहमन्यास्तम्भप्रभृतीन् विकारानुपजनयति । तथा गात्रस्फुरणच्चिमाच्चिमायनाकुंचनाक्षेपणप्रभृतीन् विकारानुपजनयति' इति ता. ।

कद्राक्षाखर्जूरराजादनतालनालिकेरेक्षुविकारबलातिबलात्मगुप्ताविदारीपयस्यागोक्षुरकक्षीरमोरटमधूलिकाकूष्माण्डप्रभृतीनि समासेन मधुरो[1] वर्गः; दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्दबदरकोलप्राचीनामलकतिन्तिडीककोशाम्रकभव्यपारावतवेत्रफललकुचाम्लवेतसदन्तशठदधितक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लो[2] वर्गः; सैन्धवसौवर्चलविडपाक्यरोमकसामुद्रकपक्तिमयवक्षारोषरप्रसूतसुवर्चिकाप्रभृतीनि समासेन लवणो वर्गः; पिप्पल्यादिः सुरसादिः शिग्रुमधुशिग्रुमूलकलशुनमुखशीतशिवकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमुस्तलाङ्गलकीशुकनासापीलुप्रभृतीनि सालसारादिश्च प्रायशः कटुको वर्गः; आरग्वधादिर्गुडूच्यादिर्मण्डूकपर्णीवेत्रकरीरहरिद्राद्वयेन्द्रयववरुणस्वादुकण्टकसप्तपर्णबृहतीद्वयशङ्खिनीद्रवन्तीत्रिवृत्कृतवेधनकर्कोटककारवेल्लवार्ताककरीरकरवीरसुमनःशङ्खपुष्प्यपामार्गत्रायमाणाशोकरोहिणीवैजयन्तीसुवर्चलापुनर्नवावृश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो[3] वर्गः; न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादी रोध्रादिस्त्रिफलाशल्लकीजम्ब्वाम्रबकुलतिन्दुकफलानि कतक[4]शाकफलपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायशः कुरुवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि वरकादयो[5] मुद्गादयश्च समासेन कषायो[6] वर्गः ॥ ११ ॥

तत्रैतेषां रसानां संयोगास्त्रिषष्टिर्भवन्ति । तद्यथा—पञ्चदश

---

१ ताडपत्रपुस्तके त्वत्रनिर्दिष्टानि मधुरवर्गान्तःपातीनि षष्टिकं धान्यं त्रपुसैर्वारुककर्कारुकालाबूकालिन्दकतकतालफलानि च न संगृहीतानि । २ ताडपत्रपुस्तके त्वत्रनिर्दिष्टे अम्लवर्गान्तःपातिनी कोलं शुक्तञ्च न सङ्गृहीते दृश्येते । ३ ताडपत्रपुस्तके तिक्तवर्गे द्रवन्तीकरीरपुनर्नवाश्च न संगृहीताः सन्ति । ४ 'कतकाशोक°' इति ता. । ५ 'नीवारकादयः' इति पा० । ६ ताडपत्रपुस्तके कषायवर्गे आम्रबकुलपालङ्क्या न संगृहीताः सन्ति ।

द्विकाः, विंशतिस्त्रिकाः, पञ्चदश चतुष्काः, षट् पञ्चकाः, एकैशः[1] षड्रसाः, एकः षट्क इति। तेषामन्यत्र प्रयोजनानि वक्ष्यामः ॥१२॥

भवति चात्र—

जग्धाः[2] षडधिगच्छन्ति बलिनो वश्यतां[3] रसाः ॥
यथा प्रकुपिता दोषा वशं यान्ति बलीयसः ॥ १३ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने रसविशेषविज्ञानीयो नाम
द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशत्तमोऽध्यायः।

अथातो[4] वमनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः॥१॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वमनद्रव्याणां फलादीनां[5] मदनफलानि श्रेष्ठतमानि भवन्ति। अथ मदनपुष्पाणामातपपरिशुष्काणां चूर्णप्रकुञ्चं प्रत्यक्पुष्पीसदापुष्पीनिम्बकषायाणामन्यतमेनालोड्य मधुसैन्धवयुक्तां[6] पुष्पचूर्णमात्रां पाययित्वा वामयेत् मदनशलाटुचूर्णान्येवं वा बकुलरम्यकोपयुक्तानि[7] मधुलवणयुक्तान्यभिप्रतप्तानि, मदनशलाटुचूर्णसिद्धां वा निर्लतण्डुलयवागूम्[8]। निर्वृत्तानां वा नातिहरितपाण्डूनां कुशमूढावबद्धमृद्गोमयप्रलिप्तानां यवबु(तु)षमुद्ग[9]माषशाल्यादिधान्यराशावष्टरात्रोषितक्लिन्नभिन्नानां फलानां फलपिप्पलीरुद्धृत्यातपे शोषयेत्, तासां

---

१ 'एकैकश.' इति ता। २ 'युक्ता' इति पा०। ३ 'वशतां' इति ता.। ४ 'अथातो वमनद्रव्यविकल्पविज्ञानीयं' इति ता.। ५ 'फलाख्यानां' इति ता.। ६ मधुसैन्धवयुक्तां पुष्पचूर्णमात्रां' इत्यय वाक्यांशस्ताडपत्रपुस्तके नोपलभ्यते। ७ 'बकुलरम्यकोपयुक्तानि' इत्यय वाक्यांशस्ताडपत्रपुस्तके नोपलभ्यते। ८ स्ताडपत्रपुस्तके 'तिलयवागूम्' इत्येव पठ्यते। ९ इह 'मुद्ग' धान्यं पठितं दृश्यते ताडपत्रपुस्तके तु तन्न दृश्यते।

दधिमधुपललविमृदितपरिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टि-मुष्णे यष्टीमधुककषाये कोविदारादीनामन्यतमे वा कषाये प्रमृद्य रात्रिपर्युषितं मधुसैन्धवयुक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखः प्राङ्मुख-मातुरं पाययेदनेन मन्त्रेणाभिमन्त्र्य—

"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानलानिलाः ॥
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु ते ॥ १ ॥
रसायनमिवर्षीणां देवानाममृतं यथा ॥
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ २ ॥"

विशेषेण श्लेष्मज्वरप्रतिश्यायान्तर्विद्रधिषु; अप्रवर्तमाने वा दोषे पिप्पलीवचागौरसर्षपकल्कोन्मिश्रैः सलवणैरुष्णाम्बुभिः पुनः पुनः प्रवर्तयेदासम्यग्वान्तलक्षणादिति । मदनफलमज्जचूर्णं वा तत्क्काथ-परिभावितं मदनफलकषायेण; मदनफलमज्जसिद्धस्य वा पयसः सन्तानिकां क्षौद्रयुक्तां, मदनफलमज्जसिद्धं वा पयः, मदनफलम-ज्जसिद्धेन वा पयसा यवागूम्, अधोभागासृक्पित्तहृद्दाहयोः, मद-फलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेकच्छर्दिमूर्च्छातमकेषु; मदनफलमज्जरसं स्नेहं वा भल्लातक-स्नेहवदादाय फाणितीभूतं लेहयेत्, आतपपरिशुष्कं वा तमेव जीवन्तीकषायेण, पित्ते कफस्थानगते, मदनफलमज्जक्काथं वा पिप्प-ल्यादिप्रतीवापं, तच्चूर्णं वा निम्बरूपिकाकषाययोरन्यतरेण संतर्पण-

१ 'दधिपलविमृदित°' इति ता. । २ 'मधुसैन्धवयुक्तमुदन्मुखः' इति ता. । ३ 'अप्रवर्तमानदोषे' इति ता । ४ 'सलवणै' इति पद ताडपत्रपुस्तके न दृष्टिपथमायाति । ५ 'मदनफलमज्जसिद्धस्य वा पयसः सन्तानिका क्षौद्रयुक्ता' इत्यय वाक्यांश एव ताडपत्रपुस्तके नास्ति । ६ 'मूर्च्छा' विकृतिनिर्देशस्ताड-पत्रपुस्तके नोपलभ्यते । ७ 'मदनफलमज्जाचूर्ण रस वा' इति ता. । ८ 'सन्तर्पणम् कफसर्वव्याधिहरमिति मदनफलमुक्तम्' इति ता. ।

कफजव्याधिहरं, मदनफलमज्जचूर्णं[1]वा मधूककाश्मर्यद्राक्षाकषायेण। मदनफलविधानमुक्तम् ॥ ३ ॥

जीमूतककुसुमचूर्णं पूर्ववदेव क्षीरेण, निर्वृत्तेषु क्षीरयवागूं, रोमशेषु सन्तानिकां, अरोमशेषु दध्युत्तरं हरितपाण्डुषु दधि, तत्कषायसंसृष्टां वा सुरां कफा[2]रोचककासश्वासपाण्डुरोगयक्ष्मसु; पर्यागतेषु मद[3]नफलमज्जवदुपयोगः ॥ ४ ॥

तद्वदेव कुटजफलविधानम् ॥ ५ ॥

कृतवे[4]धनानामप्येष एव कल्पः ॥ ६ ॥

इक्ष्वाकुकुसुमचूर्णं वा पू[5]र्ववत्, एवं क्षीरेण, कासश्वासच्छर्दिकफरोगेषूपयोगः ॥ ७ ॥

धामार्गवस्यापि मदनफलमज्ज[6]वदुपयोगः विशे[7]षतस्तु गरगुल्मोदरकासश्वासश्लेष्मामयेषु वायौ च कफस्थानगते ॥ ८ ॥

कृतवेधन[8]फलपिप्पलीनां वमनद्र[9]व्यकषायपरिपीतानां बहुशश्चूर्णमुत्पलादिषु दत्तमा[10]घ्रातं वामयति, तत्वनवबद्धदोषेषु यवागूमा-

---

१ 'मदनफलमज्जचूर्णं वा मधुकाश्मर्यद्राक्षाकषायेण' इत्येतद्वाक्यं ताडपत्रपुस्तके न दृष्टिगोचरतामायाति। २ 'कफारोचककासश्वासपाण्डुरोगयक्ष्मसु' इति विकारसमुच्चयात्मकं पद ताडपत्रपुस्तके नोपलभ्यते। ३ 'मदनफलमज्जविधानवत्कुटजफलविधानम्' इति ता.। ४ 'कृतवेधनानामप्येष एव कल्प.' इति षष्ठ सूत्र ताडपत्रपुस्तके न सन्दिष्टम्। ५ 'पूर्ववदेव' इति पा०। ६ 'मदनफलमज्जाविधानवदुपयोग.' इति ता.। ७ 'विशेषतस्तु गरगुल्मोदरकासश्वासश्लेष्मामयेषु वायौ च कफस्थानगते' इत्ययं सूत्रांशस्ताडपत्रपुस्तके न दृग्गोचरतामायाति। ८ 'कृतवेधनमदनफलमज्जपिप्पलीनां' इति ता.। ९ 'वमनद्रव्यपरिभावितानां' इति ता.। १० 'दत्तमाघ्राय वमति' इति ता.।

कण्ठा[1]त्पीतवत्सु च विदध्यात् । वमनविरेचनशिरोविरेचनद्रव्या[2]ण्येवं वा प्रधानतमानि भवन्ति ॥ ९ ॥

भव[3]तश्चात्र—

व[4]मनद्रव्ययोगानां दिगियं संप्रकीर्तिता ॥
तान् विभज्य यथाव्याधि कालशक्तिविनिश्चयात् ॥ १० ॥
कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान् ॥
पेय[5]लेह्याद्यभोज्येषु वमनान्युपकल्पयेत् ॥ ११ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने वमनद्रव्य-
विकल्पविज्ञानीयो नामत्रिचत्वारिंश-
त्तमोऽध्याय. ॥ ४३ ॥

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

अ[6]थातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः १
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने ॥
प्रधानं तिल्वकस्त्वक्षु फलेष्वपि हरीतकी ॥ ३ ॥
तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका ॥
सु[8]धापयः पयःसूक्ष्ममिति प्राधान्यसंग्रहः ॥
तेषां विधानं वक्ष्यामि यथावदनुपूर्वशः ॥ ४ ॥

---

१ 'यवागूमाकण्ठं पीतवत्सु च दद्यात्' इति ता. । २ ताडपत्रपुस्तकेऽस्मिस्थले 'शिरोविरेचनान्येव प्रधानतमानि भवन्ति' इति पाठान्तरमुपलभ्यते । ३ 'भवति चात्र' इति ता. । ४ 'वमनद्रव्ययोगानां' इत्यादिदशमश्लोकोऽयं ताडपत्रपुस्तके न पठितोऽस्ति । 'वान्तिद्रव्यविकल्पानां' इति पा० । ५ 'पेयलेह्यादिभोज्येषु' इति ता. । ६ 'विरेचनद्रव्यविकल्पविज्ञानीय' इति ता. । ७ इद श्लोकार्धकं ताडपत्रपुस्तके न दृश्यते । ८ 'स्नुहीपयः' इति ता. ।

वैरेचनद्रव्यरसानुपीतं[1] मूलं महत्त्रैवृतमस्तदोषम्[2] ॥
चूर्णीकृतं सैन्धवनागराढ्यमम्लैः[3] पिबेन्मारुतरोगजुष्टः ॥ ५ ॥
इक्षोर्विकारैर्मधुरै[4] रसैस्तत् पैत्ते गदे क्षीरयुतं पिबेच्च ॥
गुडूच्यरिष्टत्रिफलारसेन[5] सव्योषमूत्रं कफजे पिबेत्तत् ॥ ६ ॥
त्रिवर्णकत्र्यूषणयुक्तमेतद्गुडेन लिह्यादनवेन चूर्णम् ॥
प्रस्थे च तन्मूलरसस्य दत्वा तन्मूलकल्कं कुडवप्रमाणम् ॥ ७ ॥
कर्षोन्मिते सैन्धवनागरे च विपाच्य कल्कीकृतमेतदद्यात् ॥
तत्कल्कभागः समहौषधार्धः ससैन्धवो मूत्रयुतश्च पेयः ॥ ८ ॥
समास्त्रिवृन्नागरकाभयाः स्युर्भागार्धकं पूगफलं सुपक्कम् ॥
विडङ्गसारो मरिचं सदारुयोगः ससिन्धूद्भवमूत्रयुक्तः ॥ ९ ॥
(विरेचनद्रव्यभवं तु चूर्णं रसेन तेषां भिषजा विमृद्य ॥
तन्मूलसिद्धेन च सर्पिषाऽऽक्तं सेव्यं तदाज्ये गुटिकीकृतं च ॥ १० ॥
गुडे च पाकाभिमुखे निधाय चूर्णीकृतं सम्यगिदं विपाच्य ॥
शीतं त्रिजाताक्तमथो विमृद्य योगानुरूपा गुटिकाः प्रयोज्याः ॥ ११ ॥)
[6]वैरेकीयद्रव्यचूर्णस्य भागं सिद्धं सार्धं क्राथभागैश्चतुर्भिः ॥
आमृद्नीयात् सर्पिषा तच्छृतेन तत्क्राथोष्मस्वेदितं सामित च ॥ १२ ॥
पाकप्राप्ते फाणिते चूर्णितं तत् क्षिप्तं[7] पक्कं चावतार्यं प्रयत्नात् ॥
शीतीभूता मोदका हृद्यगन्धाः[8] कार्यास्त्वेते भक्ष्यकल्पाः समासात् १३
रसेन[9] तेषां परिभाव्य मुद्गान् यूषः ससिन्धूद्भवसर्पिरिष्टः ॥
वैरेचनेऽन्यैरपि वैदलैः स्यादेवं विदध्याद्वमनौषधैश्च ॥ १४ ॥

---

१ 'वैरेचनद्रव्यकषायपीत' इति ता। २ 'महत्त्रैवृतमत्र शुद्धम्' इति ता। ३ 'पिबेत्तदम्लैरनिलाधिजुष्टः' ४ 'स्वादुकाथैश्चापि चेक्षोर्विकारैः पैत्ते रोगे क्षीरयुक्तं निहन्यात्' इति ता.। ५ 'द्राक्षारसत्रिफलाक्राथमूत्रैर्युक्तं पिबेत्कफजे व्योषगाढम्' इति ता। ६ 'वैरेचन°' इति ता.। ७ क्षिप्त्वा पक्कं चावतार्या-प्रमादात्' इति ता.। ८ 'शीतीकृत्वा मोदकान् सौरभाढ्यान् कुर्यादेव भक्ष्यकल्पान्समासात्' इति ता.। ९ 'मुद्गाना वा तद्रसे भावितानां यूषो हृद्यः सघृतः सैन्धवाढ्यः। विरेचयेद्वैदलेष्वेष कल्पः कार्यः सुधैर्वामनीयेषु चैव'॥ इति ता.।

भित्त्वा[1] द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा ॥
पक्वं च सम्यक् पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम् ॥१५॥

सिता[2]जगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः ॥
लिह्यान्मधुघृताभ्यां तु तृड्दाहज्वरशान्तये ॥ १६ ॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ॥
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥ १७ ॥
पचेल्लेहं सिताक्षौद्रपलार्धकुडवान्वितम् ॥
त्रिवृच्चूर्णयुतं शीतं पित्तघ्न तद्विरेचनम् ॥ १८ ॥
त्रिवृच्छ्यामाक्षारशुण्ठीपिप्पलीर्मधुनाऽऽप्नुयात् ॥
सर्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम् ॥ १९ ॥
बीजाढ्यपथ्याकाश्मर्यधात्रीदाडिमकोलजान् ॥
तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत् ॥ २० ॥
घनीभूतं त्रिसौगन्ध्यत्रिवृत्क्षौद्रसमन्वितम् ॥
लेह्यमेतत्कफप्रायैः सुकुमारैर्विरेचनम् ॥ २१ ॥
नीलीतुल्यं त्वगेलं च तैस्त्रिवृत्ससितोपला ॥
चूर्णं संतर्पणं क्षौद्रफलाम्लं सन्निपातनुत् ॥ २२ ॥
त्रिवृच्छ्यामासिताकृष्णात्रिफलामाक्षिकैः समैः ॥
मोदकाः सन्निपातोर्ध्वरक्तपित्तज्वरापहाः ॥ २३ ॥
त्रिवृद्भागास्त्रय प्रोक्तास्त्रिफला तत्समा तथा ॥
क्षारकृष्णाविडङ्गानि संचूर्ण्य मधुसर्पिषा ॥ २४ ॥

---

१ 'इक्षुर्द्विधा पाटयित्वावावलिप्य त्रिवृत्कल्कैः प्रतिसन्धाय चापि । पक्त्वा सम्यक् पुटपाकक्रमेण खादेच्छीतं पित्तरोगाभिभूत.' ॥ इति ता. । २ 'सिताजगन्धात्वक्क्षीरीविदारीत्रिवृत समा' इत्यादय. 'पीत विरेचन तद्धि रूक्षाणामपि शस्यते' इत्यन्ताः १६–२७ श्लोकास्ताडपत्रपुस्तके न पठ्यन्ते ।

लिह्यात्कुडेन गुटिकाः कृत्वा वाऽप्यथ भक्षयेत् ॥
कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् ॥ २५ ॥
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥
चूर्णं श्यामा त्रिवृन्नीली कट्वी मुस्ता दुरालभा ॥ २६ ॥
चव्येन्द्रबीजं त्रिफला सर्पिर्मांसरसाम्बुभिः ॥
पीतं विरेचनं तद्धि रूक्षाणामपि शस्यते ॥ २७ ॥
वैरेचनिकनिःक्काथभागाः शीतास्त्रयो मताः ॥
द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥ २८ ॥
तत् साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत् ॥
कलसे कृतसंस्कारे विभज्यर्तू हिमाहिमौ ॥ २९ ॥
मासादूर्ध्वं[1] जातरसं मधुगन्धं वरासवम् ॥
पिबेद्[2]सावेव विधिः क्षारमूत्रासवेष्वपि ॥ ३० ॥
वैरेचनिकमूलानां क्काथे माषान् सुभावितान् ॥
सुधौतांस्तत्कषायेण शालीनां चापि तण्डुलान् ॥ ३१ ॥
अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् ॥
शालितण्डु[3]लचूर्णं च तत्कषायोष्मसाधितम् ॥ ३२ ॥
तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ॥
मण्डोदकार्थे क्काथं[4] च दद्यात्तत्सर्वमेकतः ॥ ३३ ॥
निदध्यात्कलसे तां तु सुरां जातरसां पिबेत् ॥
एष एव सुराकल्पो वमनेष्वपि कीर्तितः ॥ ३४ ॥

---

१ 'मासादूर्ध्वं जातरसमासव मधुगगन्धिकम् ॥ मात्रया प्रपिबेत् प्रातस्ततः सम्यग्विरिच्यते' ॥ इति ता.। २ अयमर्धश्लोकस्ताडपत्रपुस्तके न पठ्यते। ३ 'शालितण्डुलचूर्णन्तु सम्यक्क स्निग्ध सुशीतलम्' ॥ इति ता.। ४ 'तु' इति ता.।

मूलानि त्रिवृदादीनां प्रथमस्य गणस्य च ॥
महतः पञ्चमूलस्य मूर्वाशार्ङ्गष्टयोरपि[1] ॥ ३५ ॥
सुधां[2] हैमवतीं चैव त्रिफलातिविषे वचाम् ॥
संहृत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥ ३६ ॥
कुर्यान्निःक्काथमेकस्मिन्नेकस्मिंश्चूर्णमेव तु[3] ॥
क्षुण्णांस्तस्मिंस्तु[4] निःक्काथे भावयेद्बहुशो यवान् ॥ ३७ ॥
शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ॥
चतुर्थं भागमावाप्य चूर्णानामत्र कीर्तितम् ॥ ३८ ॥
प्रक्षिप्य कलसे सम्यक् ततस्तं[5] तदनन्तरम् ॥
तेषामेव कषायेण शीतलेन[6] सुयोजितम् ॥ ३९ ॥
पूर्ववत् सन्निदध्यात्तु ज्ञेयं सौवीरकं हि[7] तत् ॥
पूर्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ॥ ४० ॥
भागं संक्षुद्य संसृज्य यवैः[8] स्थाल्यामधिश्रयेत् ॥
अजशृङ्ग्याः कषायेण तमभ्यासिच्य[9] साधयेत् ॥ ४१ ॥
सुसिद्धांश्चावतार्यैतानौषधिभ्यो विवेचयेत्[10] ॥
विमृद्य[11] सतुषान् सम्यक् ततस्तान् पूर्ववन्मितान् ॥ ४२ ॥
पूर्वोक्तौषधभागस्य चूर्णं दत्त्वा तु पूर्ववत् ॥
तेनैव सह यूषेण कलसे पूर्ववत् क्षिपेत्[12] ॥ ४३ ॥

---

१ 'भार्गी' इति ता. । २ 'त्रिफला वचातिविषे सुधां हैमवती तथा ॥ संहृत्यैतानि सर्वाणि कुर्याद्भागावुभौ पृथक्' ॥ इति ता । ३ 'च' इति ता. । ४ 'तेन क्काथेन बहुशो विशुद्धान् भावयेद्यवान्' इति ता. । ५ 'प्रक्षिपेत्कलशे विद्वांस्ततस्तु तदनन्तरम्' इति ता. । 'समस्त तदनन्तरम्' इति पा० । ६ 'शीतलेनाभिपूरयेत्' इति ता. । ७ 'हितम्' इति ता. । ८ 'यवः स्थाल्यां सहाक्षिपेत्' इति ता. । 'यवान् स्थाल्यामधिश्रयेत् इति पा० । ९ 'तेनाभ्यासिच्य' इति ता. । 'तानभ्यासिच्य' इति पा० । १० 'विमोक्षयेत्' इति ता. । ११ 'विमृद्य सतुषानेतांस्ततस्तान् पूर्ववद्यवान्' ॥ इति ता. । १२ 'न्यसेत्' इति पा० ।

ज्ञात्वा जातरसं चापि तत्तुषोदकमादिशेत्[1] ॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्तितः ॥ ४४ ॥
षड्रात्रात् सप्तरात्राद्वा ते च पेये प्रकीर्तिते[2] ॥
वैरेचनेषु सर्वेषु[3] त्रिवृन्मूलविधिः स्मृतः ॥ ४५ ॥
दन्तीद्रवन्त्योर्मूलानि विशेषान्मृत्कुशान्तरे ॥
पिप्पलीक्षौद्रयुक्तानि स्विन्नान्युद्धृत्य शोषयेत् ॥ ४६ ॥
ततस्त्रिवृद्विधानेन योजयेच्छ्लेष्मपित्तयोः ॥
तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥ ४७ ॥
सर्पिश्च पक्कं वीसर्पकक्षादाहालजीर्जयेत् ॥
मेहगुल्मानिलश्लेष्मविबन्धांस्तैलमेव च ॥ ४८ ॥
चतुःस्नेहं शकृच्छुक्रवातसंरोधजा रुजः ॥
दन्तीद्रवन्तीमरिचकनकाह्वयवासकैः ॥ ४९ ॥
विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितम्[4] ॥
सप्ताहं सर्पिषा चूर्णं योज्यमेतद्विरेचनम् ॥ ५० ॥
जीर्णे संतर्पणं क्षौद्रं पित्तश्लेष्मरुजापहम् ॥
अजीर्णपार्श्वरुक्पाण्डुप्लीहोदरनिबर्हणम् ॥ ५१ ॥
गुडस्याष्टपले पथ्या विंशतिः स्युः पलं पलम् ॥
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५२ ॥
कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ॥
ततः खादेदुष्णतोयसेवी निर्यन्त्रणास्त्विमे ॥ ५३ ॥

---

१ 'तत्तुपोदकमाप्नुयात्' इति ता । २ 'ते च पेये सुरे स्मृते' इति ता. । ३ 'वैरेचनेषु द्रव्येषु त्रिवृत्कल्पविधि. स्मृत.' इति ता । तथा च ताडपत्रपुस्तकेऽस्मात् श्लोकादनन्तरमपरेऽधिकाः पञ्चषड् विरेचनयोगा निर्दिष्टा दृश्यन्ते ते यथा—'महावृक्षपय पीतैर्यवागूस्तण्डुलैः कृता ॥ विरेचयेदाशु- पीता गुडेनोत्कारिका कृता ॥ लेहो वा साधितः सम्यक् स्नुहीक्षीरसुराघृतैः ॥ विभाविता स्नुहीक्षीरैः पिप्पल्यो लवणानि च ॥ चूर्णं काम्पिल्यकस्यापि तत्पीतं गुडिकाकृतम्' इति । ४ 'मूत्रभावितैः' इति पा० ।

दोषघ्ना ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ॥
व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा ॥ ५४ ॥
नवैतानि समांशानि[1] त्रिवृदष्टगुणानि वै[2] ॥
श्लक्ष्णं[3] चूर्णीकृतानीह दन्तीभागद्वय तथा ॥ ५५ ॥
(सर्वाणि चूर्णितानीह गालितानि विमिश्रयेत् ॥)
षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिकैः ॥ ५६ ॥
पिण्डितं[4] भक्षयित्वा तु ततः शीताम्बु पाययेत् ॥
बस्तिरुक्[5]कृतृड्ज्वरच्छर्दिशोषपाण्डुभ्रमापहम् ॥ ५७ ॥
निर्यन्त्रणमिदं सर्वविषघ्नं तु विरेचनम् ॥
त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम् ॥ ५८ ॥
भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः ॥
भक्ष्यरूपसधर्मत्वादाढ्येष्वेव विधीयते ॥ ५९ ॥
तिल्वकस्य त्वचं बाह्यामन्तर्वल्कविवर्जिताम् ॥
चूर्णयित्वा तु द्वौ भागौ तत्कषायेण गालयेत् ॥ ६० ॥
तृतीयं भावितं तेन भागं शुष्कं तु भावितम् ॥
दशमूलीकषायेण त्रिवृद्वत्संप्रयोजयेत् ॥ ६१ ॥
वि[6]धानं त्वक्षु निर्दिष्टं फलानामथ वक्ष्यते ॥
हरीत[7]क्याः फलं त्वस्थिविमुक्तं दोषवर्जितम् ॥ ६२ ॥

---

१ 'समानानि' इति ता.। २ 'वा' इति ता। ३ 'सुश्लक्ष्णचूर्णितानीह गालितानि विमिश्रयेत्' इति ता। ४ 'पिण्डीकृत भक्षयित्वा' इति ता.। ५ 'अयमर्धश्लोकस्ताडपत्रपुस्तके न पठ्यते तदभावेतु तत्रेत्थ पठ्यते यथा 'अविपत्तिरयं योगः प्रशस्त. पित्तरोगिणाम् ॥ क्षारानुपानो भोक्तव्यो वातश्लेष्मातुरैर्नरै. ॥ अवेक्ष्य सम्यग्रोगादीन् यथावदुपयोजयेत्' इति। ६ 'हस्तलिखितपुस्तके 'विधान त्वक्षु निर्दिष्ट फलानामथ वक्ष्यते' इत्ययमर्धश्लोको न पठितो दृश्यते। ७ इह रसायनत्वेन निर्दिष्टोऽय हरीतकीफलप्रयोगस्ताडपत्रपुस्तके न संगृहीतो दृश्यते।

योऽयं त्रिवृद्विधानेन सर्वव्याधिनिबर्हणम् ॥
रसायनं परं मेध्यं दुष्टान्तर्व्रणशोधनम् ॥ ६३ ॥
हरीतकी विडङ्गानि सैन्धवं नागरं त्रि[१]वृत् ॥
मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम् ॥ ६४ ॥
हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ॥
सैन्धवं शृङ्गवेरं च गोमूत्रेण विरेचनम् ॥ ६५ ॥
नीलि[२]नीफलचूर्णं तु नागराभययोस्तथा ॥
लि[३]ह्याद्गुडेन सलिलं पश्चादुष्णं पिबेन्नरः ॥ ६६ ॥
पिप्पल्यादिकषायेण पिबेत्पिष्टां हरीतकीम् ॥
सैन्धवोपहितां स[४]द्य एष योगो विरेचयेत् ॥ ६७ ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ॥
सैन्धवोपहिता वाऽपि सातत्येनाग्निदीपनी ॥ ६८ ॥
वातानुलोमनी वृष्या चेन्द्रियाणां प्रसादनी ॥
संतर्पणकृतान् रोगान् प्रायो हन्ति हरीत[५]की ॥ ६९ ॥
शीतमा[६]मलकं रूक्षं पित्तमेद.कफापहम् ॥
बिभीत[७]कमनुष्णं तु कफपित्तनिबर्हणम् ॥ ७० ॥
त्रीण्यप्यम्लकषायाणि सतिक्तमधुराणि च ॥
त्रिफला सर्वरोगघ्नी त्रिभागघृतमूर्च्छिता ॥ ७१ ॥
वयस[८]ः स्थापनं चापि कुर्यात् संततसेविता ॥
हरीत[९]कीविधानेन फलान्येवं प्रयोजयेत् ॥ ७२ ॥

---

१ 'तथा' इति ता.। २ 'नीलीफलानां चूर्णन्तु' इति ता.। ३ 'लीढ्वा गुडेन' इति ता.। ४ 'सम्यगेष योगो विरेचन.' इति ता.। ५ अयं हरीतकी-गुणपाठस्ताडपत्रपुस्तके न दृश्यते। ६ अयमामलकगुणपाठस्ताडपत्रपुस्तके न दृश्यते। ७ अय विभीतकगुणपाठस्ताडपत्रपुस्तके न दृश्यते। ८ 'वयः-सस्थापन चापि कुर्यात्संततसेविता' इति ता.। ९ 'अयमर्धश्लोकस्ताडपत्रपुस्तके न दृश्यते।

विरेचनानि सर्वाणि विशेषाच्चतुरङ्गुलात् ॥
फलं काले समुद्धृत्य सिकतायां निधापयेत् ॥ ७३ ॥
सप्ताहमातपे शुष्कमतो मज्जानमुद्धरेत् ॥
तैलं ग्राह्यं जले पक्त्वा तिलवद्वा प्रपीड्य च ॥ ७४ ॥
तस्योपयोगो बालानां यावद्वर्षाणि द्वादश ॥
लिह्यादेरण्डतैलेन कुष्ठत्रिकटुकान्वितम् ॥ ७५ ॥
सुखोदकं चानुपिबेदेष योगो विरेचयेत् ॥
एरण्डतैलं त्रिफलाक्काथेन त्रिगुणेन तु ॥ ७६ ॥
युक्तं पीतं तथा क्षीररसाभ्यां तु विरेचयेत् ॥
बालवृद्धक्षतक्षीणसुकुमारेषु योजितम् ॥ ७७ ॥
फलानां विधिरुद्दिष्टः क्षीराणां शृणु सुश्रुत ! ॥
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम् ॥ ७८ ॥
अज्ञप्रयुक्तं तद्धन्ति विषवत् कर्मविभ्रमात् ॥
विजानता प्रयुक्तं तु महान्तमपि संचयम् ॥ ७९ ॥
भिनत्त्याशु च दोषाणां रोगान् हन्ति च दुस्तरान् ॥
महत्याः पञ्चमूल्यास्तु बृहत्योश्चैकशः पृथक् ॥ ८० ॥
कषायैः समभागं तु तदङ्गारेषु शोषितम् ॥
अम्लादिभिः पूर्ववत्तु प्रयोज्यं कोलसंमितम् ॥ ८१ ॥
महावृक्षपयःपीतैर्यवागूस्तण्डुलैः कृता ॥
पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥ ८२ ॥
लेहो वा साधितः सम्यक् स्नुहीक्षीरपयोघृतैः ॥
भावितास्तु स्नुहीक्षीरे पिप्पल्यो लवणान्विताः ॥ ८३ ॥

---

१ ताडपत्रपुस्तके ७३, ७४, ७५ सख्याकाः श्लोका न दृश्यन्ते । २ ताडपत्रपुस्तके ७६–८३ इतिसख्याका अष्टौ श्लोकास्तथा 'चुर्ण काम्पिल्लक वाऽपि तत्पीतं गुटिकीकृतम्' इत्ययमर्धश्लोकश्चैते न दृश्यन्ते । ३ 'तदङ्गारैर्विशोषितम्' इति पा० । ४ 'स्नुहीक्षीरसिताघृतैः' इति पा० ।

चूर्णं काम्पिल्लकं वाऽपि तत्पीतं गुटिकीकृतम् ॥
सप्तला[1] शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ॥ ८४ ॥

मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततः परम् ॥
कीर्णं तेनैव[2] चूर्णेन माल्यं वसनमेव च ॥ ८५ ॥

आघ्रायावृत्य वा सम्यङ्मृदुकोष्ठो विरिच्यते ॥
क्षीरत्वक्[3]फलमूलानां विधानै परिकीर्तितैः ॥
अवेक्ष्य सम्यग्योगादीन् यथावदुपयोजयेत् ॥ ८६ ॥

त्रिवृच्छाणमितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ॥
विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः ॥ ८७ ॥

लिह्यात् सर्पिर्मधुभ्यां च मोदकं वा गुडेन वा ॥
भक्षयेन्निष्परीहारमेतच्छ्रेष्ठं विरेचनम् ॥ ८८ ॥

गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ॥
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ॥ ८९ ॥

घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु ॥
भक्ष्या[4]न्नलेह्येषु च तेषु तेषु विरेचनान्यग्रमतिर्विदध्यात्॥९०॥

क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव चूर्णम्[5] ॥
कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टाः[6] ९१

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने विरेचनद्रव्यविकल्पविज्ञानीयो
नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

१ 'सप्तला शङ्खिनी दन्ती त्रिवृदारग्वध वचाम् ॥ मूत्रेणाभाव्य सप्ताह स्नुहीक्षीरे तथैव च' इति ता.। २ 'तेनाथ' इति ता.। ३ ताडपत्र-पुस्तके ८६–८९ इति संख्याकाश्चत्वारः श्लोका असंगृहीताः सन्ति। ४ 'अन्नेषु भक्ष्येषु तथैव लेह्ये विरेचनं साधु नियोजनीयं' इति ता.। ५ 'फाण्टम्' इति पा.। ६ अयम् ९१ इति संख्याकः श्लोकस्ताडपत्रपुस्तके नास्ति।

# पञ्चचत्वारिंशत्तमोऽध्यायः ।

अथातो[1] द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रा[2]दाहप्रशमनमेकान्ततः पथ्यतमं च ॥ ३ ॥

तदे[3]वावनिपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदीनदसरस्तडागवापीकूपचुण्टीप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेष्ववस्थितमिति ॥ ४ ॥

त[4]त्र, 'लोहितकपिलपाण्डुनीलपीतशुक्लेष्ववनिप्रदेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि संभवन्ति' इत्येके भाषन्ते ॥ ५ ॥

तत्तु न सम्यक्; पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिले[5]रसो भवत्युत्कर्षापकर्षेण । तत्र[6], स्वलक्षणभूयिष्ठायां भूमावम्लं लवणं च; अम्बुगुणभूयिष्ठायां मधुरं, तेजोगुणभूयिष्ठायां कटुक तिक्तं च; वायु-

---

१ 'अथातो द्रवद्रव्यविशेषविज्ञानीय व्याख्यास्याम' इति ता. । २ ताडपत्रपुस्तके पानीयस्यान्तरीक्षस्य 'निद्रादाहप्रशमनगुणो' न स्मर्यते । ३ 'तदेवावनिपतित कूपवापीप्रस्रवणोद्भिदनदीसरस्तडागचुण्ड्यादिपु स्थानेष्वन्यतमरसमुपलभ्यते' इति ता । ४ 'तत्र 'लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेपु मधुराम्ललवण कटुतिक्तकषाया यथासङ्ख्यमुदकरसा भवन्ति' इत्येके भाषन्ते' इति ता. । ५ 'स खलूदकरसो भवत्युत्कर्षापकर्षकृतेन संयोगविशेषेण' इति ता. । ६ तत्र स्वलक्षणोदकगुणभूयिष्ठायां मधुर, तोयाग्निगुणभूयिष्ठायामम्ल, पृथिव्यग्निगुणभूयिष्ठाया लवण, वाय्वग्निगुणभूयिष्ठायां कटुक, वाय्वाकाशगुणभूयिष्ठायां तिक्त, पृथिव्यनिलगुणभूयिष्ठायां कषायम्' इति ता. ।

गुणभूयिष्ठायां कषायम्; आकाशगुणभूयिष्ठायामव्यक्तरसम्, अव्यक्तं ह्याकाशमित्यतः[1]; तत् प्रधानमव्यक्तरसत्वात्, तत्पेयमान्तरीक्षालाभे ॥ ६ ॥

तत्रान्तरीक्षं[2] चतुर्विधम्। तद्यथा—धारं, कारं, तौषारं, हैममिति। तेषां धारं प्रधानं, लघुत्वात्; तत् पुनर्द्विविधं—गाङ्गं, सामुद्रं[3] चेति। तत्र[4] गाङ्गमाश्वयुजे मासि प्रायशो वर्षति। तयो[5]र्द्वयोरपि परीक्षणं कुर्वीत-शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे बहिष्कुर्वीत, स यदि मूहूर्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं; वर्णान्यत्वे सिक्थप्रक्लेदे च सामुद्रमिति विद्यात्, तन्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीत गाङ्गवद्भवति। गाङ्गं[6] पुनः प्रधानं, तदु[7]पाददीताश्वयुजे मासि। शु[8]चिशुक्लविततपटैकदेशच्युतमथवा हर्म्यतलपरिभ्रष्टमन्यैर्वा[9] शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृन्मये वा पात्रे निदध्यात्। तत् सर्वकालमुपयुञ्जीत, तस्यालाभे भौमम्। तच्चा[10]काशगुणबहुलम्। तत् पुनः सप्तविधम्। तद्यथा—कौपं, नादेयं, सारसं, ताडागं, प्रास्रवणम्, औद्भिदं, चौण्ड्यमिति ॥ ७ ॥

---

१ 'अव्यक्तं ह्याकाशमित्यत.' क्वचिद्धस्तलिखितपुस्तके न पठ्यते। २ 'तत्रान्तरीक्षं चतुर्विधम्' इत्याद्यधिकरण चक्रपाणिदत्तविरचितभानुमतीव्याख्यासहिताया सुश्रुतसंहितायां सप्तशीतीकरणवर्णनानन्तर 'सौवर्णे राजते ताम्रे' इत्यादि श्लोकानन्तरञ्च पठितमुपलक्ष्यते। ३ 'गाङ्ग सामुद्र च' इति ता.। ४ तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति' इति वाक्यं ता० पुस्तके नोपलभ्यते। ५ 'तयोरपि परीक्षण कुर्वीत' इति ता.। ६ 'गाङ्ग पुन• प्रधान' इत्येतत् ता० पुस्तके नोपलभ्यते। ७ 'तदुपादेयमिति' इति ता.। ८ 'शुक्लपटैकदेशच्युतमथवा' इति ता.। ९ 'अन्यैर्वा प्रयोगै.' इति ता.। १० 'तच्चाकाशगुणबहुलम्' इत्येतद्वाक्य ताडपत्रपुस्तके नोपलभ्यते।

तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत, महागुणत्वात्; शरदि सर्वं, प्रसन्नत्वात्; हेमन्ते सारसं ताडागं वा; वसन्ते कौपं प्रास्रवणं वा; ग्रीष्मेऽप्येवं; प्रावृषि चौण्ड्यमनभिवृष्टं सर्वं चेति ॥ ८ ॥

कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम् ॥
तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥ ९ ॥
योऽवगाहेत वर्षासु पिबेद्वाऽपि नवं जलम् ॥
स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु ॥ १० ॥

तत्र यत् पङ्कशैवलहठतृणपद्मपत्रप्रभृतिभिरवच्छन्नं रविशशिकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टं तद्व्यापन्नमिति विद्यात् । तस्य स्पर्शरूपरसगन्धवीर्यविपाकदोषाः षट् संभवन्ति । तत्र, खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषः, पङ्कसिकताशैवालबहुवर्णता रूपदोषः; व्यक्तरसता रसदोषः; अनिष्टगन्धता गन्धदोषः; यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्यदोषः; यदुपयुक्तं चिराद्विपच्यते विष्टम्भयति वा स विपाकदोष इति । त एते आन्तरिक्षे न सन्ति ॥ ११ ॥

व्यापन्नस्य चाग्निक्वथनं सूर्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्वापणं प्रसादनं च कर्तव्यं, नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति ॥ १२ ॥

---

१ 'वसन्ते कौप चौण्ड्य प्रास्रवण वा; इति ता. । २ 'प्रावृषि कौपं, सर्वमेव संस्कृत चेति इति चक्रपाणिदत्त । 'प्रावृषिऐन्द्रमनभिवृष्टं सर्वमेव' इति ता. । ३ 'तृणपर्णोदकयुत' इति ता । ४ 'लभते' इति ता. । ५ 'पङ्कशैवलहठतृणपद्मप्रभृतिभि०' इति ता. । ६ 'रविशशिकिरणानिलैर्वातिजुष्ट' इति ता. । ७ 'गन्धरसोपसृष्ट तद्व्यापन्नमिति विद्यात्' इति ता. । ८ 'पङ्कसिकताशैवालबाहुल्याद्विकृतवर्णता रूपदोष.' इति ता. । ९ 'इति' इत्येतत् ताडपत्रपुस्तके नास्ति । १० 'त एते आन्तरीक्षे दोषा न भवन्ति' इति ता. । ११ "पुष्प" इति शब्दस्ताडपत्रपुस्तके नास्ति ।

सौवर्णे राजते ताम्रे कांस्ये मणिमयेऽपि वा ॥
पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत् ॥ १३ ॥
व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्तवम् ॥
दोषसंजननं ह्येतन्नाददीताहितं तु तत् ॥ १४ ॥
व्यापन्नमुदकं यस्तु पिबतीहाप्रसाधितम् ॥
श्वयथुं पाण्डुरोगं च त्वग्दोषमविपाकताम् ॥ १५ ॥
श्वासकासप्रतिश्यायशूलगुल्मोदराणि च ॥
अन्यान्[2]वा विषमान्रोगान्प्राप्नुयादचिरेण सः ॥ १६ ॥

तत्र सप्त कलुषस्य प्रसादनानि भवन्ति तद्यथा–कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति ॥ १७ ॥

पञ्च निक्षेपणानि भवन्ति। तद्यथा—फलकं, त्र्यष्टकं, मुञ्जवलयं, उदकमञ्चिका, शिक्यं चेति ॥ १८ ॥

सप्त शीतीकरणानि भवन्ति; तद्यथा—प्रवातस्थापनम्, उदकप्रक्षेपणं, यष्टिकाभ्रामणं, व्यजनं, वस्त्रोद्धरणं, वालुकाप्रक्षेपणं, शिक्यावलम्बनं चेति ॥ १९ ॥

निर्गन्धम[3]व्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ॥
अच्छं लघु च हृद्यं च तोयं गुणवदुच्यते ॥ २० ॥

तत्र नद्यः पश्चिमाभिमुखाः, लघूदकत्वात्; पूर्वाभिमुखास्तु[4] न प्रशस्यन्ते, गुरूदकत्वात्; दक्षिणाभिमुखा नातिदोषलाः, साधारण-

---

१ 'सौवर्णे राजते ताम्रे' इत्यादिश्लोको भानुमतीव्याख्यासहिताया सुश्रुतसंहितायां सप्तशीतीकरणवर्णनादनन्तर पठितो लक्ष्यते। २ 'विविधान् विषमान् रोगान्' इति पा०। ३ 'अगन्धमव्यक्तरस' इति च.। तथाच 'अगन्धमव्यक्तरस' इत्यादिश्लोकोऽय भानुमतीव्याख्यासहिताया सुश्रुतसंहितायां षष्ठसख्याको वर्तते । ४ 'तु' इत्येतत् ताडपत्रपुस्तके नास्ति।

त्वात्। तत्र सह्यप्रभवाः कुष्ठं जनयन्ति, विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगं च, मलयप्रभवाः कृमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान्, प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजनयन्ति, पारियात्रप्रभवाः पथ्या बलारोग्यकर्य इति ॥ २१ ॥

नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः ॥
गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः ॥ २२ ॥
प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः ॥
लघ्व्यः समधुराश्चैव पौरुषेया बले हिताः ॥ २३ ॥

तत्र सर्वेषामेव भौमानां ग्रहणं प्रत्यूषसि, तत्र ह्यमलत्वं शैत्यं चाधिकं भवति, स एव चापां परो गुण इति ॥ २४ ॥

दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ॥
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥ २५ ॥
गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ॥
बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥ २६ ॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ॥
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥ २७ ॥
मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ॥
भ्रमक्लमपरीतेषु तमके वमथौ तथा ॥ २८ ॥
ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥ २९ ॥

---

१ 'कुष्ठं हृद्रोगं च' इति ता.। २ 'हिमवत्प्रभवा गलगण्डं कश्चिद्गण्डमालाम्' इति ता.। ३ 'पारियात्रप्रभवा बलारोग्यकरा इति' इति ता.। ४ 'गुर्व्यः शैवालकलुषजलौघा मन्दगाश्च या.' इति ता.। ५ 'तत्र सर्वेषामेव भौमानां प्रत्यूषसि ग्रहणं' इति ता.। ६ 'जुष्टमिन्दुकरैर्निशि' इति ता.। ७ 'बल्यं रसायनं शीतं मात्रापेक्ष्य ततः परम्' इति ता.। ८ 'ज्वरदाहतृषापहम्' इति ता.। ९ 'अत्रत्यमिदं पद्यार्धं ताडपत्रपुस्तके नास्ति तत्तु त्रिंशदेकत्रिंशच्छ्लोकयोर्मध्ये दृश्यते। १० "पित्तोष्म" इति ता.।

आध्माने स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ॥
हिक्कायां[1] स्नेहपीते च शीताम्बु परिवर्जयेत् ॥ ३० ॥
नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥
तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥ ३१ ॥
तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥
ताडागं[2] वातलं स्वादु कषायं कटुपाकि च ॥ ३२ ॥
वातश्लेष्महरं वाप्यं सक्षारं कटु पित्तलम् ॥
सक्षारं[3] पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥ ३३ ॥
चौण्ट्य[4]मग्निकरं रूक्षं मधुरं कफकृन्न च ॥
कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥ ३४ ॥
मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम् ॥
वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥ ३५ ॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ॥
तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलं तु तत् ॥ ३६ ॥
सामुद्रमुदकं विस्रं लवणं सर्वदोषकृत् ॥
अनेकदोषमानूप वार्यभिष्यन्दि गर्हितम् ॥ ३७ ॥
एभिर्दोषै[5]रसंयुक्तं निरवद्यं तु जाङ्गलम् ॥
पाकेऽविदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्धनम् ॥ ३८ ॥

---

१ 'हिक्कायां स्नेहपीते च' इत्यादि श्लोकार्धानन्तर ताडपत्रपुस्तके पुरोनिर्दिष्टवदधिकपाठः पठ्यते यथा–'अरोचके प्रतिश्याये प्रमेहे क्षययौ तथा ॥ मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामयेषु च ॥ व्रणे च मधुमेहे च पानीय मन्दमाचरेत् ॥ चन्द्रकान्तोद्भववारि पित्तघ्न विमल स्मृतम् ॥ सक्षार प्रायशः कौप' नादेय कीर्तित तथा'॥ इति ता । २ 'ताडाग वातल रूक्ष सारसं चैवतादृशम्' इति ता । ३ 'सक्षार पित्तल कौप' इत्यादिश्लोकार्धकमिदं ता० पुस्तके नास्ति । ४ ता० पुस्तके ३४–३७ सख्याकाश्चत्वारः श्लोका न दृष्टिपथमायान्ति । ५ 'एभिर्दोषैरसंयुक्त' इत्यादिसंपूर्ण श्लोकस्तथा 'दीपन स्वादु शीत च इत्याद्यर्धश्लोकश्च ता० पुस्तके नोपलभ्येते ।

दीपनं स्वादु शीतं च तोयं साधारणं लघु ॥
कफमेदोऽनिलामघ्नं दीपनं बस्तिशोधनम् ॥ ३९ ॥
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥
यत् क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु ॥ ४० ॥
चतुर्भागावशेषं तु तत्तोयं गुणवत् स्मृतम् ॥
न च पर्युषितं देयं कदाचिद्वारि जानता ॥ ४१ ॥
अम्लीभूतं कफोत्क्लेदि न हितं तत् पिपासवे ॥
मद्यपानात्समुद्भूते रोगे पित्तोत्थिते तथा ॥ ४२ ॥
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते ॥
स्निग्धं स्वादु हिमं हृद्यं दीपनं बस्तिशोधनम् ॥ ४३ ॥
वृष्यं पित्तपिपासाघ्नं नालिकेरोदकं गुरु ॥
दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्तिषु ॥ ४४ ॥
शृतशीतं जलं शस्तं तृष्णाच्छर्दिभ्रमेषु च ॥
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ४५ ॥

---

१ 'कफमेदोऽनिलहर' इति ता. । ताडपत्रपुस्तके 'कफमेदोऽनिलहर' इत्यादिश्लोकार्धात्प्रागेकोऽधिक श्लोकः पठितो लक्ष्यते यथा—'सर्वदा सर्वदोषेषु पथ्यं प्रास्रवणं पयः॥ अविदाह्युद्भिज(द)तोय पित्तघ्न मधुर स्मृतम्' इति । तथा च ता० पुस्तके 'कफमेदोऽनिलहर' इत्यादिश्लोकार्धानन्तर पुरोनिर्दिष्टाः श्लोका अधिकाः पठिता दृश्यन्ते यथा—'दीपनी पाचनी लघ्वी पथ्या बस्तिविशोधनी ॥ वातानुलोमनी पेया क्षुत्पिपासाहरा स्मृता ॥ कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ॥ ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतैः ॥ प्रीणन. प्राणजननश्वासकासक्षयापह. ॥ वातहन्ता श्रमहरो हृद्यो मांसरसः स्मृत. ॥ खलाखलयवागवश्च रागखाडवसट्टका. ॥ एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः' ॥ इति ॥ २ 'यत्क्वाथ्यमान निर्वेग' इत्यादिपद्यार्धं तथा एकचत्वारिंशद्विचत्वारिंशत्संख्याके संपूर्णे द्वे पद्ये तथा 'सन्निपातसमुत्थे च'...इत्यादिपद्यार्धञ्च ता० पुस्तके न सन्ति । ३ 'स्निग्ध स्वादुरस हृद्य बृंहणं बलत्तरम्' इति ता. । ४ भानुमतीव्याख्यासहितायां सुश्रुतसहितायाममु शृतशीतजलगुणपाठमुक्त्वाऽपि पुनश्च तद्विषयेऽपर. पाठः पठितो लक्ष्यते स यथा 'मद्यपानात्समुद्भूते रोगे पित्तोत्थिते तथा ॥ सन्निपातसमुत्थे च शृतशीत प्रशस्यते' इति च. ।

मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ४६ ॥

इति जलवर्गः ।

अथ[1] क्षीरवर्गः ।

गव्यमाजं तथा चौष्ट्रमाविकं माहिषं च यत् ॥
अश्वायाश्चैव नार्याश्च करेणूनां च यत्पयः ॥ ४७ ॥
तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु ॥
मधुरं[2] पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु ॥
सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते ॥ ४८ ॥

तत्र[3] सर्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात्, वातपित्तशोणितमानसेष्वपि विकारेष्वविरुद्धं, जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्बस्तिदोषपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्तातिसारप्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लमहरं, पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं वयःस्थापनमायुष्यं जीवनं बृंहणं संधानं वमनविरेचनास्थापनं तुल्यगुणत्वाच्चौजसो वर्धनं बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानां च पथ्यतमम् ॥ ४९ ॥

अल्पाभिष्यन्दि गोक्षीरं[4] स्निग्धं गुरु रसायनम् ॥
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ ५० ॥

---

१ 'अथ क्षीरवर्ग.' इत्युद्देशवाक्य ता. पुस्तके नास्ति । २ 'मधुर पिच्छिल शीत' इत्याद्यर्धश्लोकोऽय ता० पुस्तके नास्ति । ३ 'गव्य तु शीतस्निग्धमधुरमविदाहिवातपित्तश्लेष्मशोणितमानसेपु विकारेष्वविरुद्ध जीर्णज्वरकासश्वासशोफरक्तपित्तक्षयगुल्मोदरमूर्छाभ्रममदपिपासापाण्डुरोगार्शउदावर्तातिसारयोनिरोगगर्भास्रावश्रमक्लमहर बल्य वृष्य रसायनं मेध्य वाजीकरणं सन्धानमास्थापनमायुष्य वमनविरेचनञ्चेति' इति ता० पा० । ४ 'गोक्षीरमनभिष्यन्दि' इति पा० । अत्रत्यः पुनः पञ्चाशत्तमः सम्पूर्णः श्लोक एकपञ्चाशत्तमश्लोकपूर्वार्धश्च ता० पुस्तके नोपलभ्येते ।

जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् ॥
गव्य[1]तुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम् ॥ ५१ ॥
दीपनं लघु संग्राहि श्वासकासा[2]स्रपित्तनुत् ॥
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥ ५२ ॥
नात्यम्बुपानाद्व्यायामात् सर्वव्या[3]धिहरं पयः ॥
रूक्षोष्णं लवणं किंचिदौष्ट्रं स्वादुरसं लघु ॥ ५३ ॥
शोफगुल्मोदरार्शोघ्नं कृमिकुष्ठविषापहम् ॥
आविकं मधुरं स्निग्धं गुरु पित्तक[4]फावहम् ॥ ५४ ॥
पथ्यं केवलवातेषु कासे [5]चानिलसंभवे ॥
महाभिष्यन्दि मधुरं माहिषं वह्नि[6]नाशनम् ॥ ५५ ॥
निद्राकरं शीत[7]तरं गव्यात् स्निग्धतरं गुरु ॥
उ[8]ष्णमैकशफं बल्यं शाखावातहरं पयः ॥ ५६ ॥
मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥
नार्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ॥ ५७ ॥
नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ॥ ५८ ॥
स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥
प्रा[9]यः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ॥ ५९ ॥
रात्र्याः सोमगुणत्वाच्च व्यायामाभावतस्तथा ॥
दि[10]वाकराभितप्तानां व्यायामानिलसेवनात् ॥ ६० ॥

---

१ 'क्षीर गव्यगुणन्त्वाज विशेषाच्छोणिते हितम्' इति ता.। २ 'श्वासकासाम्लपित्तनुत्' इति पा०। 'विशेषश्चात्र मे शृणु' इति ता.। ३ 'सर्वदोषहरः पयः' इति ता.। ४ 'पित्तकफप्रदम्' इति ता.। ५ 'वानिलसंभवे' इति ता.। ६ 'वन्हिसादनम्' इति ता.। ७ 'शीतकर' इति ता.। ८ 'उष्णश्चैकशफ' इति हा० पा०। ९ अत्रत्यौ एकोनषष्टितमश्लोकोत्तरार्धः षष्टितमश्लोकपूर्वार्धश्च ता० पुस्तके नोपलभ्येते। १० अत्रत्यौ षष्टितमश्लोकोत्तरार्धं एकषष्टितमश्लोकपूर्वार्धश्च ता० पुस्तके न स्तः।

श्रमघ्नं वातनुच्चैव चक्षुष्यं चापराह्णिकम् ॥
पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम् ॥ ६१ ॥
तदेवोक्तं लघुतरमनभिष्यन्दि[1] वै शृतम् ॥
वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥ ६२ ॥
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा ॥
तदेवा[2]तिशृतं शीतं गुरु बृंहणमुच्यते ॥ ६३ ॥
अनिष्ट[3]गन्धमम्लं च विवर्णं विरसं च यत् ॥
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥ ६४ ॥

[4]इति क्षीरवर्गः।

[5]अथ दधिवर्गः।

दधि तु[6] मधुरमम्लमत्यम्लं चेति; तत्कषायानुरसं स्निग्धमुष्णं पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं मङ्गल्यं च ॥ ६५ ॥

मह[7]ाभिष्यन्दि मधुरं कफमेदोविवर्धनम् ॥
कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम् ॥ ६६ ॥
विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत् ॥
स्निग्धं विपाके मधुरं दीपनं बलवर्धनम् ॥ ६७ ॥
वातापहं पवित्रं च दधि गव्यं रुचिप्रदम् ॥
दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ॥ ६८ ॥

---

१ 'मन्दाभिष्यन्दि' इति ता०। २ 'तदेवातिशृत शीत' इत्यादि पद्यार्ध ता० पुस्तके नास्ति। ३ 'अनिष्टमम्लगन्ध च' इति ता०। ४ 'इति क्षीर-वर्गः' इति समाप्तिवाक्यं ता० पुस्तके नास्ति। ५ 'अथ दधिवर्गः' इत्युद्देश-वाक्यं ता० पुस्तके नास्ति। ६ 'दधि तु गुर्वम्लमभिष्यन्दि श्लेष्मपित्तशोफ-वर्धनं कार्श्यापह रोचनं मङ्गल्यञ्च। तत् उध्दृतसार ग्राह्यमनभिष्यन्दि च। सरः कफमेदःशुक्रकृत् त्रिदोषकर मन्दजातम्' इति ता०। ७ इत आरभ्य दधिवर्गसमाप्तिपर्यन्तः पाठस्ता० पुस्तके नास्ति।

दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥
विपाके मधुरं वृष्यं वातपित्तप्रसादनम् ॥ ६९ ॥
बलासवर्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥
विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिक दधि ॥ ७० ॥
वातमर्शांसि कुष्ठानि कृमीन् हन्त्युदराणि च ॥
कोपनं कफवातानां दुर्नाम्नां चाविकं दधि ॥ ७१ ॥
रसे पाके च मधुरमत्यभिष्यन्दि दोषलम् ॥
दीपनीयमचक्षुष्यं वाडवं दधि वातलम् ॥ ७२ ॥
रूक्षमुष्णं कषायं च कफमूत्रापहं च तत् ॥
स्निग्धं विपाके मधुरं बल्यं संतर्पणं गुरु ॥ ७३ ॥
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्या गुणोत्तरम् ॥
लघु पाके बलासघ्नं वीर्योष्णं पक्तिनाशनम् ॥ ७४ ॥
कषायानुरसं नाग्या दधि वर्चोविवर्धनम् ॥
दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ॥ ७५ ॥
विज्ञेयमेवं सर्वेषु गव्यमेव गुणोत्तरम् ॥
वातघ्नं कफकृत् स्निग्धं बृंहणं नातिपित्तकृत् ॥ ७६ ॥
कुर्याद्भक्ताभिलाषं च दधि यत् सुपरिस्रुतम् ॥
शृतात् क्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम् ॥ ७७ ॥
वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ॥
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ॥ ७८ ॥
वह्नेर्विधमनश्चापि कफशुक्रविवर्धनः ॥
दधि त्वसारं रूक्षं च ग्राहि विष्टम्भि वातलम् ॥ ७९ ॥
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ॥ ८० ॥

---

१ 'विपाके कटु सक्षारमम्ल भेद्यौष्ट्रिज दधि' इति पा० ।

हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥
तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम् ॥ ८१ ॥
अम्लं कषायं मधुरमवृष्यं कफवातनुत् ॥
प्रह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत् ॥
बलमावहते क्षिप्रं भक्तच्छन्दं करोति च ॥ ८२ ॥

स्वाद्वम्लमत्यम्लकमन्दजातं तथा शृतक्षीरभवं सरश्च ॥
असारमेवं दधि सप्तधाऽस्मिन् वर्गे स्मृता मस्तुगुणास्तथैव ॥ ८३॥

इति दधिवर्गः ।

अथ तक्रवर्गः ।

तक्रं[1] तु मधुरमम्लं कषायानुरसमुष्णवीर्यं लघु रूक्षमग्निदीपनं गरशोफातिसारग्रहणीपाण्डुरोगार्शःप्लीहगुल्मारोचकविषमज्वरतृष्णाच्छर्दिप्रसेकशूलमेदःश्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यं च ॥ ८४ ॥

म[2]न्थनादिपृथग्भूतस्नेहमर्धोदकं च यत् ॥
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥
यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥ ८५ ॥
नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ॥
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ ८६ ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ॥
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ८७ ॥

---

१ 'तक्रं कषायानुरसमम्लमुष्णवीर्यमतीसारगरघ्नं लघु शुक्रबलासक्षयकरमर्शोघ्नञ्च । दधिमण्डस्तृष्णाऽरुचिहरो लघुतरश्चाग्निदीपनः' इति ता. ।
२ 'मन्थनादिपृथग्भूत°' इत्यादिपञ्चाशीतितमश्लोकमारभ्य 'शीतकालेऽग्निमान्द्ये च' इत्यादिसप्ताशीतितमश्लोकपर्यन्तं यावत्रयः श्लोकास्ता० पुस्तके न सन्ति ।

तत्[1] पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनं च; अम्लं वातघ्नं पित्तकरं च ॥ ८८ ॥

वातेऽम्लं सैन्धवोपेतं, स्वादु पित्ते सशर्करम् ॥
पिबेत्तक्रं कफे चापि व्योषैक्षारसमन्वितम्[2] ॥ ८९ ॥
ग्राहिणी वातला रूक्षा दुर्जरा[3] तक्रकूर्चिका ॥
तक्रा[4]ल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥ ९० ॥
गुरुः[5] किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः ॥
मधुरौ[6] बृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥ ९१ ॥

नवनीतं[7] पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासव्रणशोषार्शोऽर्दितापहं, चिरोत्थितं गुरु कफमेदोविवर्धनं[8] बलकरं बृंहणं शोषघ्नं विशेषेण बालानां प्रशस्यते ॥ ९२ ॥

क्षीरोत्थं[9] पुनर्नवनीतमुत्कृष्टस्नेहमाधुर्यमतिशीतं सौकुमार्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनं च ॥ ९३ ॥

संतानिका पुनर्वातघ्नी तर्पणी वृष्या बल्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्वी च ॥ ९४ ॥

विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः ॥
विकल्पानवशिष्टांस्तु क्षीरवीर्यात्समादिशेत् ॥ ९५ ॥

इति तक्रवर्गः ।

---

१ 'इदमष्टाशीतितम गद्य ता० पुस्तके नास्ति । २ 'सव्योषक्षारसयुतम्' इति ता. । ३ 'विज्ञेया' इति ता. । ४ अय नवतितमश्लोकोत्तरार्धस्ता० पुस्तके नास्ति । ५ 'तद्वत्किलाट मथित बृंहण क्षीरमोरटम्' इति ता. । ६ अयमधश्लोकस्ता० पुस्तके नास्ति । ७ 'नवनीतन्तु सुकुमारमम्लानुरस ग्राहि शीतलं मेध्य दीपन हृद्य पित्तानिलहर वृष्यमविदाहि क्षयकासव्रणशोफार्दितापहम्' इति ता. । ८ 'कफमेदोविलयन' इति पा० । ९ त्रिनवतिचतुर्नवतिसख्याके गद्ये ता० पुस्तके न वर्तेते । तथा पञ्चनवतिसङ्ख्याक पद्यमपि ता० पुस्तके न वर्तते ।

अथ घृतम्।

घृतं[1] तु मधुरं सौम्यं मृदु शीतवीर्यमनभिष्यन्दिस्नेहनमुदावर्तोन्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्यौजस्तेजोबलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नं च ॥ ९६ ॥

विपाके[2] मधुरं शीतं वातपित्तविषापहम् ॥
चक्षुष्यमग्र्यं बल्यं च गव्यं सर्पिर्गुणोत्तरम् ॥ ९७ ॥
आजं घृतं दीपनीयं चक्षुष्य बलवर्धनम् ॥
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ॥ ९८ ॥
मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम् ॥
वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥ ९९ ॥
औष्ट्रं कटु घृतं पाके शोफक्रिमिविषापहम् ॥
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ १०० ॥
पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपणम् ॥
कफेऽनिले योनिदोषे शोषे[3] कम्पे च तद्धितम् ॥ १०१ ॥
पाके लघूष्णवीर्यं च कषायं कफनाशनम् ॥
दीपनं बद्धमूत्रं च विद्यादैकशफं घृतम् ॥ १०२ ॥
चक्षुष्यमग्र्यं स्त्रीणां तु सर्पिः स्यादमृतोपमम् ॥
वृद्धिं करोति देहाग्न्योर्लघुपाक विषापहम् ॥ १०३ ॥

---

१ घृतन्तु शीतवीर्यमभिष्यन्दि त्रिदोषापकर्षणमग्निदीपन सौकुमार्यौजस्तेजोबलकरमायुष्य वृष्य मेध्यं वयःस्थापन चक्षुष्य पापोपशमन रक्षोघ्न चेति' इति ता०। २ सप्तनवतितमश्लोकमारभ्य चतुरुत्तरशततमश्लोकं यावदष्टौ श्लोकास्ता० पुस्तके न वर्तन्ते। ३ 'शोफे' इति पा०।

कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु ॥
हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन् ॥ १०४ ॥

क्षीर[1]घृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितं च ॥ १०५ ॥

सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षिशिरसां शूलघ्नो बस्तिनस्याक्षिपूरणेषूपदिश्यते ॥ १०६ ॥

[2]सर्पिः पुराणं सरं कटुवि[3]पाकं त्रिदोषापहं मूर्च्छामदोन्मादोदरज्वरगरशोषापस्मारयोनिश्रोत्राक्षिशिरःशूलघ्नं दीपनं बस्तिनस्यपूरणेषूपदिश्यते ॥ १०७ ॥

[4]भवति चात्र—
पुराणं तिमिरश्वासपीनसज्वरकासनुत् ॥
मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥ १०८ ॥
(एकादशशतं चैव वत्सरानुषितं घृतम् ॥
रक्षोघ्नं कुम्भसर्पिः स्यात् [5]परतस्तु महाघृतम् ॥ १०९ ॥
पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः ॥
बल्यं पवित्रं मेध्यं च विशेषात्तिमिरापहम् ॥ ११० ॥
सर्वभूतहरं चैव घृतमेतत् प्रशस्यते ॥ १११ ॥)

इति घृतवर्गः ।

---

१ पञ्चोत्तरशततम षडधिकशततमं चैते गद्ये ता० पुस्तके न वर्तेते । २ 'सर्पिः पुराण तिमिरप्रतिश्यायश्वास कासनुत् मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् । विकल्प एष दध्यादि· श्रेष्ठो गव्योऽभिवर्णित· ॥ विकल्पानवशिष्टांस्तु क्षीरवीर्यात्समादिशेत्' ॥ इति ता । ३ 'कटुपाकि' इति पा० । ४ 'भवति चात्र' इत्यारभ्य 'इति घृतवर्गः' इति समाप्तिवाक्यान्त यावत्पाठः स ता० पुस्तके नास्ति । ५ 'तत्पर तु' इति पा० ।

अथ[1] तैलानि।

[2]तैलं त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकासि वृष्यं त्वक्प्रसादनं मेधामार्दवमांसस्थैर्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं [3]पाचनमनिलबलासक्षयकरं क्रिमिघ्नमशितपित्त[4]जननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनं च, तथा छिन्नभिन्नविद्धोत्पिष्टच्युतमथितक्षतपिच्चितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारिताभिहतदुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहादिषु तिलतैलं प्रशस्यते॥ ११२॥

त[5]द्बस्तिषु च पानेषु नस्ये कर्णाक्षिपूरणे॥
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये॥ ११३॥

एर[6]ण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटु कषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्रविशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वातकफहरमधोभागदोषहरं च॥ ११४॥

निम्बा[7]तसीकुसुम्भमूलकजीमूतकवृक्षककृतवेधनार्ककम्पिल्लकह-

---

१ 'अथ तैलानि' इत्युद्देशवाक्य ता० पुस्तके नास्ति। २ तिलतैल मधुर मधुरविपाक तिक्तानुरसं बृहणं प्रीणनं व्यवायि सूक्ष्म विशद गुरु सर विकासि वृष्यं त्वक्प्रसादन शोधन मेधामार्दवमांसस्थैर्यवर्णबलकर चक्षुष्यं बद्धमूत्रं लेखन तीक्ष्णमशीत पित्तजननं योनिशिर शूलप्रशमन तथा छिन्नभिन्नक्षताग्निदग्धपिच्चितभग्नच्युतावमथितहतव्यालविदष्टपतनप्रभृतिषु च परिषेकाभ्यञ्जनयो प्रशस्तमिति' इति ता.। ३ 'पाचन' इति कस्मिंश्चिद्धस्तलिखितपुस्तके न पठ्यते। ४ 'अशीतं पित्तजननं' इति ता० पा०। 'अशित पित्तजनन' इति च० पा०। 'अशीतपित्तजननं' इति हा० पा०। ५ 'तद्बस्तिषु पाने च नस्ये कर्णादिपूरणे' इति ता.। ६ चतुर्दशोत्तरशततमं गद्यमिद ता० पुस्तके नास्ति। ७ 'निम्बातसीकुसुम्भसर्षपपीलुकरञ्जेङ्गुदीशिग्रुसुवर्चलाफलतैलानि तीक्ष्णकटुकान्युष्णवीर्याणि क्रुमिकफमेहापहरणानि चेति' इति ता० पा०।

स्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्याणि कटूनि कटुविपाकानि सराण्यनिलकफकृमिकुष्ठप्रमेहशिरोरोगापहराणि चेति ॥ ११५ ॥

वातघ्नं[1] मधुरं तेषु क्षौमं तैलं बलापहम् ॥
कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम् ॥ ११६ ॥
कृमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु ॥
कफमेदोनिलहरं लेखनं कटु दीपनम् ॥ ११७ ॥
कृमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु ॥
कुष्ठामयकृमिहरं दृष्टिशुक्रबलापहम् ॥ ११८ ॥
विपाके कटुकं तैलं कौसुम्भं सर्वदोषकृत् ॥
रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च ॥ ११९ ॥

किरा[2]ततिक्तकातिमुक्तकबिभीतकनालिकेरकोलाक्षोडजीवन्तीप्रियालकर्बुदारसूर्यवल्लीत्रपुसैर्वारुककर्कारुकूष्माण्डप्रभृतीनां तैलानि मधुराणि मधुरविपाकानि वातपित्तप्रशमनानि शीतवीर्याण्यभिष्यन्दीनि सृष्टमूत्राण्यग्निसादनानि चेति ॥ १२० ॥

म[3]धूककाश्मर्यपलाशतैलानि मधुरकषायाणि कफपित्तप्रशमनानि ॥ १२१ ॥

तुवर[4]कभल्लातकतैले उष्णे मधुरकषाये तिक्तानुरसे वातकफकुष्ठमेदोमेहकृमिप्रशमने उभयतोभागदोषहरे च ॥ १२२ ॥

---

१ षोडशोत्तरशततम श्लोकमारभ्यैकोनविंशतितम श्लोक यावच्चत्वारः श्लोकास्ता० पुस्तके न वर्तन्ते। २ 'अतिमुक्तप्रियालाक्षत्रपुसैर्वारुकर्कारुकूष्माण्डकतैलानिमधुरकषायाणि मधुरविपाकानि कफपित्तप्रशमनानि शीतवीर्याण्यभिष्यन्दीनि सृष्टमूत्राण्यग्निसादनानि चेति' इति ता० पा०। ३ इदमेकविंशत्युत्तरशततम गद्यसूत्र ता० पुस्तके नास्ति। ४ 'तुवरककर्कोटतैले मधुरकषाये तिक्तानुरसे कृमिकफकुष्ठमेदउदरहरे च ॥ एरण्डतैल मधुरमुष्णवातकफापह मेदोहरञ्च' इति ता० पा०।

सरलदेवदारुशिंशपागुरुगण्डीरसारस्नेहास्तिक्तकटुकषाया दुष्टव्रणशोधनाः कृमिकफकुष्ठानिलहराश्च ॥ १२३ ॥

तुम्बीकोशाम्रदन्तीद्रवन्तीश्यामासप्तलानीलिकाकम्पिल्लकशङ्खिनीस्नेहास्तिक्तकटुकषाया अधोभागदोषहराः कृमिकफकुष्ठानिलहरा दुष्टव्रणशोधनाश्च ॥ १२४ ॥

यवतिक्तातैलं सर्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं च ॥ १२५ ॥

एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिवर्धनं च ॥ १२६ ॥

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं मधुरकषायं रसवन्नातिपित्तकरं च ॥ १२७ ॥

फलोद्भवानि तैलानि यान्युक्तानीह कानिचित् ॥
गुणान् कर्म च विज्ञाय फैलानीव विनिर्दिशेत् ॥ १२८ ॥
यावन्तः स्थावराः स्नेहाः समासात्परिकीर्तिताः ॥
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥ १२९ ॥
सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं विशिष्यते ॥
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ १३० ॥

ग्राम्यानूपौदकानां च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्ना,

---

१ त्रयोविंशत्युत्तरशततमश्लोकस्थितौ 'गण्डीर' 'अनिल' इत्येतौ शब्दौ ता० पुस्तके न वर्तेते। २ चतुर्विंशत्युत्तरशततमं श्लोकमारभ्याष्टाविंशत्युत्तरशततम श्लोक यावत्पञ्च श्लोकास्ता० पुस्तके न सन्ति। ३ 'फलवत्तानि निर्दिशेत्' इति पा०। ४ त्रिंशदधिकशततमश्लोकोऽय ता० पुस्तके नास्ति। ५ 'ग्राम्यानूपौदकाना वसामज्जानौ गुरूष्णमधुरौ वातघ्नौ, जाङ्गलैकशफक्रव्यादानां लघुशीतकषाया रक्तपित्तघ्नाः, प्रसहानां श्लेष्मघ्नाः। तत्र घृततैलवसामज्जानो गुरुविपाका वातहराश्च' इति ता.।

जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः, प्रतुदविष्किराणां श्लेष्मघ्नाः । तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ॥ १३१ ॥

इति तैलवर्गः ।

अथ मधुवर्गः[1] ।

मधु[2] तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं स्वर्यं लघु सुकुमारं लेखनं हृद्यं वाजीकरणं सन्धानं शोधनं रोपणं (संग्राहि[3]) चक्षुष्यं प्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाकृमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनं च; तत्तु लघुत्वात् कफघ्नं, पैच्छिल्यान्माधुर्यात् कषायभावाच्च वातपित्तघ्नम् ॥ १३२ ॥

पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ॥
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः[4] ॥ १३३ ॥
विशेषात्पौत्तिकं तेषु रूक्षोष्णं सविषान्वयात् ॥
वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥ १३४ ॥
पैच्छिल्यात् स्वादुभूयस्त्वाद्भ्रामरं गुरुसंज्ञितम् ॥
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥ १३५ ॥
तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् ॥
श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥ १३६ ॥

---

१ 'अथ मधुवर्ग.' इत्युद्देशवाक्य ता० पुस्तके नास्ति । २ क्षौद्रन्तु मधुरं कषायानुरसं रूक्ष सुकुमार सन्धानीय लेखनञ्च (तथा) वर्ण्यं स्वर्यं विषघ्न कृमिच्छर्द्यतिसारमेहपित्तकफप्रशमन साग्राहिक प्रह्लादन तत्तु त्रिविध माक्षिकं पौत्तिक भ्रामर ( एषाम् ) पूर्वं पूर्वं लघुतरम् तत्पुराण प्रधानमनम्लञ्च' इति ता. । ३ 'संग्राहि' इति केषुचित्पुस्तकेषु न पठ्यते । ४ एते १३३-१४२ दश श्लोकास्ता० पुस्तके न सन्ति ।

स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित् ॥
श्वित्रमेहकृमिघ्नं च विद्याच्छात्रं गुणोत्तरम् ॥ १३७ ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम् ॥
कषायं कटु पाके च बल्यं तिक्तमवातकृत् ॥ १३८ ॥
औद्दालकं रुचिकरं स्वर्यं कुष्ठविषापहम् ॥
कषायमम्लमुष्ण च पित्तकृत् कटुपाकि च ॥ १३९ ॥
छर्दिमेहप्रशमनं मधु रूक्षं दलोद्भवम् ॥
बृंहणीयं मधु नवं नातिश्लेष्महरं समम् ॥ १४० ॥
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥ १४१
तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् ॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ १४२ ॥

तत्तु[1] नानाद्रव्यरसगुणवीर्यविपाकविरुद्धानां पुष्परसानां मक्षिकासंभवत्वाच्चानुष्णोपचारम्[2] ॥ १४३ ॥

उष्णैर्[3]विरुध्यते सर्वं विषान्वयतया मधु ॥
उष्णार्तमुष्णैरुष्णे वा तन्निहन्ति यथा विषम् ॥ १४४ ॥

तत्सौकुमार्याच्च तथैव शैत्यान्नानौषधीनां रससंभवाच्च ॥
उष्णैर्विरुध्येत विशेषतश्च तथाऽन्तरीक्षेण जलेन चापि ॥१४५॥

उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ॥
अपाकादनवस्थानाच्च विरुध्येत् पूर्ववत् ॥ १४६ ॥

---

१ ता० पुस्तके द्वात्रिंशदधिकशततमगद्यसूत्रानन्तरमिदं त्रिचत्वारिंशदधिकशततमं गद्यसूत्रं भिन्नपाठेन पठ्यते यथा नानाद्रव्येभ्यो विरुद्धरसवीर्यविषपुष्परसपानान्मक्षिकासम्भृतत्वाच्चोष्णोपचारे योगवाहि च' इति । २ सविषमक्षिकासंभवत्वाच्च' इति पा० । ३ ता० पुस्तके 'भवति चात्र' इत्युक्त्वा ततः परम् १४४ तमः श्लोकः पठितो लक्ष्यते ।

मध्वामात्परतस्त्वन्यदामं कष्टं न विद्यते ॥
विरुद्धोपक्रमत्वात्तत् सर्वं हन्ति यथा विषम् ॥ १४७ ॥

इति मधुवर्गः ।

अथेक्षुवर्गः[1] ।

इक्षवो[2] मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्तपित्तप्रशमनाः कृमिकफकराश्चेति । ते चानेकविधाः । तद्यथा—॥ १४८ ॥

पौण्ड्रको भीरुकश्चैव[3] वंशकः श्वेतपोरकः[4] ॥
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः[5] सूचिपत्रकः[6] ॥ १४९ ॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत् ॥
इत्येता जातयः स्थौल्याद्, गुणान् वक्ष्याम्यतः परम् ॥१५०॥
सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः ॥
अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा ॥ १५१ ॥
आभ्यां तुल्यगुणः किंचित्सक्षारो वंशको मतः ॥
वंशवच्छ्वेतपोरस्तु किञ्चिदुष्णः स वातहा ॥ १५२ ॥
कान्तारतापसाविक्षू वंशकानुगतौ मतौ ॥
एवंगुणस्तु काष्ठेक्षुः स तु वातप्रकोपणः ॥ १५३ ॥
सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः ॥
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥ १५४ ॥
कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ॥

---

१ 'अथेक्षुवर्गः' इत्युद्देशवाक्य ता० पुस्तके नास्ति । २ ता० पुस्तकस्थेक्षुगुणपाठे 'गुरु' तथा 'कृमि' इत्येतौ द्वौ शब्दौ न पठितौ लक्ष्येते । तथा च ता० पुस्तकेऽमुष्मादष्टचत्वारिंशदधिकशततमसंख्याकगद्यात्परमयं पाठविशेषः पठितो लक्ष्यते यथा–'स्नेहप्रसादमाधुर्यगुणोत्कर्षप्रकारतः ॥ कान्तारकाद्वरः पौण्ड्रः पौण्ड्रकाद् ध्वसको वरः ॥ शर्करासमवीर्यस्तु दन्तनिष्पीडितो रसः ॥ गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्तितः' ॥ इति ॥ ३ 'ऽभीरुकः' इति पा० । ४ 'शतपोरकः' इति पा० । ५ 'काण्डेक्षुः' इति पा० । ६ 'ता० पुस्तकेऽमी १४९–१५६ इत्येतत्सङ्ख्याका अष्टौ श्लोका नोपलभ्यन्ते ।

अतीव मधुरो मूले मध्ये मधुर एव तु ॥ १५५ ॥
अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः ॥ १५६ ॥
अविदाही कफकरो वातपित्तनिवारणः ॥
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः ॥ १५७ ॥
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्तितः ॥
पक्को गुरुः सरः स्निग्धः सतीक्ष्णः कफवातनुत् ॥ १५८ ॥

फाणितं गुरु मधुरमभिष्यन्दि बृंहणमवृष्यं त्रिदोषकृच्च ॥१५९॥

गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःकृमिकफकरो बल्यो वृष्यश्च ॥ १६० ॥

पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ॥
सपुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः ॥ १६१ ॥

मत्स्यण्डिकाखण्डशर्करा विमलजाता उत्तरोत्तरं शीताः स्निग्धाः गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रशमनास्तृष्णाप्रशमनाश्च ॥१६२॥

यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ॥
स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥ १६३ ॥
यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः ॥
तेन तेनैव निर्देश्यस्तेषां विस्रावणो गुणः ॥ १६४ ॥

---

१ सप्तपञ्चाशदधिकशततमः सम्पूर्णः श्लोकस्तथा अष्टपञ्चाशदधिकशततमश्लोकोत्तरार्धश्च ता० पुस्तके नोपलभ्येते। २ 'मूलाग्रजन्तुजग्धादिपीडनान्मलसकरात् ॥ किञ्चित्कालं विधृत्या च विकृतिं याति यान्त्रिकः ॥ विदाही गुरु विष्टम्भी तेनासौ' इति वृद्धवाग्भटः। ३ 'फाणितं मधुरमभिष्यन्दि बृंहणं शुक्रकर पित्तघ्नञ्च' इति ता.। ४ 'गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तविशोधनो वातपित्तघ्नः कफकरो वृष्यश्च' इति ता.। ५ एकषष्ट्युत्तरशततमः श्लोकस्ता० पुस्तके न दृष्टिगोचरो भवति। ६ 'स पुराणः' इति पा०। ७ 'मत्स्यण्डिकाखण्डशर्करा विमला उत्तरोत्तरञ्च शीतस्निग्धगुरुसरमधुरा रक्तपित्तप्रशमनाश्चेति' इति ता.। ८ ता० पुस्तके १६४ तथा १६५ इत्येतत्सङ्ख्याकावमू श्लोकौ न दृष्टिगोचरौ भवतः।

सारस्थिता सुविमला निःक्षारा च यथा यथा ॥
तथा गुणवती सर्वा विज्ञेया शर्करा बुधैः ॥ १६५ ॥

मधु[1]शर्करा पुनश्छर्द्यतीसारहरी रूक्षा छेदनी प्रसादनी कषायमधुरा मधुरविपाका च ॥ १६६ ॥

यवा[2]सशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति ॥ १६७ ॥

यावत्यः शर्कराः प्रोक्ताः स[3]र्वा दाहप्रणाशनाः ॥
रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृषापहाः ॥ १६८ ॥
रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् ॥
कफघ्नं मधुरं पाके कषायं बस्तिदूषणम् ॥ १६९ ॥

इतीक्षुवर्गः ।

अ[4]थ मद्यवर्गः ।

स[5]र्वं पित्तकरं मद्यमम्लं रोचनदीपनम् ॥
भेदनं कफवातघ्नं हृद्यं बस्तिविशोधनम् ॥ १७० ॥
पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ॥
विकासि सृष्टविण्मूत्रं शृणु तस्य विशेषणम् ॥ १७१ ॥
मार्द्वीकमविदाहित्वान्मधु[6]रान्वयतस्तथा ॥
रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥ १७२ ॥
म[7]धुरं तद्धि रूक्षं च कषायानुरसं लघु ॥

---

१ मधुशर्करा छर्द्यतीसारहरा रूक्षा छेदनी च । वृष्या क्षीणक्षतसन्धानकृत् सस्नेहा गुडशर्करा' इति ता. । २ 'कषायशीतमधुरा सतिक्ता यासशर्करा' इति ता. । ३ 'तृष्णाशोणितपित्तदाहशमनी सर्वशर्करा' इति ता. । तथा १६८ तथा १६९ इत्यमू श्लोकौ ता० पुस्तके न वर्तेते । ४ 'अथ मद्यवर्गः' इत्युद्देशवाक्यं ता० पुस्तके नास्ति । ५ 'सर्वं पित्तकर मद्यमम्ल दीपनरोचनम् ॥ विकाशि सृष्टविण्मूत्र शृणु तस्य विशेषणम्' ॥ इति ता. । ६ 'मधुरानुरसस्तथा' इति ता. । ७ त्रिसप्तत्युत्तरशततमः श्लोकस्ता० पुस्तके न वर्तते ।

लघुपाकि सरं शोषविषमज्वरनाशनम् ॥ १७३ ॥
[1]मार्द्वीकाल्पान्तरं किंचित् खार्जूरं वातकोपनम् ॥
तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु ॥ १७४ ॥
कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ॥
कासार्शोग्रहणीदोषमूत्राघातानिलापहा ॥ १७५ ॥
स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ॥
कासार्शो[2]ग्रहणीश्वासप्रतिश्यायविनाशनी ॥ १७६ ॥
श्वेता[3] मूत्रकफस्तन्यरक्तमांसकरी सुरा ॥
[4]छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दनी ॥ १७७ ॥
प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ॥
पित्तलाऽल्पकफा रूक्षा यवैर्वातप्रकोपणी ॥ १७८ ॥
विष्टम्भिनी सुरा गुर्वी श्लेष्मलं तु मधूलकम् ॥
रूक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता ॥ १७९ ॥
त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः ॥
[6]ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोफकृत् ॥ १८० ॥
हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत् ॥
बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः ॥ १८१ ॥
दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः ॥
कषायो मधुरः शीधुर्गौडः पाचनदीपनः ॥ १८२ ॥
शार्करो मधुरो रुच्यो दीपनो बस्तिशोधनः ॥
वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः ॥ १८३ ॥

---

१ 'तस्मादल्पान्तरं किंचित्' इति ता. । २ 'कासार्शोग्रहणीदोष°' इति ता. । ३ 'स्वेदमूत्रकफ°' इति ता । ४ 'वम्यरोचक°' इति ता. । ५ 'वातगुल्मार्शो°' इति ता. । ६ 'ग्राह्युष्णो जगलो रूक्षः शोफहा रक्तपाचनः' इति ता. ।

तद्वत् पक्करसः शीधुर्बलवर्णकरः सरः ॥
शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः ॥ १८४ ॥
कर्शनः शीतरसिकः श्वयथूदरनाशनः ॥
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः ॥ १८५ ॥
आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः ॥
कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः ॥ १८६ ॥
जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपनः ॥
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥ १८७ ॥
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ॥ १८८ ॥
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ॥
तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् ॥ १८९ ॥
कृमिमेदोनिलहरो मैरेयो मधुरो गुरुः ॥
बल्यः पित्तहरो वर्ण्यो हृद्यश्चेक्षुरसासवः ॥ १९० ॥
शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः ॥
रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः ॥ १९१ ॥
निर्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान् ॥
नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् ॥ १९२ ॥

---

१ 'परः' इति ता। २ त्रिसप्तत्यधिकशततमश्लोकादनन्तरं चतुरशीत्यधिकशततमश्लोकं यावत् ये ये श्लोकाः श्लोकार्धा वा ता० पुस्तके येनानुक्रमेण पठिताः सन्ति तेनैव क्रमेण त इह निर्दिश्यन्ते यथा १७४ तमस्य पूर्वार्धस्ततः १७६ तमस्योत्तरार्धस्ततः १७७ तमः सम्पूर्णः श्लोकस्ततः १७८ तमस्य श्लोकस्य पूर्वार्धस्ततः १८१ तमस्योत्तरार्धस्ततः १८२ तमस्योत्तरार्धस्ततः १८४ तमस्य पूर्वार्धश्च एवमनेनैव क्रमेणैते श्लोकाः श्लोकार्धा वा पठिताः सन्ति तदितरेऽत्रत्यास्तत्र नोपलभ्यन्ते। ३ 'माक्षिकः' इति ता.। ४ 'बल्यः' इति ता.। ५ 'तौवरो' इति ता। ६ 'कफवातहा' इति ता.। ७ 'मधुरो गुडमैरेयश्छेदी मध्वासवो लघुः' इति ता.। ८ 'बल्यः पित्तहरो वृष्यो' इति ता.। ९ 'मृद्वीकेक्षुरसासवः' इति पा०।

अनिष्टगन्धि विरसमहृद्यं च विदाहि च ॥
सुगन्धि दीपनं हृद्य रोचिष्णु कृमिनाशनम् ॥ १९३ ॥
स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ॥
अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ॥ १९४ ॥
बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥
दीपनः कफवातघ्नः सरः पित्ताविरोधनः ॥ १९५ ॥
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥
पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः ॥ १९६ ॥
चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् ॥
अरिष्टासवशीधूनां गुणान् कर्माणि चादिशेत् ॥ १९७ ॥
बुद्ध्वा[1] यथास्वं संस्कारमवेक्ष्य कुशलो भिषक् ॥
सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु ॥ १९८ ॥
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥
अल्पौषधं पर्युषितमत्यच्छं पिच्छिलं च यत् ॥ १९९ ॥
तद्वर्ज्यं सर्वथा मद्यं किंचिच्छेषं च यद्भवेत् ॥
तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु ॥ २०० ॥
कफप्रकोपि तन्मद्यं दुर्जरं च विशेषतः ॥
पित्तप्रकोपि बहलं तीक्ष्णमुष्णं विदाहि च ॥ २०१ ॥
अहृद्यं[2] पेलवं[3] पूति कृमिलं विरसं च यत् ॥

---

१ 'यथास्वौषधसंस्कार०' इति ता. । २ चतुरशीत्यधिकशततमश्लोकादनन्तरं द्व्यधिकद्विशततमश्लोकं यावत् ये ये श्लोकाः श्लोकार्धा वा ताडपत्रपुस्तके येनानुक्रमेण पठिताः सन्ति तेनैव क्रमेण त इह निर्दिश्यते यथा—१८४ तमस्य पूर्वार्धादनन्तरम् १८७ तमस्य पूर्वार्धं. ततः १८८ तमस्योत्तरार्धस्ततः १९० तमस्योत्तरार्धस्तत' १९२ तमस्योत्तरार्धस्तत. १९४ तमस्य पूर्वार्धस्ततः १९७ तमः सम्पूर्णः श्लोकस्ततः १९८ तमस्य पूर्वार्धश्च; एवमनेनैव क्रमेणैते श्लोका श्लोकार्धा ता० पुस्तके पठिताः सन्ति तदितरेऽत्रत्यास्तत्र नोपलभ्यन्ते । ३ 'फेनिल' इति पा० ।

तथा पर्युषितं चापि विद्यादनिलकोपनम् ॥ २०२ ॥
सर्वदोषैरुपेतं तु सर्वदोषप्रकोपणम् ॥
चिरस्थितं जातरसं दीपनं कफवातजित् ॥ २०३ ॥
रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥
तस्यानेकप्रकारस्य मद्यस्य रसवीर्यतः ॥ २०४ ॥
सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना ॥
समेत्य हृदयं प्राप्य धमनी[1]रूर्ध्वमागतम् ॥
वि[2]चाल्येन्द्रियचेतांसि वीर्यं मदयतेऽचिरात् ॥ २०५ ॥
चिरेण श्लैष्मिके पुंसि पानतो जायते मदः ॥
अचिराद्वातिके दृष्टः, पैत्तिके शीघ्रमेव च ॥ २०६ ॥
सात्त्विके शौचदाक्षिण्यह[3]र्षमण्डनलालसः ॥
गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥ २०७ ॥
राजसे दुःखशीलत्वमात्मत्यागं स[4]साहसम् ॥
कलहं [5]सानुबन्धं तु करोति पुरुषे मदः ॥ २०८ ॥
अशौ[6]चनिद्रामात्सर्यागम्यागमनलोलताः ॥
असत्यभाषणं चापि कुर्याद्धि तामसे मदः ॥ २०९ ॥
र[7]क्तपित्तकरं शुक्तं छेदनं भुक्तपाचनम् ॥
वैस्वर्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु ॥ २१० ॥
तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च ॥
त[8]द्वत्तदासुतं सर्वं रोचनं च विशेषतः ॥ २११ ॥

---

१ 'धमनीमूर्ध्वमागतम्' इति ता.। २ 'विक्षोभ्येन्द्रियचेतांसि' इति पा०। ३ 'हर्षमण्डनवान् स्थितः' इति ता.। ४ 'सुसाहसम्' इति ता.। ५ 'कलहम् सानवस्थान' इति ता.। ६ अशौचनिद्रामात्सर्यमगम्यागमनः सदा' इति ता.। ७ 'रक्तपित्तहर' इति ता.। ८ 'तद्वत्तदाश्रितं सर्वं रोचन तु विशेषतः' इति ता.।

गौडानि रसशुक्तानि मधुशुक्तानि यानि च ॥
यथापूर्वं गुरुतराण्यभिष्यन्दकराणि[1] च ॥ २१२ ॥
तुषाम्बु[2] दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत् ॥
ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा ॥ २१३ ॥
धान्याम्लं[3] धान्ययोनित्वाज्जीवनं दाहनाशनम् ॥
स्पर्शात् पानात्तु पवनकफतृष्णाहरं लघु ॥ २१४ ॥
तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात् ॥
मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहम् ॥ २१५ ॥
दीपनं जरणं भेदि हितमास्थापनेषु च ॥
समुद्रमाश्रितानां च जनानां सात्म्यमुच्यते ॥ २१६ ॥

इति मद्यवर्गः ।

अथ मूत्राणि ।

मूत्राणि गोमहिष्यजाविगजहयखरोष्ट्राणां तीक्ष्णान्युष्णानि कटूनि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातक्रिमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः ॥ २१७ ॥

---

१ ताडपत्रपुस्तके द्व्यधिकद्विशततमश्लोकानन्तरं दशोत्तरद्विशततमश्लोकं यावत् य' श्लोकानुक्रमो दृश्यते स इह प्रदर्श्यते यथा–१९८ तमस्य पूर्वार्धानन्तरम् २०४, २०५, २०६, २०७, २०८, २०९ ततः २१० तमस्य पूर्वार्धस्ततः २११ तमस्योत्तरार्धश्च; एव क्रमानुसारेणात्रत्याः श्लोकास्ताडपत्रपुस्तके पठिताः सन्तीतरे तु तत्रापठिता वर्तन्ते । २ 'तुषाम्बु दीपनं हृद्यमुक्तं सौवीरकं तथा' इति ता. । ३ "धान्याम्ल धान्ययोनित्वात् प्राणधारणम्, अम्लत्वाद्वातघ्नं, विदाहित्वात् पित्तकर कफघ्न च, बहिःशीतं, गुरुविपाक, हृद्यत्वात्तृष्णापनयनं, रुचिजननं, समुद्रसंश्रितानां जनानां परं सात्म्य' इति ताडपत्रपुस्तके पाठः ।

भवेतश्चात्र—[1]

तैलं सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु ॥
शोधनं कफवातघ्नं कृमिमेदोविषापहम् ॥ २१८ ॥
अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् ॥
पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम् ॥ २१९ ॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ॥
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातनुत् ॥ २२० ॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु ॥
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ २२१ ॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ॥
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ २२२ ॥
कासश्वासापहं शोफकामलापाण्डुरोगनुत् ॥
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ २२३ ॥
कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम् ॥
सक्षारं तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ २२४ ॥
दीपनं कटु तीक्ष्णोष्णं वातचेतोविकारनुत् ॥
आश्वं कफहरं मूत्रं कृमिदद्रुषु शस्यते ॥ २२५ ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ॥
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥ २२६ ॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ॥
दीपनं गार्दभं मूत्रं कृमिवातकफापहम् ॥ २२७ ॥

---

१ 'भवतश्चात्र' इति समानतन्त्रप्रत्ययवाक्य ता० पुस्तके नास्ति । २ 'मूत्रन्तु तीक्ष्ण कटुकं शृणु तस्य विशेषणम्' इति ता. । ३ अस्मिस्थले 'आनाहशोफगुल्मेषु' इत्याद्यभावे ताडपत्रपुस्तके 'शोफघ्नमाजमौरभ्रं कासश्वासविषापहम्' इत्ययं पाठभेद उपलभ्यते ।

शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम् ॥
अर्शोघ्नं कारभं मूत्रं मानुषं च विषापहम् ॥ २२८ ॥
द्रवद्रव्याणि सर्वाणि समासात् कीर्तितानि तु ॥
कालदेशविभागज्ञो नृपतेर्दातुमर्हति[1][2] ॥ २२९ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने द्रवद्रव्यविज्ञानीयो नाम पञ्चचत्वारिंशोऽध्याय ॥ ४५ ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः।

अथातोऽन्नपानविधिमध्यायं[3] व्याख्यास्यामः ॥ १ ॥
यथोवाच[4] भगवान् धन्वन्तरिः ॥ २ ॥

धन्वन्तरिमभिवाद्य सुश्रुत[5] उवाच—प्रागभिहितः 'प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च, स षट्सु रसेष्वायत्तः, रसाः पुनर्द्रव्याश्रयिणः,' द्रव्यरसगुणवीर्यविपाकनिमित्ते च क्षयवृद्धी दोषाणां साम्यं[6] च, ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाश-

---

१ 'नृपते' कर्तुमर्हति' इति ता.। २ दशोत्तरद्विशततमश्लोकानन्तरमेकोनत्रिशदधिकद्विशततमश्लोक यावत् य. श्लोकानुक्रमस्ताडपत्रपुस्तके दृश्यते स इह प्रदर्श्यते यथा—२११ तमश्लोकस्योत्तरार्धानन्तरम् २१३ तत. २१४,२१५, २१६ एतच्छ्लोकत्रय पाठभेदेन गद्यरूपेण च पठित दृश्यते ततः २१८ तमः श्लोकस्तत. २२१ तमः श्लोकस्ततः २२२ तमश्लोकस्य पाठभेदेनोत्तरार्धस्ततः २२५ तमश्लोकस्योत्तरार्धस्ततः २२८ तमश्लोकस्योत्तरार्धस्ततः २२९ सङ्ख्याकः प्रस्तुताध्यायान्तिमश्लोकश्च, एव क्रमेणात्रत्याः श्लोका. श्लोकार्धा वा ताडपत्रपुस्तके पठिताः सन्तीतरे तु तत्रापठिता वर्तन्ते। ३ 'अथातोऽन्नपानविधि व्याख्यास्याम.' इति ता.। ४ 'एतद्द्वितीयसङ्ख्याक गद्य ता० पुस्तके नास्ति। ५ 'सुश्रुत उवाच भगवन् प्रागभिहित प्राणिना मूलमाहारो बलवर्णौजसां च' इति ता.। ६ 'सात्म्यञ्च' इति ता.।

हेतुः, आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च, तथा ह्याहारवैषम्यादस्वास्थ्यं; तस्याशितपीतलीढखादितस्य [1]नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेकविधप्रभावस्य [2]पृथक् पृथग्द्रव्यरसगुणवीर्यविपाककर्माणीच्छामि ज्ञातुं, न ह्यनवबुद्धस्वभावा भिषजः [3]स्वस्थानुवृत्तिं रोगनिग्रहणं च कर्तुं समर्थाः; आहारायत्ताश्च सर्वप्राणिनो यस्मात्तस्मादन्नपानविधिमुपदिशतु मे भगवानित्युक्तः प्रोवाच भगवान् धन्वन्तरिः—अथ खलु वत्स सुश्रुत ! [4]यथाप्रश्नमुच्यमानमुपधारयस्व ॥ ३ ॥

तत्र, [5]लोहितशालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृत[6]पुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुक[7]रोध्रपुष्पकदीर्घशूककाञ्चनकमहिषमहाशूकहायनकदूषकमहादूषकप्रभृतयः शालयः ॥ ४ ॥

मधुरा वीर्यतः शीता [8]लघुपाका बलावहाः ॥
पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्चसः ॥ ५ ॥
तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः ॥
चक्षुष्यो वर्णबलकृत् स्वर्यो हृद्यस्तृषापहः ॥ ६ ॥
[9]व्राण्यो ज्वरहरश्चैव सर्वदोषविषापहः ॥
तस्मादल्पान्तरगुणाः क्रमशः [10]शालयोऽवराः ॥ ७ ॥

---

१ 'नानाद्रव्यात्मकस्यानेकविधविकल्पप्रभावस्य' इति ता.। २ 'पृथक् पृथग्द्रव्यरसगुणवीर्यविपाकप्रभावकर्माणीच्छामि ज्ञातु' इति पा० । अस्मिन्पाठे 'गुणः' 'प्रभावश्च' अमू द्वौ शब्दावधिकौ लक्ष्येते । ३ 'स्वस्थानुवृत्ति' इति पद ता० पुस्तके नास्ति । ४ 'यथाप्रश्नमुच्यमानमुपधारयस्व' इतीद गुरुसूत्रं ता० पुस्तके नास्ति । ५ 'लोहितकशालिककलम°' इति ता । ६ '°कूष्माण्डक°' इति ता.। ७ ''रोध्रशूकदीर्घशूककाञ्चनकहायनकदूषीमहाख्यप्रभृतयः शालयः' इति ता.। ८ 'विपाककटुका·स्मृताः' इति ता.। ९ अयं सप्तमश्लोकपूर्वार्धस्ता० पुस्तके नास्ति । १० 'शालयोऽपरे इति ता.।

षष्टिक[1]काङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहा[2]षष्टिकचूर्णककुरवककेदारप्रभृतयः षष्टिकाः ॥ ८ ॥

रसे पाके च मधुराः शम[3]ना वातपित्तयोः ॥
शालीनां च गुणैस्तुल्या बृंहणाः कफशुक्रलाः ॥ ९ ॥
षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः ॥
मृदुः स्निग्धस्त्रिदोषघ्नः स्थैर्यकृद्बलवर्धनः ॥ १० ॥
वि[4]पाके मधुरो ग्राही तुल्यो लोहितशालिभिः ॥
शे[5]षास्त्वल्पान्तरास्तस्मात् षष्टिकाः क्रमशो गुणैः ॥ ११ ॥

कृष्ण[6]व्रीहिशालामुखजतुमुखनन्दीमुखलावाक्षकत्वरितककुक्कुटाण्डकपारावतकपाटलप्रभृतयो व्रीहयः ॥ १२ ॥

कषायमधुराः पाकेऽमधुरा वीर्यतोऽहिमा. ॥
अल्पाभिष्यन्दिनस्तुल्या· षष्टिकैर्बद्धवर्चसः ॥ १३ ॥
कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः ॥
तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे ॥ १४ ॥
दग्धायामवनौ जाताः शालयो लघुपाकिनः ॥
कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥ १५ ॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः ॥
किंचित्सतिक्तमधुराः पवनानलवर्धनाः ॥ १६ ॥

---

१ 'षष्टिकाङ्गुमुकुन्दकपीतकप्रमोदककालकासनपुष्पकमहाश्वेतकमहाव्रीहिकुरवककेदारप्रभृतयो व्रीहयः' इति ता । २ "महापिण्डक" इति पा० । ३ 'रसे पाके च मधुराः पित्तानिलहराः स्मृताः॥ शालीनां गुणतश्चापि समाना बद्धवर्चस.' इति ता.। ४ 'रसतो' इति ता.। ५ 'शेषास्त्वल्पान्तरगुणाः' इति पा०। ६ 'कृष्णव्रीहिशालामुखलावाक्षकजतुमुखनन्दीमुखत्वरितककुक्कूटाण्डकपारावतपाटलप्रभृतयो व्रीहय.' इति ता.। ७ 'बलवर्धनाः' इति ता.।

केदारा मधुरा वृष्या बल्याः पित्तनिबर्हणाः ॥
ईषत्कषायाल्पमला[1] गुरवः कफशुक्रलाः ॥ १७ ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ॥
अदाहिनो दोषहरा[2] बल्या मूत्रविवर्धनाः ॥ १८ ॥
शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः ॥
तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफापहाः ॥ १९ ॥
विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः ॥

इति शालिवर्गः ॥

अथ[3] कुधान्यवर्गः ।

तद्वत् कुधान्यमुद्गादिमाषादीनां च वक्ष्यते ॥ २० ॥

कोरदूषक[4]श्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानन्दीमुखीकुरुविन्दगवेधुकसरबरुकतोद (य) पर्णीमुकुन्दकवेणुयव-प्रभृतयः कुधान्यविशेषाः ॥ २१ ॥

उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः ॥
श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः ॥ २२ ॥
कषायमधुरस्तेषां शीतः पित्तापहः स्मृतः ॥
कोद्रवश्च[5] सनीवारः श्यामाकश्च सशान्तनुः ॥ २३ ॥
कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः ॥
यथोत्तरं प्रधानाः स्यू[6] रूक्षाः कफहराः स्मृताः ॥ २४ ॥
मधूली मधुरा शीता स्निग्धा नन्दीमुखी तथा ॥
विशोषी तत्र भूयिष्ठं वरुकः समुकुन्दकः ॥ २५ ॥

---

१ ईषत्कषायाल्पबला' इति ता. । २ 'वातहरा' इति ता. । ३ 'अथ कुधान्यवर्ग.' इत्युद्देशवाक्यं ता० पुस्तके नास्ति । ४ 'कोरदूषश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानन्दिमुखकुरुविन्दकससकवरुकतोलपर्णीमुकुन्दक°' इति ता. । ५ 'सकोरदूष॰ श्यामाको नीवारश्चैव शान्तनुः' इति ता. । ६ 'स्युः स्निग्धाः कफहराः सरः' इति ता. ।

रूक्षा वेणुयवा ज्ञेया वीर्योष्णा कटुपाकिनः ॥
बद्धमूत्राः कफहराः कषाया वातकोपनाः ॥ २६ ॥

मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेणवाढकीप्रभृतयो वैदलाः ॥ २७ ॥

कषायमधुराः शीताः कटुपाका मरुत्कराः ॥
बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ २८ ॥
नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः ॥
प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥ २९ ॥
विपाके मधुराः प्रोक्ता मसूरा बद्धवर्चसः ॥
मकुष्ठकाः कृमिकराः कलायाः प्रचुरानिला ॥ ३० ॥
आढकी कफपित्तघ्नी नातिवातप्रकोपणी ॥
वातलाः शीतमधुराः सकषाया विरूक्षणाः ॥ ३१ ॥
कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥
त एव घृतसंयुक्तास्त्रिदोषशमनाः परम् ॥ ३२ ॥
हरेणवः सतीनाश्च विज्ञेया बद्धवर्चसः ॥
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥ ३३ ॥

माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः ॥
संतर्पणः स्तन्यकरो विशेषाद्बलप्रदः शुक्रकफावहश्च ॥ ३४ ॥
कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्ता ॥
स्वादुर्विपाके मधुरोऽलसान्द्रः संतर्पणः स्तन्यरुचिप्रदश्च ॥३५॥

---

१ 'मुद्गवनमुद्गमसूरमकुष्टककलायहरेण्वाढकीसतीना वैदलाः' इति ता.। २ 'कटुपाकानिलापहा.' इति ता.। ३ 'तेषां' इति ता.। ४ 'अयमेकत्रिंशत्तमः श्लोकस्तथा द्वात्रिंशत्तमश्लोकश्चापि ता० पुस्तके नोपलभ्येते। ५ अयमर्धश्लोक क्वचिद्धस्तलिखिते पुस्तके पठ्यते तथा क्वचिद्धस्तलिखिते नैव पठ्यतेऽपि च। ६ 'चाध्मानकारका.' इति ता.। ७ 'स्निग्धोऽथ वृष्यो' इति ता.।

माषैः समानं फलमात्मगुप्तमुक्तं च काकाण्डफलं तथैव ॥
आरण्यमाषा गुणतः प्रदिष्टा रूक्षाः कषाया अविदाहिनश्च ॥३६॥
उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः ॥
शुक्राश्मरीगुल्मनिषूदनश्च सांग्राहिकः पीनसकासहन्ता[1] ॥ ३७ ॥
आनाहमेदोगुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ॥
कफस्य[2] हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥३८॥
ईषत्कषायो मधुरः सतिक्तः सांग्राहिकः पित्तकरस्तथोष्णः ॥
तिलो विपाके मधुरो[3] बलिष्ठः स्निग्धो[4] व्रणे लेपन एव पथ्यः॥३९॥
दन्त्योऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽथ[5] केश्योऽनिलहा गुरुश्च ॥
तिलेषु सर्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथाऽन्ये॥४०॥
यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी[6] ॥
व्रणेषु पथ्यस्तिलवच्च नित्य प्रबद्धमूत्रो बहुवातवर्चाः ॥ ४१ ॥
स्थैर्याग्निमेधास्वरवर्णकृच्च सपिच्छिल· स्थूलविलेखनश्च ॥
मेदोमरुत्तृड्हरणोऽतिरूक्षः[7] प्रसादनः शोणितपित्तयोश्च ॥ ४२ ॥
एभिर्गुणैर्हीनतरैस्तु किंचिद्विद्याद्यवेभ्योऽतियवानशेषैः ॥
गोधूम उक्तो मधुरो गुरुश्च बल्यः स्थिरः शुक्ररुचिप्रदश्च[8] ॥ ४३ ॥
स्निग्धोऽतिशीतोऽनिलपित्तहन्ता सन्धानकृच्छ्लेष्मकरः सरश्च ॥
रूक्षः कषायो विषशोषशुक्रबलासदृष्टिक्षयकृद्विदाही ॥ ४४ ॥
कटुर्विपाके मधुरस्तु शिम्बः प्रभिन्नविण्मारुतपित्तलश्च[9] ॥
सितासिताः पीतकरक्तवर्णा भवन्ति येऽनेकविधास्तु शिम्बाः ४५

---

१ 'पीनसकासहारी' इति पा०। २ 'बलासहन्ता' इति ता.। ३ 'कटुको इति ता.। ४ 'स्निग्धो व्रणालेपनपथ्ययुक्त' इति ता.। ५ 'स्तन्योऽथ इति पा०। ६ 'कफपित्तहन्ता' इति ता.। ७ 'मेदोमरुत्तृड्शमनोऽतिरूक्ष' इति ता.। ८ 'शुक्रबलप्रदश्च' इति ता.। ९ 'प्रबन्धविण्मारुतपित्तलश्च' इति पा०।

यथादितस्ते गुणतः प्रधाना ज्ञेयाः कटूष्णा रसपाकयोश्च ॥
सहाढ्यं मूलकजाश्च शिम्बाः कुशिम्बिवल्लीप्रभवास्तु[1] शिम्बाः ४६
ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिबर्हणाश्च ॥
विदाहवन्तश्च भृशं विरूक्षा विष्टभ्य जीर्यन्त्यनिलप्रदाश्च ॥४७॥
रुचिप्रदाश्चैव सुदुर्जराश्च सर्वे स्मृता वैदलिकास्तु शिम्बाः ॥
कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः ॥४८॥
उष्णाऽतसी स्वादुरसाऽनिलघ्नी पित्तोल्बणा स्यात् कटुका विपाके॥
पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी[2]॥४९॥
तीक्ष्णोष्णरूक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि ॥
अनार्तवं व्याधिहतमपर्यागतमेव च ॥
अभूमिजं नवं चापि न धान्यं गुणवत् स्मृतम् ॥ ५० ॥
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम्[3] ॥ ५१ ॥
शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः ॥
[4]कालप्रमाणसंस्कारमात्राः संपरिकीर्तिताः ॥ ५२ ॥

इति कुधान्यवर्गः ।

अथ मांसवर्गः ।

अत ऊर्ध्वं मांसवर्गानुपदेक्ष्याम ; तद्यथा—जलेशया, आनूपा, ग्राम्याः, क्रव्यभुज, एकशफा, जाङ्गलाश्चेति षण्मांसवर्गा भवन्ति । एतेषां वर्गाणामुत्तरोत्तराः प्रधानतमाः । ते पुनर्द्विविधा[5] जाङ्गला आनूपाश्चेति । तत्र जाङ्गलवर्गोऽष्टविधः । तद्यथा—जङ्घाला, विष्किराः, प्रतुदा, गुहाशयाः, प्रसहाः, पर्णमृगा, बिलेशया, ग्राम्याश्चेति । तेषां जङ्घालविष्किरौ प्रधानतमौ ॥ ५३ ॥

---

१ '°प्रभवाश्च शिम्बा' इति ता । २ 'शोणितपित्तहेतु.' इति पा० । ३ 'वातकोपनम्' इति ता. । ४ 'कालप्रमाणसंस्कारमात्राचास्मिन्परीक्ष्यते' इति ता० पा० । ५ 'ते पुनर्द्विविधा आनूपा जाङ्गलाश्चेति इति ता. ।

तांवेणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्घाला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृंद्या बस्तिशोधनाश्च ॥ ५४ ॥

कषामधुरो हृद्यः पित्तासृक्कफरोगहा ॥
संग्राही रोचनो बल्यस्तेषामेणो ज्वरापहः ॥ ५५ ॥
मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः ॥
शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥ ५६ ॥
एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ॥
यो न कृष्णो न ताम्रश्च कुरङ्ग सोऽभिधीयते ॥ ५७ ॥
शीताऽसृक्पित्तशमनी विज्ञेया मृगमातृका ॥
सन्निपातक्षयश्वासकासहिक्कारुचिप्रणुत् ॥ ५८ ॥

लावतित्तिरिकपिञ्जलवर्तीरवर्तिकावर्तकनप्तृकावार्तीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकुतित्तिरिकुरुवाहकयवालक प्रभृतयस्त्र्याहला विष्किराः ॥ ५९ ॥

लघवः शीतमधुराः कषाया दोषनाशनाः ॥
संग्राही दीपनश्चैव कषायमधुरो लघुः ॥
लावः कटुविपाकश्च सन्निपाते तु पूजितः ॥ ६० ॥

---

१ 'तत्र जङ्घाला एणहरिणकुरङ्गर्ष्यशरभश्वदंष्ट्चारुष्कपृषतमृगमातृकाप्रभृतय॰ कषाया' इत्यादिस्ता॰ पुस्तके पाठः। तत्रैणहरिणर्क्ष॰' इति च.। २ 'हृद्या' इति गुणदर्शक पद ताडपत्रपुस्तके नोपलभ्यते। ३ 'सांग्राही' इति ता.। ४ दोषघ्नो लघुदीपनः' इति ता.। ५ 'हरिण॰ स्मृतः' इति ता.। ६ वृद्धावाग्भटस्त्वस्मिन्नेव प्रसङ्गे 'ताम्रोऽथ हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषाजित्' इत्यादिकमेणविषये विशेष पठति। ७ अथ सप्तपञ्चाशत्तमः श्लोकस्तथाष्टपञ्चाशत्तमः श्लोकश्च ता॰ पुस्तके न वर्तते। ८ 'लावतित्तिरकपिञ्जलवर्तीरकवर्तकवार्तीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटविष्किरा लघवः' इति ता॰ पा॰। ९ भानुमतीव्याख्यासहिताया सुश्रुतसहितायां 'क्रकर' शब्दो न वर्तते। १० 'संग्राही दीपनः शीतः' इति पा॰।

ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्धनः ॥
तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः ॥ ६१ ॥
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः ॥
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ॥ ६२ ॥
हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः ॥
वातपित्तहरा वृष्या मेधाग्निबलवर्धनाः ॥ ६३ ॥
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ॥
कषायः स्वादुलवणस्त्वच्यः केश्योऽरुचौ[1] हितः ॥ ६४ ॥
मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ॥
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः ॥ ६५ ॥
बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः ॥
वातरोगक्षयवमीविषमज्वरनाशनः ॥ ६६ ॥

कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्ग-गोक्ष्वेडक[2]डिण्डिमाणवकशतपत्रकमातृ[3]निन्दकभेदाशिशुकसारिका-वल्गुलीगिरिशा[4]लट्वाल[5]दूषकसुगृहाखञ्जरीटहारीतदात्यूहप्रभृतयः प्रतुदाः ॥ ६७ ॥

कषायमधुरा रूक्षाः फलाहारा मरुत्कराः ॥
पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः ॥ ६८ ॥
सर्वदोषकरस्तेषां भेदाशी मलदूषकः ॥
कषायस्वादुलवणो गुरुः काणकपोतकः ॥ ६९ ॥
रक्तपित्तप्रशमनः कषायविशदोऽपि च ॥
विपाके[6] मधुरश्चापि गुरुः पारावतः स्मृतः ॥ ७० ॥

---

१ 'केश्यो रुचिप्रद' इति पा०। २ "°गोक्षोरकडिडिमानक°" इति हाराणचन्द्रः। ३ अस्मिंस्थले "°मातृलिङ्गक°" इत्यभावे "°मातुलिङ्गक°" इति पाठान्तरम्। ४ "°गिरीशा-लट्टा-लदूषक-सुगृही-खञ्जरीट°" इति हा० पा०। ५ वृद्धवाग्भटः 'लट्टूषकम्' 'लड्डूष.' इत्यभिधानेन पठति। ६ 'रसतो मधुरश्चापि' इति ता० पा०।

कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्धनः ॥
रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥ ७१ ॥

सिंहव्याघ्रवृकतरक्षवृक्षद्वीपिमार्जारश्रृगालमृगेर्वारुकप्रभृतयो गुहाशयाः ॥ ७२ ॥

मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः ॥
उष्णवीर्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ ७३ ॥

काककङ्ककुररचाषभासशशघात्युलूकचिल्लि[1]श्येनगृध्रप्रभृतयः प्रसहाः ॥ ७४ ॥

एते सिंहादिभिः सर्वे समाना वायसादयः ॥
रसवीर्यविपाकेषु विशेषाच्छोषिणे हिताः ॥ ७५ ॥

मद्गुमूषिकवृक्षशायिकावकुशपूतिघासवानरप्रभृतयः पर्णमृगाः ॥

मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः ॥
सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः ॥ ७७ ॥

श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रियकाजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो बिलेशयाः ॥ ७८ ॥

वर्चोमूत्रं संहतं कुर्युरेते वीर्ये चोष्णाः पूर्ववत् स्वादुपाकाः ॥
वातं हन्युः श्लेष्मपित्ते च कुर्युः स्निग्धाः कासश्वासकार्श्यापहाश्च ७९

कषायमधुरस्तेषां शशः पित्तकफापहः ॥
नातिशीतलवीर्यत्वाद्वातसाधारणो मतः ॥ ८० ॥

गोधा विपाके मधुरा कषायकटुका स्मृता ॥
वातपित्तप्रशमनी बृंहणी बलवर्धनी ॥ ८१ ॥

शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ।
प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः ॥ ८२ ॥

दुर्नामानिलदोषघ्नाः कृमिदूषीविषापहाः ॥
चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्धनाः ॥ ८३ ॥

---

१ "°चिरल्लि°" इति पा० ।

दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः ॥
मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥ ८४ ॥

अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः ॥८५॥

ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः ॥
मधुरा रसपाकाभ्यां दीपना बलवर्धनाः ॥ ८६ ॥
नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ॥
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ ८७ ॥
बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ॥
मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ८८ ॥
श्वासकासप्रतिश्यायविषमज्वरनाशनम् ॥
श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥ ८९ ॥
औरभ्रवत्सलवणं मांसमेकशफोद्भवम् ॥
अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः ॥ ९० ॥
दूरे जनान्तनिलया दूरे पानीयगोचराः ॥
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः ॥ ९१ ॥
अतीवासन्ननिलयाः समीपोदकगोचराः ॥
ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥ ९२ ॥

आनूपवर्गस्तु पञ्चविधः। तद्यथा—कूलचराः, प्लवाः, कोषस्थाः, पादिनो, मत्स्याश्चेति ॥ ९३ ॥

तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकाल-पुच्छकोद्रन्यङ्कुरण्यगवयप्रभृतयः कूलचराः पशवः ॥ ९४ ॥

वातपित्तहरा वृष्या मधुरा रसपाकयोः ॥
शीतला बलिनः स्निग्धा मूत्रलाः कफवर्धनाः ॥ ९५ ॥
विरूक्षणो लेखनश्च वीर्योष्णः पित्तदूषणः ॥
स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः ॥ ९६ ॥

गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् ॥
विपाके मधुरं चापि व्यवायस्य तु वर्धनम् ॥ ९७ ॥
स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः ॥
निद्रापुंस्त्वबलस्तन्यवर्धनो मांसदार्ढ्यकृत् ॥ ९८ ॥
रुरोर्मांसं समधुरं कषायानुरसं स्मृतम् ॥
वातपित्तोपशमनं गुरु शुक्रविवर्धनम् ॥ ९९ ॥
तथा चमरमांसं तु स्निग्ध मधुरकासजित् ॥
विपाके मधुरं चापि वातपित्तप्रणाशनम् ॥ १०० ॥
सृमरस्य तु मांसं च कषायानुरसं स्मृतम् ॥
वातपित्तोपशमनं गुरु शुक्रविवर्धनम् ॥ १०१ ॥
स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु ॥
श्रमानिलहरं स्निग्धं वाराहं बलवर्धनम् ॥ १०२ ॥
कफघ्नं खड्गिपिशितं कषायमनिलापहम् ॥
पित्र्यं पवित्रमायुष्यं बद्धमूत्र विरूक्षणम् ॥ १०३ ॥
गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम् ॥
विपाके मधुरं चापि रक्तपित्तविनाशनम्[1] ॥ १०४ ॥

हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतवारलप्रभृतयः[2] प्लवाः संघातचारिणः ॥ १०५ ॥

रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः ॥
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥ १०६ ॥

१ 'वातपित्तविनाशनम्' इति पा०। २ '°मेघरवश्वेतवारलप्रभृतय.' इति च.। '°मेघरावश्वेतचरणप्रभृतय.' इति पा०।

गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ॥
बृंहणः शुक्रलस्तेषां हंसो वातविकारनुत् ॥ १०७ ॥

शङ्खशङ्खनकशुक्तिशम्बूकभल्लूकप्रभृतय. कोशस्थाः ॥ १०८ ॥

कूर्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ॥१०९

शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः ॥
शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्धनाः ॥ ११० ॥
कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ॥
शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥ १११ ॥

मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च ॥ ११२ ॥

तत्र नादेया —रोहितपाठीनपाटलाराजीववर्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयः ॥ ११३ ॥

नादेया मधुरा मत्स्या गुरवो मारुतापहा. ॥
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः ॥ ११४ ॥
कषायानुरसस्तेषां शष्पशैवालभोजनः ॥
रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥ ११५ ॥
पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ॥
दूषयेद्रक्तपित्तं तु कुष्ठरोगं करोत्यसौ ॥
मुरलो बृंहणो वृष्य. स्तन्यः श्लेष्मकरस्तथा ॥ ११६ ॥
सरस्तडागसंभूताः स्निग्धाः स्वादुरसाः स्मृताः ॥
महाह्रदेषु बलिनः, स्वल्पेऽम्भस्यबलाः स्मृताः ॥ ११७ ॥

तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरुलनन्दिवार (रु) लकमकरगर्गरचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः ॥ ११८ ॥

---

१ "°वागुजार°" इति "°वाकुच°" इति च पा० । २ 'श्लेष्मलस्तुष्यो' इति पा० । ३ "°भिरल°" इति पा० तथा "°निरालक इति द्वा० पा० ।

सामुद्रा गुरवः स्निग्धा मधुरा नातिपिच्छलाः ॥
उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्धनाः ॥ ११९ ॥
बलावहा विशेषेण मांसाशित्वात् समुद्रजाः ॥
समुद्रजेभ्यो नादेया बृंहणत्वाद्गुणोत्तराः ॥ १२० ॥
तेषा[1]मप्यनिलघ्नत्वाच्चौण्ड्यकौप्यौ गुणोत्तरौ ॥
स्निग्धत्वात् स्वादुपाकत्वात्त[2]योर्वाप्या गुणाधिकाः ॥ १२१ ॥
नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः ॥
सरस्तडागजानां तु विशेषेण शिरो लघु ॥ १२२ ॥
अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः ॥
किंचिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते ॥ १२३ ॥
अधस्ताद्गुरवो ज्ञेया मत्स्याः सागरसंभवाः ॥
उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम् ॥ १२४ ॥
इत्यानूपो महास्यन्दी मांसवर्ग उदीरितः[3] ॥ १२५ ॥

तत्र शुष्कपूतिव्याधिविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां च मांसान्यभक्ष्याणि, यस्मा[4]द्विगतव्यापन्नापहतपरिणताल्पासंपूर्णवीर्यत्वाद्दोषकराणि भवन्ति; एभ्योऽन्येषामुपादेयं मांसमिति ॥ १२६ ॥

अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्तितम् ॥
विषव्याधिहतं मृत्युं बालं छर्दिं च कोपयेत् ॥ १२७ ॥
कासश्वासहरं वृद्धं त्रिदोषं व्याधिदूषितम् ॥
क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् ॥ १२८ ॥

---

१ 'तेभ्यश्चाप्यनिलघ्नत्वात्' इति ह्रा० पा० । २ 'ताभ्यां' इति पा० । ३ 'इत्यानूपो महाभिष्यन्दी मासवर्गो व्याख्यातः' इति ह्रा० पा० । ४ 'कस्मात्' इति पा० ।

स्त्रियश्चतुष्पात्सु, पुमांसो विहङ्गेषु, महाशरीरेष्वल्पशरीराः, अल्पशरीरेषु महाशरीराः, प्रधानतमाः; एवमेकजातीयानां महाशरीरेभ्यः कृशशरीराः प्रधानतमाः ॥ १२९ ॥

स्थानादिकृतं[1] मांसस्य गुरुलाघवमुपदेक्ष्यामः। तद्यथा—रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरा गुरुतराः, तथा[2] सक्थिस्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्मकालेयकयकृदन्त्राणि ॥ १३० ॥

शिरः[3] स्कन्धं कटी पृष्ठं सक्थिनी चात्मपक्षयोः ॥
गुरु[4] पूर्वं विजानीयाद्धातवस्तु यथोत्तरम् ॥ १३१ ॥
सर्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः ॥
पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम् ॥ १३२ ॥
उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् ॥
पक्षोत्क्षेपात्समो दृष्टो मध्यभागस्तु पक्षिणाम् ॥ १३३ ॥
अतीव रूक्षं मांसं तु विहङ्गानां फलाशिनाम् ॥
बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥ १३४ ॥
मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम्[5] ॥
जलजानूपजा ग्राम्या क्रव्यादैकशफास्तथा ॥ १३५ ॥
प्रसहा बिलवासाश्च ये च जङ्गालसंज्ञिताः ॥
प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् ॥
अल्पाभिष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा ॥ १३६ ॥

---

१ 'तत्र स्थानादिकृत' इति पा०। २ 'तथाऽन्त्रयकृत्कालेयसक्थिकटिपृष्ठचरणशिरांसि' इति ता.। ३ 'उरःस्कन्धौ कटीपृष्ठ सक्थिनी चात्मपक्षयोः' इति पा०। ४ 'गुरवस्तु यथापूर्वं धातवस्तु यथोत्तरम्' इति च. पा०। ५ 'धन्वचारिणाम्' इति पा०।

प्रमाणाधिकास्तु स्वजातावल्पसारा गुरवश्च । सर्वप्राणिनां सर्वशरीरेभ्यः प्रधानतमा भवन्ति यकृत्प्रदेशवर्तिनस्तानाददीत; प्रधानालाभे मध्यमवयस्कं सद्यस्कमक्लिष्टमुपादेयं मांसमिति ॥ १३७ ॥

भवति चात्र—

[1]चरः शरीरावयवाः स्वभावो धातवः क्रिया ॥
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् [2]परीक्ष्यते ॥ १३८ ॥

इति मांसवर्गः ।

अथ फलवर्गः ।

अत ऊर्ध्वं फला[3]न्युपदेक्ष्यामः । तद्यथा—दाडिमामलकबदरकोलकर्कन्धुसौवीरसिञ्चितिकाफलकपित्थमातुलु[4]ङ्गाम्राम्रातककरमर्दप्रियालनारङ्गजम्बीरलकुचभव्यपारावतवेत्रफलप्राचीनामलकतिन्तिडीकनीपकोशाम्राम्लीकाप्रभृतीनि ॥ १३९ ॥

अम्लानि रसतः पाके गुरूण्युष्णानि वीर्यतः ॥
पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च ॥ १४० ॥
कषायानुरसं तेषां दाडिमं नातिपित्तलम् ॥
दीपनीयं रुचिकरं हृद्यं वर्चोविबन्धनम् ॥ १४१ ॥
द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ॥
त्रिदोषघ्नं तु मधुरमम्लं वातकफापहम् ॥ १४२ ॥
अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ॥
चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् ॥ १४३ ॥
हन्ति वातं तदम्लत्वात् पित्त माधुर्यशैत्यतः ॥
कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकं च तत् ॥ १४४ ॥

---

१ 'वयःशरीरावयवा॰' इति हाराणचन्द्रचक्रवर्ति॰ पाठः । २ 'परीक्षिता' इति पा॰ । ३ 'फलवर्गानुपदेक्ष्यामः' इति पा॰ । ४ "॰मातुलिङ्गाम्राम्रातक॰" इति पा॰ ।

कर्कन्धुकोलबदरमामं पित्तकफावहम् ॥
पक्कं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥ १४५ ॥
पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ॥
सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥ १४६ ॥
कषायं स्वादु संग्राहि शीतं सिञ्चितिकाफलम् ॥
आमं कपित्थमस्वर्यं कफघ्नं ग्राहि वातलम् ॥ १४७ ॥
कफानिलहरं पक्कं मधुराम्लरसं गुरु ॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥ १४८ ॥
लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ॥
त्वक् तिक्ता दुर्जरा तस्य वातक्रिमिकफापहा ॥ १४९ ॥
स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ॥
मेध्यं[1] शूलानिलच्छर्दिकफारोचकनाशनम् ॥ १५० ॥
दीपनं लघु संग्राहि गुल्मार्शोघ्नं तु केसरम् ॥
शूलाजीर्णविबन्धेषु मन्देऽग्नौ कफमारुते ॥ १५१ ॥
अरुचौ च विशेषेण रसस्तस्योपदिश्यते ॥
पित्तानिलकरं बालं पित्तलं बद्धकेसरम् ॥ १५२ ॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥
कषायानुरसं स्वादु वातघ्नं बृंहणं गुरु ॥ १५३ ॥
पित्ताविरोधि संपक्कमाम्रं शुक्रविवर्धनम् ॥
बृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्यति ॥ १५४ ॥
आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्धनम् ॥
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ॥ १५५ ॥

---

१ 'मध्य' इति च. पा० ।

अम्लं तृषापहं रुच्यं पित्तकृत् करमर्दकम् ॥
वातपित्तहरं वृष्यं प्रियालं गुरु शीतलम् ॥ १५६ ॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम् ॥
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥ १५७ ॥
पारावतं समधुरं रुच्यमत्यग्निवातनुत् ॥
गरदोषहरं नीपं प्राचीनामलकं तथा ॥ १५८ ॥
वातापहं तिन्तिडीकमामं पित्तबलासकृत् ॥
ग्राह्युष्णं दीपनं रुच्यं संपक्वं कफवातनुत् ॥ १५९ ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ॥
अम्लीकायाः फलं पक्वं[1] तद्वद्भेदि तु केवलम् ॥ १६० ॥
अम्लं समधुरं हृद्यं विशदं भक्तरोचनम् ॥
वातघ्नं दुर्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥ १६१ ॥
तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ॥
वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १६२ ॥

क्षीरवृक्षफलजाम्बवराजादनतोदनशीतफलतिन्दुकबकुलधन्वनाऽश्मन्तकाश्वकर्णफल्गुपरूषकगाङ्गेरुकीपुष्करवर्तिबिल्वबिम्बीप्रभृतीनि ॥ १६३ ॥

फलान्येतानि शीतानि कफपित्तहराणि च ॥
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥ १६४ ॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ॥
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥ १६५ ॥

---

१ 'शुष्क' इति पा० ।

अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ॥
स्निग्धं स्वादु कषायं च राजादनफलं गुरु ॥ १६६ ॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ॥
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्धनम् ॥ १६७ ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ॥
विपाके गुरु संपक्वं मधुरं कफपित्तजित् ॥ १६८ ॥
मधुरं च कषायं च स्निग्धं संग्राहि बाकुलम् ॥
स्थिरीकरं च दन्तानां विशदं फलमुच्यते ॥ १६९ ॥
सकषायं हिमं स्वादु धान्वनं कफवातजित् ॥
तद्वद्धाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥ १७० ॥
विष्टम्भि मधुरं स्निग्धं फल्गुज तर्पणं गुरु ॥
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ॥ १७१ ॥
वातघ्नं पित्तजननमामं विद्यात् परूषकम् ॥
तदेव पक्वं मधुरं वातपित्तनिबर्हणम् ॥ १७२ ॥
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥
पौष्करं स्वादु विष्टम्भि बल्यं कफकरं फलम्[1] ॥ १७३ ॥
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ॥
कटुतिक्तकषायोष्णं बाल बिल्वमुदाहृतम् ॥ १७४ ॥
विद्यात्तदेव संपक्वं मधुरानुरसं गुरु ॥
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥ १७५ ॥
[2]बिम्बीफलं साश्वकर्णं स्तन्यकृत् कफपित्तजित् ॥
तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहम् ॥ १७६ ॥
तालनालिकेरपनसमोचं[3]प्रभृतीनि ॥ १७७ ॥

---

१ 'गुरु' इति च. । २ अयम् १७६ तमो 'बिम्बीफल' इत्यादिश्लोकस्ता० पुस्तके न वर्तते । ३ 'मौचप्रभृतीनि' इति हा. पा० ।

स्वादुपाकरसान्याहुर्वातपित्तहराणि च ॥
बलप्रदानि स्निग्धानि बृंहणानि हिमानि च ॥ १७८ ॥
फलं स्वादुरसं तेषां तालजं गुरु पित्तजित् ॥
तद्बीजं स्वादुपाकं तु मूत्रलं [1]वातपित्तजित् ॥ १७९ ॥
नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ॥
बलमांसप्रदं हृद्यं बृंहणं बस्तिशोधनम् ॥ १८० ॥
पनसं सकषायं तु स्निग्धं स्वादुरसं गुरु ॥
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ॥
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ १८१ ॥
[2]द्राक्षाकाश्मर्यमधूकपुष्पखर्जूरप्रभृतीनि ॥ १८२ ॥
रक्तपित्तहराण्याहुर्गुरूणि मधुराणि च ॥
तेषां द्राक्षा सरा स्वर्या मधुरा स्निग्धशीतला ॥ १८३ ॥
रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥
हृद्यं मूत्रविबन्धघ्नं [3]पित्तासृग्वातनाशनम् ॥ १८४ ॥
केश्यं रसायनं मेध्यं काश्मर्यं फलमुच्यते ॥
क्षतक्षयापहं हृद्यं [4]शीतलं तर्पणं गुरु ॥ १८५ ॥
[5]रसे पाके च मधुरं खार्जूरं रक्तपित्तनुत् ॥
बृंहणीयमहृद्यं च मधूककुसुमं गुरु ॥
वातपित्तोपशमन फलं तस्योपदिश्यते ॥ १८६ ॥
[6]वार्तामाक्षोडाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि १८७

---

१ 'कफपित्तजित्' इति ता । २ 'द्राक्षाकाश्मर्यखर्जूरमधूकपुष्पप्रभृतीनि' इति हा. पा । ३ 'पित्तासृग्दाहनाशनम्' इति ता. । ४ 'बृंहण शीतल गुरु' इति ता. । ५ 'वृष्य स्निग्ध समधुर' इति ता । ६ 'वातामाक्षोडामिषुक-मुकुलप्रभृतीनि' इति ता. ।

पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च ॥
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥ १८८ ॥
कषायं कफपित्तघ्नं किंचित्तिक्तं रुचिप्रदम् ॥
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥ १८९ ॥
वसिरं शीतपाक्यं[1] च सारुष्करनिबन्धनम् ॥
विष्टम्भि[2] दुर्जरं रूक्षं शीतलं वातकोपनम् ॥ १९० ॥
विपाके मधुरं चापि रक्तपित्तप्रसादनम् ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १९१ ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ॥
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम्[3] ॥ १९२ ॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ॥
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ १९३ ॥
करीराक्षिकपीलूनि तृणशून्यफलानि च ॥
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥ १९४ ॥
तिक्त पित्तकरं तेषां सरं कटुविपाकि च ॥
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित्[4] ॥ १९५ ॥
आरुष्करं[5] तौवरकं कषायं कटुपाकि च ॥
उष्णं कृमिज्वरानाहमेहोदावर्तनाशनम् ॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ॥ १९६ ॥
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥
अङ्कोलस्य फलं विस्रं गुरु श्लेमहरं हिमम् ॥ १९७ ॥

---

१ 'शीतपाकन्तु' इति ता.। २ 'विष्टम्भि शीत रूक्षञ्च वातपित्तप्रकोपणम्' इति ता.। ३ 'वातश्लेष्मघ्नमिङ्गुदम्' इति ता.। ४ 'कफपित्तजित्' इति ता.। ५ 'आरुष्कर तौवरकं कषाय लघुपाकि च ॥ उष्णं कृमिहर मेहशोफदुर्नामनाशनम्' इति ता.।

रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ॥
तिक्तमीषद्विषहितं विडङ्गं कृमिनाशनम् ॥ १९८ ॥
व्रण्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत् ॥
कषायं दीपनं चाम्लं चक्षुष्यं[1] चाभयाफलम् ॥ १९९ ॥
भेदनं लघु[2] रूक्षोष्णं वैस्वर्यक्रिमिनाशनम् ॥
चक्षुष्यं स्वादु[3]पाक्याक्ष कषायं कफपित्तजित् ॥ २०० ॥
कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम् ॥
कषायमीषन्मधुरं किंचित् पूगफलं सरम् ॥ २०१ ॥
जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ॥
कक्को(क्को)लकं लवङ्गं च तिक्तं कटु कफापहम् ॥ २०२ ॥
लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम् ॥
सतिक्तः सुरभिः शीतः कर्पूरो लघु लेखनः ॥ २०३ ॥
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः ॥
लताकस्तूरिका तद्वच्छीता बस्तिविशोधनी ॥ २०४ ॥
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥
बैभीतको[4] मदकरः कफमारुतनाशनः ॥ २०५ ॥
कषाय[5]मधुरो मज्जा कोलानां पित्तनाशनः ॥
तृष्णा[6]च्छर्द्यनिलघ्नश्च तद्वदामलकस्य च ॥ २०६ ॥
बीजपूरकशम्याकमज्जा कोशाम्रसंभवः ॥
स्वादुपाकोऽग्निबलदः स्निग्धः पित्तानिलापहः ॥ २०७ ॥

---

१ 'चक्षुष्यञ्च हरीतकम्' इति ता. । २ 'कटु' इति ता. । ३ 'लघुपाक्याक्षं' इति ता. । ४ 'बैभीतकी मदकरा कफमारुतनाशनी' ॥ इति ता. । ५ 'कषायमधुरा मज्जा कोलानां पित्तनाशनी' ॥ इति ता. । ६ 'तृष्णाच्छर्दनिलघ्ना च इति ता. ।

यस्य यस्य फलस्येह वीर्यं भवति यादृशम् ॥
तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥ २०८ ॥

फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ॥
बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ॥
ग्राह्युष्णं दीपनं तद्धि कषायकटुतिक्तकम् ॥ २०९ ॥
व्याधितं कृमिजुष्टं च पाकातीतमकालजम् ॥
वर्जनीयं फलं सर्वमपर्यागतमेव च ॥ २१० ॥

इति फलवर्गः[1] ।

अथ शाकवर्गः[2] ।

शाकान्यत[3] ऊर्ध्वं वक्ष्यामः ।—
तत्र पुष्पफलालाबुका[4]लिन्दकप्रभृतीनि ॥ २११ ॥
पित्तघ्नान्यनिलं कुर्युस्तथा मन्दकफानि च ॥
सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च ॥ २१२ ॥
पित्तघ्नं तेषु कूष्माण्डं बालं मध्यं कफावहम् ॥
शुक्लं[5] लघूष्णं सक्षारं दीपनं बस्तिशोधनम् ॥ २१३ ॥
सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ॥
दृष्टिशु[6]क्रक्षयकरं कालिन्दं कफवातकृत् ॥ २१४ ॥
अलाबुर्भिन्नविट्का तु रूक्षा गुर्व्यतिशीतला ॥
तिक्तालाबुरहृद्या तु वामिनी वातपित्तजित् ॥ २१५ ॥

---

१ 'इति फलवर्ग' इति फलवर्गसमाप्तिवाक्यं ता. पुस्तके नास्ति । २ ता० पुस्तके फलवर्गानन्तरं 'कन्दवर्ग.' पठितं उपलभ्यते । ३ 'अथशाकवर्गमुपदेक्ष्यामः' इति ता. पा० । ४ '°कलिङ्गकप्रभृतीनि' इति ता. । ५ 'पक्वं' इति ता. । ६ ताडपत्रपुस्तके २१४ तमस्य श्लोकस्य पूर्वार्धस्तथा २१५ तमः सम्पूर्णः श्लोकश्च न वर्तते ।

त्रपुसैर्वारुकर्कारुकशीर्णवृन्तप्रभृतीनि ॥ २१६ ॥
स्वादु[1]तिक्तरसान्याहुः कफवातकराणि च ॥
सृष्टमूत्रपुरीषाणि रक्तपित्तहराणि च ॥ २१७ ॥
बालं सनीलं त्रपुसं तेषां पित्तहरं स्मृतम् ॥
तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ॥ २१८ ॥
ए[2]र्वारुकं सकर्कारु संपक्कं कफवातकृत् ॥
सक्षारं मधुरं रुच्यं दीपन नातिपित्तलम् ॥ २१९ ॥
स[3]क्षारं मधुरं चैव शीर्णवृन्तं कफापहम् ॥
भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥ २२० ॥

पि[4]प्पलीमरिचश्रृङ्गवेरार्द्रकहिङ्गुजीरककुस्तुम्बुरुजम्बीरसुमुखसुरसार्जकभूस्तृणसुगन्धककासमर्दककालमालकुठेरकक्षवकखरपुष्पशिग्रुमधुशिग्रुफणिज्झकसर्षपराजिकाकुलाहलावगुत्थगण्डीरतिलपर्णिकावर्षाभूचित्रकमूलकलशुनकलायपलाण्डुप्रभृतीनि ॥ २२१ ॥

कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च ॥
कृतान्नेपूपयुज्यन्ते संस्कारार्थमनेकधा ॥ २२२ ॥
तेषां गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा ॥
शु[5]ष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी ॥ २२३ ॥
स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ॥
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥ २२४ ॥

---

१ अयमेव श्लोकोऽन्यत्र पाठान्तरेण पठ्यते यथा—'गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति च ॥ सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च' इति । २ 'ईर्वारुक' इति पा० । ३ अयम् २२० तमः श्लोकस्ता० पुस्तके नास्ति । ४ 'पिप्पलीमरिचश्रृङ्गवेरहिङ्गुजीरककुस्तुम्बुरुजम्बीरसुमुखसुरसार्जकभूस्तृणसुगन्धक । कालमालकुठेरकक्षवककासमर्दकमधुशिग्रुफणिज्झकसर्षपवेत्रकुलत्थगण्डीरतिलपर्णिकावर्षाभूचित्रकमूलकलशुनपलाण्डुप्रभृतीनि' इति ता. पा. । ५ 'शुष्का कफानिलहरी वृष्या पित्तविरोधिनी' इति ता. ।

नात्युष्णं[1] नातिशीतं च वीर्यतो मरिचं सितम् ॥
गुणवन्मरिचेभ्यश्च चक्षुष्यं च विशेषतः ॥ २२५ ॥
नागरं कफवातघ्नं विपाके मधुरं कटु ॥
वृष्योणं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥ २२६ ॥
कफानिलहरं स्वर्यं विबन्धानाहशूलनुत् ॥
कटूष्णं[2] रोचनं हृद्यं वृष्यं चैवार्द्रकं स्मृतम् ॥ २२७ ॥
लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित् ॥
कटु[3] स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥ २२८ ॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्धनम् ॥
कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥ २२९ ॥
कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ॥
भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥ २३० ॥
आर्द्रा कुस्तुम्बरी कुर्यात् स्वादुसौगन्ध्यहृद्यताम्[4] ॥
सा शुष्का मधुरा पाके स्निग्धा[5] तृड्दाहनाशनी ॥ २३१ ॥
दोषघ्नी[6] कटुका किंचित् तिक्ता स्रोतोविशोधनी ॥
जम्बीरः पाचनस्तीक्ष्णः कृमिवातकफापहः[7] ॥ २३२ ॥
सुरभिर्दीपनो रुच्यो[8] मुखवैशद्यकारकः ॥
कफानिलविषश्वासकासदौर्गन्ध्यनाशनः ॥ २३३ ॥
पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः ॥
तद्वत्तु[9] सुमुखो ज्ञेयो विशेषाद्गरनाशनः ॥ २३४ ॥

---

१ 'नातिरूक्षञ्च' इति ता. । २ 'कटूष्ण रोचन वृष्य हृद्य चैवार्द्रकं स्मृतम्' इति ता. । ३ स्निग्ध तीक्ष्ण कटुरस शूलाजीर्णविबन्धनुत्' इति ता. । ४ 'सौगन्ध्यस्वादुहृद्यताम्' इति ता. । ५ 'स्निग्धा दाहतृषापहा' इति ता. । ६ 'दोषघ्ना' इति ता. । ७ 'कृमिवातविषापह.' इति पा० । ८ 'हृद्यो' इति ता. । ९ अयम् २३४ तमस्य श्लोकस्योत्तरार्धस्ता० पुस्तके नास्ति।

[1]कफघ्ना लघवो रूक्षास्तीक्ष्णोष्णाः पित्तवर्धनाः ॥
कटुपाकरसाश्चैव सुरसार्जकभूस्तृणाः ॥२३५ ॥
मधुरः कफवातघ्नः पाच[2]नः कण्ठशोधनः ॥
विशेष[3]तः पित्तहरः सतिक्तः कासमर्दकः ॥ २३६ ॥
कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽथ पिच्छि[4]लः ॥
मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ॥ २३७ ॥
विदाहि बद्धविण्मूत्रं रूक्ष तीक्ष्णोष्णमेव च ॥
[5]त्रिदोषं सार्षपं शाकं गाण्डीरं वेगनाम च ॥ २३८ ॥
चित्रकस्तिलपर्णी च कफशोफहरे लघू ॥
[6]वर्षाभूः कफवातघ्नी हिता शोफोदरार्शसाम् ॥ २३९ ॥
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ॥
सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ॥ २४० ॥
महत्तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ॥
तदेव स्नेहसिद्धं तु पित्त[7]नुत् कफवातजित् ॥ २४१ ॥
त्रिदो[8]षशमनं शुष्कं विषदोषहरं लघु ॥
विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात् ॥ २४२ ॥
पुष्पं च पत्रं च फलं तथैव यथोत्तरं ते गु[9]रवः प्रदिष्टाः ॥
तेषां तु पुष्पं [10]कफपित्तहन्तृ फलं निहन्यात् कफमारुतौ तु[11] ॥२४३॥
स्निग्धोष्णः कटुपिच्छिलश्च गुरुः सरः [12]स्वादुरसश्च बल्यः ॥
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः ॥ २४४ ॥

---

१ अस्य २३५ तमस्य श्लोकस्य ताडपत्रपुस्तकस्थ पाठान्तरम् 'रूक्षाः कफघ्ना लघवः सुरसार्जकभूस्तृणाः' इत्थं पाठसक्षेपेणोपदिष्ट लक्ष्यते । २ 'धावनः' इति ता. । ३ 'विशेषतो रुचिकर.' इति ता. । ४ 'पित्तलः' इति पा० । ५ 'कफघ्नं सार्षप शाक मासूर शाकमेव च' इति ता० पा० । ६ 'वर्षाभ्वौ कफवातघ्न्यौ हिते' इति ता. । ७ 'श्लेष्मकृद्वातपित्ताजित्' इति ता. । ८ 'शुष्क तु शोफशमनं विष°' इति ता. । ९ 'लघवः' इति ता. । १० 'कफवातहन्तृ' इति ता. । ११ 'च' इति ता. । १२ 'स्वादुरसोऽथ' इति ता. ।

हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान्[1] ॥
दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति ॥ २४५ ॥
नात्युष्णवीर्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च ॥
बलावहः पित्तकरोऽथ किंचित् पलाण्डुरग्निं च विवर्धयेत्तु ॥ २४६ ॥
स्निग्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च ॥
स्वादुर्गुरुः शोणितपित्तशस्त सपिच्छिलः क्षीरपलाण्डुरुक्तः ॥२४७॥

[2]कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु ॥
कषायानुरसं चैव विपाके[3] मधुर च तत् ॥ २४८ ॥

[4]चुञ्चूयूथिकातरुणीजीवन्तीबिम्बीतिकानदी(न्दी) भल्लातकच्छगलान्त्रीवृक्षादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणकर्बुदारकोविदारप्रभृतीनि ॥ २४९ ॥

कषाय[5]स्वादुतिक्तानि रक्तपित्तहराणि च ॥
कफघ्नान्यनिलं कुर्युः संग्राहीणि लघूनि च ॥२५० ॥
लघुः पाके च जन्तुघ्नः पिच्छिलो व्रणिनां हितः ॥
कषायमधुरो ग्राही चुञ्चूस्तेषां त्रिदोषहा ॥ ॥ २५१ ॥
चक्षुष्या सर्वदोषघ्नी जीवन्ती समुदाहृता ॥
वृक्षादनी वातहरा, फञ्जी त्वल्पबला मता ॥ २५२ ॥
क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः ॥
शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम् ॥ २५३ ॥

पुनर्नवावरुणतर्कार्युरुबूकवत्सादनीबिल्वशाकप्रभृतीनि ॥ २५४ ॥

---

१ "०शोषान्' इति ता । २ अयम् २४८ तम' श्लोक' 'कलायशाक पित्तघ्न' इत्यादिस्ता० पुस्तके नोपलभ्यते । ३ 'शीतलं इति पा० । ४ 'चुञ्चूयूथिकावरुणजीवन्तीनन्दीभल्लातकच्छगलान्त्रीवृक्षादनीफञ्जीतण्डुलीयकपालङ्क्यवास्तूयप्रभृतीनि' इति ता । ५ अत्रत्या २५० तम श्लोकमारभ्य २५३ तमपर्यन्ताश्चत्वारः श्लोकास्ता० पुस्तके न वर्तन्ते । तथैव २५४ तमसङ्ख्याकं २५६ तमसङ्ख्याकञ्च ते गद्ये ता० पुस्तके वर्तेते ।

उष्णानि स्वादुतिक्तानि वातप्रशमनानि च ॥
तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम् ॥ २५५ ॥
तण्डुलीकोपोदकाऽश्वबलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि ॥२५६॥
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ॥
मन्दवातकफान्याहू रक्तपित्तहराणि च ॥ २५७ ॥
मधुरो रसपाकाभ्यां रक्तपित्तमदापहः ॥
तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥ २५८ ॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा ॥
उपोदका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ २५९ ॥
कटुर्विपाके कृमिहा मेधाग्निबलवर्धन ॥
सक्षारः सर्वदोषघ्नो वास्तूको रोचनः सरः ॥ २६० ॥
चिल्ली वास्तूकवज्ज्ञेया पालङ्क्या तण्डुलीयवत् ॥
वातकृद्बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ॥
शाकमाश्वबलं रूक्षं बद्धविण्मूत्रमारुतम् ॥ २६१ ॥

मण्डूकपर्णीसप्तलासुनिषण्णकसुवर्चलापिप्पलीगुडूचीगोजिह्वाकाकमाचीप्रपुन्नाडावल्गुजसतीनबृहतीकण्टकारिकाफलपटोलवार्ताककारवेल्लककटुकिकाकेबु(म्बु)कोरुबूकपर्पटककिराततिक्तकर्कोटकारिष्टकोशातकीवेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि ॥ २६२ ॥

रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च ॥
कुष्ठमेहज्वरश्वासकासारुचिहराणि च ॥२६३ ॥
कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ॥
लघ्वी मण्डूकपर्णी तु तद्वद्गोजिह्विका मता ॥ २६४ ॥

---

१ ताडपत्रपुस्तके २५७ तमस्य श्लोकस्य पूर्वार्धो नोपलभ्यते उत्तरार्धस्तूपलभ्यते । २ 'उपोतका' इति ता. । ३ 'लघुर्विपाके' इति ता. । ४ अत्रत्योऽयम् २६१ तमस्योत्तरार्धस्ता० पुस्तके नास्ति । ५ 'कफपित्तहराण्याहुः' इति ता. । ६ 'तेषां गोजिह्विका तथा' इति ता. ।

अविदाही त्रिदोषघ्नः संग्राही सुनिषण्णकः ॥
अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥ २६५ ॥
ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम् ॥
नात्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु[1] तद्विधम् ॥२६६॥
कण्डूकुष्ठकृमिघ्नानि कफवातहराणि च ॥
फलानि बृहतीनां तु कटुतिक्तलघूनि च ॥२६७ ॥
कफपित्तहरं व्रण्यमुष्णं[2] तिक्तमवातलम् ॥
पटोलं कटुकं पाके वृष्यं रोचनदीपनम् ॥ २६८ ॥
कफवातहरं तिक्तं रोचनं कटुकं लघु ॥
वार्ताकं[3] दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ॥
तद्वत्[4] कर्कोटकं विद्यात् कारवेल्लकमेव च ॥२६९ ॥
आटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः ॥
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ॥ २७० ॥
कफापहं शाकमुक्तं वरुणप्रपुनाड(ट)योः ॥
रूक्षं लघु च शीतं च वातपित्तप्रकोपणम् ॥२७१ ॥
दीपनं कालशाकं तु गरदोषहरं कटु[5] ॥
कौसुम्भं मधुरं रूक्षमुष्णं श्लेष्महरं लघु ॥ २७२ ॥
वातलं नालिकाशाकं पित्तघ्नं मधुरं च तत् ॥
ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता ॥
उष्णा कषायमधुरा चाङ्गेरी [6]चाग्निदीपनी ॥ २७३ ॥

लोणिका[7]जातुकत्रिपर्णिकापत्तूरजीवकसुवर्चलाडुडुरककुतुम्बककुठिञरकुन्तलिकाकुरण्टिकाप्रभृतयः ॥ २७४ ॥

---

१ 'काकमाच्याश्च' इति ता.। २ 'वर्ण्यमुष्ण' इति ता.। ३ 'वार्ताकुर्दीपन' इति ता.। ४ अत्रत्योऽयम् २६९ तमश्लोकस्योत्तरार्धस्ता०पुस्तके नास्ति। ५ 'लघु' इति ता.। ६ 'चापि दीपनी' इति ता.। ७ 'त्रिपर्णीलोणिकापीलुपर्णीपत्तूरजीवकाः॥ सुवर्चलासञ्जलककुटुम्बककुठिञराः' इति ता० पा०।

स्वादुपाकरसाः शीताः कफघ्ना नातिपित्तलाः ॥
लवणानुरसा रूक्षाः सक्षारा वातलाः सराः ॥ २७५ ॥
स्वादुतिक्ता कुन्तलिका कषाया सकुरण्टिका ॥
संग्राहि शीतलं चापि लघु दोषापहं[1] तथा ॥
राजक्षवकशाकं तु शटीशाकं च तद्विधम् ॥ २७६ ॥
स्वादुपाकरसं शाकं दुर्जरं हरिमन्थजम् ॥
भेदनं मधुरं रूक्षं कालायमतिवातलम् ॥ २७७ ॥
स्रंसनं[2] कटुकं पाके लघु वातकफापहम् ॥
शोफघ्नमुष्णवीर्यं च पत्रं पूतिकरञ्जजम् ॥ २७८ ॥
ताम्बूलपत्रं[3] तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ॥
सुगन्धि विशदं तिक्तं स्वर्यं वातकफापहम् ॥ २७९ ॥
स्रंसनं कटुकं पाके कषायं वह्निदीपनम् ॥
वक्त्रकण्डूमलक्लेददौर्गन्ध्यादिविशोधनम्[4] ॥ २८० ॥

अथ[5] पुष्पवर्गः ।

कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च; वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि[6] क्षयकासापहानि च ॥ २८१ ॥

आगस्त्यं[7] नातिशीतोष्णं नक्तान्धानां प्रशस्यते ॥ २८२ ॥

---

१ 'दोषाविरोधि च' इति ता. । २ 'स्रसन कटुकं पाके' इत्याद्यभावे 'भेदन कटुक पाके कफघ्नमनिलापहम्' इति ता० पाठः । ३ 'ताम्बूलपत्र कटुक तीक्ष्णोष्ण पित्तकोपनम् ॥ तिक्त सुगन्धि विशद स्वयं वातकफापहम्' इति ता. । ४ 'गलकण्डूमलक्लेद०' इति ता. । ५ इदमुद्देशवाक्य ता० पुस्तके नास्ति । ६ 'कटुपाकीनि' इति ता. । ७ अयम् २८२ सङ्ख्याकः श्लोकस्ता० पुस्तके नास्ति ।

करीरकुसुमानि कटुविपाकानि वातहराणि सृष्टमूत्रपुरीषाणि च ॥ २८३ ॥

रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ॥
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥ २८४ ॥
सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥
मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ॥
तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले ॥ २८५ ॥
सिन्धुवारं विजानीयाद्धिमं पित्तविनाशनम् ॥
मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने ॥ २८६ ॥
सुगन्धि विशदं हृद्यं बाकुलं पाटलानि च ॥
श्लेष्मपित्तविषघ्नं तु नागं तद्वच्च कुङ्कुमम् ॥ २८७ ॥
चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ॥
किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम् ॥ २८८ ॥
यथावृक्षं विजानीयात् पुष्पं वृक्षोचितं तथा ॥
मधुशिग्रुकरीराणि कटु श्लेष्महराणि च ॥ २८९ ॥

क्षवककुलेवरवंशकरीरप्रभृतीनि कफकराणि सृष्टमूत्रपुरीषाणि च ॥ २९० ॥

क्षवकं कृमिलं तेषु स्वादुपाकं सपिच्छलम् ॥
विष्यन्दि वातलं नातिपित्तश्लेष्मकरं च तत् ॥ २९१ ॥

---

१ 'मधुशिग्रुकरीराणि कटूनि श्लेष्महराणि च' इति ता० पा०। तथा च 'करीरमधुशिग्रुकुसुमानि' इति पा०। २ ता० पुस्तके २८४ तमश्लोकमारभ्य सार्धाष्टाशीत्यधिकद्विशततमश्लोक यावत् श्लोकानां सार्धपञ्चक नोपलभ्यते। ३ 'मधुर' इति पा०। ४ इदम् २८९ तमसङ्ख्याकपद्यस्योत्तरार्धं ता० पुस्तके नास्ति। ५ 'पित्तहराणि' इति ता.।

वेणोः करीराः कफला[1] मधुरा रसपाकतः ॥
विदाहिनो वातकराः[2] सकषाया विरूक्षणाः ॥ २९२ ॥

उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि[3] । तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनं[4] च, इक्षुजं मधुरं कषायानुरसं कटुपाकं[5] शीतलं च, तद्वदेवोष्णं[6] कारीषं कषायं वातकोपनं च, वेणुजातं कषायं वातकोपनं च, भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥ २९३ ॥

पिण्याकतिलकल्कस्थूणिकाशुष्कशाकानि[7] सर्वदोषप्रकोपणानि ॥ २९४ ॥

विष्टम्भिनः स्मृताः सर्वे वटका वातकोपनाः ॥
सिण्डाकी वातला सार्द्रा[8] रुचिष्याऽनलदीपनी ॥ २९५ ॥
विड्भेदि गुरु रूक्षं च प्रायो विष्टम्भि दुर्जरम्[9] ॥
सकषायं च सर्वं हि स्वादु शाकमुदाहृतम् ॥
पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात् ॥ २९६ ॥
कर्कशं परिजीर्णं च कृमिजुष्टमदेशजम् ॥
वर्जयेत् पत्रशाकं तद्यदकालविरोहि च ॥ २९७ ॥

अथ कन्दवर्गः ।

कन्दानत ऊर्ध्वं वक्ष्यामः—विदारीकन्दशतावरीबिसमृणाल-

---

१ 'श्लेष्मघ्नाः' इति ता । २ 'नातिबला.' इति पा० । ३ '°क्षितिजातानि' इति ता. । ४ 'दोषकर च' ता. । ५ 'कटुकं' इति पा० । ६ 'तद्वदेवोष्ण कारीषम्' इत्येव ता० पुस्तके पठ्यते 'तद्वदेवोष्ण कारीषं कषायं वातकोपन च' इति तु तत्र नैव पठ्यते । ७ 'पिण्याकी०' इति ता. । ८ 'सान्द्रा' इति पा० । ९ 'शीतलम्' इति ता. ।

[1]शृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुक-रक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि ॥ २९८ ॥

रक्तपित्तहराण्याहुः शीतानि मधुराणि च ॥
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च ॥ २९९ ॥
मधुरो बृंहणो वृष्यः शीतः स्वर्योऽतिमूत्रलः ॥
विदारीकन्दो बल्यश्च पित्तवातहरश्च सः ॥ ३०० ॥
वा[2]तपित्तहरी वृष्या स्वादुतिक्ता शतावरी ॥
मह[3]ती चैव हृद्या च मेधाग्निबलवर्धिनी ॥ ३०१ ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ ३०२ ॥
अविदाहि बिसं प्रोक्तं रक्तपित्तप्रसादनम् ॥
विष्ट[4]म्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥ ३०३ ॥
गुरू विष्टम्भिशीतौ च शृङ्गाटककशेरुकौ ॥
पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥ ३०४ ॥
सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटु पित्तकृत् ॥
वेणो[5]ः करीरा गुरवः कफमारुतकोपनाः ॥ ३०५ ॥

स्थू[6]लसूरणमाणकप्रभृतयः कन्दा ईषत्कषायाः कटुका रू[7]क्षा विष्टम्भिनो गुरवः कफवातला. पित्तहराश्च ॥ ३०६ ॥

---

१ 'शृङ्गाटककशेरुपिण्डालुमध्वालुहस्त्यालुप्रभृतीनि' इति ता. । २ 'वातपित्तहरा' इति ता. । ३ 'महती सैव हृद्या तु' इति ता. । ४ 'विष्टम्भि मधुरं रूक्षं दुर्जरं वातकोपनम्' इति ता. । ५ इदम् ३०५ तमसङ्ख्याकपद्यस्योत्तरार्धं ता० पुस्तके न दृग्गोचरं भवति । ६ 'शलसूरण' इत्यादि ता० पुस्तके तथा भानुमतीव्याख्यासहितायां सुश्रुतसंहितायां चापि पठ्यते । ७ ता० पुस्तके शलसूरणादीनां 'रूक्षः' इति गुणविशेषो न पठितोऽस्ति ।

मान(ण)कं[1] स्वादु शीतं च गुरु चापि प्रकीर्तितम् ॥
स्थूलकन्दस्तु[2] नात्युष्णः सूरणो गुदकीलहा ॥ ३०७ ॥
कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः ॥
कषायाः पित्तशमना विपाके मधुरा हिमाः ॥ ३०८ ॥
वराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः ॥
मेह[3]कुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः ॥ ३०९ ॥

तालनारिकेलखर्जूरप्रभृतीनां मस्तकमज्जानः[4] ॥ ३१० ॥

स्वादु[5]पाकरसानाहू रक्तपित्तहरांस्तथा ॥
शुक्रलानिलघ्नांश्च कफवृद्धिकरानपि ॥ ३११ ॥
बालं ह्यनार्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ॥
कन्दं[6] विवर्जयेत् सर्वं यो वा सम्यङ्ग रोहति ॥ ३१२ ॥

अथ लवणवर्गः ।

अथ लावणानि—सैन्धवसामुद्रविडसौवर्चलरोमकौद्भिदप्रभृतीनि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि कटुपाकीनि यथापूर्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥ ३१३ ॥

चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम् ॥
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥ ३१४ ॥

---

१ 'माणकं' इति ता. ।　२ 'शलकन्दस्तु' इति ता. तथाच चक्र० पा० ३ 'कुष्ठमेहक्रिमिहरो वृष्योष्णः पित्तवर्धनः' इति ता ।　४ 'मस्तकजातानि' इति ता. । ५ 'स्वादुपाकरसान्याहु. पितरक्तहराणि च ॥ शुक्रलान्यनिलघ्नानि कफवृद्धिहराणि च' इति ता० पा० । ६ ताडपत्रपुस्तके फलवर्गानन्तर कन्द-वर्गो दृश्यते कन्दवर्गानन्तर शाकवर्गश्च । इह तु फलवर्गानन्तर शाकवर्गः शाकवर्गानन्तर कन्दवर्गश्चेति चिन्त्यम्

सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ॥
भेदनं स्निग्धमीषच्च शूलघ्नं[1] नातिपित्तलम् ॥ ३१५ ॥
सक्षारं दीपनं सूक्ष्मं[2] शूलहृद्रोगनाशनम्[3] ॥
रोचनं तीक्ष्णमुष्णं च विडं वातानुलोमनम् ॥ ३१६ ॥
लघु सौवर्चलं पाके वीर्योष्णं विशदं कटु ॥
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥ ३१७ ॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ॥
वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥ ३१८ ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ॥
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥ ३१९ ॥
कफवातक्रिमिघ्नं च लेखनं पित्तकोपनम् ॥
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥ ३२० ॥
ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम्[4] ॥
लवणं कटुकं छेदि विहितं कटु[5] चोच्यते ॥ ३२१ ॥
यवक्षारस्वर्जिकाक्षारोषक्षारपाकिम[6]टङ्कणक्षारप्रभृतयः ॥
गुल्मार्शोग्रहणीदोषशर्कराश्मरिनाशनाः[7] ॥
क्षारास्तु पाचनाः सर्वे रक्तपित्तकराः सराः[8] ॥ ३२२ ॥
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥
शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥ ३२३ ॥
उष्णोऽनिलघ्नः प्रक्लेदी चोषक्षारो बलापहः ॥
मेदोघ्नः[9] पाकिमः क्षारस्तेषां बस्तिविशोधनः ॥ ३२४ ॥

---

१ 'शीतघ्न' इति ता.। २ 'रूक्ष' इति पा०। ३ 'हृद्रोगकफनाशनम्' इति ता.। ४ 'मलमूत्राकरोद्भवम्' इति ता.। ५ 'लघु' इति ता.। ६ "°पाकिम°" इत्यभावे "°पाचिम°" इति ता० पा०। ७ "°प्रतिश्यायविनाशनाः' इति पा०। ८ 'ऽग्निप्रदीप्तिकराः सराः' इति ता.। ९ 'मेदोघ्नः पाकिमः क्षारो मूत्रबस्तिविशोधनः' इति हा० पा०।

विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ॥
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥ ३२५ ॥
सुवर्णं[1] स्वादु हृद्यं च बृंहणीयं रसायनम् ॥
दोषत्रयापहं शीतं चक्षुष्यं विषसूदनम् ॥ ३२६ ॥
रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ॥
ताम्रं कषायं मधुरं लेखनं शीतलं सरम् ॥ ३२७ ॥
सतिक्त लेखनं कांस्यं चक्षुष्यं कफवातजित् ॥
वातकृच्छीतलं लोहं तृष्णापित्तकफापहम् ॥ ३२८ ॥
कटु क्रिमिघ्नं लवण त्रपु सीसं च लेखनम् ॥
मुक्ताविद्रुमवज्रेन्द्रवैदूर्यस्फटिकादयः ॥ ३२९ ॥
चक्षुष्या मणयः शीता लेखना विषसूदनाः ॥
पवित्रा धारणीयाश्च पाप्मालक्ष्मीमलापहाः ॥ ३३० ॥

इति लवणादिवर्गः ।

धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात्[2] ॥
आस्वादतो भूतगुणैश्च मत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः ३३१
षष्टिका यवगोधूमा लोहिता ये च शालयः ॥
मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ३३२ ॥
लावं[3]तित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः ॥
मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणे[4]ष्विह ॥ ३३३ ॥
दाडिमामलकं द्राक्षा खर्जुरं सपरूषकम् ॥
राजादनं मातुलुङ्गं फलवर्गे[5] प्रशस्यते ॥ ३३४ ॥

---

१ ता० पुस्तके ३२६ तमश्लोकमारभ्य ३३० तमश्लोकस्यासमाप्तेः पञ्च श्लोका न विद्यन्ते । २ '°मिहाप्रमोहात्' इति ता । ३ 'एण' कुरङ्गो हरिणस्तित्तिरिर्लाव एव च' इति ता. । ४ 'मासगणेषु वै' इति ता. । ५ 'फलवर्गेषु शस्यते' इति ता. ।

[1]सतीनो वास्तुकश्चूचिल्लीमूलकपोतिकाः ॥
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ ३३५ ॥
गव्यं क्षीरं घृत श्रेष्ठं, सैन्धवं लवणेषु च ॥
धात्रीदाडिममम्लेषु, पिप्पली नागरं कटौ ॥ ३३६ ॥
तिक्ते पटोलवार्ताकं, मधुरे घृतमुच्यते ॥
क्षौद्रं, पूगफलं [2]श्रेष्ठं कषाये सपरूषकम् ॥ ३३७ ॥
शर्करेक्षुविकारेषु, [3]पाने मध्वासवौ तथा ॥
परिसंवत्सरं धान्यं, मांसं वयसि मध्यमे ॥ ३३८ ॥
अपर्युषितमन्नं तु संस्कृतं मात्रया शुभम् ॥
फलं पर्यागतं, शाकमशुष्कं तरुणं नवम् ॥ ३३९ ॥

अथ कृतान्नवर्गः ।

अतः[4]परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥
लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः ॥ ३४० ॥
वातानुलोमनो हृद्यः पिप्पलीनागरायुतः ॥
स्वेदाग्निज[5]ननी लघ्वी दीपनी बस्तिशोधनी ॥ ३४१ ॥
क्षुत्तृट्श्रम[6]ग्लानिहरी पेया वातानुलोमनी ॥
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्धनी ॥ ३४२ ॥
पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥
हृद्या संतर्पणी वृष्या बृंहणी बलवर्धनी ॥ ३४३ ॥
शाकमांसफलैर्युक्ता विलेप्य[7]म्ला च दुर्जरा ॥

---

१ 'चुचू सतीनो वास्तूकश्चिल्ली°' इति ता.। २ 'शस्तं' इति ता.। ३ 'पानजातौ सुरासवौ' इति ता.। ४ 'अत ऊर्ध्वं' इति पा०। ५ 'बस्ति-संशोधनी वृष्या ज्वरातिसारयोर्हिता' इति पा०। ६ '°ग्लानिहरा' इति ता.। ७ 'यवाग्वोऽम्लाश्च दुर्जराः' इति पा०।

सिक्थै[1]र्विरहितो मण्डः पेया सिक्थसमन्विता ॥ ३४४ ॥
[2]विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा ॥
विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः ॥ ३४५ ॥
कफपित्तकरी बल्या कृशराऽनिलनाशनी ॥
धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः ॥ ३४६ ॥
स्विन्नः सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघुः ॥
अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ॥ ३४७ ॥
लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः ॥
स्नेहैर्मांसैः फलैः कन्दैर्विदलाम्लैश्च संयुताः ॥ ३४८ ॥
गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः ॥
सुस्विन्नो निस्तुषो भृष्ट ईषत्[3] सूपो लघुर्हितः ॥ ३४९ ॥
स्विन्नं निष्पीडितं शाकं [4]हितं स्यात् स्नेहसंस्कृतम् ॥
अस्विन्नं स्नेहरहितमपीडितमतोऽन्यथा ॥ ३५० ॥
मांसं स्वभा[5]वतो वृष्यं स्नेहनं बलवर्धनम् ॥
स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह ॥ ३५१ ॥
सिद्धं मांसं हितं बल्यं रोच[6]नं बृंहणं गुरु ॥
तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ॥ ३५२ ॥
विद्यात्पित्तकफोद्रेकी बलमांसाग्निवर्धनम् ॥
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ॥ ३५३ ॥

---

१ ताडपत्रपुस्तके ३४४ तमश्लोकस्योत्तरार्धस्तथा ३४५ तमश्लोकस्य पूर्वार्धश्च न विद्येते । २ 'यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा' इति पा० । ३ 'माषसूपः' इति ता. पा० । ४ 'स्नेहसंस्कारितं हितम्' इति पा० । ५ अयमर्धश्लोकस्ता० पुस्तके नोपलभ्यते । ६ 'बृंहणं रोचनं लघु' इति ता. ।

रोचनं बलमेधाग्निमांसौजःशुक्रवर्धनम् ॥
तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः ॥ ३५४ ॥
परिशुष्कगुणैर्युक्तं वह्नौ[1] पक्कमतो लघु ॥
तदेव शूलिकाप्रोतमङ्गारपरिपाचितम् ॥ ३५५ ॥
ज्ञेयं गुरुतरं किंचित् प्रदिग्धं[2] गुरुपाकतः ॥
उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् ॥ ३५६ ॥
परिशुष्कं प्रदिग्धं च शूल्यं यच्चान्यदीदृशम् ॥
मांसं यत्तैलसिद्धं तद्वीर्योष्णं पित्तकृद्गुरु ॥ ३५७ ॥
लघ्वग्निदीपनं हृद्यं रुच्यं[3] दृष्टिप्रसादनम् ॥
अनुष्णवीर्यं पित्तघ्नं मनोज्ञं घृतसाधितम् ॥ ३५८ ॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः ॥
वातपित्तश्रमहरो हृद्यो[4] मांसरसः स्मृतः ॥ ३५९ ॥
स्मृत्योजःस्वरहीनानां ज्वरक्षीण[5]क्षतोरसाम् ॥
भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् ॥ ३६० ॥
आप्यायनः संहननः शुक्रदो बलवर्धनः ॥
स दाडिमयुतो वृष्यः संस्कृतो दोषनाशनः ॥ ३६१ ॥
प्रीणनः सर्व[6]भूतानां विशेषान्मुखशोषिणाम् ॥
क्षुत्तृष्णापहरः श्रेष्ठः सौरावः[7] स्वादुशीतलः ॥ ३६२ ॥[8]
यन्मांस[9]मुद्धृतरसं न तत् पुष्टिबलावहम् ॥
विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥ ३६३ ॥

---

१ 'वह्नेः पथ्यतमं गुरु' इति ता.। २ 'प्रतप्तं कन्दुपाकतः' इति ता.। ३ 'संस्कृतं त्वक्प्रसादनम्' इति ता। ४ 'रसो मांससमुद्भवः' इति पा०। ५ 'ज्वरक्षीणक्षतौजसाम्' इति ता। ६ 'सर्वधातूनां' इति पा०। ७ 'सौरावः' इति च० पा०। ८ ताडपत्रपुस्तके ३६२ तमश्लोको नोपलभ्यते। ९ 'यन्मांसं निःसृतरसं' इति ता.।

दीप्ताग्नीनां[1] सदा पथ्यः खानिष्कस्तु परं गुरुः ॥
मांसं निरस्थि सुस्विन्नं[2] पुनर्दृषदि पेषितम् ॥ ३६४ ॥
पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम् ॥
ऐकध्यं पाचयेत् सम्यग्वेसवार इति स्मृतः ॥ ३६५ ॥
वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः ॥
कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ॥ ३६६ ॥
ज्ञेयः पथ्यतमश्चैव मुद्गयूषः कृताकृतः ॥
स तु दाडिममृद्वीकायुक्तः स्याद्रागषा(खा)डवः ॥ ३६७ ॥
रुचिष्यो लघुपाकश्च दोषाणां चाविरोधकृत्[3] ॥
मसूरमुद्गगोधूमकुलत्थलवणैः कृतः ॥ ३६८ ॥
कफपित्ताविरोधी स्याद्वातव्याधौ च[4] शस्यते ॥
मृद्वीकादाडिमैर्युक्तः स चाप्युक्तोऽनिलार्दिते ॥ ३६९ ॥
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ॥ ३७० ॥
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥ ३७१ ॥
हन्ति मूलकयूषस्तु कफमेदोगलग्रहान् ॥
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः[5] ॥ ३७२ ॥
तूणीप्रतूणीकासाँश्मगुल्ममेदःकफापहः[6] ॥
दाडिमामलकैर्यूषो हृद्य. संशमनो लघुः ॥ ३७३ ॥

---

१ ताडपत्रपुस्तके ३६४ तमः श्लोकस्तथा ३६५ तम' श्लोकस्तथा च ३६६ तमश्लोकस्य पूर्वार्धं एव सार्धश्लोकद्वय नोपलभ्यते । २ 'सुस्निग्ध' इति पा० । ३ 'चाविरोधकृत्' इति ता. । ४ 'प्रशस्यते' इति ता । ५ 'शर्कराश्मरिनाशनः' इति ता. । ६ '°कासार्शोगुल्मोदावर्तनाशनः' इति पा० ।

प्राणाग्निजननो मूर्च्छामेदोघ्नो वातपित्तजित् ॥
मुद्गामलकयूषस्तु ग्राही पित्तकफे[1] हितः ॥ ३७४ ॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥
सर्वधान्यकृतस्तद्वद्बृंहणः प्राणवर्धनः ॥ ३७५ ॥
खडकाम्बलिकौ हृद्यौ तथा[2] वातकफे हितौ ॥
बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः[3] ॥ ३७६ ॥
दध्यम्लः कफकृद्बल्यः स्निग्धो[4] वातहरो गुरुः ॥
तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः[5] ॥ ३७७ ॥
खडाः खडयवाग्वश्च षा(खा)डवाः पानकानि च ॥
एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः[6] ॥ ३७८ ॥
अस्नेहलवणं सर्वमकृतं कटुकैर्विना ॥
विज्ञेयं लवणस्नेहकटुकैः संयुतं कृतम् ॥ ३७९ ॥
अथ[7] गोरसधान्याम्लफलाम्लैरम्लितं च यत् ॥
यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम् ॥ ३८० ॥
दधिमस्त्वम्लसिद्धस्तु[8] यूषः काम्बलिकः स्मृतः ॥
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम्[9] ॥ ३८१ ॥

---

१ 'पित्तकफापहः' इति ता. । २ 'छेदी' इति ता. । ३ ताडपत्रपुस्तके ३७६ तमश्लोकानन्तरं पुरोनिर्दिष्टोऽर्धश्लोकोऽधिकः पठ्यते यथा 'धान्याम्लो दीपनो हृद्यः पित्तकृद्वातनाशनः' इति । ४ 'पित्तलो वातहा गुरुः' इति ता. । ५ ताडपत्रपुस्तकेऽस्मात् ३७७ तमश्लोकादनन्तरम् 'तिलपिण्याकविकृति.' इत्यादिः ३८१ तमः श्लोक उपलभ्यते । ६ अयम् ३७८ तमः श्लोकस्ता० पुस्तके नोपलभ्यते । ७ 'यूषं विद्यात्फलाम्लैस्तु धान्याम्लैरन्वितं च यत् ॥ यथोत्तरं गुरु तथा' इति ता. । ८ ताडपत्रपुस्तके ३८१ तमश्लोकस्य 'दधिमस्त्वम्ल०' इत्यादिपूर्वार्धो नोपलभ्यते । ९ 'विरूक्षणम्' इति ता. ।

सिण्डाकी[1] च गुरूणि स्युः कफपित्तकराणि च ॥
तद्वच्च[2] वटकान्याहुर्विदाहीनि गुरूणि च ॥ ६८२ ॥
लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ॥
तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः ॥ ३८३ ॥
रसाला[3] बृंहणी बल्या स्निग्धा वृष्या च रोचनी ॥
स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम् ॥ ३८४ ॥
सक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः ॥
नातिद्रवा नातिसान्द्रा मन्थ[4] इत्युपदिश्यते ॥ ३८५ ॥
मन्थः[5] सद्योबलकरः पिपासाश्रमनाशनः ॥
साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्तनाशनः ॥ ३८६ ॥
शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥
द्राक्षा[6]मधूदकयुतः कफरोगनिबर्हणः ॥ ३८७ ॥
वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥
गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥ ३८८ ॥
तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥
साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् ॥ ३८९ ॥
मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम् ॥
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥ ३९० ॥
द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्रां च सर्वतः ॥
पानकानां यथायोगं गुरुलाघवमादिशेत् ॥ ३९१ ॥

इति कृतान्नवर्ग. ।

---

१ 'शाण्डकी' इति ता. । 'शिण्डाकी' 'शाण्डाकी' 'सण्डाकी' इति पाठान्तराणि । २ 'तद्वच्च' इत्यादिरयमर्धश्लोकस्ता० पुस्तके न विद्यते । ३ 'रसाला रोचना बल्या स्निग्धा वृष्या च बृंहणी' इति ता. । ४ 'मन्थ इत्यभिधीयते' इति ता. । ५ 'मन्थः सद्योबलश्छर्दिपिपासा°' इति ता. । ६ 'द्राक्षामधुसमायुक्तः कफरोगहरः स्मृतः' इति ता. ।

अथ भक्ष्यवर्गः ।

वक्ष्याम्यतः परं भक्ष्यान् रसवीर्यविपाकतः ॥
भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ॥
अदाहिनः[1] पुष्टिकरा दीपनाः पित्तनाशनाः ॥
तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ॥ ३९३ ॥
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥
बृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः ॥ ३९४ ॥
अदाहिनः[2] पित्तहराः शुक्रलाः कफवर्धनाः ॥
मधुशीर्षकसंयावाः[3] पूपा ये ते विशेषतः ॥ ३९५ ॥
गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥
रोचनो दीपनः स्वर्यः पित्तघ्नः पवनापहः ॥ ३९६ ॥
गुरुर्मृष्टतरश्चैव[4] सट्टकः प्राणवर्धनः ॥
हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो[5] गुरुः ॥ ३९७ ॥
वातापहस्तृप्तिकरो[6] बल्यो विष्यन्द[7] उच्यते ॥
बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः[8] ॥ ३९८ ॥
हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥
मुद्रादिवेसवाराणां पूर्णा विष्टम्भिनो मताः ॥ ३९९ ॥
वेसवारैः सपिशितैः संपूर्णा गुरुबृंहणाः ॥
पाललाः[9] श्लेष्मजननाः, शष्कुल्यः कफपित्तलाः ॥ ४०० ॥
वीर्योष्णाः पैष्टिका[10] भक्ष्याः कफपित्तप्रकोपणाः ॥

---

१ 'विदाहिन.' इति ता । २ 'विदाहिन' इति ता । ३ 'मधुमस्तकसयावा.' इति ता । ४ 'गुरुमिष्टतमश्चैव' इति पा० । ५ 'श्लेष्महरो' इति ता. । ६ 'पित्तापहस्तृप्तिकरो' इति ता । ७ 'विष्यन्दि उच्यते' इति ता. । ८ 'सम्मिताः' इति ता. । ९ 'पालाला' इति ता । १० 'पैत्तिका' इति ताडपत्रपुस्तकस्थपाठः, समीचीनपाठस्तु 'पैष्टिका' इति गम्यते ।

विदाहिनो नातिबला गुरवश्च विशेषतः ॥ ४०१ ॥
वैदला लघवो[1] भक्ष्याः कषायाः सृष्टमारुताः ॥
विष्टम्भिनः पित्तसमाः[2] श्लेष्मघ्ना भिन्नवर्चसः ॥ ४०२ ॥
बल्या[3] वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥
कूर्चिकाविकृता भक्ष्या गुरवो नातिपित्तलाः ॥ ४०३ ॥
विरूढककृता[4] भक्ष्या गुरवोऽनिलपित्तलाः ॥
विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः ॥ ४०४ ॥
हृद्याः सुगन्धिनो भक्ष्या[5] लघवो घृतपाचिताः ॥
वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥ ४०५ ॥
विदाहिनस्तैलकृता गुरवः[6] कटुपाकिनः ॥
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः[7] ॥ ४०६ ॥
फलमांसेक्षुविकृतितिलमाषोपसंस्कृताः ॥
भक्ष्या बल्याश्च गुरवो बृंहणा हृदयप्रियाः ॥ ४०७ ॥
कपाला[8]ङ्गारपक्कास्तु लघवो वातकोपनाः ॥
सुपक्कास्तनवश्चैव भूयिष्ठं लघवो मताः ॥ ४०८ ॥
सकिलाटादयो भक्ष्या गुरवः कफवर्धनाः ॥
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ॥ ४०९ ॥
उदावर्तहरो वाट्यः कासपीनसमेहनुत्[9] ॥
धानो[10]लुम्बास्तु लघवः कफमेदोविशोषणाः ॥ ४१० ॥

---

१ 'गुरवो' इति ता.। २ 'श्लेष्महराः पित्तघ्ना' इति ता । ३ 'बल्या वृष्यास्तु' इत्यादि ४०३ तमश्लोकस्याय पूर्वार्धस्ता० पुस्तके नास्ति। ४ अय ४०४ तमश्लोकस्य पूर्वार्धस्ता० पुस्तके न विद्यते। ५ 'वृष्या' इति पा०। ६ 'भक्ष्यास्तु गुरुपाकिनः' इति ता.। ७ 'पित्तलासृक्प्रदूषणाः' इति ता। ८ 'कपालाङ्गारपक्काः स्युः किञ्चिल्लघुतरास्तु ते' इति ता.। ९ 'प्रतिश्यामेहनाशनः इति ता.। १० 'धानालुम्बास्तु' इति ता.।

शक्तवो[1] बृंहणा वृष्यास्तृष्णापित्तकफापहाः ॥
पीताः सद्योबलकरा भेदिनः पवनापहाः ॥ ४११ ॥
गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैवं[2] विपर्ययात् ॥
शक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ ४१२ ॥
लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ॥
बल्याः कषायमधुरा लघवस्तृण्मलापहाः ॥ ४१३ ॥
तृट्[3]छर्दिदाहघर्मार्तिनुदस्तत्सक्तवो मताः ॥
रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥ ४१४ ॥
पृथुका गुरवः स्निग्धा बृंहणाः कफवर्धनाः ॥
बल्याः सक्षीर[4]भावात्तु वातघ्ना भिन्नवर्चसः ॥ ४१५ ॥
[5]संधानकृत् पिष्टमामं ताण्डुलं कृमिमेहनुत् ॥
सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ॥ ४१६ ॥
सन्धानकृन्मेह[6]हरः पुराणस्तण्डुलः स्मृतः ॥
द्रव्य[7]संयोगसंस्कारविकारान् समवेक्ष्य च ॥ ४१७ ॥

---

१ 'शक्तवस्तर्पणा हृद्या°' इति ता. । २ 'पिण्डी' इति पा० । ३ ताडपत्र-पुस्तकेऽयम् ४१४ तम॰ श्लोको नोपलभ्यते । ४ 'सक्षीरवत्त्वाद्वा' इति ता. । ५ 'सन्धानकृत्' इत्यादिरसौ ४१७ तमश्लोकस्य पूर्वार्धस्ता० पुस्तके नास्ति । ६ 'पित्तहरः' इति पा० । ७ 'यदा कारणमासाद्य भोक्तॄणा छन्दतोऽपि वा । भक्ष्यादयः प्रकल्प्या॰ स्युस्तदा सुनिपुणो भिषक् ॥ द्रव्यसंयोगसस्कारविकारान् समवेक्ष्य तु । अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत्' इति हाराणचन्द्रसंमतः पाठ॰ । 'द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु । भिषग्यथास्व भक्ष्याणामादिशेद्गुरुलाघवम् ॥ खला खलयवाग्वश्च रागषाडवसट्टकाः । पानकानि च चित्राणि यूषाश्चानेकयोनयः ॥ कट्वम्लस्वादुलवणा लघवो ये फलोद्भवा॰ । एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥ यदा कारणमासाद्य भोक्तॄणा छन्दतोऽपि वा । अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत्' इति ताडपत्रपुस्तके पाठः ।

यथाकारणमासाद्य भोक्तॄणां छन्दतोऽपि वा ॥
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत् ॥ ४१८ ॥

इति भक्ष्यवर्गः ।

अतः सर्वानुपानान्युपदेक्ष्यामः ।—

अम्लेन केचिद्विहता मनुष्या माधुर्ययोगे प्रणयीभवन्ति ॥
तथाऽम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥ ४१९ ॥
शीतोष्णतोयासवमद्ययूषफलाम्लधान्याम्लपयोरसानाम् ॥
यस्यानुपानं तु हितं भवेद्यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥ ४२० ॥
व्याधिं च कालं च विभाव्य धीरैर्द्रव्याणि भोज्यानि[1] च तानि तानि ॥
सर्वानुपानेषु वरं वदन्ति मेध्यं[2] यदम्भः शुचिभाजनस्थम् ॥ ४२१ ॥
लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्वरसाश्च दृष्टाः ॥
सङ्क्षेप एषोऽभिहितोऽनुपानेष्वतः परं विस्तरतोऽभिधास्ये ॥ ४२२ ॥

उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
ऋते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथा[3] ॥ ४२३ ॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिकम् ॥
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥ ४२४ ॥
दधिपायसमद्यार्तिविषजुष्टे तथैव च ॥
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ४२५ ॥
पयो मांसरसो वाऽपि शालिमुद्गादिभोजिनाम् ॥
युद्धा[4]ध्वातपसंतापविषमद्यरुजासु च ॥ ४२६ ॥

---

१ 'योज्यानि' इति ता. । २ 'मेध्य' इति पा० । ३ ताडपत्रपुस्तके 'स्नेहात्तौवरकात्तथा' इत्यस्मिन्पाठस्थले 'तत्र तोयं सुशीतलम्' इति पठ्यते । ४ असौ ४२६ तमश्लोकस्योत्तरार्धस्ता० पुस्तके नास्ति ।

माषादेरनुपानं[1] तु धान्याम्लं दधिमस्तु वा ॥
मद्यं मद्योचितानां तु सर्वमांसेषु पूजितम् ॥ ४२७ ॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥
क्षीरं घर्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम् ॥ ४२८ ॥
सुरा कृशानां स्थूलानामनुपानं[2] मधूदकम् ॥
निरामयानां चित्रं तु भुक्तमध्ये प्रकीर्तितम् ॥ ४२९ ॥
स्निग्धोष्णं मारुते पथ्यं[3], कफे रूक्षोष्णमिष्यते ॥
अनुपानं हितं चापि पित्ते मधुरशीतलम् ॥ ४३० ॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥
अर्कश्लेलु[4]शिरीषाणामासवास्तु विषार्तिषु ॥ ४३१ ॥
अतः परं तु वर्गाणामनुपानं पृथक् पृथक् ॥
प्रवक्ष्याम्यनुपूर्वेण सर्वेषामेव मे शृणु ॥ ४३२ ॥

तत्र पूर्वशस्यजातानां बदराम्लं, वैदलानां धान्याम्लं, जङ्गलानां[5] धन्वजानां च पिप्पल्यासवः, विष्किराणां कोलबदरासवः, प्रतुदानां क्षीरवृक्षासवः, गुहाशयानां खर्जूरनालिकेरासवः, प्रसहानाम[6]श्वगन्धासवः, पर्णमृगाणां कृष्णगन्धासवः, बिलेशयानां फलासवैः[7], एकशफानां त्रिफलासवः, अनेकशफानां खदिरासवः, कूलचराणां शृङ्गाटककशेरुकासवः, कोशवासिनां पादिनां च स एव, प्लवाना-

१ 'माषादीनामनुपान' इति ता. । २ 'स्थूलानामनुशस्त' इति ता. । ३ 'शस्तं' इति ता. । ४ असौ ४३१ तमश्लोकस्योत्तरार्धस्ता०पुस्तके न पठ्यते । ५ 'जाङ्गलाना मृगाणां धन्वना पक्षिणां च पिपल्यासवः' इति ता० पा० । तथा 'जाङ्गलानां मृगपक्षिणां०' इति च० । ६ 'प्रसहानामश्वगन्धासवः' इत्यादिवाक्यमारभ्य 'नादेयाना मत्स्यानां मृणालासवः' इत्यन्त्यवाक्यं यावत् पाठस्ता०पुस्तके नास्ति । ७ 'फलरसासवः' इति तथा 'फलसारासवः' इति च पा० ।

मिक्षुरसासवः, नादेयानां मत्स्यानां मृणालासवः, सामुद्राणां[1] मातुलुङ्गासवः, अम्लानां फलानां पद्मोत्पलकन्दासवः, कषायाणां दाडिमवेत्रासवः, मधुराणां त्रिकटुकयुक्तः खण्डासवः[2], तालफलादीनां धान्याम्लं, कटुकानां[3] दूर्वानलवेत्रासवः, पिप्पल्यादीनां श्वदंष्ट्रावसुकासवः, कूष्माण्डादीनां[4] दार्वीकरीरासवः, चुचुप्रभृतीनां लोध्रासवः, जीवन्त्यादीनां[5] त्रिफलासवः, कुसुम्भशाकस्य स एव, मण्डूकपर्ण्यादीनां महापञ्चमूलासवः, तालमस्तकादीनामम्लफलासवः, सैन्धवादीनां सुरासव आरनालं च, तोयं च सर्वत्रेति ४३३

भवन्ति चात्र[6]—

सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ॥
सात्म्यं वा यस्य यत्तोयं तत्तस्मै हितमुच्यते ॥ ४३४ ॥
उष्णं[7] वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥
दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥ ४३५ ॥
यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति[8] ॥
रोचनं बृंहणं वृष्यं दोषसंघातभेदनम् ॥ ४३६ ॥
तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥
दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥ ४३७ ॥
बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥
तदादौ कर्शयेत्पीतं स्थापयेन्मध्यसेवितम् ॥ ४३८ ॥

---

१ ताडपत्रपुस्तके 'सामुद्राणा मातुलुङ्गासव' इति वाक्यानन्तरम् 'कूष्माण्डानां फलानां मार्द्वीकासव' इति पठित वाक्यमुपलभ्यते । २ 'खदिरासवः' इति ता. । ३ 'कन्दानां' इति ता. । ४ 'कूष्माण्डादीना दार्वीकरीरासव.' इति वाक्यं ता. पुस्तके नास्ति । ५ 'जीवन्त्यादीना त्रिफलासव' इति वाक्यं ता. पुस्तके नास्ति । ६ 'भवन्ति चात्र श्लोका.' इति ता. । ७ 'उष्णं वाते कफे' इत्यादिरयमर्धश्लोकस्ता०पुस्तके न पठितोऽस्ति । ८ 'प्रजीर्यते' इति ता.

पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य[1] प्रयोजयेत् ॥
स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम्[2] ॥ ४३९ ॥
भवत्याबाधजननमनुपानमतः पिबेत् ॥
न पिबेच्छ्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥ ४४० ॥
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥
पीत्वाऽध्वभाष्याध्ययन[3]गेयस्वप्नान्न शीलयेत् ॥४४१ ॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥
स्यन्दाग्निसादच्छर्द्यादीनामयाञ्जनयेद्बहून् ॥ ४४२ ॥
गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते ॥
तथा संस्कारमात्रान्नकालांश्चाप्युत्तरोत्तरम्[4] ॥ ४४३ ॥
मन्दकर्मानलारोग्याः सुकुमाराः सुखोचिताः ॥
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्यते ॥ ४४४ ॥
बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ॥
कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते ॥ ४४५ ॥

इत्यनुपानवर्गः[5] ।

अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु ॥
आप्तास्थित[6]मसंकीर्णं शुचि कार्यं महानसम् ॥ ४४६ ॥
तत्राप्तैर्गुणसंपन्नं भक्ष्यमन्नं सुसंस्कृतम् ॥
शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ ४४७ ॥
विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ॥
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ४४८ ॥

---

१ 'तत्समीक्ष्य' इति ता.। २ "°पायिन' इति ता.। ३ 'पीत्वा च भाष्याध्ययन°' इति ता.। ४ "°प्युत्तरोत्तरान्' इति ता.। ५ 'इत्यनुपानवर्ग.' इत्यधिकरणसमाप्तिबोधक वाक्य ता० पुस्तके नास्ति। ६ 'आप्तास्थित°' इति ता० पुस्तकस्थितश्चक्रपाणिदत्तसम्मत. पाठः। तत्रैवान्यत्पाठान्तरम् 'आप्तान्वित°' इति।

वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् ॥
घृतं कार्ष्णायसे देयं, पेया देया तु राजते ॥ ४४९ ॥
फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै[1] दलेषु तु ॥
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥ ४५० ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥
कट्वराणि खडांश्चैव सर्वाञ्छैलेषु दापयेत् ॥ ४५१ ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः ॥
पानीयं, पानकं मद्यं मृन्मयेषु प्रदापयेत् ॥ ४५२ ॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥
दद्याद्वैदूर्यचित्रेषु[2] रागषाडवसट्टकान् ॥ ४५३ ॥
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ॥
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥ ४५४ ॥
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥ ४५५ ॥
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ॥
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥ ४५६ ॥
सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ॥
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥ ४५७ ॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ॥
भोक्तारं विजने रम्ये निःसंपाते[3] शुभे शुचौ ॥ ४५८ ॥
सुगन्धपुष्परचिते समे देशे च भोजयेत् ॥
विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ॥ ४५९ ॥

---

१ 'प्रदेया वैदलेषु तु' इति ता.। २ 'वज्रवैदूर्यचित्रेषु' इति ता.। ३ 'निःसंपाते' इति ता.। 'निःसंबाधे' इति पा०।

मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥
पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ[1] रसौ ॥ ४६० ॥
पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥
आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् ॥ ४६१ ॥
ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् ॥
घनं पूर्वं समश्नीयात्, केचिदाहुर्विपर्ययम्[2] ॥ ४६२ ॥
आदावन्ते च मध्ये च भोजनस्य तु शस्यते ॥
निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ४६३ ॥
मृणालबिसशालूककन्देक्षुप्रभृतीनि च[3] ॥
पूर्वं योज्यानि भिषजा न तु भुक्ते कदाचन ॥ ४६४ ॥
सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः ॥
काले सात्म्यं लघु स्निग्धमुष्णं क्षिप्रं द्रवोत्तरम् ॥ ४६५ ॥
बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः[4] ॥
काले प्रीणयते भुक्तं सात्म्यमन्नं न बाधते ॥ ४६६ ॥
लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥
क्षिप्रं भुक्तं समं पाकं यात्यदोषं[5] द्रवोत्तरम् ॥ ४६७ ॥
सुखं जीर्यति मात्रावद्धातुसाम्यं[6] करोति च ॥
अतीवायतयामास्तु[7] क्षपा येष्वृतुषु स्मृताः ॥ ४६८ ॥
तेषु तत्प्रत्यनीकाढ्यं[8] भुञ्जीत प्रातरेव तु ॥
येषु चापि भवेयुश्च[9] दिवसा भृशमायताः ॥ ४६९ ॥

---

१ 'लवणाम्लौ तत' परम्' इति ता. । २ 'इति केचिद्व्यवस्थिताः' इति ता. । 'भोजने च'। इति ता. । ३ 'तु' इति ता. । ४ 'मात्रावद्विदिताशनः' इति ता. । ५ 'यात्यदुष्ट' इति ता. । ६ '°सात्म्य' इति ता. । ७ 'अतीवायतमात्राः स्युः' इति ता. । ८ 'तत्प्रत्यनीकार्थं' इति ता. । ९ 'भवेयुस्ते' इति ता. ।

तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥ ४७० ॥
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥
नाप्राप्तातीतकालं[1] वा हीनाधिकमथापि वा ॥ ४७१ ॥
अप्राप्तकालं भुञ्जानः शरीरे ह्यलघौ नरः ॥
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥ ४७२ ॥
अतीतकालं भुञ्जानो[2] वायुनोपहतेऽनले ॥
कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति ॥ ४७३ ॥
हीनमात्रमसंतोषं करोति च बलक्षयम् ॥
आलस्य[3]गौरवाटोपसादांश्च कुरुतेऽधिकम् ॥ ४७४ ॥
तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ॥
यथोक्तगुणसंपन्नमुपसेवेत भोजनम् ॥ ४७५ ॥
विभज्य दोषकालादीन् कालयोरुभयोरपि ॥
अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् ॥ ४७६ ॥
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ॥
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥ ४७७ ॥
अशान्त[4]मुपदग्धं च तथा स्वादु न लक्ष्यते ॥
यद्यत् स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम् ॥ ४७८ ॥
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः ॥
विशुद्धे रसने तस्य रोचतेऽन्नमपूर्ववत् ॥ ४७९ ॥
स्वादुना तस्य रसनं प्रथमेनातितर्पितम् ॥
न तथा स्वादयेदन्यत्तस्मात् प्रक्षाल्यमन्तरा ॥ ४८० ॥

---

१ 'अप्राप्तातीतकालं वा नाश्नीयात्तु यथातथम्' इति ता । २ 'भुक्तन्तु' इति ता. । ३ 'आलस्य गौरवाटोपमरुचिं कुरुतेऽधिकम्' इति ता. । ४ 'अशीत' इति पा० ।

सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ॥
स्वादु संजनयत्यन्नमस्वादु च[1] विपर्ययम् ॥ ४८१ ॥
भुक्त्वा[2]ऽपि यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥
अशितं[3]श्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥ ४८२ ॥
दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ॥
कुर्यादनिर्हृतं तद्धि मुख[4]स्यानिष्टगन्धताम् ॥ ४८३ ॥
जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेव तु ॥
भुक्तमात्रे कफश्चापि, तस्माद्भुक्तेरितं कफम् ॥ ४८४ ॥
धूमेना[5]पोह्य हृद्यैर्वा कषायकटुतिक्तकैः ॥
पूगकङ्कोलकर्पूरलवङ्गसुमनःफलैः ॥ ४८५ ॥
फलैः[6] कटुकषायैर्वा मुखवैशद्यकारकैः ॥
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ४८६ ॥
भुक्त्वा[7] राजवदासीत यावदन्नक्लमो गतः ॥
ततः पाद[8]शतं गत्वा वामपार्श्वेन संविशेत् ॥ ४८७ ॥
शब्दान्रूपान्रसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥ ४८८ ॥
शब्दरूपरसा गन्धाः स्पर्शाश्चापि जुगुप्सिताः ॥
अशुच्यन्नं तथा भुक्त[9]मतिहास्यं च वामयेत् ॥ ४८९ ॥

---

१ 'तु विवर्जयेत्' इति ता.। २ 'भुक्त्वा पुनः प्रार्थयते' इति ता.। ३ अयम् ४८२ तमश्लोकस्योत्तरार्धस्ता०पुस्तके नास्ति । ४ 'सुखस्यानिष्टुगन्धिताम्' इति ता.। ५ 'हरेद्धूमेन हृद्यैर्वा' इति ता.। ६ 'कटुतिक्तकषाययैर्वा' इति पा.। ७ अयम् ४८७तमस्य श्लोकस्य पूर्वार्धस्ता० पुस्तके नैव दृष्टिगोचरतामायाति । ८ 'पदशतं' इति ता । ९ 'भुक्तमतिमात्रञ्च वर्जयेत्' इति ता.।

शयनं चासनं वाऽपि नेच्छेद्वाऽपि [1]द्रवोत्तरम् ॥
ना[2]ग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥ ४९० ॥
न चैकरससेवायां प्रसज्येत कदाचन ॥
शा[3]कावरान्नभूयिष्ठमम्लं च न समाचरेत् ॥ ४९१ ॥
एकैकशः समस्तान् वा नाध्य[4]श्नीयाद्रसान् सदा ॥
प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥ ४९२ ॥
[5]पूर्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥
मात्रागुरुं परिहरेदाहारं द्रव्य[6]तश्च यः ॥ ४९३ ॥
पिष्टान्नं नैव भु[7]ञ्जीत मात्रया वा बु[8]भुक्षितः ॥
द्विगुणं च पिबेत्तोयं सुखं सम्यक् प्रजीर्यति ॥
पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥ ४९४ ॥
गुरूणामर्धसौहित्यं लघूनां [9]तृप्तिरिष्यते ॥
द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥ ४९५ ॥
[10]द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ॥
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥ ४९६ ॥
पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥ ४९७ ॥
विदाहि भुक्तमन्यद्वा त[11]स्याप्यन्नं विदह्यते ॥
[12]शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥ ४९८ ॥

---

१ 'च तत्क्षणम्' इति ता. । २ अयम् ४९०तमश्लोकस्योत्तरार्धस्ता० पुस्तके नोपलभ्यते । ३ 'शाकावरान्नभूयिष्ठव्यम्ल च' इति ता. । ४ 'नाश्नीयाच्च कदाचन' इति ता. । ५ 'पूर्वभुक्ते विदग्धेऽन्ने' इत्यादिरयमर्धश्लोकस्ता० पुस्तके नास्ति । ६ 'द्रव्यतोऽपि च' इति ता. । ७ 'सेवेत' इति ता. । ८ 'क्षुधातुरः' इति ता. । ९ 'वृत्तिरिष्यते' इति ता. । १० 'द्रव्याढ्यमविशुष्कं तु' इति ता. । ११ 'तथाप्यन्न' इति ता. । १२ 'शुष्क भुक्त विदग्ध स्यादग्नेर्व्यापादकारकम्' इति ता. ।

आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ४९९ ॥

अत्यम्बुपानाद्विषमाशनाद्वा संधारणात् स्वप्नविपर्ययाच्च ॥
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥५००॥
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन शुग्दैन्यनिपीडितेन ॥
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥ ५०१ ॥
माधुर्यमन्नं गतमामसंज्ञं, विदग्धसंज्ञं गतमम्लभावम् ॥
किंचिद्विपक्वं, भृशतोदशूलं विष्टब्धमानद्धविरुद्धवातम् ॥ ५०२ ॥
उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य ॥
रसावशेषेण तु सप्रसेकं चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥ ५०३ ॥

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥ ५०४ ॥
तत्रामे लङ्घनं कार्यं, विदग्धे वमनं हितम् ॥
विष्टब्धे स्वेदनं पथ्यं, रसशेषे शयीत च ॥ ५०५ ॥
वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना ॥
कार्यं वाऽनशनं तावद्यावन्न प्रकृतिं भजेत् ॥ ५०६ ॥
लघुकायमतश्चैनं लङ्घनैः समुपाचरेत् ॥
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ ५०७ ॥
हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ॥
बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम् ॥ ५०८ ॥

---

१ 'ईर्ष्याभयक्रोधपरिप्लुतेन' इत्यादिः ५०१ संख्याकः श्लोकस्ता० पुस्तके नास्ति। 'चिन्ता०' इति शोढलभिषक्। २ '०परिप्लुतेन' इति माधवकरः। ३ 'रुग्दैन्य०' इति माधवकरः। ४ 'परिपाकमेति' इति माधवकरः। ५ 'मूर्च्छा प्रलापो वमथुः प्रसेको ज्वरातिसारौ सदनं भ्रमश्च ॥ शिरोरुजा पृष्ठकटिग्रहश्च तृष्णा विपाकोऽथ विजृम्भिका च ॥ उपद्रवा भवन्त्येते इत्यादि. ता० पाठः। ६ 'कार्यं चानशन' इति ता। ७ 'विज्ञेयं' इति ता.।

अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ॥
अयमेतन्निहन्त्याशु बहून्व्याधीन्करोति वा[1] ॥ ५०९ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ॥
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥५१०॥

विदह्यते यस्य तु भुक्तमात्रे दह्येत हृत्कोष्ठगलं च यस्य ॥
द्राक्षाभयां[2] माक्षिकसंप्रयुक्तां लीढ्वाऽभयां वा[3] स सुखं लभेत ॥५११॥

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ॥
प्रातः सशुण्ठीमभयामशङ्को भुञ्जीत संप्राश्य हितं हितार्थी ॥५१२॥

स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति ॥
भवत्यजीर्णेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति ॥५१३॥

अत ऊर्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम् ॥
कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥ ५१४ ॥

ह्लादनः[4] स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् ॥
उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः ॥ ५१५ ॥

स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा ॥
रूक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः[5] ॥ ५१६ ॥

पिच्छिलो जीवनो बल्यः सन्धानः[6] श्लेष्मलो गुरुः ॥
विशदो विपरीतोऽस्मात्[7] क्लेदाचूषणरोपणः ॥ ५१७ ॥

दाहपाककरस्तीक्ष्णः स्रावणो, मृदुरन्यथा ॥
सादोपलेपबलकृद्गुरुस्तर्पणबृंहणः[8] ॥ ५१८ ॥

---

१ 'च' इति ता.। २ 'द्राक्षासितामाक्षिक०' इति ता.। ३ 'वै' इति ता.। ४ 'शीतः प्रल्हादनः स्तम्भी' इति ता.। ५ 'स्मृतः' इति ता.। ६ 'सन्धानो बृंहणस्तथा' इति ता.। ७ 'ऽस्य 'भेदी शोधनरोपणः' इति ता.। ८ 'सान्द्रोपलेपकफकृद्गुरुः प्रीणनबृंहणः' इति ता.।

लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥
दशाद्याः[1] कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥ ५१९ ॥
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ॥
द्रवः प्रक्लेदनः, सान्द्रः स्थूलः स्याद्बन्धकारकः ॥ ५२० ॥
श्लक्ष्णः पिच्छिलवज्ज्ञेयः, कर्कशो विशदो यथा ॥
सुखानुबन्धी[2] सूक्ष्मश्च सुगन्धो रोचनो मृदुः ॥ ५२१ ॥
दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥
सरोऽनुलोमनः प्रोक्तो, मन्दो यात्राकरः स्मृतः ॥ ५२२ ॥
व्यवायी[3] चाखिलं देहं व्याप्य पाकाय कल्पते ॥
विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ॥ ५२३ ॥
आशुकारी तथाऽऽशुत्वाद्धावत्यम्भसि तैलवत् ॥
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ॥
गुणा[4] विंशतिरित्येवं यथावत्परिकीर्तिताः ॥
संप्रवक्ष्याम्यतश्चोर्ध्वमाहारगतिनिश्चयम्[5] ॥ ५२५ ॥
पञ्चभूतात्मके देहे ह्याहारः पाञ्चभौतिकः ॥
विपक्वः पञ्चधा सम्यग्गुणान्[6] स्वानभिवर्धयेत् ॥ ५२६ ॥
अविदग्धः कफं, पित्तं विदग्धः, पवनं पुनः ॥
सम्यग्विपक्वो निःसार आहारः परिबृंहयेत् ॥ ५२७ ॥

---

१ ताडपत्रपुस्तके 'दशाद्याः कर्मत. प्रोक्ता.' इत्यादिरयमर्धश्लोकस्तथा 'दशैवान्यान् प्रवक्ष्यामि' इत्यादिरयमर्धश्लोकश्चेतः प्रागेव ५१४ तमश्लोकादनन्तर पठितौ वर्तेते इति चिन्त्यम्। २ 'सुखानुवर्ती सूक्ष्मश्च सुगन्धी रोचनो मतः॥ दुर्गन्धी विपरीतोऽस्य प्रकाशौ चाप्युभावपि' इति ता० पा०। ३ 'व्यवायी देहमखिल' इति ता० पा०। ४ 'गुणा विंशतिरित्येते कर्मतः परिकीर्तिता'' इति ता० पा०। ५ 'अत ऊर्ध्वम्प्रवक्ष्यामि' इति ता.। ६ 'सम्यग्गुणांस्तानभिवर्धयेत्' इति ता.।

विण्मूत्रमाहारमलः सारः प्रागीरितो रसः ॥
स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत्[1] ॥ ५२८ ॥
कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च ॥
नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥ ५२९ ॥
दिवा[2] विबुद्धे हृदये जाग्रतः पुण्डरीकवत् ॥
अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि ॥ ५३० ॥
हृदि संमीलिते रात्रौ प्रसुप्तस्य विशेषतः ॥
क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥ ५३१ ॥
इमं विधिं योऽनुमतं महामुनेर्नृपर्षिमुख्यस्य पठेद्धि[3] यत्नत ॥
स भूमिपालाय विधातुमौषधं महात्मनां[4] चार्हति सूरिसत्तमः[5] ५३२

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां सूत्रस्थाने षट्चत्वारिंशत्तमोऽध्यायः ।

---

१ 'विसर्पति' इति ता.। २ 'दिवा विबुद्धे हृदये जागृतः पुण्डरीकवत् ॥ अनुपक्लिष्टधात्वन्नमजीर्णं विहित निशि ॥ हृदय लीयते रात्रौ प्रसुप्तस्य विशेषत. ॥ समुपक्लिन्नधात्वन्नमजीर्णं त्वहित दिवा' ॥ इति ता. पुस्तकस्थः प्रत्यक्षपाठः। ३ 'पठेत्तु' इति ता.। ४ 'महात्मनां चार्हति वैद्यसत्तम.' इति ता.। ५ ता० पुस्तके ५३२ तमश्लोकान्तरम् 'द्रव्यज्ञान रसज्ञान वमनञ्च विरेचनम् ॥ द्रवद्रव्यपरिज्ञानमन्नपानञ्च षट् स्मृतम् ॥ सूत्रस्थाने पुराप्रोक्तञ्चत्वारिंशत् षडुत्तरम् ॥ अध्याया· काशिराजेन पूर्णं सर्वं सविस्तरम् ॥ इति सुश्रुते शल्यतन्त्रे सूत्रस्थानं समाप्तम्' ॥ इति सविशेषं पठ्यते ।

# अथ निदानस्थानम् ।

## प्रथमोऽध्यायः ।

अथातो वातव्याधिनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
धन्वन्तरिं धर्मभृतां वरिष्ठममृतोद्भवम् ॥
चरणावुपसंगृह्य सुश्रुतः परिपृच्छति ॥ ३ ॥
वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः ॥
स्थानं कर्म च रोगांश्च वद मे वदतां वर ! ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः ॥
स्वयंभूरेष भगवान् वायुरित्यभिशब्दितः ॥ ५ ॥
स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ॥
सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः ॥ ६ ॥
स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ॥
अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः ॥ ७ ॥
तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च ॥
अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् ॥ ८ ॥
आशुकारी मुहुश्चारी पक्वाधानगुदालयः ॥
देहे विचरतस्तस्य लक्षणानि निबोध मे ॥ ९ ॥

---

१ 'यथोवाच भगवान् धन्वन्तरिः' इतीदं गद्यसूत्रं यथा श्रीडल्हणाचार्य-संपादितायां सुश्रुतसंहितायां प्रत्यध्यायमादौ पठितमुपलभ्यते न तथा ताड-पत्रलिखितायां सुश्रुतसंहितायां न च तथा श्रीहाराणचन्द्रचक्रवर्तिसंपादितायां सुश्रुतसंहितायां पठितमुपलभ्यते । २ 'भूपते' इति ता. ३ 'स्थानं रोगविभागश्च वदस्व वदतां वर' इति ता । ४ 'जगाद भगवानृषिः' इति ता. पा. । ५ 'शीतो रूक्षो लघुश्चर (लः) इति ता. ।

दोषधात्वग्निसमतां संप्राप्तिं विषयेषु च ॥
क्रियाणामानुलोम्यं च करोत्यकुपितोऽनिलः ॥ १० ॥
(इन्द्रियार्थोपसंप्राप्तिं[1] दोषधात्वग्न्यवैकृतम् ।
क्रियाणामानुलोम्यं च कुर्याद्वायुरदूषितः ॥ १० ॥)
यथाऽग्निः पञ्चधा भिन्नो नामस्थानक्रियामयैः ॥
भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः ॥ ११ ॥
प्राणोदानौ समानश्च व्यानश्चापान[2] एव च ॥
स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥ १२ ॥
यो वायुर्वक्रसंचारी[3] स प्राणो नाम देहधृक् ॥
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ॥ १३ ॥
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥
उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः ॥ १४ ॥
तेन भाषितगीतादिविशेषोऽभिप्रवर्तते ॥
ऊर्ध्वजत्रुगतान् रोगान् करोति च विशेषतः ॥ १५ ॥
आमपक्वाशयचरः समानो[4] वह्निसङ्गतः ॥
[5]सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि ॥ १६ ॥
गुल्माग्निसादातीसारप्रभृतीन् कुरुते गदान् ॥
कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः[6] ॥ १७ ॥
स्वेदासृक्स्रावणश्चापि पञ्चधा[7] चेष्टयत्यपि ॥
क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान् ॥ १८ ॥

---

१ अयं पाठो गयदासाचार्यसम्मतोऽस्तीति चिन्त्यम् । २ 'व्यानापानौ तथैव च' इति ता. । ३ 'योऽनिलो वक्रसंचारी' इति ता. । ४ 'समानोऽग्निसह्यायवान्' इति ता. । ५ 'अन्नं पचति तज्जांश्च भावान् प्रविविनक्ति सः' इति ता. । ६ 'रससंवाहनोद्यतः' इति ता. । ७ 'सर्वथा चेष्टयत्यपि' इति ता. ।

पक्वाधानालयोऽपानः काले कर्षति चाप्ययधः[1] ॥
समीरणः[2] शकृन्मूत्रं शुक्रगर्भार्तवानि च ॥ १९ ॥
क्रुद्धश्च कुरुते रोगान् घोरान् बस्तिगुदाश्रयान् ॥
शुक्रदोषप्रमेहास्तु[3] व्यानापानप्रकोपजाः ॥ २० ॥
युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम् ।
अत ऊर्ध्वं[4] प्रवक्ष्यामि नानास्थानान्तराश्रितः ॥ २१ ॥
बहुशः कुपितो वायुर्विकारान् कुरुते हि यान् ॥
वायुरामाशये क्रुद्धश्छर्द्यादीन्[5] कुरुते गदान् ॥ २२ ॥
मोहं मूर्च्छां पिपासां च हृद्ग्रहं पार्श्ववेदनाम् ॥
पक्वाशयस्थोऽन्त्रकूजं शूलं[6] नाभौ करोति च ॥ २३ ॥
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥
श्रोत्रादिष्विन्द्रियवधं कुर्यात् क्रुद्धः समीरणः ॥ २४ ॥
वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमुचुमायनम् ॥
त्वक्स्थो[7] निस्तोदनं कुर्यात् त्वग्भेदं परिपोटनम् ॥ २५ ॥
व्रणांश्च रक्तगो, ग्रन्थीन् सशूलान् मांससंश्रितः ॥
तथा मेदःश्रितः कुर्याद्ग्रन्थीन्मन्दरुजोऽव्रणान् ॥ २६ ॥
कुर्यात् सिरागतः शूलं सिराकुञ्चनपूरणम् ॥
स्नायुप्राप्तः[8] स्तम्भकम्पौ शूलमाक्षेपणं तथा ॥ २७ ॥

---

१ 'चाप्ययम्' इति हा. पा । २ 'वातमूत्रपुरीषाणि शुक्रगर्भार्तवानि च' इति ता. पा । ३ 'शुक्रदोषाः प्रमेहाश्च' इति ता । ४ 'अतः सर्वान् प्रवक्ष्यामि नानास्थानान्तराश्रितान्' इति ता । ५ 'कुर्याच्छर्द्यादिकान् गदान्' इति ता. । ६ 'शूलाध्मानौ' इति ता. । ७ 'त्वक्स्थो निस्तोदन ग्रन्थीन् सरुजान् मांससंश्रित.' इति ता. पा । ८ 'स्नायुप्राप्त. स्नायुजालं स्तम्भयत्याक्षिपत्यपि' इति ता ।

हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ॥
अस्थि[1]शोषं प्रभेदं च कुर्याच्छूलं च तच्छ्रितः ॥ २८ ॥
तथा मज्जगते रुक् च न कदाचित् प्रशाम्यति ॥
अप्र[2]वृत्ति प्रवृत्तिर्वा विकृता शुक्रगेऽनिले ॥ २९ ॥
हस्तपादशिरोधातूंस्तथा संचरति क्रमात् ॥
व्याप्नुयाद्वाऽखिलं देहं वायुः सर्वगतो नृणाम् ॥ ३० ॥
स्तम्भनाक्षेपणस्वापशोफशूलानि सर्व[3]गः ॥
स्थानेषूक्तेषु संमिश्रः संमिश्राः कुरुते रु[4]जः ॥ ३१ ॥
[5]कुर्यादवयवप्राप्तो मारुतस्त्वमितान् गदान् ॥
दाहसंतापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ ३२ ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव क[6]फावृते ॥
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता ॥ ३३ ॥
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ॥
प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥ ३४ ॥
दौर्बल्य सदनं तन्द्रा वै[7]वर्ण्यं च कफावृते ॥
उ[8]दाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥ ३५ ॥
अस्वेदहर्षौ मन्दोऽग्निः शीतस्तम्भौ कफावृते ॥
स[9]माने पित्तसंयुक्ते स्वेददाहौष्ण्यमूर्च्छनम् ॥ ३६ ॥

---

१ 'अस्थिभेद प्रशोषञ्च' इति ता.। २ 'अप्रवृत्ति प्रवृत्तिं वा विकृतां शुक्रगोऽनिलः' इति ता.। ३ 'सर्वश ' इति ता । तथैवाय गयदाससम्मतोऽपि च। ४ 'रुजा ' इति ता । ५ 'कुर्यादवयवस्थश्च मातरिश्वा गदान् बहून्' इति ता । ईदृश एव पाठो गयदासेनापि पठ्यते। ६ 'कफान्विते' इति ता.। ७ 'वैस्वर्यञ्च' इति ता. । ८ 'उदाने पित्तयुक्ते तु मोहमूर्छाभ्रमक्लमाः' इति ता.। ९ 'स्वेददाहौष्ण्यमूर्च्छाःस्यु समाने पित्तसंयुते' इति ता.।

[1]कफाधिकं च विण्मूत्रं रोमहर्षः कफावृते ॥
अपाने पित्तसंयुक्ते दाहौष्ण्ये स्यादसृग्[2]दरः ॥ ३७ ॥
अधःकायगुरुत्वं च तस्मिन्नेवं[3] कफावृते ॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ ३८ ॥
[4]गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम् ॥
लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ॥ ३९ ॥

( प्रायशः सुकुमाराणां मिथ्याऽऽहारविहारिणाम् ॥
रोगा[5]ध्वप्रमदामद्यव्यायामैश्चातिपीडनात् ॥ ४० ॥
ऋतु[6]सात्म्यविपर्यासात् स्नेहादीनां च विभ्रमात् ॥
अव्यवाये[7] तथा स्थूले वातरक्तं प्रकुप्यति ) ॥ ४१ ॥

हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः कोपं[8] यातः कारणैः सेवितैः स्वैः ॥
तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः संतापाद्यैर्भूयसा सेवितैश्च ॥४२॥
क्षिप्रं[9] रक्तं दुष्टिमायाति तच्च वायोर्मार्गं[10] संरुणद्ध्याशु यातः ॥
क्रुद्धोऽत्यर्थं मार्गरोधात् सं[11] वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु ॥ ४३ ॥
तत् संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥
तद्वत् पित्तं दूषितेनासृजाऽऽक्तं श्लेष्मा[12]दुष्टो दूषितेनासृजाऽऽक्तः ४४

---

१ 'कफेन सङ्गो विण्मूत्रे गात्रहर्षश्च जायते' इति ता.। २ 'रक्तमूत्रता' इति ता.। ३ 'शीतता च' इति ता। ४ ताडपत्रपुस्तके एकोनचत्वारिंशत्तमश्लोकस्य पूर्वार्धो नोपलभ्यते, उत्तरार्धस्तु पुनः 'स्तम्भनो दण्डकश्चापि शोथः शूलं कफावृते' इत्येव तत्र पाठभेदेन पठ्यते। ५ 'शोकाच्च प्रमदा०' इति पा०। 'दोषाध्वमद्यप्रमदाव्यायामैश्च प्रपीडनात्' इति ता.। ६ 'ऋतुदेशविपर्यासादसात्म्यानां च भोजनात्' इति ता। ७ 'स्थूलस्याव्यायामवतो वातरक्तं प्रकुप्यति' इति ता.। ८ 'कोपं यायात्' इति ता.। ९ 'शीघ्रं रक्तं विद्रवत्याशु तच्च' इति ता.। १० 'विपन्नं' इति ता.। ११ अयं त्रिचत्वारिंशत्तमश्लोकपादस्ता० पुस्तके नास्ति। १२ अयं चत्वारिंशत्तमश्लोकपादस्ता० पुस्तके नास्ति।

[1]स्पर्शोद्विग्नौ तोदभेदप्रशोषस्वापोपेतौ वातरक्तेन पादौ ॥
पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोफौ मृदू च ॥ ४५ ॥
कण्डूमन्तौ श्वेतशीतौ सशोफौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ॥
[2]सर्वैर्दुष्टे शोणिते चापि दोषाः स्वं स्वं [3]रूपं पादयोर्दर्शयन्ति ॥ ४६ ॥

प्राग्रूपे[4] शिथिलौ स्विन्नौ शीतलौ सविपर्ययौ ॥
वैवर्ण्यतोदसुप्तत्वगुरुत्वौषसमन्वितौ ॥ ४७ ॥

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ ४८ ॥

आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ॥
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥ ४९ ॥

शोणितं तदसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥
यदा[5] तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ॥ ५० ॥

तदाक्षिपत्याशु मुहुर्मुहुर्देहं मुहु[6]श्चरः ॥
मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ ५१ ॥

सोऽपतानकसंज्ञो यः पातयत्यन्तराऽन्तरा ॥
कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥ ५२ ॥

स दण्डवत् स्तम्भयति [7]कृच्छ्रो दण्डापतानकः ॥
हनुग्रहस्तदाऽत्यर्थं सोऽन्नं कृच्छ्रान्निषेवते ॥ ५३ ॥

---

१ 'अस्पर्शोच्छा' इति ता । २ 'सर्वै दुष्टे' इति ता. । 'सर्वं दुष्टा' शोणित चापि' इति गयदाससमत पाठ । ३ 'लिङ्ग' इति ता. । ४ 'शिथिलस्विन्नशीतलौ' इति पा० । ५ 'यदा तु धमनी सर्वा क्रुद्धोऽभ्येति मुहुर्मुहुः ॥ तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृत' ॥ इति वृद्धवाग्भटप्रणीताष्टाङ्गसङ्ग्रहोक्तः पाठः । ६ 'मुहुश्चर.' इति पाठाभावेऽत्रान्ये 'बहिश्चरः' इति पठन्ति, तन्नेच्छति गयदासाचार्य. । ७ 'स तु' इति ता. ।

धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ॥
अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥ ५४ ॥
स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ॥
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥ ५५ ॥
अभ्यन्तरं धनुरिव यदा नमति मानवः ॥
तदा[1]ऽस्याभ्यन्तरायामं कुरुते मारुतो बली ॥ ५६ ॥
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च ॥
तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥ ५७ ॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥
कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥ ५८ ॥
गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ॥
अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ ५९ ॥
[2]अधोगमाः सतिर्यग्गा धमनीरूर्ध्वदेहगाः ॥
यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते ॥ ६० ॥
तदाऽन्यतरपक्षस्य सन्धिबन्धान् विमोक्षयन् ॥
हन्ति पक्षं तमा[3]हुर्हि पक्षाघातं भिषग्वराः ॥ ६१ ॥
य[4]स्य कृत्स्नं शरीरार्धमकर्मण्यमचेतनम् ॥
ततः पतत्यसून् वाऽपि त्य[5]जत्यनिलपीडितः ॥ ६२ ॥

---

१ 'तदा सोऽभ्यन्तरायाम' इति हा० पा० । २ 'अधोगमाश्चोर्ध्वगाश्च तिर्यग्गाश्चानिलो बली ॥ यदा प्रकुपितोऽत्यर्थं धमनीः प्रतिपद्यते ॥' इति ता. पा. । तथा च 'गृहीत्वार्धं तनोर्वायु सिराः स्नायूर्विशोष्य च ॥ पक्षमन्यतर हन्ति सन्धिबन्धान् विमोक्षयन्' ॥ इति वृद्धवाग्भटप्रणीताष्टांगसग्रहोक्तः पाठः । ३ 'तमाहुश्च' इति ता. । ४ 'कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ एकाङ्गरोग त केचित् अन्ये पक्षवध विदुः ॥' इति वृद्धवा. प्र. अ. सं. पाठः । ५ 'जहात्यनिलपीडितः' इति पा० ।

शुद्धवातहतं[1] पक्षं कृच्छ्रसाध्यतमं विदुः ॥
साध्यमन्येन संसृष्टमसाध्यं क्षयहेतुकम् ॥ ६३ ॥
वायुरूर्ध्वं[2] व्रजेत् स्थानात् कुपितो हृदयं शिरः ॥
शङ्खौ च पीडयत्यङ्गान्याक्षिपेन्नमयेच्च सः ॥ ६४ ॥
निमीलिताक्षो निश्चेष्टः स्तब्धाक्षो वाऽपि कूजति ॥
निरुच्छ्वासोऽथवा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः ॥ ६५ ॥
स्वस्थः स्याद्धृदये मुक्ते ह्यावृते तु प्रमुह्यति ॥
कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥ ६६ ॥
दिवास्वप्नासनस्थानविवृताध्वनिरीक्षणैः[3] ॥
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ॥ ६७ ॥
( गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये[4] ॥ )
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ॥
हसतो जृम्भतो[5] भाराद्विषमाच्छयनादपि ॥ ६८ ॥
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ॥
अर्दयित्वाऽनिलो वक्त्रमर्दितं जनयत्यतः ॥ ६९ ॥

---

१ 'शुद्धवाताहत' इति ता.। तथा च 'शुद्धवातहतः पक्ष' कृच्छ्रसाध्यतमोमत ॥ कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः' ॥ इति वृद्धवा प्र अ. स. पाठ । २ एते चतुःषष्टितमपञ्चषष्टितमषट्षष्टितमाः श्लोकास्ता० पुस्तके न पठ्यन्ते । अस्मिन् श्लोकत्रये पठितेऽपतन्त्रकरोगविषय एव वृद्धवाग्भटाचार्य' स्वग्रन्थे 'अथ प्रतिहतो वायुर्व्रजत्यूर्ध्वं हृदाश्रिता ॥ नाडीः प्रविश्य हृदय शिरः शङ्खौ च पीडयन् ॥ आक्षिपेत् परितो गात्र धनुर्वच्चास्य नामयेत् ॥ कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक् ततः ॥ कपोत इव कूजेच्च निःसज्ञ· सोऽपतन्त्रक' ॥' इति पठति । ३ अय सप्तषष्टितमः श्लोकस्ता० पुस्तके नास्ति । तथा च 'दिवास्वप्ना-सन०' इति पाठाभावेऽन्यत्र 'दिवास्वप्नासमस्थानविवृ(कृ)तोर्ध्वनिरीक्षणै' इत्यादि पाठान्तर दृश्यते । ४ अयमर्धश्लोकस्ता० पुस्तके तथा च गयदासेनापि न पठ्यते । ५ 'जृम्भया' इति गयदासानुमतः पाठः ।

वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ॥ ७० ॥
ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥
यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ॥ ७१ ॥
वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥
तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः[1] ॥ ७२ ॥
क्षीणस्यानिमिषाक्षस्य प्रसक्तं[2] सक्तभाषिणः ॥
न सिध्यत्यर्दितं बाढं त्रिवर्षं वेपनस्य च ॥ ७३ ॥
पार्ष्णिप्रत्यङ्गुलीनां[3] तु कण्डरा याऽनिलार्दिता ॥
सक्थ्नः[4] क्षेपं निगृह्णीयाद्गृध्रसीति हि सा स्मृता ॥ ७४ ॥
तलप्रत्यङ्गुलीनां[5] तु कण्डरा बाहुपृष्ठतः ॥
बाह्वोः कर्मक्षयकरी विश्वाचीति हि सा स्मृता ॥ ७५ ॥
वातशोणितजः शोफो जानुमध्ये महारुजः ॥
शिरः[6] क्रोष्टुकपूर्वं तु स्थूलः क्रोष्टुकमूर्धवत् ॥ ७६ ॥
वायुः कट्यां[7] स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥
खञ्जस्तदा भवेज्जन्तुः, पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ ७७ ॥
प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ॥
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ७८ ॥

---

१ 'व्याधिविचक्षणाः' इति ता. । वृद्धवाग्भटेन 'तमर्दितमिति' इत्यादिपाठाभावे स्वग्रन्थे 'तमाहुरर्दित केचिदेकायाममथापरे' इति सविशेषं पठ्यते। २ 'प्रसक्ताव्यक्तभाषिण.' इति ता० पुस्तके तथा च गयदासेन तथा च श्रीहाराणचन्द्रेनापि पठ्यते। ३ 'पार्ष्णि प्रत्यङ्गुलीनां तु' इति पा. । तथा च 'पार्ष्णीप्रत्यङ्गुलीनान्तु' इति हा । ४ 'सक्थ्नो' क्षेप' इति हा । ५ 'तल प्रत्यङ्गुलीनान्तु' इति हा. । ६ 'ज्ञेयः क्रोष्टुकशीर्षेति स्थूलः क्रोष्टुकशीर्षवत्' इति ता. । ७ 'कट्याश्रितः' इति ता. ।

न्यस्ते तु विषमं[1](मे) पादे रुजः कुर्यात् समीरणः ॥
वातकण्टक इत्येष विज्ञेयः खुडुकाश्रितः[2] ॥ ७९ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥
विशेषतश्चङ्क्रमणात्[3] पाददाहं तमादिशेत् ॥ ८० ॥
हृष्यतश्चरणौ यस्य भवतश्च[4] प्रसुप्तवत्[5] ॥
पादहर्षः स विज्ञेय. कफवातप्रकोपजः ॥ ८१ ॥
अंसदेशस्थितो वायुः शोषयित्वांऽसबन्धनम् ॥
सिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम् ॥ ८२ ॥
यदा[6] शब्दवहं स्रोतो वायुरावृत्य तिष्ठति ॥
शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते ॥ ८३ ॥
हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिलः ॥
कर्णयोः कुरुते शूलं कर्णशूलं[7] तदुच्यते ॥ ८४ ॥
आवृत्य सकफो वायुर्धमनीः शब्दवाहिनीः ॥
नरान् करोत्यक्रियकान्मूकमिन्मिणगद्गदान् ॥ ८५ ॥
अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥
भिन्दतीव[8] गुदोपस्थं सा तूनीत्यभिधीयते ॥ ८६ ॥
गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी[9] ॥
वेगैः पक्काशयं[10] याति प्रतितूनीति[11] सा स्मृताः ॥ ८७ ॥

---

१ 'विषमे पादे' इति ता । २ 'खलकाश्रितः' इति ता । तथा च 'खुडकाश्रित.' इति हा० । ३ 'चङ्क्रमत.' इति हा. तथा च ता । ४ 'भवेयाताञ्च सुप्तकौ' इति ता. । ५ 'प्रसुप्तकौ' इति गयदाससमतः पाठ । ६ 'यदा शब्दवह वायुः श्रोत्रमावृत्य तिष्ठति' इति ता । ७ 'कर्णशूलः स उच्यते' इति ता. । ८ 'भिन्दतीव गुदोपस्थौ सा तूनी नाम नामतः' इति ता. । ९ 'प्रतिलोमप्रधाविता' इति ता. । १० 'पक्काशय यावत्' इति ता. । ११ 'प्रतितूणी तु' इति हा० ।

साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥
आध्मानमिति जानीयाद्धोरं वातनिरोधजम् ॥ ८८ ॥
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ॥
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम् ॥ ८९ ॥
अष्ठीलावद्घनं ग्रन्थिमूर्ध्वमायतमुन्नतम् ॥
वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम् ॥ ९० ॥
एनामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ॥
प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ ९१ ॥

इति सुश्रुतसंहितायां निदानस्थाने वातव्याधि-
निदानं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अथातोऽर्शसां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

षडर्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति ॥ ३ ॥

तत्र[1]ानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गोत्कटुका-[2]सनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकुपिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रप-

---

१ 'तत्रानात्मवता यथोक्तै. प्रकोपणैः प्रकुपिता दोषा एकशो द्वन्द्वशः समस्ताः शोणितसहिता वा यथोक्त प्रसृता विशेषतो मन्दाग्नेः प्रधानधमनीरनुप्रपद्याधो गत्वा गुदमागम्य प्रदूष्य गुदवलीर्मांसप्ररोहकन्दाञ्जनयन्ति तथा तृणकाष्ठोपललोष्ठवस्त्रादिभिः कन्दाः परिवृद्धिमासादयन्ति तान्यर्शांसीत्याचक्षते' इति ता. पा.। २ '°उत्कटकासन०' इति हा० पा०।

श्चाधो गत्वा गुदमागम्य प्रदूष्य गुदवलीर्मांसप्ररोहाञ्जनयन्ति विशेषतो मन्दाग्नेः, तथा तृणकाष्ठोपललोष्ठवस्त्रादिभिः शीतोदकसंस्पर्शनाद्वा कन्दाः परिवृद्धिमासादयन्ति, तान्यर्शांसीत्याचक्षते ॥ ४ ॥

तत्र स्थूलान्त्रप्रतिबद्धमर्धपञ्चाङ्गुलं गुदमाहुः, तस्मिन् वलयस्तिस्रोऽध्यर्धाङ्गुलान्तरसंभूताः प्रवाहणी विसर्जनी संवरणी चेति चतुरङ्गुलायताः; सर्वास्तिर्यगेकाङ्गुलोच्छ्रिताः ॥ ५ ॥

शङ्खावर्तनिभाश्चापि उपर्युपरि संस्थिताः ॥
गजतालुनिभाश्चापि वर्णतः संप्रकीर्तिताः ॥
रोमान्तेभ्यो यवाध्यर्धो गुदौष्ठः परिकीर्तितः ॥ ६ ॥
प्रथमा तु गुदौष्ठादङ्गुलमात्रे ॥ ७ ॥

तेषां तु भविष्यतां पूर्वरूपाणि—अन्नेऽश्रद्धा कृच्छ्रात् पक्तिरम्लीका परिदाहो विष्टम्भः पिपासा सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोः श्वयथुरन्त्रकूजनं गुदपरिकर्तनमाशङ्का पाण्डुरोगग्रहणीदोषशोषाणां कासश्वासौ बलहानिर्भ्रमस्तन्द्रा निद्रेन्द्रियदौर्बल्यं च ॥८॥

जातेष्वेतान्येव लक्षणानि प्रव्यक्ततराणि भवन्ति ॥ ९ ॥

तत्र मारुतात् परिशुष्कारुणविवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाडीमुकुलसूचीमुखाकृतीनि च भवन्ति; तैरुपद्रुतः सशूलं संहतमुपवेश्यते, कटीपृष्ठपार्श्वमेढ्रगुदनाभिप्रदेशेषु चास्य वेदना

१ 'वस्त्रादिसङ्घर्षणादभीक्ष्ण शीतोदकसंस्पर्शनाद्वा कन्दान् परिवृद्धानुत्पादयन्ति तान्यर्शांसीत्याचक्षते' इति हा पा । २ 'तिस्रोऽध्यर्धाङ्गुलान्तरभूताः' इति हा. पा. । तथा च 'तिस्रोऽध्यर्धाङ्गुलसम्मिता.' इति पाठान्तरम् । ३ 'चतुरङ्गुला', ता सर्वा ' इति पा । ४ 'अन्ने न श्रद्धा' इति ता. । ५–६–७ ता० पुस्तके भविष्यतामर्शसा पूर्वरूपेषु 'परिदाह' 'पिपासा' 'अन्त्रकूजन' इति पूर्वरूपाणि नोपलभ्यन्ते । ८ 'ग्रहणीशोषोदराणाम्' इति पा० । ९ 'तन्द्रा' इति 'निद्रा' इति च द्वे पूर्वरूपे ता० पुस्तके न पठ्येते । १० 'नाडीमुख' इति पा. ।

भवन्ति, गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति, कृष्ण[1]त्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १० ॥

पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति; तैरुपद्रुतः सदाहं सरुधिरमतिसार्यते, ज्वर[2]दाहपिपासामूर्च्छाश्चास्योपद्रवा भवन्ति, पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ ११ ॥

श्लेष्मजानि श्वे[3]तानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पा[4]ण्डूनि करीरपनसास्थिगोस्तनाकाराणि, न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति; तैरुपद्रुतः सं[5]श्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्यते, शोफशीतज्वरारोचकाविपाकशिरोगौ[6]रवाणि चास्य तन्निमित्तान्येव भवन्ति, शु[7]क्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १२ ॥

रक्तजानि न्यग्रोधप्ररोहविद्रुमका[8]कणन्तिकाफलसदृशानि पित्तलक्षणानि च, यदाऽवगाढपुरीषपीडि[9]तानि भवन्ति तदाऽस्यर्थं दुष्टमनल्पमसृक् सहसा विसृजन्ति, तस्य चातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति ॥ १३ ॥

सन्निपातजानि स[10]र्वदोषलक्षणयुक्तानि ॥ १४ ॥

---

१ 'कृष्णनखनयनवदनमूत्रपुरीषवर्णश्च पुरुषो भवति' इति ता । २ 'दाहज्वरपिपासा मूर्च्छाश्चास्योपद्रवा भवन्ति तन्निमित्तान्येव, पीतनखनयनवदनमूत्रपुरीषवर्णश्च पुरुषो भवति' इति ता. । ३ ता० पुस्तकेऽस्मिन्स्थले 'श्वेतानि' इति पद नोपलभ्यते । ४ 'पाण्डूनि शुक्लावभासानि करीर°' ता. पा० । ५ 'सश्लेष्मकमनल्पमाम वसामद'प्रकाशमतिसार्यते' इति ता. । ६ '°शिरोगौरवगात्रसदनानि चास्य' इति ता. । ७ 'शुक्लनखनयन°' इति ता. । ८ '°काकणन्तिकाफलान्यतमवर्णसंस्थानानि' इति गयदाससमतः पाठः । ९ '°प्रपीडितानि' इति ता. पा० । १० 'सर्वलक्षणानि युक्तानि' इति गय० पा० ।

सहजानि दुष्टशोणितशुक्रनिमित्तानि, तेषां दोषत एव प्रसाधनं कर्तव्यं, विशेषतश्चैतानि दुर्दर्शनानि परुषाणि पांसूनि दारुणाभ्यन्तर्मुखानि; तैरुपद्रुतः कृशोऽल्पभुक् सिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निप्राणः परमलसश्च, तथा घ्राणशिरोऽक्षिनासाश्रवणरोगी, सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥ १५ ॥

भवति चात्र—

बाह्यमध्यवलिस्थानां प्रतिकुर्याद्भिषग्वरः ॥
अन्तर्वलिसमुत्थानां प्रत्याख्यायाचरेत् क्रियाम् ॥ १६ ॥

प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति, ततः कण्डूयनात् क्षतं समुपजायते, तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्चकिनोऽभ्यन्तरमुपरिष्टाद्वा, ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वं; योनिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान् करीराञ्जनयन्ति, ते तु योनिमुपघ्नन्त्यार्तवं च; नाभिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलान् गण्डूपदमुखसदृशान् करीराञ्जनयन्ति; त एवोर्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शास्युपनिर्वर्तयन्ति; तत्र कर्णजेषु बाधिर्यं शूलं पूतिकर्णता च, नेत्रजेषु वर्त्मावरोधो वेदना स्रावो दर्शननाशश्च, घ्राणजेषु प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिक-

---

१ 'प्रसादन कर्तव्य, विशेषतश्चात्र दुर्दर्शनानि' इति ता. तथा च हा० । २ 'पासूनि' इत्यभावे 'पाण्डूनि' इति हा० पा० । ३ 'क्षामस्वरः क्रोधनः' इत्यादि 'पीड्यते इत्यन्त पाठस्ता० पुस्तके नास्ति । ४ 'अल्पाग्निप्राणः' इत्यभावे 'अल्पाग्नि०' इत्येव हाराणचन्द्रेण सन्दीपनभाष्ये पठ्यते । ५ 'तस्मिन्कण्डूकृते क्षते' इति ता. । ६ 'शेफ' इति ता. । ७ 'दुर्गन्धिपिच्छिलास्रस्राविण°' इति ता. । ८ 'प्ररोहान्' इति ता. । ९ '°पजनयन्ति' इति ता. ।

वाक्यत्वं शिरोदुःखं च; वक्त्रजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्तैर्गद्गद्वाक्यता रसाज्ञानं[1] मुखरोगाश्च भवन्ति ॥ १७ ॥

व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य बहिः स्थिराणि कीलवद्[2]-र्शांसी निर्वर्तयति, तानि चर्मकीलान्यर्शांसीत्याचक्षते ॥ १८ ॥

भवन्ति चात्र—

तेषु[3] कीलेषु निस्तोदो मारुतेनोपजायते ॥
श्लेष्मणा तु सवर्णत्व ग्रन्थित्वं[4] च विनिर्दिशेत् ॥ १९ ॥
पित्त[5]शोणितजं रौक्ष्यं कृष्णत्वं श्लक्ष्णता तथा ॥
समुदीर्णस्वरत्व च चर्मकीलस्य लक्षणम् ॥ २० ॥
अर्शांसि[6] लक्षणं व्यासादुक्तं सामान्यत[7]स्तु यत् ॥
तत्सर्वं प्राग्विनिर्दिष्टात्साधयेद्भिषजां वरः ॥ २१ ॥
अर्शःसु दृश्यते रूपं यदा[8] दोषद्वयस्य तु ॥
संसर्गं तं विजानीयात् संसर्गः स च षड्विधः ॥ २२ ॥
त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत् ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥ २३ ॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥
सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥ २४ ॥
सर्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः ॥
तैस्तु प्रतिहतो वायुरपानः सन्निवर्तते ॥ २५ ॥
ततो व्यानेन सङ्गम्य ज्योति[9]र्मृद्नाति देहिनाम् ॥ २६ ॥

इति सुश्रुतसंहितायां निदानस्थानेऽर्शोनिदानं नाम
द्वितीयोऽध्याय ॥ २ ॥

---

१ 'रसावरोधो' इति ता. । २ 'कीलवदर्शोऽभिनिर्वर्तयति, त चर्मकीलमित्याचक्षते' इति ता० पा० । ३ 'तस्य' इति ता. । ४ 'ग्रथितत्वञ्च निर्दिशेत्' इति ता. । ५ 'पित्तशोणितज कृष्णरक्तत्व स्निग्धता तथा' इति हा० पा० । ६ 'दुर्नाम्नां लक्षण ह्येतदुक्त संक्षेपतस्तु यत्' इति ग० यदाससमत-पाठः । ७ 'सक्षेपतस्तु' इति पा० । ८ 'यदा वै दोषयोर्द्वयोः' इति ता. । ९ 'ज्योतिरस्य प्रमर्दति' इति ता. ।

# तृतीयोऽध्यायः ।

अथातोऽश्मरीणां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

चतस्रोऽश्मर्यो भवन्ति; श्लेष्माधिष्ठानाः; तद्यथा—श्लेष्मणा, वातेन, पित्तेन, शुक्रेण चेति ॥ ३ ॥

तत्रा[1]संशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य बस्तिमश्मरीं जनयति ॥ ४ ॥

तासां[2] पूर्वरूपाणि—ज्वरो बस्तिपीडारोचकौ मूत्रकृच्छ्रं बस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रा[3]वसादो बस्तगन्धित्वं मूत्रस्येति ५

यथास्ववेदनावर्णं दुष्टं सान्द्रमथाविलम् ।
पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः[4] ॥ ६ ॥

अथ जातासु नाभिबस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणं गोमेदकप्रकाशमत्या[5]विलं ससिकतं विसृजति; धावनलङ्घनप्लवनपृष्ठयानोष्णाध्वगमनैश्चास्य वेदना भवन्ति[6] ॥ ७ ॥

तत्र[7] श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्र-

---

१ 'तत्रापथ्यसेविनः श्लेष्मा मूत्रेण संसृष्टोऽनुप्रविश्य बस्तिमश्मरी जनयति' इति ता.। २ 'तत्र ज्वरो बस्तिपीडाऽरोचको मूत्रकृच्छ बस्तिशिरसि वेदना शेफसि मुष्कयोश्च बस्तगन्धि मूत्रं च इति सामान्य पूर्वरूप सर्वासामेव' इति ता.। ३ 'कृच्छ्राज्ज्वरावसादौ' इति हाराणचन्द्रः पठति, 'कृच्छ्रान्मूत्रकृच्छ्राद्धेतोर्बस्तिशिरःप्रभृतीनां वेदनेति सबन्धः' इति च व्याख्यानयति। ४ अयं षष्ठः श्लोकस्ताडपत्रपुस्तके न पठ्यते। ५ 'अनाविलं' इति हाराणचन्द्रसमतः पाठः। ६ अयं सामान्यलक्षणपाठस्ताडपत्रपुस्तके न पठ्यते। ७ 'तत्रात्यर्थं श्लेष्मलमन्नमभ्यसतः' इति ताडपत्रपुस्तके पाठः।

प्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च बस्तिर्गुरुः[1] शीतश्च भवति; अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा[2] वा भवति, तां श्लैष्मिकीमिति[3] विद्यात् ॥ ८ ॥

पित्तयुतस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतिघाताद्दूष्यते चूष्यते दह्यते पच्यत इव बस्तिरुष्णवातश्च[4] भवति; अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति, तां पैत्तिकीमिति विद्यात् ॥ ९ ॥

वातयुतस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातात्तीव्रा वेदना भवति, तदाऽत्यर्थं पीड्यमानो दन्तान् खादति, नाभिं पीडयति, मेढ्रं प्रमृद्नाति, पायुं स्पृशति, विशर्धते, विदहति, वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति; अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति; तां वातिकीमिति विद्यात् ॥ १० ॥

प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति; तेषामेवाल्पबस्तिकायत्वादनुपचितमांसत्वाच्च[5] बस्तेः सुखग्रहणाहरणा भवन्ति। महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति ॥ ११ ॥

मैथुनविघातादतिमैथुनाद्वा[6] शुक्रं चलितमनिर्गच्छद्विमार्गगमना-[7]

---

१ 'बस्तिर्गुरुर्भवति' इति ता. पा.। २ 'मधुवर्णा' इति ता. पा.। ३ 'श्लेष्माश्मरीमिति विद्यात्' इति ता. पा० ४ 'बस्तिरुष्णश्च भवति' इति ता. पा०। ५ 'अमासोपचयाच्च' इति ता.। ६ 'मैथुनाभिघाताच्छुक्रं' इति ता। तथा च 'मैथुनाभिघातादतिमैथुनाद्वा' इति हा०। ७ शुक्रमुपस्थितमनिर्गच्छत्' इति ता.। तथा च 'शुक्र चलितमनिर्गलत्' इति पा०।

दनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति, संहृत्य चोपशोषयति; सा [1]मूत्रमार्गमावृणोति, मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति, पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते; तां शुक्राश्मरीमिति विद्यात् ॥ १२ ॥

भवन्ति चात्र—

[2]शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम् ॥
अश्मर्या शर्करा ज्ञेया तुल्यव्यञ्जनवेदना ॥ १३ ॥
पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः ॥
सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते ॥ १४ ॥
हृत्पीडा सक्थिसदनं कुक्षिशूलं च वेपथुः ॥
तृष्णोर्ध्वगोऽनिलः कार्ष्ण्यं दौर्बल्यं पाण्डुगात्रता ॥ १५ ॥
अरोचकाविपाकौ तु शर्करार्ते भवन्ति च ॥
मूत्रमार्गप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ १६ ॥
दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम् ॥
पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥ १७ ॥
नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् ॥
एकद्वारस्तनुत्वक्को मध्ये बस्तिरधोमुखः ॥ १८ ॥
[3]बस्तिर्बस्तिशिरश्चैव पौरुषं वृषणौ गुदः ॥
एकसंबन्धिनो ह्येते [4]गुदास्थिविवराश्रिताः ॥ १९ ॥
[5]अलाब्वा इव रूपेण [6]सिरास्नायुपरिग्रहः ॥

---

१ 'मूत्रमार्गमावृत्य मूत्रकृच्छ्रं बस्तिशिरसि वेदना शेफसि मुष्कयोश्च श्वयथुमुत्पादयति' इति ता. । २ त्रयोदशश्लोकादारभ्य सप्तदशश्लोकपर्यन्तः पाठस्ता० पुस्तके नास्ति । ३ 'बस्तिर्बस्तिशिरश्चैव पौरुष वृषणौ गुदम् ॥ एकसम्बधिनो ह्येते गुदास्थिविवराश्रिता॰' इत्ययं श्लोकस्ता० पुस्तके नास्ति । ४ 'गुदास्थिविवरस्थिताः' इति हा० पा० । ५ 'अलाब्वाः समसंस्थान॰' इति गयदाससमतः पाठः । ६ 'शिरास्नायुभिरावृतः' इति ता० पा० ।

मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥ २० ॥
पक्काशयगतास्तत्र[1] नाड्यो मूत्रवहास्तु याः ॥
तर्पयन्ति सदा[2] मूत्रं सरितः सागरं यथा ॥ २१ ॥
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः ॥
नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ॥ २२ ॥
जाग्रतः स्वपतश्चैव[3] स निःस्यन्देन पूर्यते ॥
आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः ॥ २३ ॥
घटो[4] यथा तथा विद्धि बस्तिर्मूत्रेण पूर्यते ॥
एवमेव[5] प्रवेशेन वातः पित्तं कफोऽपि वा ॥ २४ ॥
मूत्रयुक्तमुपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ॥
अप्सु[6] स्वच्छा(स्था) स्वपि यथा निषिक्तासु नवे घटे ॥
कालान्तरेण पङ्कः स्यादश्मरीसंभवस्तथा ॥
संहन्त्यापो[7] यथा दिव्या मारुतोऽग्निश्च वैद्युतः ॥ २६ ॥
तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति सानिलः ॥
मारुते प्रगुणे बस्तौ मूत्रं सम्यक् प्रवर्तते ॥
विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥ २७ ॥
मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च ॥
मूत्रदोषाश्च ये केचिद्बस्तावेव भवन्ति हि ॥ २८ ॥

इति सुश्रुतसंहितायां निदानस्थानेऽश्मरीनिदानं
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

१ एकविंशतितमः श्लोकस्तथा द्वाविंशतितमश्लोकस्य पूर्वार्धश्च ता० पुस्तके न वर्तेते। २ 'सदा' इत्यभावे 'तु ता' इति ता० पा०। ३ 'स्वपतो वापि' इति ता० पा०। ४ 'नवे घटे यथावद्धि बस्तिर्मूत्रस्य पूर्यते' इति ता० पा०। ५ 'एतेनैव तु कल्पेन' इति ता० पा० ६ 'अप्सु स्वच्छास्वपि यथा निषिक्तासु नवे मणौ ॥ भवेत्कालान्तरात्पङ्कस्तद्वदश्मरिसंभवः' इति ता० पा०। ७ 'सहत्यापो यथा दिव्या' इति ता० पा०

# चतुर्थोऽध्यायः ।

अथातो भगन्दराणां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्तोन्मार्गिणो यथासंख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदबस्तिप्रदेशदारणाच्च 'भगन्दरा' इत्युच्यन्ते । अभिन्नाः[1] पिडकाः भिन्नास्तु भगन्दराः ॥ ३ ॥

तेषां[2] तु पूर्वरूपाणि—कटीकपालवेदना कण्डूर्दाहः शोफश्च गुदस्य भवति ॥ ४ ॥

तत्रापथ्यसेविनां वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदम[3]भितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिडकां जनयति, साऽस्य तोदादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, मूत्राशयाभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवदणुमुखैश्छिद्रैरापूर्यते, तानि च छिद्राण्यजस्रमच्छं फेना[4]नुविद्धमधिकमास्रावं स्रवन्ति, व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते, गुदं[5] चावदीर्यते, उपेक्षिते[6] च वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव छिद्रैर्भवति; तं भगन्दरं शतपोनकमित्याचक्षते ॥ ५ ॥

---

१ 'अपक्वाः पिडकाः पक्वास्तु भगन्दराः' इति हा० पा० 'अभिन्नाः पिडकाः, भिन्नास्तु भगन्दरा' इति ता० पा० । २ 'तेषां पूर्वरूपं गुदकण्डूदाहशोफा गुदायामश्चेति सर्वेषां सामान्यम्' इति गयदाससमतः पाठः । ३ 'गुदमभिगतोगुदद्वारादङ्गुलेद्व्यङ्गुले त्र्यङ्गुले वा मांसशोणितमभिप्रदूष्य°' इति ता० पा० । ४ 'फेनानुविद्धमास्रावं प्रवहन्ति' इति ता० पा० । ५ 'गुदश्चावदीर्यते' इति ता० पा० । ६ 'उपेक्षिते च' इत्ययं वाक्यावयवस्ता० पुस्तके नास्ति ।

पित्तं तु[1] प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं[2] रक्तां तन्वीमुच्छ्रिता[3]मुष्ट्रग्रीवाकारां पिडकां जनयति, साऽस्य चोषादीन् वेदनाविशेषाञ्जनयति; अप्रतिक्रियमाणा च पाकमुपैति; व्रणश्चाग्निक्षाराभ्यामिव दह्यते, दुर्गन्धमुष्णमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥ ६ ॥

श्लेष्मा तु[4] प्रकुपितः समीरणेनाधः प्रेरितः पूर्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति, साऽस्य कण्ड्वादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च कठिनः संरम्भी[5] कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरं परिस्राविणमित्याचक्षते ॥ ७ ॥

वायुः प्रकुपितः प्रकुपितौ[6] पित्तश्लेष्माणौ परिगृह्याधो गत्वा पूर्ववदवस्थितः पादाङ्गुष्ठाग्रप्रमाणां सर्वलिङ्गां पिडकां[7] जनयति, साऽस्य तोददाहकण्ड्वादीन् वेदनाविशेषाञ्जनयति[8] अप्रतिक्रियमाणा च पाकमुपैति[9], व्रणश्च नानाविधवर्णमास्रावं स्रवति, पूर्णनदीशम्बूकावर्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः; तं भगन्दरं शम्बूकावर्तमित्याचक्षते ॥ ८ ॥

---

१ 'तु' इत्यव्ययमस्मिन्स्थले ता० पुस्तके नास्ति । २ 'पूर्ववदेवावस्थितम्' इति ता० पा० । ३ "°मुच्छिताग्रा°" इति ता० पा० । ४ 'तु' इत्यव्ययमस्मिन्स्थले ता० पुस्तके नास्ति । ५ 'ससंरम्भः कण्डूप्रायः पिच्छिलमास्राव स्रवति' इति ता० पा० । ६ 'प्रकुपितौ तु' इति ता. । ७ 'पिटका जनयन्ति' इति ता. । ८ 'वेदनाविशेषानुपजनयन्ति' इति ता. । ९ 'पाकं गच्छन्ति' इति ता० पा० ।

मूढेन[1] मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदाऽवगाढपुरीषोन्मिश्रमपानेनाधः प्रेरितमसम्यगागतं गुदमपक्षिणोति तदा[2] क्षतनिमित्तः कोथ उपजायते, तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः संजायन्ते, ते भक्षयन्तो गुदमनेकधा पार्श्वतो[3] दारयन्ति, तस्य[4] तैर्मार्गैः कृमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिःसरन्ति तं भगन्दरमुन्मार्गिणमित्याचक्षते ॥ ९ ॥

भवन्ति चात्र—

उत्पद्यतेऽल्परुक्[5] शोफात् क्षिप्रं चाप्युपशाम्यति ॥
पायवन्तदेशे पिडका सा ज्ञेयाऽन्या भगन्दरात् ॥ १० ॥
पायोः स्याद् द्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा ॥
भागन्दरीति विज्ञेया पिडकाऽतो विपर्ययात् ॥ ११ ॥
यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान् ॥
पायुर्भवेद्रुजः कट्यां पूर्वरूपं भगन्दरे ॥ १२ ॥
घोराः साधयितुं दुःखाः सर्व एव भगन्दराः ॥
तेष्[6]वसाध्यस्त्रिदोषोत्थः क्षतजश्च भगन्दरः ॥ १३ ॥

इति सुश्रुतसंहितायां निदानस्थाने भगन्दरनिदानं
नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

१ 'मूढेन तु सास्थिशल्यमभ्यवहृत यदा गाढपुरीषो०' इति ता० पा०। २ 'तदा तत्र क्षतनिमित्ताद्गतिरुपजायते' इति ता० पा०। ३ 'पार्श्वतोऽवदारयन्ति' इति ता० पा०। ४ 'तस्य तैश्च कृमिकृतैर्मार्गैर्वातमूत्रपुरीषरेतासि प्रपद्यन्ते' इति ता० पा०। ५ 'उत्पद्यतेऽल्परुक्शोफा क्षिप्र' इति हा० पा०। ६ 'असाध्यस्तु त्रिदोषोत्थः' इति पाठान्तरम्।

## पञ्चमोऽध्यायः ।

अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मिथ्या[1]हाराचारस्य विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसाऽभीक्ष्णमश्नतो यो वा मज्जत्यप्सूष्माभितप्तः सहसा छर्दिं वा प्रतिहन्ति, तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्यग्गाः सिराः सं[2]प्रपद्य समुद्धूय बाह्यं मार्गं प्रति समन्ताद्विक्षिपति, यत्र यत्र च दोषो विक्षिप्तो नि[3]श्चरति तत्र तत्र मण्डलानि प्रादु[4]र्भवन्ति, एवं समुत्पन्नस्त्वचि दोषस्तत्र तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं [5]प्रतिपद्यते धातूनभिदूषयन् ॥ ३ ॥

तस्य पूर्वरूपाणि—त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः स्वे[6]दबाहुल्यमस्वेदनं वाऽङ्गप्रदेशानां स्वापः क्षतविसर्पणमसृजः कृष्णता चेति ॥ ४ ॥

तत्र सप्त महाकुष्ठानि, एकादश क्षुद्रकुष्ठानि, एवमष्टादश कु[7]ष्ठानि भवन्ति । तत्र महाकुष्ठान्यरुणोदुम्बरर्ष्य(र्क्ष)जिह्वकपालका[8]र्कणकपुण्डरीकदद्रुकुष्ठानीति । क्षु[9]द्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं

---

१ 'मिथ्याहाराचारस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिल' इत्यादि ता० पा० । २ 'सम्प्रतिपद्य' इति हा० पा० । 'सम्प्रपद्य' इति ता० पा० ३ 'निःसरति' इति हा० पा० । 'निश्चरति' इति ता० पा० । ४ 'भवन्ति' इति ता० पा० । तथा च 'भवन्ति' इति क्रियापदानन्तर 'एव समुत्पन्नस्त्वचि दोषस्तत्र तत्र च' इत्यय वाक्यावयवस्ता० पुस्तके नास्ति ५ 'अनुप्राप्तो धातून् विदूषयति' इति ता० पा० । ६ 'स्वेदबहुत्वमस्वेदन सुप्तत्वमङ्गानामसृक्कृष्णता च' इति ता० पा० । ७ 'कुष्ठानि' इति पद ता० पुस्तके नास्ति । ८ '°काकणकपुण्डरीकानि दद्रुकुष्ठं चेति' इति ता० पा० । ९ 'क्षुद्रकुष्ठानि तु' इति ता० पा० ।

चर्मदलं विसर्पः परिसर्पः सिध्मं विचर्चिका किटिभं(मं) पामा रकसा चेति ॥ ५ ॥

सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्ति, उत्सन्नतस्तु[1] दोषग्रहणमभिभवात् ॥ ६ ॥

तत्र वातेनारुणं, पित्तेनोदुम्बरर्ष्य(क्ष)जिह्वकपालकाकणकानि, श्लेष्मणा पुण्डरीकं दद्रुकुष्ठं चेति । तेषां महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशादसाध्यत्वं चेति ॥ ७ ॥

तत्र वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि[2] । पित्तेन पक्वोदुम्बरफलाकृतिवर्णान्यौदुम्बराणि[3], ऋष्य(क्ष) जिह्वाप्रकाशानि खराणि ऋष्य(क्ष)जिह्वानि[4], कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि, काकणान्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकानि[5]; तेषां चतुर्णामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि । श्लेष्मणा पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि, अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिडकावन्ति च दद्रुकुष्ठानि, तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वं चेति सामान्यानि रूपाणि ॥ ८ ॥

क्षुद्रकुष्ठान्यत ऊर्ध्वं वक्ष्यामः—

[6]स्थूलानि सन्धिष्वतिदारुणानि स्थूलारुषि स्युः कठिनान्यरूंषि ॥
त्वक्कोचभेदस्वपनाङ्गसादाः कुष्ठे महत्पूर्वयुते भवन्ति[7] ॥ ९ ॥

---

१ 'उत्पन्नस्य तु' इति ता० पा० । २ 'तोदस्वापयुक्तान्यरुणानि' इति ता० पा० । ३ 'पक्वोदुम्बरवर्णान्यौदुम्बराणि' इति ता० पा० । ४ 'ऋष्यजिह्वेव खराणि' इति ता० पा० । तथा च 'ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि' इति ह्रा० पा० । ५ 'काकणन्तिकाफलसदृशान्यतीव रक्तानि पच्यन्ते च कृष्णानि काकणकानि' इति ता० पा० । ६ 'अरु कुष्ठं स्थूलमूलान्यरुंषि सञ्जायन्ते सन्धिषु दारुणानि' इति ता० पा० । ७ 'महाकुष्ठे सर्वदेहे भवन्ति त्वक्सङ्कोचस्वेदभेदाङ्गदाहाः' इति ता० पा० ।

कृष्णारुणं[1] येन भवेच्छरीरं तदेककुष्ठं प्रवदन्ति कुष्ठम् ॥
स्युर्येन कण्डूव्यथनौषचोषास्तलेषु तच्चर्मदलं[2] वदन्ति ॥ १० ॥
विसर्पवत् सर्पति सर्वतो यस्त्वग्रक्तमांसान्यभिभूय शीघ्रम् ॥
मूर्च्छाविदाहारतितोदपाकान् कृत्वा विसर्पः[3] स भवेद्विकारः ११
शनैः शरीरे पिडका. स्रवन्त्यः सर्पन्ति यास्तं परिसर्पमाहुः[4] ॥
कण्डून्वितं श्वेतमपायि सिध्म[5] विद्यात्तनु[6] प्रायश ऊर्ध्वकाये ॥१२
राज्योऽतिकण्डूर्तिरुजः सरूक्षा भवन्ति गात्रेषु विचर्चिकायाम्[7] ॥
कण्डूमती दाहरुजोपपन्ना विपादिका पादगतेयमेव ॥ १३ ॥
यत् स्रावि वृत्तं घनमुग्रकण्डु तत् स्निग्धकृष्णं किटिभं(म)वदन्ति
सास्रावकण्डूपरिदाहकाभिः पामाऽणुकाभिः[8] पिडकाभिरूह्या १४
स्फोटैः सदाहैरति सैव कच्छूः स्फिक्पाणिपादप्रभवैर्निरूप्या ॥
कण्डून्विता या पिडका शरीरे संस्रावहीना रकसोच्यते[9] सा १५
अरुः[10] ससिध्मं रकसा महच्च यच्चैककुष्ठं कफजान्यमूनि ॥
वायोः प्रकोपात् परिसर्पमेकं शेषाणि पित्तप्रभवाणि विद्यात् १६

---

१ 'कृष्णो देहो यस्य कृष्णारुणो वा तच्चैकाख्य कुष्ठमाहुः सुकष्टम्' इति ता० पा०। २ 'कण्डूचोषौ तोददाहौ तु यस्य काले चास्मिन् चर्मदल वदन्ति' इति ता० पा०। ३ 'वैसर्प स्यात् सर्वत सर्पणात्तु त्वग्रक्तादीन् व्याप्य भावान् सुशीघ्रम्' इति ता० पा०। ४ 'यस्मिन् स्फोटाः स्राववन्तस्तमाहुः पारीसर्प तच्छनैः सर्पमाणम्' इति ता० पा०। ५ 'स्वच्छश्वेत कण्डुमच्चापि सिध्मं परिध्वसि प्रायशश्चोर्ध्वकाये' इति ता० पा०। ६ 'तनोः' इति पा०। ७ 'पाणी पादौ दारुणौ यस्य रुक्षौ सोषा कण्डू· सा विचर्चिः प्रदिष्टा' इति ता० पा०। ८ 'सूक्ष्मा बह्वय पिडकाः स्राववत्यः पामेत्युक्ताः कण्डुमत्य· सदाहाः ॥ सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेयाः पाण्योः कच्छुरुग्रा स्फिचोश्च' इति ता० पा०। ९ 'कृत्स्ने देहे पिडकाः कण्डुमत्यः सैवास्रावा रकसेत्युच्यते तु' इति ता० पा०। १० 'तत्रारुष्क राकस यच्च सिध्म कफाधिक्यादेककुष्ठ महच्च ॥ पित्ताधिक्यात् परिसर्प तु विद्याद्दृष्टस्त्वेव कुष्ठवर्ग स्त्रिदोषः' इति ता० पा०।

किलासमपि कुष्ठविकल्प[1] एव; तत्त्रिविधं—वातेन, पित्तेन, श्लेष्मणा चेति । कुष्ठकिलासयोरन्तरं—त्वग्गतमेव किलासमपरिस्रावि च । तद्वातेन मण्डलमरुणं परुषं[2] परिध्वंसि च, पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहं च, श्लेष्मणा श्वेतं स्निग्धं बहलं[3] कण्डूमच्च । तेषु[4] संबद्ध-मण्डलमन्तेजातं रक्तरोम चासाध्यमग्निदग्धं च ॥ १७ ॥

कुष्ठेषु[5] तु त्वक्संकोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन, पाकावदरणाङ्गुलिपतनकर्ण[6]नासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन, कण्डूवर्णभेदशोफास्रावगौरवाणि[7] श्लेष्मणा ॥ १८ ॥

तत्रादिबलप्रवृत्तं पौण्डरीकं काकणं चासाध्यम्[8] ॥ १९ ॥

भवन्ति[9] चात्र—

यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम्[10] ॥
अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्धितैः ॥ २० ॥
एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः ॥
क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः ॥ २१ ॥
स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते ॥
वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि[11] समाश्रिते ॥ २२ ॥

---

१ 'कुष्ठविकार एव' इति ता० पा० । २ 'परुष' इति पद ता० पुस्तके नोपलभ्यते । ३ 'बहल' इति पद ता० पुस्तके नोपलभ्यते । ४ 'तत्र सम्बद्धमण्डलमन्तेजात रक्तरोम्गाञ्चासाध्यम् । साध्यमग्निदग्धञ्च' इति ता० पा० । ५ 'तत्र कुष्ठेपु तु त्वक्संकोचस्वेदशोफस्वापभेदकौण्यस्वरोपघाता वातेन' इति ता० पा० । ६ 'कर्णनासाभङ्गाक्षिरागा· शीघ्रोत्पत्तयः पित्तेन' इति ता० पा० । ७ कफकुष्ठलक्षणानामन्यतम लक्षणं यत् 'गौरवं' तत् ता० पुस्तके न पठित दृश्यते । ८ 'चासाध्यमिति' इति ता० पा० । ९ 'भवतश्चात्र श्लोकौ' इति ता० पा० । १० 'कालक्रमेण तु' इति ता० पा० । ११ 'त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्य च जायते' इति ता० पा० ।

त्वक्स्वापो[1] रोमहर्षश्च स्वेदस्याभिप्रवर्तनम् ॥
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥ २३ ॥
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ॥
तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते ॥ २४ ॥
दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ॥
गात्राणां भेदनं चापि कुष्ठे मेदःसमाश्रिते ॥ २५ ॥
नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसंभवः ॥
भवेत्[2] स्वरोपघातश्च ह्यस्थिमज्जसमाश्रिते ॥ २६ ॥
[3]कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ॥
शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ २७ ॥
स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः ॥
यदपत्यं तयोर्जातं[4] ज्ञेयं तदपि कुष्ठितम् ॥ २८ ॥
कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ॥
मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ॥ २९ ॥
[5]ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः ॥
कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम् ॥ ३० ॥
म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ॥
नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्तितम् ॥ ३१ ॥
आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम् ॥

---

१ 'त्वक्स्रावो —' इति ता० पा० । २ 'स्वरोपघातश्च भवेत्' इति ता० पा० । ३ 'कौण्य गतिक्षयोऽङ्गानां' इत्यादिसप्तविंशतितमः श्लोकस्ता० पुस्तके नोपलभ्यते । ४ 'भवेज्जातं' इति ता० पा० । ५ 'देवद्रव्यगुरुद्रव्यपरदाराभिमर्शनात् ॥ पाप्मा पापकृतामेतत् कुष्ठमित्यभिशब्दितम्' ॥ इति ता० पा० ।

औषधीनां विशिष्टानां तपसश्च निषेवणात् ॥
यस्तेन मुच्यते जन्तुः स[1] पुण्यां गतिमाप्नुयात् ॥ ३२ ॥
प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात् सहभोजनात् ॥
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥ ३३ ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ॥
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ३४ ॥

इति सुश्रुतसंहितायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः प्रमेह[2]निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

दि[3]वास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्य[4]द्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति ॥ ३ ॥

[5]तस्य चैवंप्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा बस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहाञ्जनयन्ति ॥ ४ ॥

तेषां तु पूर्वरूपाणि—हस्तपादतलदाहः स्निग्धपिच्छि[6]लगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्ता-

---

१ 'पुण्यां गतिमवाप्नुयात्' इति ता० पा० । २ 'प्रमेहाणां निदानं' इति ता० पा० । ३ 'दिवास्वप्नप्रसक्तमलसं शीतस्निग्ध°' ४ '°मेध्य°' इति ता० पा० । ५ 'तस्य यदा वातपित्तश्लेष्माणो मेदश्चापरिपक्वमधो गत्वा' इति ता० पा० । ६—'स्निग्धचिक्कणगात्रता मधुरशुक्लमूत्रता तन्द्रा च' इति ता० पा० । अनन्तरं 'सादः पिपासा दुर्गन्धश्च' इत्याद्यारभ्य 'वृद्धिश्च नखानाम्' इत्यन्तः पाठस्ता० पुस्तके नोपलभ्यते ।

लुगक्षजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ॥ ५ ॥

तत्राविलप्रभूतमूत्रलक्षणाः सर्वे एव प्रमेहा भवन्ति ॥ ६ ॥

सर्वे एव सर्वदोषसमुत्थाः सह पिडकाभिः ॥ ७ ॥

तत्र, [1]कफादुदकेक्षुवालिकासुरासिकताशनैर्लवणपिष्टसान्द्रशुक्र[2]फेनमेहा दश [3]साध्याः दोषदूष्याणां समक्रियत्वात्; पित्तान्नीलहरिद्राम्लक्षारम[4]ञ्जिष्ठाशोणितमेहाः षड् [5]याप्याः, दोषदूष्याणां विषमक्रियत्वात्; [6]वातात् सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसा[7]ध्यतमाः, महात्ययिकत्वात् ॥ ८ ॥

तत्र वातपित्तमेदोभिरन्वितः श्ले[8]ष्मा श्लेष्मप्रमेहाञ्जनयति, वातकफशोणितमेदोभिरन्वितं पित्तं पि[9]त्तप्रमेहान्, कफपित्तवसामज्जमेदोभिरन्वितो [10]वायुर्वा[11]तप्रमेहान् ॥ ९ ॥

तत्र, श्वेतमवेदनमुदक[12]सदृशमुदकमेही मेहति; इक्षुरसतुल्यमिक्षुवालिकामेही; सुरातुल्यं सुरामेही, सरुजं सिकतानुविद्धं सिकतामेही; शनैः सकफं [13]मूत्रं शनैर्मेही; विशदं लवणतुल्यं लवणमेही;

---

१ 'कफादुदकेक्षुसुरा°' इति पाठान्तरम्। २ '°शुक्रमेहाः फेनमेहश्चेति दश' इति ता० पा०। ३ 'साध्या', दोषदूष्याणां समक्रियत्वात्' इत्यय वाक्यावयवस्ता० पुस्तके नास्ति। ४ 'मञ्जिष्ठमेहा' शोणितमेहश्चेति षट्' इति ता० पा०। ५ 'याप्या', दोषदूष्याणां विषमक्रियत्वात्' इत्यय वाक्यावयवस्ता० पुस्तके नास्ति। ६ "वातात् सर्पिर्वसाक्षौद्रमेहा हस्तिमेहश्चेति चत्वारोऽसाध्या.' इति ता० पा०। ७ 'महात्ययिकत्वात्' इत्ययं वाक्यावयवस्ता० पुस्तके नास्ति। ८ 'श्लेष्मा स्वान् प्रमेहाञ्जनयति' इति ता० पा०। ९ 'पित्तप्रमेहान्' इति विकृतपित्तकर्मबोधक पद ता० पुस्तके नास्ति। १० 'वायुरिति' इति ता० पा०। ११ ता० पुस्तके 'वातप्रमेहान्' इति विकृतवातकर्मबोधकं पद ता० पुस्तके नास्ति। १२ "मुदकतुल्य°" इति ता० पा०। १३ 'सान्द्र' इति ता० पा०।

हृष्टरोमः पिष्टरसतुल्यं[1] पिष्टमेही, आविलं सान्द्रं सान्द्रमेही; शुक्रतुल्यं शुक्रमेही; स्तोकं स्तोकं सफेनमच्छं[2] फेनमेही मेहति ॥ १० ॥

अत ऊर्ध्वं पित्तनिमित्तान् वक्ष्यामः—सफेनमच्छं नीलं नीलमेही मेहति; सदाहं हरिद्राभं हरिद्रामेही; अम्लरसगन्धमम्लमेही; स्रुतक्षारप्रतिमं क्षारमेही; मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही[3]; शोणितप्रकाशं शोणितमेही मेहति[4] ॥ ११ ॥

अत ऊर्ध्वं वातनिमित्तान् वक्ष्यामः—सर्पिःप्रकाशं सर्पिर्मेही मेहति, वसाप्रकाशं वसामेही, क्षौद्ररसवर्णं[5] क्षौद्रमेही; मत्तमातङ्गवदनुप्रबन्धं[6] हस्तिमेही मेहति ॥ १२ ॥

मक्षिकोपसर्पणमालस्यं[7] मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति[8] श्लेष्मजानामुपद्रवाः; वृषणयोरवदरणं बस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूपनं[9] दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोग पीतविण्मूत्रनेत्रत्वं चेति पैत्तिकानां[10], हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं[11] बद्धपुरीषत्वं चेति वातजानाम् एवमेते विंशति प्रमेहाः सोपद्रवा व्याख्याताः ॥ १३ ॥

---

१ 'पिष्टतुल्यं' इति ता० पा० । २ 'सफेनञ्च' इति ता० पा० । ३ 'मञ्जिष्टमेही' इति ता० पा० । ४ 'शोणितमेही शोणित मेहति' इति ता० पा० । ५ 'क्षौद्रसवर्णं' इति ता० पा० । ६ 'अनुप्रवृद्ध' इति हा० पा० । 'अनुप्रबद्धं' इति पा० । ७ ता० पुस्तके 'उपद्रवानत ऊर्ध्वं वक्ष्याम.' इत्युक्तवानन्तरम् 'मक्षिकोपसर्पणमालस्य' इत्यादि त्रयोदशसूत्र पठ्यते । ८—'कफप्रसेकच्छर्दतिनिद्राकासाश्चेति श्लेष्मजानामुपद्रवा भवन्ति' इति ता० पा० । ९ 'परिधूमायमानं' इति हा० पा० । 'परिधूमायन' इति पा० । १० 'वृषणयोरवदरण बस्तिभेदो मेढतोदोऽम्लिकापिपासाज्वरातिसारा मूर्च्छा पाण्डुरोग इति पित्तजानामुपद्रवा भवन्ति' इति ता० पा० । ११ 'शूलो बद्धपुरीषत्व शोषः कासः श्वास इति वातजानामुपद्रवा भवन्ति' इति ता० पा० ।

तत्र वसामेदोभ्यामभिपन्नशरीरस्य[1] त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिडका जायन्ते । तद्यथा—शराविका, सर्षपिका, कच्छपिका, जालिनी, विनता[2], पुत्रिणी, मसूरिका, अलजी, विदारिका, विद्रधिका चेति ॥ १४ ॥

[3]शरावमात्रा तद्रूपा निम्नमध्या शराविका ॥
गौरसर्षपसंस्थाना तत्प्रमाणा च सार्षपी ॥ १५ ॥
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ १६ ॥
मह[4]ती पिडका नीला पिडका विनता स्मृता ॥
महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्रिणी ॥ १७ ॥
[5]मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ॥
रक्ता सिता [6]स्फोटवती दारुणा त्वलजी भवेत् ॥ १८ ॥
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥ १९ ॥
ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः ॥
गुदे हृदि शिरस्यंसे पृष्ठे मर्मणि चोत्थिताः ॥
सोपद्रवा [7]दुर्बलाग्नेः पिडकाः परिवर्जयेत् ॥ २० ॥
कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः ॥
अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजा. ॥ २१ ॥

---

१ '°शरीरस्य दोषैरनुगतधातोः प्रमेहिणो नव पिडकाः सञ्जायन्ते' इति ता० पा० । २ 'विनता' इति प्रमेहिपिडकाप्रकारस्ता० पुस्तके न पठ्यते । ३ 'अन्तोन्नता च तद्रूपा' इति ता० पा० । ४ 'महती पिडका नीला' इत्यादिः सप्तदशश्लोकस्य पूर्वार्धस्ता० पुस्तके न दृश्यते । ५ 'मसूरसंस्थानसमा विज्ञेया तु मसूरिका' इति ता० पा० । ६ 'स्फोटचिता' इति ता० पा० । ७ 'दुर्बलस्य' इति हा० पा० ।

प्रमेहपूर्वरूपाणामाकृतिर्यत्र दृश्यते ॥
किंचिच्चा[1]प्यधिकं मूत्रं तं [2]प्रमेहिणमादिशेत् ॥ २२ ॥

कृत्स्नान्यर्धानि वा यस्मिन् पूर्वरूपाणि मानवे ॥
प्र[3]वृत्तमूत्रमत्यर्थं तं [4]प्रमेहिणमादिशेत् ॥ २३ ॥

पिडकापीडितं गाढमुपसृष्टमुपद्रवैः ॥
मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्तितः ॥ २४ ॥

स चापि गमनात् स्थानं [5]स्थानादासनमिच्छति ॥
आसनाद्वृणुते शय्यां [6]शयनात् स्वप्नमिच्छति ॥ २५ ॥

[7]यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण [8]शबलबभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति, एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नानाकरणं भवति ॥ २६ ॥

भवति चात्र—

सर्व एव प्रमेहास्तु [9]कालेनाप्रतिकुर्वतः ॥
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ २७ ॥

इति सुश्रुतसंहितायां निदानस्थाने प्रमेहनि[10]दानं
नाम षष्ठोऽध्याय ॥ ६ ॥

---

१ 'किञ्चिदप्यधिकं मूत्र त प्रमेहीति निर्दिशेत्' इति हा० पा०। २ 'तस्मिन्मेहो भविष्यति' इति पा० । ३ 'प्रवृद्धमूत्रमत्यर्थं' इति पा० । ४ 'प्रमेह तं विनिर्दिशेत्' इति पा० । ५ 'स्थानादासनमेव च' इति ता० पा० । ६ 'शयने स्वप्नुमिच्छति' इति ता० पा० । ७ 'यथा शुक्लादिवर्णाना' इति ता० पा० । ८ 'श्वेतबभ्रुकपिल०' इति ता० पा० । ९ 'कालेनाप्रतिकारिणः' इति हा० पा० तथैव च मा० पा० । १० 'प्रमेहनिदाने षष्ठः' इति ता० पा० ।

# सप्तमोऽध्यायः ।

अथात उदराणां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

धन्वन्तरिर्धर्मभृतां वरिष्ठो राजर्षिरिन्द्रप्रतिमोऽभवद्यः[1] ॥
ब्रह्मर्षिपुत्रं विनयोपपन्नं शिष्यं शुभं[2] सुश्रुतमन्वशात्[3] सः ३
पृथक् समस्तैरपि चेह[4] दोषैः प्लीहोदरं बद्धगुदं तथैव[5] ॥
आगन्तुकं सप्तममष्टमं च[6] दकोदरं चेति वदन्ति तानि[7] ॥४॥
सुदुर्बलाग्नेरहिताशनस्य संशुष्कपूत्यन्ननिषेवणाद्वा[8] ॥
स्नेहादिमिथ्याचरणाच्च जन्तोर्वृद्धिं गताः कोष्ठमभिप्रपन्नाः ५
गुल्माकृतिव्यञ्जितलक्षणानि कुर्वन्ति घोराण्युदराणि दोषाः ॥
कोष्ठादुपस्नेहवदन्नसारो निःसृत्य दुष्टोऽनिलवेगनुन्नः[9] ॥ ६ ॥
त्वचः समुन्नम्य शनैः समन्ताद्विवर्धमानो[10] जठरं करोति ॥
तत्पूर्वरूपं बलवर्णकाङ्क्षावलीविनाशो जठरे हि राज्यः ॥७॥
जीर्णापरिज्ञानविदाहवत्यो बस्तौ रुजः पादगतश्च शोफः ॥
संगृह्य पार्श्वोदरपृष्ठनाभीर्[11]यद्वर्धते[12] कृष्णसिरावनद्धम् ॥ ८ ॥
सशूलमानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तत् ॥
यच्चोषतृष्णाज्वरदाहयुक्तं पीतं सिरा भान्ति च यत्र पीताः ॥
पीताक्षिविण्मूत्रनखाननस्य पित्तोदरं तत्त्वचिराभिवृद्धि ॥
यच्छीतलं शुक्लसिरावनद्धं गुरु स्थिरं शुक्लनखाननस्य १०

१ 'महात्मा' इति ता० पा० । २ 'गुरु' इति ता० पा० । ३ 'सुश्रुतमन्वशासत्' इति ता० पा० । ४ 'चापि' इति ता० पा० । ५ 'वदन्ति' इति ता० पा० । ६ 'तु' इति ता० पा० । ७ 'दकोदर चैव भवन्ति तानि' इति ता० पा० । ८ 'सशुष्कपूत्यन्ननिषेवणाद्वा ॥ स्नेहादिमिथ्याचरणाच्च जन्तो.' इत्ययं पाठस्ता० पुस्तके नास्ति । ९ 'दुष्टोऽनिलसंप्रयुक्तः' इति ता० पा० । १० 'विसर्पमाणो' इति ता० पा० । ११ 'पृष्ठोदरपार्श्वबस्तीन्' इति ता० पा० । १२ 'विवर्धते' इति ता० पा० ।

[1]स्निग्धं महच्छोफयुतं ससादं कफोदरं तत्तु चिराभिवृद्धि ॥
स्त्रियोऽन्नपानं [2]नखरोममूत्रविडार्तवैर्युक्तमसाधुवृत्ताः ॥ ११ ॥
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥
तेनाशु रक्तं कुपिताश्च दोषाः [3]कुर्वन्ति घोरं जठरं त्रिलिङ्गम् ॥१२॥
[4]तच्छीतवाताभ्रसमुद्भवेषु विशेषतः कुप्यति दह्यते च ॥
स चातुरो [5]मूर्च्छति संप्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च ॥१३॥
[6]प्रकीर्तितं दूष्युदरं तु घोरं प्लीहोदरं कीर्तयतो निबोध ॥
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च ॥ १४ ॥
[7]प्लीहाभिवृद्धिं सततं करोति प्लीह्योदरं तत् प्रवदन्ति तज्ज्ञाः ॥
[8]वामे च पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ॥ १५ ॥
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥
[9]सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १६ ॥
यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा [10]संहितैः पृथग्वा ॥
संचीयते तत्र मलः सदोषः [11]क्रमेण नाड्यामिव संकरो हि ॥१७॥
निरुध्यते चास्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् ॥
हृन्नाभिमध्ये परिवृद्धिमेति [12]त(य)च्चोदरं विड्समगन्धिकं च १८

---

१ 'स्निग्धं महत्सादनशोफयुक्तं चिराभिवृद्धं प्रथितं कफात्तत्' ॥ इति ता० पा० । २ 'नखरोममूत्रैर्विडार्तवैर्युक्त°' इति ता० पा० इत्येव च माधवकरोऽपि पठति । ३ 'कुर्युः सुघोरं' इति माधवकरः । ४ 'तच्छीतवातातपदुर्दिनेषु' इति ता० पा०, 'तच्छीतवाते भृशदुर्दिने च' इति माधवकरः । ५ 'मुह्यति हि प्रसक्तं' इति माधवकरः । ६ 'दूष्योदरं कीर्तितमेतदेव' इति ता० पा०, इत्येव च माधवकरोऽपि पठति । ७ 'प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति' इति मा० पा० । ८ 'तद्वामपार्श्वे परिवृद्धिमेति' इति ता० पा०; इत्येव माधवकरोऽपि पठति । ९ 'सव्यान्यपार्श्वे यकृति प्रवृद्धे' इति मा० पा० । १० 'पिहितं यथावत्' इति हा० पा०; इत्येव च मा० पा० । ११ 'शनैः शनैः संकरवच्च नाड्याम्' इति ता० पा०; इत्येव च मा० पा० । १२ 'तस्योदरं बद्धगुदं वदन्ति' इति ता० पा०, इत्येव च मा० पा० ।

प्र[1]च्छर्दयन् बद्धगुदी विभाव्यः, ततः परिस्राव्युदरं निबोध ॥
शल्यं[2] यदन्नोपहितं तदन्त्रं भि[3]नत्ति यस्यागतमन्यथा वा ॥ १९ ॥
तस्मात् स्रु[4]तोऽन्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः ॥
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च ॥ २० ॥
एतत् परिस्राव्युदरं प्रदिष्टं दकोदरं कीर्तयतो निबोध ॥
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथवाऽपि तेषु दकोदरं पूर्ववदभ्युपैति ॥ २२ ॥
स्निग्धं महत् संपरिवृत्तनाभि भृ[5]शोन्नतं पूर्णमिवाम्बुना च ॥
यथा दृतिः क्षुभ्यति कम्पते च शब्दा[6]यते चापि दकोदरं तत्
आ[7]ध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ॥
शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥
दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि ॥ २४ ॥
अ[8]न्ते सलिलभावं हि भजन्ते जठराणि तु ॥
सर्वाण्येव परीपाकात्त[9]दा तानि विवर्जयेत् ॥ २५ ॥

[10]इति सुश्रुतसंहितायां निदानस्थाने उदरनिदानं
नाम सप्तमोऽध्यायः ॥ ७ ॥

---

१ 'प्रच्छर्दयन् बद्धगुदी विभाव्यस्ततः परिस्राव्युदरं निबोध' ॥ इत्ययं पाठस्ता० पुस्तके तथा च माधवनिदानेऽपि नोपलभ्यते । २ 'शल्यं तथान्नोपहितं गुदान्त्रं' इति ता० पा० । ३ 'भुक्तं भिनत्त्यागतमन्यथा वा' इति मा० पा० 'भिनत्ति वर्चोगतमन्यतो वा' इति ता० पा० । ४ 'स्रुतान्त्रात्' इति ता० पा० । ५ 'समाततं इति ता० । ६ 'शब्दायते चाप्युदकोदरं तत्' इति पा० । ७ 'अध्वना' इति ता० । ८ ताडपत्रपुस्तके चतुर्विंशतितमश्लोकादनन्तरं पञ्चविंशतितमश्लोकात् प्राक् 'छर्दिश्चैवातिसारश्च तृष्णा दौर्बल्यमेव च ॥ मूत्रग्रहः पार्श्वशूलं स्वरभेदः प्रमूढता ॥ हिक्का श्वासश्च कासश्च अरुचिश्चाप्युपद्रवाः' ॥ इत्ययमधिकः पाठ उपलभ्यते । ९ 'तदा विध्येत्त्यजेत वा' इति पा० । १० 'इत्युदरनिदाने सप्तमः' इति ता० ।

# अष्टमोऽध्यायः ।

अथातो मूढगर्भनिदानं[1] व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

ग्राम्य[2]धर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः, फलमिव वृन्तबन्धनादभिघातविशेषैः; स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसंक्षोभमापादयति, तस्या जठरसंक्षोभाद्वायुरपानो मूढः पार्श्व[3]बस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं च्या[4]वयति तरुणं शोणितस्रावेण; तमेव कदाचिद्विवृद्धमसम्यगागतमप[5]त्यपथमनुप्राप्तमनिरस्यमानं विगुणापानसंमोहितं गर्भं मूढगर्भमित्याचक्षते ॥ ३ ॥

ततः कील[6]ः प्रतिखुरो बीजकः परिघ इति । त[7]त्र, ऊर्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः; निःसृत-

---

१ 'मूढगर्भाणां निदान' इति ता० । २ 'ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनाजीर्णगर्भशातनप्रभृतिभिरभिघातविशेषैर्बन्धनान्युच्छिद्यन्ते गर्भ. फलमिव वृन्तबन्धनादभिघातविशेषैः, स खलु मुक्तबन्धनत्वाद्गर्भशय्यामतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रसमानः कोष्ठ सक्षोभयति' इति ता० पा० । ३ 'पार्श्वबस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानापाद्य गर्भं प्रच्यावयति तरुणं शोणितभावेन' इति ता० पा० । ४ 'व्यापादयति' इति पा० । ५ 'अपत्यपथमनुप्राप्तमनिर्गच्छन्तमपाने वैगुण्यसम्मोहितं गर्भं मूढगर्भमित्याचक्षते' इति ता० पा० । ६ 'सकीलः' इति पा० । ७ 'तत्र ऊर्ध्वबाहुशिरःपादो यो' इत्ययमत्रोपलभ्यमानः पाठस्ता० पुस्तके नोपलभ्यते तदभावे तु तत्र 'य ऊर्ध्वं शिरःपादाभ्यां' इति पाठ उपलभ्यते ।

हस्तपादशिरः[1] कायसङ्गी प्रतिखुरः; [2]यो निर्गच्छत्येकशिरोभुजः स बीजकः; यस्तु परिघ इव योनिमुखमावृत्य तिष्ठति स परिघः; इति चतुर्विधो भवतीत्येके भाषन्ते। तत्तु न सम्यक्; [3]कस्मात्? स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रपद्यते [4]तदा सङ्ख्या हीयते[5] ॥ ४ ॥

तत्र, कश्चिद्द्वाभ्यां सक्थिभ्यां योनि[6]र्मुखं प्रतिपद्यते; कश्चि[7]दाभुग्नैकसक्थिरेकेन; कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः; कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनि[8]र्द्वारं पिधायावतिष्ठते; अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना; कश्चिदाभुग्नशिरा बाहुद्वयेन; कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः; कश्चिदेकेन सक्थ्ना योनि[9]र्मुखं प्रतिपद्यतेऽपरेण पायुम्; इत्यष्टविधा मूढगर्भगतिरुद्दिष्टा समासेन ५

तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ, शेषानपि वि[10]परीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कलश्वासकासभ्रमनिपीडितान् परिहरेत् ॥ ६॥

[11]भवन्ति चात्र—

कालस्य परिणामेन मुक्तं वृन्ताद्यथा फलम् ॥
प्रपद्यते स्वभावेन [12]नान्यथा पतितुं ध्रुवम् ॥ ७ ॥

---

१ 'कायसक्त॰' इति ता.। २ 'यस्तु' इति ता.। ३ अत्रत्य 'कस्मात्' इति पद ता॰ पुस्तके नास्ति। ४ 'तदा चतु सङ्ख्या हीयते' इति ता.। ५ "अधःपार्श्वगतो वाऽपि तथैवाकुञ्चितोऽपि वा। यो नि सृत्य मुख योनेर्ज्ञेयः प्रतिखुरस्तु स॰ ॥ योनिद्वारात्तु निर्गच्छेद्यस्यैकांशशिरोभुजम्। तमाहुर्बीजक नाम मूढगर्भचिकित्सका॰ ॥ योनिमाश्रि(वृ)त्य यस्तिष्ठेत् परिघो गोपुर यथा। तथान्तर्गर्भमायन्त विद्यात् परिघसंज्ञकम्" ॥ इति मूढगर्भस्य चातुर्विध्य गयदासाचार्यो नागार्जुनीयादुद्धृत्य न्यायचन्द्रिकाख्यायां स्वकृतसुश्रुतटीकायां यत्पठति। तदप्यस्मिस्थले चिन्तनीयं वर्तते। ६ 'योनिमभिप्रतिपद्यते' इति ता.। ७ 'कश्चिदाभुग्नैकसक्थिः कश्चिदाभुग्नशिरः' इति ता.। ८ 'योनिद्वार पिधाय तिष्ठति' इति ता.। ९ 'योनिमभिप्रतिपद्यतेऽपरेण पायुम्;' इति ता। १० विपरीतेन्द्रियार्थाक्षेपकवातविकारयोनिभ्रंश°" इति ता.। ११ 'भवन्ति चात्र श्लोकाः' इति ता॰ पा॰। हस्तलिखितपुस्तके तु भवन्ति चात्र' इति न पठ्यते। १२ 'नान्यथा पृथिवीतलम्' इति ता॰ पा॰।

एवं कालप्रकर्षेण मुक्तो नाडीनिबन्धनात् ॥
गर्भाशयस्थो [1]यो गर्भो जननाय प्रपद्यते ॥ ८ ॥
कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् ॥
पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः ॥ ९ ॥
आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविच्युतिः[2] ॥
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ १० ॥
प्रविध्यति[3] शिरो या तु शीताङ्गी निरपत्रपा ॥
नीलोद्धतसिरा हन्ति सा गर्भं स च तां [4]तथा ॥ ११ ॥
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ॥
भवत्युच्छ्वासपूतित्वं [5]शूलं चान्तर्मृते शिशौ ॥ १२ ॥
मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ॥
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः ॥ १३ ॥
[6]बस्तमारविपन्नायाः कुक्षिः प्रस्पन्दते यदि ॥

---

१ 'हि' इति ता. । २ 'गर्भविच्युतः' इति ता । तथा च 'गर्भविद्रव ' इति हा० । ३ 'अपविद्धशरीरा तु' इति ता । ४ 'पुनः' इति ता. । भिषग्गयदासाचार्यः स्वकृतसुश्रुतटीकायां न्यायचन्द्रिकाख्यायां गर्भस्रावगर्भपातयोर्लक्षणानि भोजकाश्यपसहिताभ्यामुद्धृत्य पठति यथा-"आतृतीयात्ततो मासाद्गर्भः स्रवति शोणितम् । ऊर्ध्वं सयावभूतस्तु गर्भः पतति योषिताम्" इति भोजस० । "आचतुर्थात्ततो मासात् प्रस्रुत शोणित मतम् । ततः स्थिरशरीरस्तु मूढः पतति कृच्छ्तः" ॥ इति काश्यपसं० । ५ 'शूलश्चान्तर्मृते शिशौ' इति ता० पा० । 'शूनतान्तर्मृते शिशौ' इति हा० पाठस्तथैव च गय० पा० । ६ "बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि । जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम्" ॥ इति श्रीवाग्भटप्रणीताष्टाङ्गसंग्रहस्थः पाठः । तथा च 'कुक्षौ मातुर्विपन्नाया गर्भः प्रस्पन्दते स्त्रियाः । जन्मकाले मुहूर्तात्त पाटयित्वोद्धरेद्भिषक्" इति ता० पुस्तकस्थः पाठः ।

तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक्[1] ॥ १४ ॥

इति सुश्रुतसंहितायां निदानस्थाने मूढगर्भ-
निदानं नामाष्टमोऽध्याय. ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातो विद्रधीनां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
सर्वामरगुरुः श्रीमान्निमित्तान्तरभूमिपः ॥
शिष्यायोवाच निखिलमिदं विद्रधि[2]लक्षणम् ॥ ३ ॥
त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ॥
दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ ४ ॥
महामूलं रुजावन्तं वृत्तं [3]चाप्यथवाऽऽयतम् ॥
त[4]माहुर्विद्रधिं धीरा, विज्ञेयः स च षड्विधः ॥ ५ ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ॥
षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥ ६ ॥
कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः ॥
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ७ ॥

---

१ "यदा सोऽन्तर्मृतो गर्भः शूनो बस्तिरिवातत.। तेनावृताया नार्यास्तु कुक्षिरानह्यते भृशम् ॥ उत्क्षिप्यन्त इवाङ्गानि मूत्रबस्तिश्च भिद्यते। क्लोम प्लीहा यकृच्चैव फुप्फुसं हृदयं तथा ॥ गर्भेण पीडित ह्येतदूर्ध्वं प्रक्रामते स्त्रियाः। सा शूयते मुह्यति च कृच्छ्रोच्छ्वासा च जायते ॥ पूतिगन्धस्तथा स्वेदो जिह्वा तालु च शुष्यति। वेपते ताम्यति तथा जीवितं चोपरुध्यते ॥ एतैर्लिङ्गैर्विजानीयान्मृतगर्भं चिकित्सक.-" इति चतुर्दशश्लोकानन्तर ता० पुस्तकेऽधिकः पाठ उपलभ्यते। २ "स हि शीघ्रविदाहित्वाद्विद्रधीति निरुच्यते" इति चरकाचार्येण विद्रधिलक्षण पठ्यते तदपीह चिन्त्यम्। ३ 'वा' इति ता.। ४ 'स विद्रधिरिति ख्यातो विशेषः षड्विधश्च सः' इति ता.।

पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ॥
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ८ ॥
शरावसदृशः पाण्डुः शीतः स्तब्धो[1]ऽल्पवेदनः ॥
चिरोत्थानप्रपाकश्च सकण्डुश्च कफो[2]त्थितः ॥ ९ ॥
तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ॥
नानावर्णरुजास्रावो घाटालो विषमो महान् ॥ १० ॥
विषमं पच्यते चापि विद्रधिः सान्निपातिकः ॥
तैस्तैर्भावैरभिहते क्षते वाऽपथ्यसेविनः ॥ ११ ॥
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य[3] देहिनः ॥ १२ ॥
एष[4] विद्रधिरागन्तुः पित्तविद्रधिलक्षणः ॥
कृष्णस्फोटावृतः श्यावस्तीव्र[5]दाहरुजाज्वरः ॥ १३ ॥
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥
उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वजः ॥ १४ ॥
आभ्यन्तरानतस्तूर्ध्वं विद्रधीन् परिचक्षते ॥
गुर्वसात्म्यविरुद्धान्नशुष्क[6]संसृष्टभोजनात् ॥ १५ ॥
अतिव्यवायव्यायामवेगाघातविदाहिभिः ॥
पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥ १६ ॥
वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ॥
गुदे बस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥ १७ ॥

---

१ 'स्निग्धोऽल्पवेदनः' इति ता. । २ 'कफात्मकः' इति ता. । ३ 'चास्य' इति ता. । ४ 'आगन्तुर्विद्रधिस्त्वेष' इति ता. । ५ 'तीव्रदाहरुजाकरः' इति पा० । ६ 'शुष्कसंक्लिन्नभोजनात्' इति हा० तथा च 'शुष्कसंक्लिष्टभोजनात्' इति पा० ।

[1]वृक्कयोर्यकृति प्लीह्नि हृदये क्लोम्नि वा तथा ॥
तेषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः ॥ १८ ॥
[2]आमपक्वैषणीयाच्च पक्वापक्वं [3]विनिर्दिशेत् ॥
अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ॥ १९ ॥
गुदे वातनिरोधस्तु बस्तौ कृच्छ्राल्पमूत्रता ॥
नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् ॥ २० ॥
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥
वृक्कयोः पार्श्वसङ्कोच. प्लीह्न्युच्छ्वासावरोधनम् ॥ २१ ॥
सर्वाङ्गप्रग्रहस्तीव्रो [4]हृदि शूलश्च दारुणः ॥
श्वासो यकृति तृष्णा च [5]पिपासा क्लोमजेऽधिका ॥ २२ ॥
आमो वा यदि वा पक्वो महान् वा यदि वेतरः ॥
[6]सर्वो मर्मोत्थितश्चापि विद्रधिः कष्ट उच्यते ॥ २३ ॥
[7]नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ॥
जीवत्यधो निःस्रुतेषु स्रुतेषूर्ध्वं न जीवति ॥ २४ ॥
हृन्नाभिबस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ॥
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥ २५ ॥
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ॥
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥ २६ ॥

---

१ "वृक्कयो' प्लीह्नि यकृति हृदये क्लोम्नि वाप्यथ ॥ एषामुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणै." इति ता.। २ 'आमपक्वैषणीयेन' इति ता.। ३ 'विभावयेत्' इति ता.। ४ 'हृदि कासश्च जायते' इति ता। तथा च मा०। ५ 'क्लोम्नि पेपीयते पय.' इति ता.। तथा च मा०। ६ 'सर्वो मर्मोत्थितत्वात्तु' इति ता.। तथा च 'सर्वो मर्मोत्थितत्वाच्च' इति पा०। ७ "नाभेरुपरिजातो यो मर्माभ्याशे च विद्रधि. ॥ य पक्व. सोऽप्यसाध्यः स्याद्यश्चोर्ध्वमुदरे तथा ॥ अधः स्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति" ॥ इति ता.।

[1]अपि सम्यक्प्रजातानामसृक् कायादनिःसृतम् ॥
रक्तजं विद्रधिं कुर्यात् कुक्षौ मक्कल्लसंज्ञितम् ॥ २७ ॥
सप्ताहान्नोपशान्तश्चेत्ततोऽसौ संप्रपच्यते ॥
विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः ॥ २८ ॥
गुल्मे[2]दोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च ॥
कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च ॥ २९ ॥
न नि[3]बन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः ।
गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते ॥ ३० ॥
विव[4]रानुचरो ग्रन्थिरप्सु बुद्बुदको यथा ॥
एवंप्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति ॥ ३१ ॥
मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः ॥
मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छति ॥ ३२ ॥
गुल्मे[5]स्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ॥
विद्रधिः पच्यते तस्माद्गुल्मश्चापि [6]न पच्यते ॥ ३३ ॥
हृन्नाभिबस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः ॥
अथ मज्जपरीपाको घोरः समुपजायते ॥ ३४ ॥

१ 'स्त्रीणां मिथ्या प्रजाताना°' इति ता.। २ 'तुल्यदोषसमुत्थानात्' इति हा० पा० ताडपत्रपुस्तके त्वयमेकोनत्रिंशत्तमः श्लोको नोपलभ्यते। ३ 'न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः' इत्ययमर्धश्लोको हाराणचन्द्रचक्रवर्तिसंपादितायां सुश्रुतसंहितायां नोपलभ्यते। ताडपत्रपुस्तके त्वयं त्रिंशत्तमः सम्पूर्णः श्लोक एव नोपलभ्यते। ४ 'विवरानुचरो गुल्मस्त्वप्सु बुद्बुदको यथा' इति ता। ५ ता०पुस्तके त्रयस्त्रिंशत्तमश्लोकानन्तरम् "विद्रधेः पूर्वरूपाणि विण्मूत्रानिलसग्रहः॥ भ्रमोऽङ्गमर्दो वैरस्यं काटुक्यं मधुरास्यता॥ मुहुर्मुहुस्तथात्यर्थं यथास्थानं भवेद्रुजा॥ विवर्धते ज्वरश्चास्य तृष्णा चास्य प्रबाधते"॥ इत्ययमधिकः पाठ उपलभ्यते। ६ 'च पच्यते' इति हा०।

सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा ॥
ततः स व्याधिना तेन ज्वलनेनेव दह्यते ॥ ३५ ॥
अस्थिमज्जोष्मणा तेन शीर्यंते दह्यमानवत् ॥
विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम् ॥ ३६ ॥
अथास्य कर्मणा व्याधिर्द्वारं तु लभते यदा ॥
ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु ॥ ३७ ॥
भिन्नेऽस्थि निःस्रवेत्[1] पूयमेतदस्थिगतं विदुः ॥
विद्रधिं शास्त्रकुशलाः सर्वदोषरुजावहम् ॥ ३८ ॥

इति सुश्रुतसंहितायां निदानस्थाने विद्रधिनिदानं
नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

अथातो विसर्पनाडीस्तनरोगनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

त्वङ्मांसशोणितगताः कुपितास्तु[2] दोषाः
सर्वाङ्गसारिणमिहास्थितमात्मलिङ्गम्[3] ॥
कुर्वन्ति विस्तृतमनुन्नतमाशु[4] शोफं
तं सर्वतो विसरणाच्च विसर्पमाहुः[5] ॥ ३ ॥
वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द-
संभेदतोदपवनज्वरलिङ्गयुक्तः ॥
गण्डैर्यदा तु विषमैरतिदूषितत्वा-
द्युक्तः स एव कथितः खलु वर्जनीयः ॥ ४ ॥

---

१ 'निस्रवेत्' इति हा० तथा च 'प्रस्रवेत्' इति पा०। २ 'कुपिताश्च' इति ता.। ३ 'सर्वाङ्गचारिण०' इति ता.। ४ 'य विसृतमुन्नतमाशु' इति हा०। ५ 'विविधं सर्पति यतो विसर्पस्तेन स स्मृतः ॥ परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात्' ॥ इति विसर्पनिरुक्तिश्चरकाचार्येण स्वसंहितायां पठ्यते।

पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-
स्फोटप्रभेदबहुलः क्षतजप्रकाशः ॥
दोष[1]प्रवृद्धिहतमांससिरो यदा स्यात्
स्रोतोजकर्दमनिभो न तदा स सिध्येत् ॥ ५ ॥
श्लेष्मात्मकः सरति मन्द[2]मशीघ्रपाकः
स्नि[3]ग्धः सितश्वयथुरल्परुगुग्रकण्डुः ॥
सर्वात्मकस्त्रिविधवर्णरुजोऽवगाढः
पक्वो न सिध्यति च मांससिरा[4]प्रशातात् ॥ ६ ॥
सद्यःक्षतव्रणमुपेत्य नरस्य [5]पित्तं
र[6]क्तं च दोषबहुलस्य करोति शोफम् ॥
श्यावं सलोहितमतिज्वरदाहपाकं
स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम् ॥ ७ ॥
सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ॥
पैत्ता[7]निलावपि च दर्शितपूर्वलिङ्गौ
सर्वे च मर्मसु भवन्ति हि कृच्छ्रसाध्याः ॥ ८ ॥
[8]शोफं न पक्वमिति पक्वमुपेक्षते यो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ॥

---

१ 'दोषप्रवृत्तिहतमाससिरो' इति गयदाससंमत· पाठः। २ 'मन्दमशीघ्रपाकी' इति ता.। ३ 'स्निग्धः स्थिरप्रचुरकण्डुरनन्यवर्णः' इति ता०। ४ 'मांसशिराप्रणाशात्' इति हा०। ५ 'रक्त' इति ता.। ६ 'पित्त' इति ता.। ७ 'पित्तात्मकोऽजनवपुश्च यदा तदा स्यात् कृच्छ्रश्च मर्मसु भवन्ति हि सर्व एव'॥ इति ता० पा० तथा च 'पैत्तानिलावपि च दर्शितपूर्वलिङ्गौ कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव'॥ इत्यन्यमतेन पाठ इति गयदासटीकावलोकनादवगम्यते। ८ 'य' शोफमीक्षति सुपक्वमपक्वमेव' इति ता० पा० तथा च 'शोफो न पक्व इति पक्वमुपेक्षते यो' इति हा० पा०।

अभ्यन्तरं प्रविशति प्रविदार्य तस्य
स्थानानि[1] पूर्वविहितानि ततः स पूयः ॥ ९ ॥
तस्यातिमात्रगमनाद्गतिरित्यतश्च[2]
नाडीव यद्वहति तेन मता तु नाडी ॥
दोषैस्त्रिभिर्भवति सा[3] पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ १० ॥
तत्रानिलात् परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपायाम्[4] ॥
तृड्दाह[5]तापतोदसदनज्वरभेदहेतुः
पीतं स्रवत्यधिकमुष्णमहःसु पित्तात् ॥ ११ ॥
ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा
रात्रिस्रुतिः[6] स्तिमितरुक्कठिना सकण्डूः ॥
दोषद्वया[7]भिहितलक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ १२ ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां[8] भवन्त्यभिहितानि च लक्षणानि ॥
तामादिशेत् पवनपित्तकफप्रकोपा-
द्घोरा[9]मसुक्षयकरीमिव कालरात्रिम् ॥ १३ ॥

---

१ 'स्थानानि पूर्वगदितानि' इति गयदाससमतः पाठः। २ 'गतिरित्यतस्तु' इति ता.। ३ 'या पृथगेकशश्च' इति ता० 'साऽपृथगेकशश्च' इति हा०। ४ 'क्षपासु' इति ता.। ५ 'पित्तात्तु तृड्ज्वरकरी परिदाहयुक्ता पीत स्रवत्यधिकमुष्णमहःसु चापि' इति ता। ६ 'स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा' इति ता.। ७ 'दोषद्वयाभिहत०' इत्यादिरयं द्वादशश्लोकस्योत्तरार्धस्ता० पुस्तके नास्ति। ८ 'यस्या' इति ता.। ९ 'घोराङ्गतिन्त्वसुहरामिव कालरात्रिम्' इति ता.।

नष्टं कथंचिद[1]नुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ॥
सा फेनिलं मथितमच्छमसृग्विमिश्र-
मुष्णं स्रवे[2]त्‌ सहसा सरुजा च नित्यम् ॥ १४ ॥
याव[3]त्यो गतयो यैश्च कारणैः संभवन्ति हि ॥
ताव[4]न्तः स्तनरोगाः स्यु स्त्रीणां तैरेव हेतुभिः ॥ १५ ॥
धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः ॥
दो[5]षाविसरणात्तासां न भवन्ति स्तनामयाः ॥ १६ ॥
तासामेव प्रजातानां गर्भिणीनां च ताः पुनः ॥
स्वभावादेव विवृता जायन्ते संभवन्त्यतः ॥ १७ ॥
रसप्रसादो मधुरः पक्काहारनिमित्तजः ॥
कृत्स्नदेहात् स्तनौ प्रा[6]प्तः स्तन्यमित्यभिधीयते ॥ १८ ॥
वि[7]शंस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते ॥
[8]सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ १९ ॥
तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि ॥
शब्[9]दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्तते ॥ २० ॥

---

१ 'अणुमार्गमुदीरितेषु' इति ता० 'अणुमात्रमुदीरितेपु' इति च हा.। २ 'स्रवेत' इत्यभावे 'करोति' इति ता०। तथैव च हा०। ३ 'यावन्त्य.' इति ता.। ४ 'तावन्तः स्तनरोगास्तु तैरेव च भवन्ति हि' इति ता.। ५ 'दोषागतित्वात्तासां हि स्तनरोगा न सन्त्यत' इति ता० तथा च 'दोषावितरणात्' इत्यादि हा०। ६ 'प्राप्य' इति ता.। ७ 'विशस्तेष्वपि गात्रेषु' इत्यादिकमेकोनविंशतितम पद्यमिदं ता० पुस्तके 'सुप्रसन्न मनः' इत्यादिकस्यैकविंशतितमस्य पद्यस्याग्रे पठित लक्ष्यत इति चिन्त्यम्। ८ 'सर्वदेहाश्रितत्वेऽपि स्तन्य लक्षणतस्तथा' इति हाराणचन्द्रसमतः पाठः। ९ "सशब्दात्स्पर्शनाद्वापि संहर्षाच्च प्रवर्तते ॥ सुप्रसन्न मनश्चात्र दर्शने हेतुरुच्यते ॥ आहाररसवीर्यत्वादेव स्तन्यमपि स्त्रियाः ॥ यदपत्यस्य संस्पर्शाद्दर्शनात् स्मरणादपि" इति ता० पुस्तकस्थः पाठः।

सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ॥
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः[1] ॥ २१ ॥
तदेवापत्यसंस्पर्शाद्दर्शनात् स्मरणादपि ॥
ग्रहणाच्च शरीरस्य शुक्रवत् संप्रवर्तते ॥ २२ ॥
स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ॥
तत् कषायं भवेद्वातात् क्षिप्तं च प्लवतेऽम्भसि ॥ २३ ॥
पित्तादम्लं सकटुकं राज्योऽम्भसि च पीतिकाः ॥
कफाद्घनं पिच्छिलं च जले चाप्यवसीदति ॥
सर्वैर्दुष्टैः सर्वलिङ्गमभिघाताच्च दुष्यति ॥ २४ ॥
[2]यत् क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम् ॥
मधुरं चाविवर्णं च प्रसन्नं तद्विनिर्दिशेत् ॥ २५ ॥
सक्षीरौ वाऽप्यदुग्धौ वा [3]प्राप्य दोषः स्तनौ स्त्रियाः ॥
[4]रक्तं मांसं च सन्दूष्य स्तनरोगाय कल्पते ॥ २६ ॥
[5]पञ्चानामपि तेषां तु हित्वा शोणितविद्रधिम् ॥
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः[6] ॥ २७ ॥

इति सुश्रुतसंहितायां निदानस्थाने विसर्पनाडीस्तनरोग-
निदानं नाम दशमोऽध्यायः ॥ १० ॥

---

१ 'तासां' इति ता.। २ 'यत् क्षीरमुदके क्षिप्त०' इत्यादिरयं पञ्चविंशतितमः श्लोकस्ता० पुस्तके नास्ति। ३ 'दोषः प्राप्य स्तनौ स्त्रियाः' इति ता.। ४ 'प्रदूष्य मांसरुधिरे' इति ता.। ५ 'पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना' इति ता.। ६ ता० पुस्तकेऽस्मात् सप्तविंशतितमश्लोकादनन्तरम् 'प्रभञ्जनकदुर्नामाश्मरीरुग्भगन्दारणम् ॥ कुष्ठप्रमेहजठरम्मूढगर्भश्च विद्रधिः ॥ विसर्पस्तननाडीभिः पूर्यते दशकोऽपरः' ॥ इत्यधिकं पठ्यते।

# एकादशोऽध्यायः ।

अथातो ग्रन्थपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वातादयो मांसमसृक् च दुष्टाः संदूष्य[1] मेदश्च कफानुविद्धम् ॥
वृत्तोन्नतं विग्रथितं तु शोफं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ ३ ॥
आयम्यते[2] व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदम् ॥
कृष्णोऽमृदुर्बस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ ४ ॥
दन्दह्यते धूप्यति चूष्यते[3] च पापच्यते प्रज्वलतीव चापि ॥
रक्तः सपीतोऽप्यथवाऽपि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥५॥
[4]शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत् संहननोपपन्नः ॥
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ ६ ॥
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो[5] महानल्परुजोऽतिकण्डूः ॥
मेदःकृतो गच्छति [6]चात्र भिन्ने पिण्याकसर्पिःप्रतिमं[7] तु मेदः ॥ ७ ॥
व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि सिराप्रतानम् ॥
संपीड्य[8] सङ्कोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्॥८॥
ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात् सरुजश्चलश्च ॥
अरुक्[9] स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः ॥ ९ ॥
हन्वस्थिकक्षाक्षकबाहुसन्धिमन्यागलेषूपचितं तु मेदः ॥
ग्रन्थिं स्थिरं वृत्तमथायतं वा स्निग्धं कफश्चाल्परुजं करोति ॥ १० ॥

---

१ 'सन्दूष्य मेदश्च तथा सिराश्च' इति ता । २ 'आयम्यते वृश्च्यति तुद्यते च प्रत्यस्यते मथ्यति भिद्यते च' ॥ इति ता.। ३ 'चातिमात्रं' इति हा० 'चोषवांश्च' इति च पा०। ४ 'पीतोऽ' इति ता.। ५ 'स्निग्धो महान् कण्डुयुतोऽरुजश्च' इति ता.। ६ 'चातिभिन्ने' इति हा.। ७ 'पिण्याककल्कप्रतिमं तु मेदः' इति ता.। ८ 'सङ्कुच्य संपीड्य विशोष्य चापि' इति ता.। ९ 'अरुक् स एवाविचलो महांश्च' इति पा० ।

तं ग्रन्थिभिस्त्वामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः ॥
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥ ११ ॥
कण्डूयुतास्तेऽल्परुज[1] प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी ॥ १२ ॥
गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य ॥
वृत्तं स्थिरं[2] मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥ १३ ॥
कुर्वन्ति मांसोपचयं[3] तु शोफं तमर्बुदं[4] शास्त्रविदो वदन्ति ॥
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च ॥ १४ ॥
तज्जायते[5] तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ॥
दोषः प्रदुष्टो रुधिरं सिरास्तु संपीड्य सङ्कोच्य गतस्त्वपाकम् ॥१५॥
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम्[6] ॥
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ॥ १६ ॥
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेत्[7] सोऽर्बुदपीडितस्तु ॥
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति[8] शोफम् ॥ १७ ॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ॥
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य[9] ॥ १८ ॥
मांसार्बुदं त्वेतदसाध्यमुक्तं साध्येष्वपीमानि विवर्जयेत्तु ॥
संप्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम् ॥१९॥
यज्जायतेऽन्यत्[10] खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ॥
यद्द्वन्द्वजात युगपत् क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥ २० ॥
न पाकमायान्ति कफाधिकत्वान्[11]मेदोबहुत्वाच्च[12] विशेषतस्तु ॥
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥ २१ ॥

---

१ 'कण्डून्विताः' इति ता । २ 'मृदु' इति ता. । ३ 'कुर्वन्ति मांसोच्छ्रयमप्यगाधं' इति ता. । ४ 'तदर्बुदं' इति हा० । ५ 'यज्जायते' इति ता. । ६ '°माशु घोरम्' इति ता । ७ 'पाण्डुर्भवेदर्बुदपीडितस्तु' इति हा० । ८ 'जनयेत्तु' इति ता. । ९ 'गाढ°' इति ता. । १० 'संजायते' इति पा० । ११ 'कफाधिकत्वात्' इत्यभावे 'कफान्वितत्वात् इति ता. । १२ 'मेदोबहुत्वाच्च' इति ता. तथा च 'मेदोऽधिकत्वाच्च' इति हा० ।

वातः कफश्चैव गले[1] प्रवृद्धौ मन्ये तु संसृत्य तथैव मेदः ॥
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥२२॥
तोदान्वितः कृष्णसिरावनद्धः कृष्णोऽरुणो वा पवनात्मकस्तु ॥
मेदोन्वितश्चोपचितश्च कालाद्भवेद्[2]तिस्निग्धतरोऽरुजश्च ॥ २३ ॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात् कदाचित् ॥
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ॥ २४ ॥
स्थिरः[3] सवर्णोऽल्परुगुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु ॥
चिराभिवृद्धिं कुरुते[4] चिराच्च प्रपच्यते मन्दरुजः कदाचित् ॥ २५ ॥
माधुर्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः ॥
स्निग्धो मृदुः[5] पाण्डुरनिष्टगन्धो मेदः[6]कृतो नीरुगथातिकण्डूः ॥२६॥
प्रलम्बतेऽलाबुवदल्पमूलो देहा[7]नुरूपक्षयवृद्धियुक्तः ॥
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽ[8]नुशब्दं कुरुते च नित्यम् ॥२७॥
कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्तम् ॥
क्षीणं च वैद्यो गलगण्डिनं तु भिन्नस्वरं चैव विवर्जयेत्तु[9] ॥ २८ ॥
निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ॥
महान् वा यदि वा ह्रस्वो ग[10]लगण्डं तमादिशेत् ॥ २९ ॥

इति सुश्रुतसंहितायां निदानस्थाने गलगण्डगण्डमालापच्यर्बुदनिदानं नामैकादशोऽध्यायः ॥ ११ ॥

---

१ 'गले' इत्यभावे 'भृश' इति पा० । २ 'भवेत्प्रदिग्धे च गलेऽरुजश्च' इति हा० तथा च 'भवेप्रतिस्तब्धगलेऽरुजश्च' इति पा० । ३ 'स्थिरः सवर्णो गुरुरुग्रकण्डूः' इति ता० । ४ 'भजते' इति ता० । ५ 'मृदुः' इत्यभावे 'गुरुः' इति ता० । ६ 'मेदोत्थितः पाण्डुयुतोऽरुजश्च' इति ता० तथा च 'मेदःकृतो' इत्यभावे 'मेद श्रितो' इति पा० । ७ 'विवर्धते हीयति चात्र देहः' इति ता० । ८ 'गलेन शब्द' इति हा० तथा च 'गले च शब्द' इति ता० । ९ 'विवर्जयीत' इति ता० । १० 'त गण्डमिति निर्दिशेत्' इति ता० ।

# द्वादशोऽध्यायः।

अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्तवृद्धयो भवन्ति। तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे, केवलमुत्पत्तिहेतुरन्यतमः॥३

अधः प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति, तां वृद्धिमित्याचक्षते ॥ ४ ॥

तासां भविष्यतीनां पूर्वरूपाणि—बस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोशशोफश्चेति ॥ ५ ॥

तत्रानिलपरिपूर्णां बस्तिमिवाततां परुषामनिमित्तानिलरुजां वातवृद्धिमाचक्षते; पक्कोदुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशुसमुत्थानपाकां पित्तवृद्धिं; कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिं; कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिं, मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिं; मूत्रसंधारणशीलस्य मूत्रवृद्धिर्भवति, सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रवेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति, तां मूत्रवृद्धिं विद्यात्;

---

१ 'तेषु मूत्रान्त्रनिमित्तौ वातसमुत्थौ, केवलमुत्पत्तिहेतुरन्य' इति ता.। २ 'त' इति ता.। ३ 'तत्रानिलपूर्ण बस्तिमिवातत परुषमनिमित्तरुज वातवृद्धिमित्याचक्षते, पक्कोदुम्बरसङ्काशमाशुसमुत्थानं ज्वरदाहोष्मवर्तिन पित्तवृद्धि, कठिन स्निग्धमल्पेवदनं शीत श्लेष्मवृद्धि, कृष्णस्फोटावृत पित्तवृद्धिलिङ्ग रक्तवृद्धि, मृदुस्निग्ध कण्डूमन्तमल्पवेदनं तालफलप्रकाश मेदोवृद्धिम् मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति, स गच्छतोऽम्बुपूर्णा दृतिरिवक्षुभ्यते मूत्रकृच्छ्रवेदनावन्त त मूत्रवृद्धिमित्याचक्षते; बलवद्विग्रहादिभिर्वायुः प्रकुपितोऽन्त्रस्य स्थूलस्येतरस्य वैकदेशे विगुणमादायाधो वङ्क्षणसन्धिमागम्य कालान्तरेण मुष्ककोशमुपैति, आध्मातो बस्तिरिवातत· प्रदीर्घः सशोफो भवति, सशब्दमनुपीडितश्चोर्ध्वमुत्पतति, विमुक्तश्च पुनराध्माति तमन्त्रवृद्धिमसाध्यमित्याचक्षते।' इति ता.।

भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरभिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं विगुणं[1]मादायाधो गत्वा वङ्क्षण-सन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोशं प्रविश्य मुष्कशोफमापादयति, आध्मातो बस्तिरिवाततः प्रदीर्घः स शोफो भवति, सशब्दमवपीडितश्चोर्ध्वमुपैति, विमुक्तश्च पुन[2]राध्मायते, तामन्त्रवृद्धिमसाध्यामित्याचक्षते ॥ ६ ॥

तत्रा[3]तिमैथुनादतिब्रह्मचर्याद्वा तथाऽतिब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनिमप्रक्षालित-योनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारी-मत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनाद्बन्धनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्षसलिलप्रक्षालनादवपीडनाच्छुक्र-वेगविधारणान्मैथुनान्ते वा[4]ऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता[5] दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति, तमुपदंशमित्याचक्षते ॥७॥

स पञ्चविधस्त्रिभिर्दोषैः पृथक् सम[6]स्तैरसृजा चेति ॥ ८ ॥

त[7]त्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता

---

१ 'विगुणं सङ्कुचित' इति 'द्विगुण' इति चात्र द्वे पाठान्तरे विद्येते। २ 'पुनराधमति' इति पा० तथा च 'पुनराध्माति' इति च पा०। ३ 'तत्र ब्रह्मचारिणीं दीर्घकर्कशरोमां योनिरोगोपसृष्टामल्पद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनि वा नारी योऽभिगच्छेत् तथा करजदशनविषशूकनिपातनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्षसलिलप्रक्षालनाद्वा इति ता० पाठ-स्तथाय गयदाससंमतश्चापीति चिन्त्यम्। ४ 'वाऽप्रक्षालनादेवविधाद्वाऽन्य-स्मात्' इति पा०। ५ 'प्रकुपिता मेढ्गतास्तु दोषाः' इति ता०। ६ 'सम-स्तैरसृजश्च' इति ता०। तथा च 'समस्तैरसृजा चैक.' इति पा.। ७ 'तत्र वातिके त्वक्परिपुटन स्तब्धमेढ्रता परुषशोफता विविधवेदनाप्रादुर्भावश्च; पैत्तिके श्वयथुरुदुम्बरप्रतीकाशो ज्वरदाहयुक्तः, श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धश्च,' इति ता० पा०।

विविधाश्च वातवेदनाः; पैत्तिके ज्वरः श्वयथुः पक्वोदुम्बरसङ्काश-स्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च; श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनाश्चः रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थ-मसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं[1] ज्वरदाहौ शोषश्च; याप्यश्चैव कदा-चित्; सर्वजे सर्वलिङ्गदर्शनमवदरणं च शेफसः कृमिप्रादुर्भावो मरणं चेति ॥ ९ ॥

कुपितास्तु[2] दोषा वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानुज-ङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति, तं श्लीपदमित्याचक्षते । तत्त्रिविधं—वातपित्तकफनिमित्तमिति ॥१०॥

तत्र[3] वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः, पित्तजं तु पीतातभासमीषन्मृदु ज्वरदाहप्रायं च; श्लेष्मजं तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकै-रुपचितं च ॥ ११ ॥

तत्र[4] संवत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्जनी-यानि ॥ १२ ॥

भवन्ति[5] चात्र—

त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ॥
गुरुत्वं च महत्त्वं च यस्मान्नास्ति विना कफात् ॥ १३ ॥

---

१ 'पित्तलिङ्गानि च' इति ता.। २ 'प्रकुपितास्तु दोषास्त्वधः प्रपन्ना वक्षणोरुजानुजङ्घास्ववतिष्ठन्ते ततः कालान्तरेण पदमाश्रित्य शनै. शोफमुप-जनयन्ति तच्छ्लीपदमित्याचक्षते' इति ता.। ३ 'तत्र वातज कृष्ण परुषं खरमनिमितानिलरुजमनल्पवेदन परिस्फुटति च बहुश , पित्तजं तु पीतावभासं मृदुज्वरदाहप्रद च; श्लेष्मज तु स्निग्ध श्वेतावभासमवेदनमतिमहान्तं ग्रन्थिकण्टकैरुपचित च' ॥ इति ता० पा०। ४ 'तत्र संवत्सरातीतमति-महान्त वल्मीकजातमतिप्रस्नुतमिति वर्जनीयानि' इति ता० पा०। ५ 'भवन्ति चात्र' इति समानतन्त्रप्रत्ययनिदर्शकवाक्यं ता० पुस्तके नास्ति ।

पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ॥
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १४ ॥
पादवद्धस्तयोश्चापि श्लीपदं जायते नृणाम् ॥
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः ॥ १५ ॥

इति सुश्रुतसंहितायां निदानस्थाने वृद्ध्युपदंशश्लीपदनिदानं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा,—अजगल्लिका, यवप्रख्या, अन्धालजी, विवृता, कच्छपिका, वल्मीकं इन्द्रवृद्धा, पनसिका, पाषाणगर्दभः, जालगर्दभः, कक्षा, विस्फोटकः, अग्निरोहिणी, चिप्पं, कुनखः, अनुशयी, विदारिका, शर्करा-

---

१ 'कर्णाक्षिनासास्वापि च' इति ता. । २ 'समासेन सप्तचत्वारिंशत् क्षुद्ररोगा भवन्ति। तद्यथा-१ अजगल्लिका, २ यवप्रख्या, ३ अन्धालजी, ४ विवृता, ५ कच्छपिका, ६ वल्मीका, ७ इंद्रविद्धा, ८ गर्दभिका, ९ पनसिका, १० पाषाणगर्दभः, ११ जालगर्दभ , १२ इरिवेल्लिका, १३ कक्षा, १४ गन्धनामा, १५ विस्फोटकम्, १६ अग्निरोहिणी, १७ चिप्यम्, १८ अनुशयी, १९ विदारिका, २० शर्करा, २१ शर्करार्बुदम्, २२ पामा, २३ विचर्चिका, २४ रकसा, २५ पाददारी, २६ कदरम्, २७ अलसकः, २८ रुजा, २९ दारुणक', ३० अरुपिका, ३१ पलितम्, ३२ मसूरिका, ३३ युवानपिडका, ३४ पद्मिनीकण्टका, ३५ जतुमणि , ३६ मशकम्, ३७ तिलका, ३८ नच्छम्, ३९ व्यङ्गः, ४० नीनिका, ४१ परिवर्तिका, ४२ निरुद्धप्रकाश', ४३ अवपाटिका, ४४ सन्निरुद्धगुदम्, ४५ अहिपूतनम्, ४६ वृषणकच्छू', ४७ गुदभ्रशश्चेति' इति ता० पु० पा ।

र्बुदं, पामा, विचर्चिका, रकसा, पाददारिका, कदरं, अलसेन्द्रलुप्तौ, दारुणकः, अरुंषिका, पलितं, मसूरिका, यौवनपिडका, पद्मिनीकण्टकः, जतुमणिः, मशकः, चर्मकीलः, तिलकालकः, न्यच्छं, व्यङ्गः, परिवर्तिका, अवपाटिका, निरुद्धप्रकशः संनिरुद्धगुदः, अहिपूतनं, वृषणकच्छुः, गुदभ्रंशश्चेति ॥ ३ ॥

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा[1] ॥
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ ४ ॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता ॥
पिडका[2] श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ ५ ॥
घनामवक्त्रां[3] पिडकामुन्नतां परिमण्डलाम् ॥
अन्धालजीमल्पपूयां[4] तां विद्यात् कफवातजाम् ॥ ६ ॥
विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम्[5] ॥
विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ॥ ७ ॥
ग्रथिताः[6] पञ्च वा षड्वा दारुणाः कच्छपोन्नताः[7] ॥
कफानिलाभ्यां पिडका ज्ञेया कच्छपिका बुधैः ॥ ८ ॥
पाणिपादतले सन्धौ ग्रीवायामूर्ध्वजत्रुणि ॥
ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते ॥ ९ ॥
तोदक्लेदपरीदाहकण्डूमद्भिर्मुखैर्वृतः[8] ॥
व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः[9] ॥ १० ॥

---

१ 'मुद्गसन्निभा' इति ता० पा.। अन्यत्र तु 'ग्रन्थिसन्निभा' इति पाठान्तरम्। २ 'पिटका' इति ता.। ३ 'घनाल्पवक्त्रां' इति ता० पा०। ४ 'अन्त्रालजी°' इति मा० पा०। ५ 'पक्वोडुम्बर°' इति पा०। ६ 'ग्रन्थय.' इति पा० 'ग्रथिताः' इति च ता.। ७ 'कच्छपोपमाः' इति मा० पा०। ८ '°कण्डूमद्भिर्व्रणैर्वृतः' इति पा०। ९ 'विज्ञेयः कफपैत्तिकः' इति ता० पा०।

पैद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् ॥
इन्द्रवृद्धां[2] तु तां विद्याद्वातपित्तोत्थितां भिषक्[3] ॥ ११ ॥
मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम् ॥
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥
कर्णौ[4] परि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ॥
शालूकवत्पनसिकां तां विद्याच्छ्लेष्मवातजाम् ॥ १२ ॥
हनुसन्धौ[5] समुद्भूतं शोफमल्परुजं स्थिरम् ॥
पाषाणगर्दभं विद्याद्बलासपवनात्मकम् ॥ १३ ॥
विसर्पवत्[6] सर्पति यो दाहज्वरकरस्तनुः ॥
अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः ॥ १४ ॥
पिडिकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् ॥
सर्वात्मकां[7] सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥ १५ ॥
बाहुपार्श्वांसकक्षासु[8] कृष्णस्फोटां सवेदनाम् ॥
पित्तप्रकोपसंभूतां कक्षामिति विनिर्दिशेत् ॥ १६ ॥
एकामेवंविधां[9] दृष्ट्वा पिटिकां स्फोटसन्निभाम् ॥
त्वग्गतां पित्तकोपेन गन्धनाम्नीं[10] प्रचक्षते ॥ १७ ॥

---

१ 'पद्मकर्णिकवन्मध्ये' इति ता० तथा च मा०। २ 'इन्द्रविद्धां तु तां' इति मा०। ३ ता० पुस्तके इन्द्रवृद्धाख्यक्षुद्ररोगानन्तर 'गर्दभिकाख्यः' 'क्षुद्ररोगोऽधिक पठितो यथा-'मण्डला वृत्तमुत्सन्ना सरक्ता पिडकाचिताम् ॥ रुजाकरी गर्दभिका तां विद्याद्वातपित्तजाम्' ॥ अय पाठो माधवकरगयदासानुमतोऽस्ति। ४ 'कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनां। स्थिरां पनसिकां तां तु विद्याद्वातकफोत्थिताम्' ॥ इति ता० तथा च मा०। ५ हन्वोः सन्धिसमुद्भूत शोफमल्परुज स्थिरम् ॥ पाषाणगर्दभमिति ब्रूयात्तत् कफपित्तत.' ॥ इति ता० पा०। ६ 'विसर्पवत् सर्पति यः शोफस्तनुरपाकवान् ॥ दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्दभ.' ॥ इति ता० तथा च मा०। ७ 'सर्वात्मिका' इति मा०। ८ 'बाहुकक्षासपार्श्वेपु' इति ता० तथा च 'बाहुपार्श्वांसकक्षेषु' इति मा०। ९ 'एकामेतादृशीं' इति ता० तथैव च मा०। १० 'गन्धमालां' इति मा०।

अग्निदग्धनिभाः स्फोटाः सज्वराः [1]पित्तरक्ततः ॥
क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति ॥ १८ ॥
[2]कक्षाभागेषु ये स्फोटा जायन्ते [3]मांसदारु(र)णाः ॥
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १९ ॥
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ॥
तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ २० ॥
नखमांसमधिष्ठाय [4]पित्तं वातश्च वेदनाम् ॥
[5]करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥ २१ ॥
[6]तदेवाक्षतरोगाख्यं तथोपनखमित्यपि ॥
[7]अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः ॥ २२ ॥
भवेत्तं [8]कुनखं विद्यात् कुलीनमिति संज्ञितम् ॥
गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ॥ २३ ॥
[9]कफादन्तःप्रपाकां तां विद्यादनुशयीं भिषक् ॥
[10]विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ॥ २४ ॥
रक्तां विदारिकां विद्यात् सर्वजां सर्वलक्षणाम् ॥
प्राप्य मांससिरास्नायु श्लेष्मा मेदस्तथाऽनिलः ॥ २५ ॥

---

१ 'रक्तपित्ततः' इति हा० । २ 'कक्षभागेषु' इति ता० तथैव च मा० । ३ 'मांसदारुणा' इति ता. । 'मांसदारणा' इति च मा० । ४ 'वातः पित्त च देहिनाम्' इति ता० 'वायु. पित्त च देहिनाम्' इति च मा० । ५ 'कुर्याता' इति ता० 'कुर्वाते' इति च मा० । ६ 'तदेवाल्पतरैर्दोपै. कुनखं परुष खरम्' इति ता० 'तदेवालपनरैर्दोपैः परुष कुनख वदेत्' इति च मा० । ७-८ 'अभिघातात् प्रदुष्टो यो' इत्यादिरयं द्वाविंशतितमश्लोकस्योत्तरार्धस्तथा च 'भवेत्त कुनखं विद्यात् इत्यादिरय त्रयोविंशतितमश्लोकस्य पूर्वार्धस्ता० पुस्तके न स्त. । ९ कफादनुशयी पद्भ्योर्विद्यादन्त प्रपाकिनीम्' इति ता० 'पादस्यानुशयी तां तु विद्यादन्त'प्रपाकिनीम् इति च मा० । १० 'विदारीकन्दवद्वृत्तां कक्षवक्षणसन्धिषु ॥ विदारिकामिति वदेत्' इति ता० ।

ग्रन्थिं [1]कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् ॥
[2]स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः ॥ २६ ॥
मांसं विशोष्य[3] ग्रथितां शर्करां जनयेत् पुनः ॥
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः सिराः ॥ २७ ॥
[4]स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम् ॥
पामाविचर्च्यौ कुष्ठेषु रक्तसा च प्रकीर्तिता ॥ २८ ॥
परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ॥
[5]पादयोः कुरुते दारीं सरुजां तलसंश्रितः ॥ २९ ॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥
मेदो[6]रक्तानुगैश्चैव दोषैर्वा जायते नृणाम् ॥ ३० ॥
स[7]कीलकठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा ॥
को[8]लमात्रः सरुक् स्रावी जायते कदरस्तु सः ॥ ३१ ॥
क्लिन्नाङ्गुल्यन्तरौ पादौ कं[9]डूदाहरुगन्वितौ ॥
दुष्टकर्दमसंस्पर्शा[10]दलसं तं विनिर्दिशेत् ॥ ३२ ॥
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ ३३ ॥

---

१ 'ग्रन्थि करोत्यसौ भिन्नो' इति मा० । २ 'करोत्यास्रावमत्यर्थं तत्र वृद्धिं गतः पुनः' इति ता० । ३ 'मांसं संशोष्य ग्रथितां शर्करां जनयेत्ततः' इति मा० । ४ 'सृजन्ति रक्तं सहसा' इति ता० । ५ 'पादयोः कुरुते दारीः सरुजास्तलसंश्रितः' इति ता० 'पादयोः कुरुते दारीं पाददारीं तमादिशेत्' इति च मा० । ६-७ अयं त्रिंशत्तमश्लोकस्योत्तरार्धस्तथा चायमेकत्रिंशत्तमश्लोकस्य पूर्वार्धस्ता० पुस्तके न विद्येते । ८ 'ग्रन्थिः कीलवदुत्सन्नो जायते कदरं ततः' इति ता० 'ग्रन्थिः कोलवदुत्सन्नो जायते कदरं हि तत्' इति च मा० । ९ 'कण्डूदाहरुजान्वितौ' इति ता० तथैव च मा० । १० 'अलसं तं विभावयेत्' इति मा० ।

रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः ॥
तदिन्द्रलुप्तं खालित्यं रुज्येति[१] च विभाव्यते ॥ ३४ ॥
दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते ॥
कफवातप्रकोपेण[२] विद्याद्दारुणकं तु तम् ॥ ३५ ॥
अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्धनि[३] ॥
कफासृक्कृमिकोपेन[४] नृणां विद्यादरुंषिकाम् ॥ ३६ ॥
क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ॥
पित्तं च केशान् पचति पलितं तेन जायते ॥ ३७ ॥
दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः[५] ॥
गात्रेषु[६] वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥ ३८ ॥
शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः[७] ॥
जायन्ते[८] पिडका यूनां वक्त्रे या मुखदूषिकाः ॥ ३९ ॥
कण्टकैराचितं[९] वृत्तं कण्डूमत् पाण्डुमण्डलम् ॥
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ४० ॥
नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम् ॥
सहजं[१०] रक्तमीषच्च श्लक्ष्णं जतुमणिं विदु ॥ ४१ ॥
अवेदनं स्थिरं चैव यस्य गात्रेषु[११] दृश्यते ॥
माषवत्कृष्णमुत्सन्नमनिलान्मषकं[१२] वदेत् ॥ ४२ ॥

---

१ 'रुजेति' इति ता० 'रुह्येति' इति च मा०। २ 'कफमारुतकोपेन' इति ता० तथैव च मा०। ३ 'मूर्ध्नि तु' इति ता० तथैव च मा०। ४ 'कफासृक्पित्तकोपेन व्रण विद्यादरुंषिकाम्' इति ता०। ५ 'सवेदना' इति ता.। ६ 'गात्रेष्वन्तश्च वदने विज्ञेयास्ता मसूरिका.' इति ता० पा०। ७ 'कफमारुतरक्तजा.' इति ता०। ८ 'युवानपीडका यूनां विज्ञेया मुखदूषिका' इति ता० तथैव च मा०। ९ 'कण्टकैराचित विद्यान्मण्डल पाण्डु कण्डुरम्' इति ता.। १० 'सहज लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु स.'। इति मा०। 'सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणीति स.' इति च ता.। ११ 'गात्रे प्रदृश्यते' इति ता० तथैव च मा०। १२ 'मषकं तु तत्' इति मा०।

कृष्णानि तिलमात्राणि नीरुजानि समानि च ॥
[1]वातपित्तकफोच्छोषात्तान् विद्यात्तिलकालकान् ॥ ४३ ॥
[2]मण्डलं महदल्पं वा श्यामं वा यदि वा सितम् ॥
सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥ ४४ ॥
[3]समुत्थाननिदानाभ्यां चर्मकीलं प्रकीर्तितम् ॥
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ॥ ४५ ॥
सहसा मुखमागत्य मण्डलं विसृजत्यतः ॥
नी[4]रुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ४६ ॥
कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः ।
मर्दनात् पीडनाच्चापि तथैवाप्यभिघाततः ॥
मेढ्रचर्म यदा वायुर्भजते [5]सर्वतश्चरः ॥ ४७ ॥
[6]तदा वातोपसृष्टं तु चर्म प्रतिनिवर्तते ॥
मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥ ४८ ॥
सवेदनः सदाहश्च पाकं च व्रजति [7]क्वचित् ॥
मारुतागन्तुसंभूतां [8]विद्यात्तां परिवर्तिकाम् ॥ ४९ ॥
सकण्डूः कठिना चापि सैव श्लेष्मसमुत्थिता ॥
[9]अल्पीयःखां यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः ॥ ५० ॥

---

१ 'वातपित्तकफोद्रेकात्, इति हा० । २ 'महद्वा यदि वाल्यल्प श्याव च यदि वा सितम् ॥ नीरुज मण्डल गात्रे न्यच्छमित्यभिधीयते' ॥ इति ता० पा० । ३ 'अय पञ्चचत्वारिंशत्तमस्य श्लोकस्य पूर्वार्धस्ता० पुस्तके नास्ति । ४ 'कृष्णमेवगुण गात्रे मुखे वा नीलिका विदु.' इति ता० तथैव च मा० । ५ 'सर्वतश्चरेत्' इति ता० 'सर्वतश्चरन्' इति च मा० । ६ 'तदा वातोपसृष्टत्वात् तच्चर्म परिवर्तते' इति मा० । ७ 'वा सकृत्' इति ता. ८ 'परिवर्तिकेति तां विद्यात्सरुजा वातसम्भवाम्' इति ता० 'सरुजां वातसम्भूतां तां विद्यात् परिवर्तिकाम्' इति च मा० । ९ 'अल्पीयसी यदा हर्षाद्बाला गच्छेत्' इति हा० । 'अल्पीयसी यदा हर्षाद्बलाद्गच्छेत्' इति पा० ।

हस्ताभिघातादथवा चर्मण्युद्वर्तिते बलात् ॥
मर्दनात्पीडनाद्वाऽपि शुक्रवेगविघाततः ॥ ५१ ॥
यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥
वातोपसृष्टमेवं तु[1] चर्म संश्रयते मणिम् ॥ ५२ ॥
मणिश्चर्मोपनद्धस्तु[2] मूत्रस्रोतो रुणद्धि च[3] ॥
निरुद्धप्रकशे[4] तस्मिन्मन्दधारमवेदनम् ॥ ५३ ॥
मूत्रं प्रवर्तते जन्तोर्मणिर्न[5] च विदीर्यते ॥
निरुद्धप्रकशं विद्याद्रुरूढां चावपाटिकाम् ॥ ५४ ॥
वेगसंधारणाद्वायुर्विहतो गुदमाश्रितः[6] ॥
निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ॥ ५५ ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ॥
सन्निरुद्धगुदं व्याधिमेनं विद्यात् सुदुस्तरम् ॥ ५६ ॥
शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ॥
स्विन्नस्यास्नाप्यमानस्य[7] कण्डूं रक्तकफोद्भवा ॥५७ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते ॥
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५८ ॥
स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ॥
[8]यदा प्रक्लिद्यते स्वेदात् कण्डूं संजनयेत्तदा ॥ ५९ ॥

---

१ 'वे' इति मा० । २ 'मणिश्चर्मोपरुद्धश्च' इति ता । ३ 'तु' इति ता. । ४ 'निरुद्धप्रकश विद्यान्मन्दधार सवेदनम्' इति ता० ५ 'मणिर्विभ्रियते न च' इति मा० तथैव च हा० । ६ 'गुदसश्रितः' इति मा० । ७ स्विन्ने वा स्वेद्यमाने वा' इति ता० तथा च 'स्विन्ने वाऽस्नाप्यमाने वा' इति मा० । ८ 'प्रक्लिद्यते यदा स्वेदात् स कण्डू जनयेत्तदा' इति च हा० । अत्रत्यो मूलपाठस्ताडपत्रपुस्तकानुसार्येव वर्तते ।

[1]तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते ॥
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ६० ॥
प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः ॥
रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्[2] ॥ ६१ ॥

इति सुश्रुतसंहितायां निदानस्थाने क्षुद्ररोगनिदानं
नाम त्रयोदशोऽध्याय ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

अथातः शूकदोषनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूक[3]दोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते । तद्यथा—सर्षपिका, अष्ठीलिका, ग्रथितं, कुम्भीका, अलजी, मृदितं, संमूढपिडका, अवमन्थः, पुष्करिका, स्पर्शहानिः, उत्तमा, शतपोनकः, त्वक्पाकः, शोणितार्बुदं, मांसार्बुदं, मांसपाकः, विद्रधिः, तिलकालकश्चेति ॥ ३ ॥

गौरसर्षपतुल्या तु [4]शूकदुर्भग्नहेतुका ॥
पिडका कफरक्ताभ्यां ज्ञेया [5]सर्षपिका बुधैः ॥ ४ ॥
[6]कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः ॥
शूकैस्तु विष[7]संभुग्नैः पिडकाऽष्ठीलिका भवेत् ॥ ५ ॥

---

१ 'कण्डूयनात्ततः क्षिप्र' इति मा० । २ ताडपत्रपुस्तके, एकषष्टितमश्लोकानन्तरम् 'इत्येव क्षुद्ररोगाणां स्थानं संपरिकीर्तितम् तदवेक्ष्य भिषक् प्राज्ञो यथादोषमुपाचरेत्' ॥ इत्ययमधिकः श्लोक· पठ्यते । ३ 'शूकदोषनिमित्त व्याधयो दश चाष्टौ जायन्ते' इति ता० । ४ 'शूकनिर्भुग्नहेतुका' इति ता० । 'शूकदुर्भुग्नहेतुका' इति मा० तथैव च हा० । ५ 'सर्षपिका तु सा' इति ता० तथैव च मा० । ६ 'कठिना विषमा भग्नैर्वायुनाऽष्ठीलिका भवेत्' इति हा० । 'कठिना विषमैर्भुग्नैर्वायुना' इत्यादि मा० । ७ 'विषसंयुक्तैः' इति हा० ।

शूकैर्यत् पूरितं शश्वद्ग्रथितं तत्[१] कफोत्थितम् ॥
कुम्भीका रक्तपित्तोत्था जाम्बवा[२]स्थिनिभाऽशुभा ॥ ६ ॥
अलजी[३]लक्षणैर्युक्तामलजीं च वितर्कयेत् ॥
मृदितं पीडितं यत्तु संरब्धं वायुकोपतः ॥ ७ ॥
पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥
दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः ॥ ८ ॥
सोऽवमन्थः[४] कफासृग्भ्यां वेदनारोमहर्षकृत् ॥
पित्त[५]शोणितसंभूता पिडका पिडकाचिता ॥ ९ ॥
पद्म[६]पुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ॥
जनयेत् स्पर्शहानिं तु शोणितं शूकदूषितम् ॥ १० ॥
मुद्गमाषोपमा रक्ता पिडका रक्तपित्तजा ॥
उत्तमै[७]षा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥ ११ ॥
छिद्रैरणुमुखै[८]र्यस्तु चितं यस्य समन्ततः ॥
वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥ १२ ॥
पित्त[९]रक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ॥
कृष्णैः स्फोटैः सरक्तैश्च पिडकाभिश्च पीडितम्[१०] ॥
यस्य[११] वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १३ ॥

---

१ 'नाम तत्कफात्' इति ता० मा० हा० । २ 'जम्बवस्थिसदृशा शुभा' इति ता० । ३ 'तुल्यजां त्वलजी विद्याद्यथाप्रोक्तां विचक्षण.' इति ता. । ४ 'सोऽधिमन्थ कफासृग्भ्यां' इति मा० । ५ 'पिडकाचिता या पिडका पित्त-शोणितसभवा' इति ता० । 'पिडका पिडकाव्याप्ता पित्तशोणितसंभवा' इति च मा० । ६ 'पद्मकर्णिकसंस्थाना' इति ता० तथैव च मा० । ७ 'व्याधिरेषोत्तमो नाम शूकाजीर्णनिमित्तजः' इति ता. । ८ 'छिद्रैरणुमुखैर्लिङ्ग चित यस्य समन्तत.' इति ता० तथैव च मा० । 'छिद्रैरणुमुखैर्यत्तु चितं मेढ्रं समन्ततः' इत्यप्यन्यत्र पाठः । ९ 'वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत्' इति ता० तथैव च मा० । १० 'दूषितम्' इति पा० । ११ 'यस्य बस्तिरुजश्चोग्रा' इति ता० तथैव च हा० । तथैव च 'यस्य बस्तिरुजश्चोग्रा' इति पा० ।

मांसदोषेण जानीयादर्बुदं मांससंभवम् ॥
शीर्यन्ते यस्य मांसानि यत्र सर्वाश्च वेदनाः ॥१४ ॥
विद्यात्तं मांसपाकं तु सर्वदोषकृतं भिषक् ॥
विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ १५ ॥
कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ॥
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १६ ॥
कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ॥
सन्निपातसमुत्थानं तं विद्यात्तिलकालकम् ॥ १७ ॥
तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः ॥
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १८ ॥

इति सुश्रुतसंहितायां निदानस्थाने शूकदोष निदानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथातो भग्नानां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति ॥ ३ ॥

तत्र भङ्ग(ग्न)जातमनेकविधमनुसार्यमाणं द्विविधमेवोपपद्यते

---

१ 'यत्र' इति ता० 'यस्य' इति मा० तथैव च हा० । २ 'कृष्णानि भूत्वा' इति ता० । ३ 'सन्निपातसमुत्थांस्तु तान् विद्यात्तिलकालकान्' इति मा० । ४ 'अथातो भग्ननिदानं व्याख्यास्यामः' इति ता. । ५ 'पतनपीडनविषदुष्टप्रभृतिभिः' इति ता० तथा च 'पतनपीडनप्रहाराक्षेपणव्यालदशनप्रभृतिभिः' इति वृद्धवाग्भटः । ६ 'भग्नमुपदिशन्ति' इति पा० । ७ 'तत्र भग्नजात°' इति ता० । 'तत्तु भङ्गजात°' इति हा० । ८ हाराणचन्द्रप्रकाशिते सौश्रुते तन्त्रे 'अनेकविध°' इत्येतत्पद न पठ्यते ९ 'द्विविधमेवोपपद्यते' इति ता० । 'द्विविधमेवोत्पद्यते' इति हा० ।

सन्धिमुक्तं, काण्डभग्नं च। तत्र षड्विधं सन्धिमुक्तं[1] द्वादशविधं काण्डभग्नं भवति ॥ ४ ॥

तत्र सन्धिमुक्तम्—उत्पिष्टं, विश्लिष्टं, विवर्तितम्[2], अवक्षिप्तं, अतिक्षिप्तं, तिर्यक्क्षिप्तमिति षड्विधम् ॥ ५ ॥

तत्र[3] प्रसारणाकुञ्चनविवर्तनाक्षेपणाशक्तिरुग्ररुजत्वं[4] स्पर्शासहत्वं चेति सामान्यं[5] सन्धिमुक्तलक्षणमुक्तम् ॥ ६ ॥

वैशेषिकं तूत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो[6] विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति; विश्लिष्टेऽल्पः[7] शोफो वेदनासातत्यं सन्धिविक्रिया च; विवर्तिते[8] तु सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च; अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वं[9] च; अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च; तिर्यक्क्षिप्ते[10] त्वेकास्थिपार्श्वापगमनमत्यर्थं[11] वेदना चेति ॥ ७ ॥

काण्डभग्नमत[12] ऊर्ध्वं वक्ष्यामः—कर्कटकम्, अश्वकर्णं, चूर्णितं,

---

१ 'द्वादशविध काण्डभग्न भवति' इति योऽत्रत्य· पाठस्तदभावे वृद्धवाग्भटाचार्यः 'असन्धिभग्नं पुनर्द्वादशविधम्' इति पाठान्तर पठति। २ 'विपरिवर्तित' इति ता.। ३ 'तत्र प्रसारणाकुञ्चनाशक्तिः' इति ता०। ४ 'उग्ररुजता स्पर्शासहत्व च' इति ता०। 'उग्ररुजता स्पर्शासहिष्णुत्व च' इति वृ० वा०। ५ 'सामान्यतः' इति ता०। ६ 'वेदनाप्रादुर्भावो विशेषतश्च रात्रौ प्रादुर्भवति' इति ता.। ७ 'अल्पशोफता' इति ता.। ८ 'विपरिवर्तिते तु सन्धिपार्श्वगमनाद्विषमाङ्गता वेदना च' इति ता.। ९ 'तीव्ररुजता च' इति ता० १० 'तिर्यक् क्षिप्ते त्वेकस्यास्थ्नः पार्श्वतो गमनमत्यर्थं वेदना च' इति वृ० वा०। ११ '°पार्श्वगमनमत्यर्थमिति' इति ता.। १२ यदेवात्र 'काण्डभग्नं', पठितं तदेवाष्टाङ्गसंग्रहे वृद्धवाग्भटप्रणीते ग्रन्थे 'असन्धिभग्नम्' इति नाम्ना पठ्यते।

पिच्चितम्, अस्थिच्छल्लितं, काण्डभग्नं[1], मज्जानुगतम्, अतिपातितं, वक्रं, छिन्नं[2], पाटितं, स्फुटितमिति द्वादशविधम् ॥ ८ ॥

श्वयथुबाहुल्यं[3] स्पन्दनविवर्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम् ॥ ९ ॥

विशेषस्तु[4] संमूढमुभयतोऽस्थिमध्ये भ(ल)ग्नं ग्रन्थिरिवोन्नतं कर्कटकम्, अश्वकर्णवदुद्गतमश्वकर्णकं[5], स्पृश्यमानं शब्दवच्चूर्णित[6]मवगच्छेत्, पिच्चितं[7] पृथुतां गतमनल्पशोफं, पार्श्वयोरस्थि हीनोद्गतमस्थिच्छलितं[8], वेल्लते प्रकम्पमानं काण्डभग्नम्[9], अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यतीति मज्जानुगतम्[10], अस्थि निःशेषतश्छिन्नमतिपातितम्[11], आभुग्नमविमुक्तास्थि वक्रम्, अन्यतरपार्श्वावशिष्टं [12]छिन्नं, पाटितमणुबहुविदारितं वेदनावच्च, शूकपूर्णमिवाध्मातं विपुलं विस्फुटितं स्फुटितमिति[13] ॥ १० ॥

---

१ अथ काण्डभग्नाख्यप्रकारो वृद्धवाग्भटाचार्येण 'वेल्लितम्' इति पर्यायशब्देनाभिहित. । २ 'छिन्न स्फुटित स्फाटितमिति' इति ता० । वृद्धवाग्भटाचार्येण छिन्नाख्यप्रकार. 'शेषितम्' इति पर्यायशब्देनाभिहितः पाटिताख्यप्रकारश्च 'दारितम्' इति पर्यायशब्देनाभिहितः । ३ 'श्वयथुबाहुल्यमवपीड्यमाने विविधवेदनाप्रवृत्तिः सर्वावस्थासु न शर्मलाभ इति सामान्यतः काण्डलक्षणमुक्तम्' इति ता. । ४ 'वैशेषिक तु सव्यूढमुभयतोऽस्थिमध्यभग्न ग्रन्थिरिवोन्नत कर्कटकानुकारि कर्कटकम्' इति वृ० वा० । ५ 'अश्वकर्णवदुद्गतमश्वकर्णम्' इति वृ० वा० ६ 'शब्दस्पर्शाभ्या चूर्णितमवगच्छेत्' इति ता. । ७ 'पिच्चित पृथुलतां गतमल्पशोफ' इति ता. । ८ 'अस्थिच्छल्लितक नाम' इति ता. । ९ 'खल्लित प्रकम्पमान काण्डभग्न' इति हा० । 'द्विधाभूत वेल्लते प्रकम्पमान वेल्लितकम्' इति च वृ० वा० । १० 'क्षत भग्नमुन्नम्यमान मज्ञि मज्जति मज्जानुगतम्' इति वृ० वा० । ११ 'अस्थ्यवयवोऽस्थिमध्यमनुप्रविशन्नतिपातितम्' इति वृ० वा० । १२ 'अन्यतरपार्श्वावशिष्टं शेषितम्' इति वृ० वा० । १३ 'स्फाटित नाम' इति ता. । 'शूकपूर्णमिवाध्मात विपुलैकदारि स्फुटितम्' इति वृ० वा०

तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि, कृश[1]-वृद्धबालानां क्षत[2]क्षीणकुष्ठिश्वासिनां सन्ध्युपगतं चेति ॥ ११ ॥

भवन्ति[3] चात्र—

भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ॥
जघनं प्रति पिष्टं च वर्जयेत्तच्चिकित्सकः[4] ॥ १२ ॥
असंश्लिष्टं कपालं[5] तु ललाटे चूर्णितं च यत् ॥
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत् ॥ १३ ॥
आदितो[6] यच्च दुर्जातमस्थि सन्धिरथापि वा ॥
सम्यग्यमितमप्यस्थि[7] दुर्न्यासाद्दुर्निबन्धनात्[8] ॥ १४ ॥
संक्षोभाद्वाऽपि यद्गच्छेद्विक्रियां तच्च[9] वर्जयेत् ॥
मध्यस्य[10] वयसोऽवस्थास्तिस्रो याः परिकीर्तिताः ॥ १५ ॥
तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥
तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु ॥ १६ ॥
कपालानि विभिद्यन्ते[11] स्फुटन्ति[12] रुचकानि च ॥

इति सुश्रुतसंहितायां निदानस्थाने भग्ननिदानं
नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

१ 'कृशातिवृद्धबालासहायानां' इति ता० । तथा च 'कृशातिवृद्धबालासहाना' इति पा० । २ 'क्षतक्षीणकुष्ठिश्वासिनां सव्रणानि सन्ध्युपगतानि चेति' इति ता. । वृद्धवाग्भटाचार्येणाऽत्र 'अत्याशिनाम्, वातात्मकानाम्, उपद्रववताम्' इत्यधिक लक्षणत्रय पठ्यते । ३ 'भवति चात्र' इति ता. । ४ 'वर्जयीत विचक्षण.' इति ता. । ५ 'कपालञ्च' इति ता. । ६ 'आदितो यच्च' इत्यादिरयं चतुर्दशश्लोकस्य पूर्वार्धस्ता० पुस्तके नास्ति । ७ 'सम्यक्संहितमप्यस्थि' इति हा० । ८ 'दुर्निक्षेपनिबन्धनात्' इति ता. । ९ 'तत्तु वर्जयेत्' इति हा० । 'विक्रियान्तमपि व्रजेत्' इति ता० । १० 'मध्यस्य वयसोऽवस्था.' इत्यादिस्तथा च 'तत्र स्थिरो भवेज्जन्तु' इत्यादिश्च श्लोकार्धौ ता० पुस्तके न विद्येते । ११ 'विभज्यन्ते' इति ता. । तथैव च मा० । १२ 'स्फुटन्त्यन्यानि भूयसा' इति वृ० वा० ।

# षोडशोऽध्यायः ।

अथातो मुखरोगाणां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मुखरोगाः पञ्चषष्टिर्भवन्ति सप्तस्वायतनेषु । तत्रायतनानि- ओष्ठौ, दन्तमूलानि, दन्ताः, जिह्वा, तालु, कण्ठः, सर्वाणि चेति । तत्राष्टावोष्ठयोः, पञ्चदश दन्तमूलेषु[1], अष्टौ दन्तेषु, पञ्च जिह्वायां, नव तालुनि, सप्तदश कण्ठे, त्रयः सर्वेष्वायतनेषु ॥ ३ ॥

तत्रौष्ठप्रकोपा वातपित्तश्लेष्म[2]सन्निपातरक्तमांसमेदोभिघातनिमित्ताः ॥ ४ ॥

कर्कशौ परुषौ स्तब्धौ कृष्णौ[3] तीव्ररुगन्वितौ ॥
दाल्येते परिपाट्येते ह्योष्ठौ मारुतकोपतः ॥ ५ ॥

[4]आचितौ पिडकाभिस्तु सर्षपाकृतिभिर्भृशम् ॥
सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥ ६ ॥

सवर्णाभिस्तु[5] चीयेते पिडकाभिरवेदनौ ॥
कण्डूमन्तौ[6] कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥ ७ ॥

सकृत् कृष्णौ सकृत् पीतौ सकृच्छ्वेतौ तथैव च ॥
सन्निपातेन विज्ञेयावनेकपिडिकाचितौ ॥ ८ ॥

खर्जूरफलवर्णाभिः पिडकाभिः[7] समाचितौ ॥
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ९ ॥

---

१ 'दन्तमूले' इति ता. । २ 'वातपित्तकफ°' इति ता. । ३ 'सम्प्राप्तानिलवेदनौ' इति ता० तथैव च मा. । ४ 'चीयेते पिडकाभिश्च सरुजाभिः समन्ततः ॥ सदाहपाकपिडकौ पीताभासौ च पित्ततः' ॥ इति ता० तथैव च मा० । ५ 'सवर्णाभिश्च' इति ता० तथैव च मा० । ६ 'भवतस्तु कफादोष्ठौ' इति ता० तथैव च मा० । ७ 'पिडकाभिर्निपीडितौ' इति ता० तथैव च मा० ।

मांस[1]दुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ ॥
जन्तवश्चात्र मूर्च्छन्ति [2]सृक्कस्योभयतो मुखात् ॥ १० ॥
मेद[3]सा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ॥
अच्छं स्फटिकसङ्काशमास्रावं स्रवतो गु[4]रू ॥ ११ ॥
[5]क्षतजाभौ विदीर्येते पाट्येते चाभिघाततः ॥
[6]ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥ १२ ॥

दन्तमूलगतास्तु—शीतादो, दन्तपुप्पुटको, दन्त[7]वेष्टकः, शौषिरो, महाशौषिरः, परिदर, उपकुशो, दन्तवैदर्भो, वर्धनः, अधिमांसो, नाड्यः पञ्चेति ॥ १३ ॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्तते ॥
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ १४ ॥
दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ॥
शीतादो नाम स व्याधिः कफशोणितसंभवः ॥ १५ ॥
दन्तयोस्त्रिषु वा यस्य [8]श्वयथुः सरुजो महान् ॥
दन्त[9]पुप्पुटको ज्ञेयः कफरक्तनिमित्तजः ॥ १६ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ॥
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १७ ॥

---

१ 'गुरू स्थूलौ मांसदुष्टौ' इति ता० तथैव च मा०। २ 'नरस्योभयतोमुखात्' इति ता० तथैव च मा०। ३ 'सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ गुरू' इति ता० तथैव च मा०। ४ 'भृशम्' इति ता० तथैव च मा०। ५ 'ओष्ठौ पर्यवदीर्येते पाट्येते चासकृत्पुन॰' इति ता०। ६ ताडपत्रपुस्तके 'ग्रथितौ च समाख्यातौ इत्याद्यर्धश्लोकानन्तरम् 'ततो व्रणः सुसंरूढो मृदुत्वमुपगच्छति' इत्ययमधिकः पाठ उपलभ्यते। ७ 'दन्तवेष्ट॰' इति ता.। ८ 'श्वयथुः स्पर्शनासह॰' इति ता० 'श्वयथुर्जायते महान्' इति च मा०। ९ 'दन्तपुप्पुटको नाम स व्याधिः कफरक्तज॰' इति ता० तथैव च मा०।

श्वयथुर्दन्तमूलेषु रुजावान् कफ[1]रक्तजः ॥
लालास्रावी स विज्ञेयः कण्डूमाञ्[2]शौषिरो गदः ॥ १८ ॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ॥
दन्तमांसानि पच्यन्ते मुखं च परिपीड्यते ॥ १९ ॥
यस्मिन् स सर्वजो व्याधिर्म[3]हाशौषिरसंज्ञकः ॥
दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चा[4]प्यसृक् ॥ २० ॥
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥
वेष्टे[5]षु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च[6] ॥ २१ ॥
[7]आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥
[8]आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ २२ ॥
य[9]स्मिंन्नुपकुशः स स्यात् पित्तरक्तकृतो गदः ॥
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ॥ २३ ॥
भ[10]वन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ॥ २४ ॥
[11]वर्धनः स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥
हानव्ये पश्चिमे दन्ते महाञ्छोथो महारुजः ॥ २५ ॥
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥
दन्तमूलगता नाड्य. पञ्च ज्ञेया यथेरिताः ॥ २६ ॥

---

१ 'कफसम्भवः' इति ता० 'रक्तपित्तज.' इति च वृ० वा० । २ 'लालास्रावी स विज्ञेय' शौषिरो नाम नामत ' इति ता० तथैव च मा० तथैव च 'लालास्रावी स सुषिरो दन्तमांसप्रशातनः' इति वृ० वा० । ३ 'स सन्निपातज्वरवान् सपूयरुधिरस्रुति' ॥ महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः' इति वृ० वा० । ४ 'चासकृत्' इति ता. । ५ 'वेष्टः सदाह पचति यस्य दन्ताश्चलन्ति च' इति ता० । ६ अस्मादेकविंशतितमश्लोकादनन्तर ता० पुस्तके 'दाहेन वेष्टास्तस्माश्च शुष्यन्ते चाग्निना यथा' इत्यधिकः पाठ उपलभ्यते । ७ 'अघट्टिताः' इति ता० । ८ अथ द्वाविंशतितमस्य श्लोकस्योत्तरार्धस्ता० पुस्तके नास्ति । ९ 'यस्मिन् सोपकुशो नाम' इति मा० । १० 'भवन्ति दन्ताश्च चला.' इति ता० तथा च 'चला भवन्ति दन्ताश्च' इति मा० । ११ 'खलिवर्धनसंज्ञोऽसौ' इति मा० ।

दन्तगतास्तु–दालनः, क्रिमिदन्तको, दन्तहर्षो, भञ्जनकः, दन्तशर्करा, कपालिका, श्यावदन्तको, हनुमोक्षश्चेति ॥ २७ ॥

दाल्यन्ते[1] बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः ॥
दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥ २८ ॥
कृष्णश्छिद्री[2] चलः स्रावी ससंरम्भो महारुजः ॥
अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः ॥ २९ ॥
शीतमुष्णं च दशनाः[3] सहन्ते स्पर्शनं न च ॥
यस्य तं दन्तहर्षं[4] तु व्याधिं विद्यात् समीरणात् ॥ ३० ॥
वक्रं[5] वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक् ॥
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ ३१ ॥
शर्करेव[6] स्थिरीभूतो मलो दन्तेषु यस्य वै ॥
सा दन्तानां गुणहरी[7] विज्ञेया दन्तशर्करा ॥ ३२ ॥
दलन्ति[8] दन्तवल्कानि यदा शर्करया सह ॥
ज्ञेया कपालिका सैव दशनानां विनाशिनी ॥ ३३ ॥
योऽसृङ्मिश्रेण[9] पित्तेन दग्धो दन्तस्त्वशेषत ॥
श्यावतां नीलतां वाऽपि गतः स श्यावदन्तकः ॥ ३४ ॥
वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः[10] ॥
हनुमोक्ष[11] इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ ३५ ॥

---

१ 'दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते ॥ दालनो नाम स व्याधि.' इति ता० तथैव च मा०। २ 'कृष्णच्छिद्रश्च चलति ससंरम्भो महारुजः' इति ता.। ३ 'दशनाः शीतमुष्णञ्च सहन्ते स्पर्शन न च' इति डा०। ४ 'शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजा' ॥ पित्तमारुतकोपेन दन्तहर्षः स नामत ' इति मा०। ५ 'वक्र वक्रं भवेद्यस्य दन्तभङ्गश्च जायते' इति ता० तथैव च मा०। ६ 'मलो दन्तगतो यस्तु पित्तमारुतशोषितः॥ शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा'॥ इति मा०। ७ 'गुणहरी' इति ता० 'गुणघ्नी तु' इति च मा०। ८ 'कपालेष्विव दीर्यत्सु दन्तानां सैवशर्करा॥ कपालिकेति विज्ञेया सदा दन्तविनाशिनी' इति ता० तथैव च मा०। ९ 'असृङ्मिश्रेण पित्तेन' इति ता० तथैव च मा०। १० 'हनुसन्धिविसङ्गतः' इति ता०। ११ 'हनुर्मोक्ष' इति ता.।

जिह्वागतास्तु—कण्टकास्त्रिविधास्त्रिभिर्दोषैः, अलास, उपजिह्विका[1] चेति ॥ ३६ ॥

जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ॥
पित्तेन[2] पीता परिदह्यते च चिता[3] सरक्तैरपि कण्टकैश्च ॥
कफेन गुर्वी बहला[4] चिता च मांसोद्भवैः[5] शाल्मलिकण्टकाभैः ॥३७॥
जिह्वातले[6] यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्तिः ॥
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु[7] जिह्वा भृशमेति पाकम् ॥३८॥
जिह्वाग्ररूपः[8] श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः ॥
प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति ॥ ३९ ॥

तालुगतास्तु—गलशुण्डिका, तुण्डिकेरी, अध्रुषः, कच्छपः[9], अर्बुदं, मांससङ्घातः, तालुपुप्पुटः, तालुशोषः, तालुपाक इति ४०
श्लेष्मासृग्भ्यां[10] तालुमूलात् प्रवृद्धो दीर्घः शोफो ध्मातबस्तिप्रकाशः ॥
तृष्णाकासश्वासकृत्[11] संप्रदिष्टो व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना ४१
शोफः[12] स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु ॥
शोफः[13] स्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः[14] सोऽध्रुषो रुग्ज्वराढ्यः॥

---

१ अथ जिह्वागतरोगस्ताडपत्रपुस्तके 'उपजिह्वा' इति नाम्ना पठ्यते वृद्धवाग्भटस्तु तमेव 'उपजिह्व' इति नाम्ना पठति । २ 'पित्तात्सदाहैरनुचीयते च' इति ता० तथैव च 'पित्तेन दह्यत्युपचीयते च' इति मा० । ३ 'दीर्घै' इति ता० तथैव च मा० । ४ 'बहला' इति ता० 'बहुला' इति च मा० । ५ 'मासाङ्कुरै' इति ता० 'मांसोच्छ्रयै' इति च मा० । ६ 'अधोगतो य. श्वयथु प्रगाढः' इति ता. । ७ 'च' इति ता० तथैव च मा० । ८ 'जिह्वाग्ररूप. श्वयथुर्हि जिह्वामुन्नाम्य जात' कफरक्तमूलः॥ लालाकरः कण्डुयुत' सचोषः स तूपजिह्वा पठिता भिषग्भिः'॥ इति ता० । माधवकरोऽपि प्रायोऽमुमेव पाठं पठति । ९ 'मांसकच्छप.' इति ह्रा० । ता० पुस्तकेऽस्मिन्स्थले 'कच्छपः, अर्बुदः, मांससङ्घात', तालुपुप्पुटकः' इत्येष पाठः पठ्यते । १० 'कफासृग्भ्यां' इति ता. । ११ 'तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्या गलशुण्डीति नाम्ना' इति ता० । १२ 'शोथः स्थूल.' इति मा० । १३ 'मृदुः शोथो' इति मा० 'मृदुः शोफो' इति ता० । १४ 'ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च' इति ता० तथैव च मा० ।

[1]कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्माऽ[2]रक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात्
पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ ४३ ॥
[3]दुष्टं मांसं श्लेष्मणा नीरुजं च तात्वन्तःस्थं मांससङ्घातमाहुः ॥४४॥
नी[4]रुक् स्थायी कोलमात्रः कफात् स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे
शोषोऽत्यर्थं दीर्यते चापि ता[5]लुः श्वासो वातात्ता[6]लुशोषः सपित्तात् ॥
पित्तं कुर्यात् पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति ॥ ४५ ॥

कण्ठगतास्तु—रोहिण्यः पञ्च, कण्ठशालूकम्, [7]अधिजिह्वो, वलयो, बलास, एकवृन्दो, वृ[8]न्दः, शतघ्नी, गिलायु, गलविद्रधिः, गलौघः, स्वरघ्नो, मांसतानो, वि[9]दारी चेति ॥ ४६ ॥

गलेऽनिलः पित्तकफौ च[10] मूर्च्छितौ
पृथ[11]क् समस्ताश्च तथैव शोणितम् ॥
प्रदूष्य मांसं गलरोधिनोऽङ्कुरान्
सृजन्ति यान् साऽसुहरा हि रोहिणी ॥ ४७ ॥

जि[12]ह्वां समन्ताद्भृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः ॥
तां रोहिणीं वातकृतां वदन्ति वा[13]तात्मकोपद्रवगाढयुक्ताम् ॥ ४८ ॥

---

१ 'कूर्मोन्नतो' इति ता० तथैव च मा०। २ 'रोगो ज्ञेयः कच्छपः श्लेष्मणा तु' इति ता०। ३ 'दुष्टं मांसं नीरुज तालुमध्ये कफाच्छून मांससङ्घातमाहुः' इति मा०। ४ 'अरुक् स्थिरः कोलमात्रः कफेन स मेदसा पुप्पुटस्तालुदेशे' इति ता.। ५ 'तालु' इति ता० 'तालुः' इति च मा०। ६ 'श्वासश्चोग्रस्तालुशोषोऽनिलाच्च' इति मा०। ७ 'अधिजिह्वा, वलयः, अलासः' इति ता.। ८ 'वृन्दः' अयं कण्ठगतरोगो नोपलभ्यते ताडपत्रलिखितसुश्रुतसंहितायाम्। ९ 'विदारिश्चेति' इति ता.। १० 'तु' इति ता० 'च' इति मा० तथैव च हा०। ११ 'प्रदूष्य मांसं च तथैव शोणितम् ॥ गलोपसंरोधकरैस्तथाङ्कुरैर्हिनस्त्यसून् व्याधिरियं हि रोहिणी' इति ता०। १२ 'जिह्वासमन्ताद् भृशवेदना तु मांसाङ्कुरैः कण्ठनिरोधिनी या' ॥ इति ता.। १३ 'तिस्रश्च तास्त्वादित एव कृच्छ्राः' इति ता.।

क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजा स्यात् ॥
[2]स्रोतोनिरोधिन्यपि मन्दपाका [3]गुर्वी स्थिरा सा कफसंभवा वै ॥४९॥
[4]गम्भीरपाकाऽप्रतिवारवीर्या त्रिदोषलिङ्गा त्रयसंभवा स्यात् ॥
स्फोटाचिता पित्तसमानलिङ्गाऽसाध्या प्रदिष्टा रुधिरात्मिकेयम् ॥५०॥
कोलास्थिमात्रः कफसंभवो यो ग्रन्थिर्गले कण्टकशूकभूतः ॥
खरः स्थिरः शस्त्रनिपातसा[5]ध्यस्तं कण्ठशालूकमिति ब्रुवन्ति ॥ ५१ ॥
जिह्वाग्ररूपः श्वयथुः कफात्तु [6]जिह्वाप्रबन्धोपरि रक्तमिश्रात् ॥
[7]ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥ ५२ ॥
बलास एवायतमुन्नतं च शोफं करोत्यन्नगतिं निवार्य ॥
तं सर्वथैवाप्रतिवारवीर्यं विवर्जनीयं वलयं वदन्ति ॥ ५३ ॥
गले तु शोफं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् ॥
मर्मच्छिदं दुस्तरमेतदाहुर्ब[8]लाससंज्ञं निपुणा विकारम् ॥ ५४ ॥
[9]वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च ॥
नाम्नैकवृन्दः [10]परिकीर्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ ५५ ॥
समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ॥
तं [11]चापि पित्तक्षतजप्रकोपाद्वि[12]द्यात् सतोदं पवनास्रजं तु ॥ ५६ ॥

---

१ 'तु' इति ता. । २ 'स्रोतोनिरोधिन्यचलोन्नता च' इति ता० 'स्रोतोविरोधिन्यचलोन्नता च' इति च मा० । ३ 'स्थिराङ्कुरा या कफसम्भवा सा' इति ता० तथैव च मा० । ४ 'गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रितयोत्थिता तु ॥ स्फोटैश्चिता पित्तसमानलिङ्गाऽसाध्या प्रदिष्टा रुधिरात्मका तु' ॥ इति ता० अयमेव पाठ' किञ्चिद्भेदेन माधवकरेणापि पठितोऽस्ति । ५ 'तत्कण्ठशालूक०' इति ता । ६ जिह्वोपरिष्ठादपि' इति ता० तथैव च मा० । ७ 'ज्ञेयाऽधिजिह्वा' इति ता. । ८ '°रलाससंज्ञं' इति ता. । ९ 'वृत्तोन्नतोऽन्तः श्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च' ॥ इति ता० तथैव च मा० । १० 'परिकीर्त्यतेऽसौ' इति ता० 'परिकल्पितोऽसौ' इति च हा० । ११ 'तच्चापि' इति ता० तथैव च मा० । १२ 'ज्ञेयं सतोदं पवनात्मक तु' इति ता० तथैव च मा० ।

वर्तिर्घना कण्ठनिरोधिनी या[1] चिताऽतिमात्रं पिशितप्ररोहैः ॥
नानारुजोच्छ्रायकरी[2] त्रिदोषाज्ज्ञेया[3] शतघ्नीव शतघ्न्यसाध्या ॥५७॥
ग्रन्थिर्गले त्वामलकास्थिमात्रः
स्थिरो[4]ऽल्परुक्स्यात् कफ[5]रक्तमूर्तिः ॥
संलक्ष्यते[6] सक्तमिवाशनं च
स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ ५८ ॥
सर्वं गलं व्याप्य समुत्थितो यः
शोफो रुजो[7] यत्र च सन्ति सर्वाः ॥
स सर्वदोषो[8] गलविद्रधिस्तु
तस्यैव तुल्यः खलु सर्वजस्य ॥ ५९ ॥
शोफो महानन्नजलावरोधी तीव्रज्वरो वातगते[9]र्निहन्ता ॥
कफेन जातो रुधिरान्वितेन गले गलौघः [10]परिकीर्त्यतेऽसौ ॥ ६० ॥
योऽति[11]प्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः ॥
कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥ ६१ ॥
प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण ॥
स मांस[12]तानः कथितोऽवलम्बी प्राणप्रणुत् सर्वकृतो विकारः ॥६२॥
सदाहतोदं श्वयथुं सरक्त[13]मन्तर्गले पूतिविशीर्णमांसम् ॥
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात् स तु येन शेते ॥ ६३ ॥

---

१ 'तु' इति ता.। २ 'अनेकरुक् प्राणहरी त्रिदोषात्' इति ता० तथैव च मा०। ३ 'ज्ञेया शतघ्नी तु शतघ्निरूपा' इति ता.। ४ 'स्थिरोऽतिरुक्' इति मा०। ५ 'कफपित्तमूर्तिः' इति ता.। ६ 'यो लक्ष्यते रक्तमिवास्रवश्च' इति ता। ७ 'रुजा' इति ता.। ८ 'सर्वदोषैर्गल०' इति ता.। ९ 'वायुगतेर्निहन्ता' इति ता० तथैव च मा०। १० 'पठितो भिषग्भिः' इति ता० 'परिकीर्त्यते तु' इति च मा०। ११ 'यस्ताम्यमानः' इति ता० तथैव च मा०। १२ 'स मांसतानेति बिभर्ति सञ्ज्ञां' इति ता.। १३ 'सताम्र०' इति ता०। 'सुताम्र०' इति च मा०।

सर्वसरास्तु[1] वातपित्तकफशोणितनिमित्ताः ॥ ६४ ॥
स्फोटैः सतोदैर्वदनं समन्ताद्यस्याचितं सर्वसरः स वातात् ॥
रक्तैः[2] सदाहैस्तनुभिः सपीतैर्यस्याचितं चापि स पित्तकोपात् ॥ ६५ ॥
कण्डूयुतैरल्परुजैः[3] सवर्णैर्यस्याचितं चापि स वै कफेन ॥
रक्तेन[4] पित्तोदित एक एव कैश्चित् प्रदिष्टो मुखपाकसंज्ञः[5] ॥ ६६ ॥

**इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां द्वितीयं निदानस्थानम् ॥ २ ॥**

इति सुश्रुतसंहितायां निदानस्थाने मुखरोगनिदानं नाम षोडशोऽध्यायः ॥ १६ ॥



१ 'सर्वसरास्तु वातपित्तकफनिमित्ताः' इति ता. । २ 'रक्तैः सदाहैः पिटकैः सपीतैः' इति ता. । ३ 'अवेदनैः कण्डुयुतैः सदाहैः' इति ता० । 'अवेदनैः कण्डुयुतैः सवर्णैः' इति च मा० । ४ 'रक्तेन पित्तोदित एक एव कैश्चित् प्रदिष्टो मुखपाकसंज्ञः' इत्यर्धश्लोकस्ता० पुस्तके तथा च माधवकरप्रणीतेऽपि ग्रन्थे नोपलभ्यते । ५ ता० पुस्तकेऽस्य षट्षष्टितमश्लोकस्याग्रे 'ग्रन्थ्यपच्यर्बुदं गण्डं वृद्धिं दश च श्लीपदं ॥ क्षुद्रं शूकं सभग्नं च मुखरोगेण षट्स्मृताः ॥ सूत्रे प्रदिष्टं दश षट् च पूर्वं स्थाने निदानं भवतीति यच्च ॥ सविस्तरं तत्कथितं मयेदं स्वयम्भुना यत् कथितं हिताय' ॥ इत्यधिकाः श्लोकाः पठिता उपलभ्यन्ते ।

# अथ शारीरस्थानम् ।

## प्रथमोऽध्यायः ।

अथातः[1] सर्वभूतचिन्ताशारीरं व्याख्यास्यामः ॥ १ ॥

यथोवाच[2] भगवान् धन्वन्तरिः ॥ २ ॥

सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य[3] जगतः संभवहेतुरव्यक्तं नाम । तदेकं बहूनां[4] क्षेत्रज्ञानामधिष्ठानं समुद्र[5] इवौदकानां भावानाम् ॥ ३ ॥

तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव । तल्लिङ्गाच्च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते; स[6] त्रिविधो वैकारिकस्तैजसो भूतादिरिति । तत्र वैकारिकादहङ्कारात्तैजससहायात्[7]तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते, तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राण[8]वाग्घस्तोपस्थपायुपादमनांसीति; तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः; भूतादेरपि[9] तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्र, रसतन्मात्रं, गन्धतन्मात्रमिति[10]; तेषां विशेषाः शब्दस्पर्शरूपरस-

---

१ 'अथातः सर्वभूतचिन्तां शारीर व्याख्यास्यामः' इति ता. । २ अस्मिन्नध्याये पठ्यमानमिद द्वितीय सूत्रं ता० पुस्तके तथा च श्रीहाराणचन्द्रसंपादितायां सुश्रुतसंहितायां न पठ्यते तथैवात• परमपि चास्मिन्स्थाने प्रत्यध्यायमिति तच्चिन्त्यम् । ३ 'अखिलस्यास्य' इति ता. । ४ 'बाहूनां' इत्यभावे 'अनेकेषा' इति ता. । ५ 'समुद्र इवौदकौजसा भावानाम्' इति ता. । ६ 'स च त्रिविध•' इति हा । 'स तु त्रिविध•' इति पा० । ७ 'तैजससहायात्' इत्ययं पाठस्ता पुस्तके नास्ति । ८ 'घ्राणो' इति ता. । ९ ता पुस्तके 'भूतादेस्तल्लक्षणान्येव' इत्येव पठ्यते. न तत्र 'भूतादेरपि तैजससहायात्तल्लक्षणान्येव' इति पठ्यते । १० ता. पुस्तके 'गन्धतन्मात्रं' इत्यनन्तरम् 'तेभ्यो भूतानि व्योमानिलानलजलोर्व्यस्तेभ्यस्तद्विशेषा• शब्दस्पर्शरूपरसगन्धा•, एवमेतानि चतुर्विंशति तत्त्वानि व्याख्यातानि भवन्ति' इति पठितमुपलभ्यते ।

गन्धाः; तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः; एवमेषा तत्त्व-चतुर्विंशतिर्व्याख्याता ॥ ४ ॥

तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः; कर्मेन्द्रियाणां यथासङ्ख्यं वचनादानानन्दविसर्गविहरणानि ॥ ५ ॥

अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः; शेषाः षोडशविकाराः ॥ ६ ॥

स्वः[1] स्वश्चैषां विषयोऽधिभूतं; स्वयमध्यात्मम्; अधिदैवतम्[2]—अथ बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः[3], पृथिवी घ्राणस्य, वाचोऽग्निः[4], हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः, प्रजापतिरुपस्थस्येति ॥ ७ ॥

तत्र[5] सर्व एवाचेतन एष वर्गः पुरुषः[6] पञ्चविंशतितमः कार्यकारणसंयुक्तश्चेतयिता भवति । सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं[7] प्रवृत्तिमुपदिशन्ति, क्षीरादींश्चात्र हेतूनुदाहरन्ति ॥ ८ ॥

अत ऊर्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः । तद्यथा—उभावप्यनादी, उभावप्यनन्तौ, उभावप्यलिङ्गौ, उभा-

---

१ 'स्व स्व चैषां विषये विभुत्व स्वयमध्यात्मम्' इति ता. पाठः । २ 'अधिदैवत तु–अथ बुद्धेर्ब्रह्मा' इति ता. 'अधिदैवतञ्च–अथ बुद्धेर्ब्रह्मा' इति हा० । तथा च पालकाप्यमुनिना स्वसंहिताया 'देवगुणा' इत्यधिकरणे 'विक्रान्तौ विष्णु.। गले शक्र'। कोष्ठेऽग्निः । उपस्थे प्रजापतिः । प्राणापानयोर्वायुः । कर्णयोर्दिशः । खेष्वाकाशम् । जिह्वाया सरस्वती । पदेपु मित्रावरुणौ । चक्षुष्यादित्यः । कर्मणि विश्वकर्मा । भूमिरस्य देहे । शब्दे रुद्रः । वाच्यग्निः क्षान्तौ ब्रह्मा । पर्जन्यो हृदये । भुजयोरश्विनौ । त्रिके मरुतः' इत्यधिदैवत पठितम् । ३ 'रसनाप.' इति ता । ४ 'वचसोऽग्निः' इति पा० तथैव च हा० । ५ 'तत्र' इति क्वचित्पुस्तके न पठ्यते । ६ 'पुरुपश्च पञ्चविंशतितमश्चेतयिता । स तु करणकार्यसम्प्रयुक्तः सत्यप्यचैतन्ये प्रधानस्य' इति ता. । ७ 'पुरुषकैवल्यार्था' इति ता. । तथैव च पा० ।

वपि नित्यौ, [1]उभावप्यनपरौ, उभौ च सर्वगताविति; एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति, बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा [2]अबीजधर्माणोऽप्रसवधर्माणो मध्यस्थधर्माणश्चेति ॥ ९ ॥

तत्र कारणानुरूपं कार्यमिति कृत्वा सर्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति; तदञ्जनत्वात्तन्मयत्वाच्च [3]तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते ॥ १० ॥

वैद्यके तु—

[4]स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ॥
परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥ ११ ॥
[5]तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ॥
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥ १२ ॥
तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा ॥
[6]भूतेभ्यो हि परं [7]यस्मान्नास्ति चिन्ता चिकित्सिते ॥ १३ ॥

यतोऽभिहितं—"तत्संभवद्रव्यसमूहो भूतादिरुक्तः" (सू० अ० १); भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते, तथेन्द्रियार्थाः ॥ १४ ॥

---

१ 'उभावप्यपरौ' इति हा० तथैव च पा०। २ 'अबीजधर्मिणोऽप्रसवधर्मिणो मध्यस्थधर्मिणश्चेति' इति ता.। ३ 'तद्गुण एव पुरुषो भवतीत्येके भाषन्ते' इति ता.। ४ 'स्वभावो नियतिः कालः परिणामस्तथेश्वरः ॥ यदृच्छेति च मन्यन्ते प्रकृति पृथुदर्शिन'॥ इति ता.। ५ 'ततो जातानि भूतानि तद्गुणान्येव चादिशेत् ॥ तेभ्यस्तल्लक्षणः कृत्स्नो भूतग्रामः प्रजायते ॥ इति ता.। ६ 'भूतेभ्योऽपि' इति ता.। ७ 'तस्मात्' इति ता.।

भवति चात्र—

इन्द्रियेणेन्द्रियार्थं[1] तु स्वं स्वं गृह्णाति मानवः ॥
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥ १५ ॥

न चायुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगताः क्षेत्रज्ञा नित्याश्च; असर्व-[2]गतेषु च क्षेत्रज्ञेषु नित्यपुरुषख्यापकान् हेतूनुदाहरन्ति; आयुर्वेद-[3]शास्त्रेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च, तिर्यग्योनिमानुषदेवेषु संचरन्ति धर्माधर्मनिमित्तं; त एतेऽनुमानग्राह्याः[4] परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः[5] सन्निपातेष्वभिव्यज्यन्ते, यतोऽभिहितं— 'पञ्चमहाभूतशरीरिसमवायः पुरुषः' (सू० अ० १) इति; स[6] एष कर्मपुरुषश्चिकित्साधिकृतः[7] ॥ १६ ॥

तस्य[8] सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ[9] बुद्धि-र्मनः सङ्कल्पो विचारणा[10] स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः ॥ १७ ॥

सात्त्विकास्तु[11]—आनृशंस्यं संविभागरुचिता तितिक्षा सत्यं धर्म

१ 'इन्द्रियै.' इति ता. । २ असर्वगतेषु च क्षेत्रज्ञेष्वनित्येषु च पुरुष-ख्यापकान् हेतूनुदाहरन्ति' इति ता० । ३ 'आयुर्वेदसिद्धान्तादसर्वगताः' इति ता. । आयुर्वेदशास्त्रसिद्धान्तेष्वसर्वगताः' इति च पा० । ४ 'अनुमा-नग्राह्याश्चरमसूक्ष्माश्चेतनावतः' इति ता. । ५ 'शुक्रार्तवयो.' इति ता. । ६ 'स खल्वेष' इति ता. । 'स एव' इति च हा० । ७ 'चिकित्सायामधिकृत.' इति ता. । ८ 'तस्य खलु सुखदुःखे' इति ता. । वृद्धवाग्भटाचार्यैरष्टाङ्ग-संग्रहे 'नानायोनिषूत्पत्तिर्मनश्चेतनेन्द्रियाणि प्राणप्रानौ धारणमाकृति-स्वरवर्णविशेषाः कामक्रोधलोभभयहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्ना-हकारसुखदुःखायुरात्मज्ञानानि च' इति य आत्मजा भावाः पठितास्तेऽपीह चिन्त्या भवन्ति । ९ 'प्राणापानौ निमेषोन्मेषौ' इति ता. । १० 'विचार-णाऽनुस्मृतिः' इति ता. । ११ 'शौचमास्तिकत्वं कृतज्ञता दाक्षिण्यं व्यवसायः शौर्यं गाम्भीर्यं बुद्धिर्मेधा स्मृतिः शुक्लधर्मरुचिरभिषङ्गाभावस्तमो-गुणविपर्ययश्च' इति वृ० वा० ।

आस्तिक्यं ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च; [1]राजसास्तु–[2]दुःखबहुलताऽटनशीलताऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामः क्रोधश्च; [3]तामसास्तु–विषादित्वं नास्तिक्यमधर्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्वमकर्मशीलता निद्रालुत्वं चेति ॥ १८ ॥

[4]आन्तरिक्षाः–शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता च; [5]वायव्यास्तु–स्पर्शः स्पर्शेन्द्रियं सर्वचेष्टासमूहः सर्वशरीरस्पन्दनं लघुता च; [6]तैजसास्तु–रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्यं च; [7]आप्यास्तु–रसो [8]रसनेन्द्रियं सर्वद्रवसमूहोगुरुता शैत्यं स्नेहो रेतश्च; [9]पार्थिवास्तु–गन्धो गन्धेन्द्रियं [10]सर्वमूर्तसमूहो गुरुता चेति ॥ १९ ॥

तत्र सत्त्वबहुलमाकाशं, रजोबहुलो वायुः, [11]सत्त्वरजोबहुलोऽग्निः [12]सत्त्वतमोबहुला आपः, [13]तमोबहुला पृथिवीति ॥ २० ॥

---

१ 'दुरुपचारतानार्यं शौर्यं मात्सर्यममितभाषित्वमहङ्कारो लोलुपत्व दम्भो मानः क्रोधो हर्षः कामश्च' इति वृ० वा०। २ 'दुःखबहुलताप्रदानं दुःशीलत्वमकारुण्यमानृतिकत्वमहङ्कारो दम्भो मानो हर्षः काम' क्रोधश्चेति' इति ता.। ३ 'अज्ञानं विषाद. प्रमादो निद्राऽऽलस्यं क्षुत्तृष्णा शोको मात्सर्यं विप्रतिपत्ति. परातिसन्धानं सत्त्वगुणवैपरीत्य च' इति वृ० वा०। ४ 'श्रोत्र शब्दः सर्वस्रोतांसि विविक्तता च' इति वृ० वा०। ५ 'स्पर्शन स्पर्श. प्रश्वासोच्छ्वासादिपरिस्पन्दनानि लाघव च' इति वृ० वा०। ६ 'दर्शन रूप पित्तमूष्मा पक्तिः सन्तापो मेधा वर्णो भास्तेजः शौर्यं च' इति वृ० वा०। ७ 'रसन रसः स्वेदक्लेदवसाऽसृक्शुक्रमूत्रादिद्रवसमूहः शैत्य स्नेहश्च' इति वृ० वा०। ८ 'रसेन्द्रियं' इति ता.। ९ 'घ्राण गन्धः केशनखास्थ्यादिमूर्तसमूहो धैर्य स्थैर्यं च' इति वृ० वा०। १० 'सर्वमूर्तिसमूहो' इति ह्ा०। ११ 'उभयबहुलोऽग्निः' इति वृ० वा०। १२ 'सत्त्वतमोबहुलमम्बु' इति वृ० वा०। १३ 'तमोबहुला भूः' इति वृ० वा०।

श्लोकौ[1] चात्र भवतः—

अन्योऽन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् ॥

स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं[2] लक्षणमिष्यते ॥ २१ ॥

अष्टौ प्रकृतयः प्रोक्ता विकाराः[3] षोडशैव तु ॥

क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः ॥ २२ ॥

इति सुश्रुतसंहितायां शारीरस्थाने सर्वभूतचिन्ता-
शारीरं नाम प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

अथातः शुक्रशोणितशुद्धिशारीरं[4] व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

[5]वात-पित्त-श्लेष्म-कुणप-ग्रन्थि-पूतिपूय-क्षीण-मूत्रपुरीषरेतसः[6] प्रजोत्पादने न समर्था भवन्ति ॥ ३ ॥

तेषु वातवर्णवेदनं वातेन, पित्तवर्णवेदनं पित्तेन, श्लेष्मवर्णवेदनं श्लेष्मणा, कुणपगन्ध्यनल्पं च रक्तेन[7], ग्रन्थिभूतं श्लेष्मवाताभ्यां, पूतिपूयनिभं पित्तश्लेष्मभ्यां[8], क्षीणं[9] प्रागुक्तं पित्तमारुताभ्यां, मूत्रपुरीषगन्धि सन्निपातेनेति । तेषु कुणपग्रन्थिपूतिपूयक्षीणरेतसः[10] कृच्छ्रसाध्याः, मूत्रपुरीषरेतसस्त्वसाध्या[11] इति ॥ ४ ॥

---

१ ता० पुस्तके 'श्लोकौचात्र भवत.' इत्यभावे 'भवति चात्र' इति पठ्यते। २ 'व्यक्तलक्षणमिष्यते' इति ता. । ३ 'विकाराश्चैव षोडश' इति ता । ४ 'शुक्रशोणितविशुद्धि शारीर' इति ता. । 'शुक्रशोणितशुद्धि नाम शारीर' इति च पा० । ५ 'वातपित्तश्लेष्मशोणितकुणपग्रन्थि' इत्यादि ता० । 'वातपित्तश्लेष्मकुणपगन्धि' इत्यादि पा० । ६ "मूत्रपुरीषरेतांसि प्रजोत्पादनेष्वसमर्थानि भवन्ति' इति ता. । ७ ता० पुस्तकेऽस्मिस्थले 'शोणितवर्ण पित्तवेदन शोणितेन कुणपञ्च रक्तेन' इति पाठ उपलभ्यते । ८ 'पित्तशोणिताभ्यां' इति ता. । ९ 'क्षीणशुक्र पित्तमारुताभ्याम्' इति ता. । १० ता० पुस्तके "क्षीण" इति शब्दो नोपलभ्यते । ११ क्वचित्पुस्तके 'मूत्रपुरीषरेतसस्त्वसाध्याः' इति पदतः परम् 'साध्यमन्यच्च' इत्यधिकं पठ्यते ।

आर्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति; तदपि दोषवर्णवेदनादिभिर्विज्ञेयम्[1]। तेषु[2] कुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्यं, साध्यमन्यच्चेति ॥ ५ ॥

भवन्ति[3] चात्र—

तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत् ॥
क्रियाविशेषैर्मतिमांस्तथा[4] चोत्तरबस्तिभिः ॥ ६ ॥
पाययेत[5][6] नरं सर्पिर्भिषक् कुणपरेतसि ॥
धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ॥ ७ ॥
पाययेदथवा सर्पिः शालसारादिसाधितम् ॥
ग्रन्थिभूते शटीसिद्धं पालाशे वाऽपि भस्मनि[8] ॥ ८ ॥
परूषकवटादिभ्यां पूयप्रख्ये[9] च साधितम् ॥
प्रागुक्तं वक्ष्यते यच्च तत् कार्यं क्षीणरेतसि ॥ ९ ॥

---

१ "°वेदनाभि·' इति ता.। २ 'तेषु कुणपग्रन्थिपूतिपूयप्रकाशन्तदसाध्य' इति ता.। तथाच 'तेषु कुणपग्रन्थिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्य' इति पा०। ३ ता० पुस्तके 'भवन्ति चात्र' इत्यभावे 'भवन्ति चात्र श्लोका·' इति पाठः। ४ 'तथैवोत्तरबस्तिभिः' इति ता.। ५ अस्मात् षष्ठश्लोकादनन्तर ता० पुस्तके पुरोनिर्दिष्टोऽधिकः पाठ पठित उपलभ्यते यथा–'तत्र वातात्मके रेतसि बिल्वविदारीक्षीरमास्थापनम्। मधूकराम्रादेवदारुसरलविपक्वतैलन्तदुत्तरबस्तिषु विदध्यात्। दाडिममातुलुङ्गफलसैन्धवक्षारवसुकवसिरसिद्ध सर्पिः पाययेत्। पित्तात्मके रेतसि पयस्याश्रीपर्णीमधूकविपक्व क्षीरमास्थापनम्। सर्जधवकल्क योन्यां धारयेत्। मधुकविपक्वन्तैलमनुवासनन्तदेवोत्तरबस्तिञ्च विदध्यात्। काण्डेक्षुश्वदंष्ट्रागुडूचीमधुपर्णीतृणपञ्चमूलसिद्ध सर्पिः पाययेत्। श्लेष्मात्मके रेतसि राजवृक्षकषायमास्थापनम्। पिप्पलीविडङ्गमधुविपक्व तैलमनुवासनन्तदेवोत्तरबस्तिञ्च विदध्यात्। पाषाणभेदकाश्मर्यामलकपिप्पलीवसुकवसिरसिद्ध घृतं प्रयच्छेत् पानार्थम्' इति। ६ 'पाययेन्मनुज सर्पि·' इति ता.। ७ 'कुणपाख्ये पिबेत्सर्पि·' इति ता.। ८ 'ग्रन्थिभूतेऽश्मभिः सिद्ध' इति ता.। 'ग्रन्थिभूतेऽश्मभित्सिद्धं' इति च पा०। ९ 'पूयाभे चापि' इति ता.।

विद्रप्रभे पाययेत्[1] सिद्धं चित्रकोशीरहिङ्गुभिः ॥[2]
स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम् ॥ १० ॥
योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिना ॥
स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च ॥ ११ ॥
शुक्रमिच्छन्ति, केचित्तु तैलक्षौद्रनिभं[3] तथा ॥
विधिमुत्तरबस्त्यन्तं कुर्यादार्तवशुद्धये ॥ १२ ॥
स्त्रीणां[4] स्नेहादियुक्तानां चतसृष्वार्तवार्तिषु ॥
कुर्यात्कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥ १३ ॥

---

१ 'पाययेत् सर्पिः' इति ता. । २ ता०पुस्तकेऽस्माच्छ्लोकार्धात्पर पुरोनिर्दिष्टोऽधिकः पाठ पठित उपलभ्यते यथा-'स्नेहादीनां क्रम कुर्यात् षट्स्वप्येतेपु पण्डितः ॥ असेवनाच्चिर स्त्रीणां क्रियायोगात्तथैव च ॥ कषायकटुतिक्तानां द्रव्याणामतिसेवनात् ॥ वेगाघाताच्च योगीना (?) गमनाच्च प्रदुष्यति ॥ यथैवोक्त तथैवोत्तरबस्तिञ्च विदध्यात्। तत्र वातात्मके . भद्रदारुकाश्मर्यफलसिद्ध घृत पाययेत् । पयस्याकाश्मर्यफलक्षीरविदारीक्षीरोदकसिद्ध वा । कृशरपायसपिण्ड वा योन्या धारयेत् । मधुकमुद्गपर्णीकषायमाचमनम् । पित्तात्मके चार्तवे काकोलीक्षीरविदारीकाथ शर्करायुक्त पाययेत् । मधूकपुष्पकाश्मर्यफलक्काथ फानितयुक्तं वा । चन्दनपयस्याकल्क योन्यां धारयेत् । निम्बगैरिककषायमाचमनम् । श्लेष्मात्मके भद्रश्रीकटुकरोहिणीकषाय पाययेत् । क्षीरवृक्षप्रवालकल्क वा तिन्दुककपित्थशलाटुचूर्ण वा क्षौद्रेण लेहयेत् । सर्जधवकल्क वा योन्या धारयेत् । लोध्रतिन्दुककषायाचमनम् । ग्रन्थिभूते पाठाशृङ्गवेरचूर्णयुक्ता श्वेतसुरसां प्रयच्छेत् । कुष्ठभद्रदारुकल्क योन्यां धारयेत् । तेषामेव कषायमाचमनम् । कुणपाख्ये मञ्जिष्ठाभद्रश्रियो कषाय पाययेत् । कुटजफलभद्रश्री चन्दन वा शर्करायुक्तम् । पूयाभे वा तदेव प्रयच्छेत् । खदिरार्जुनकषाय योन्यां धारयेत् । तयोरेव कषायमाचमनम् । क्रिमिजाते विडङ्गपारिभद्रकमञ्जिष्ठाकषाय पाययेत् । क्षौद्रयुक्त सुराह्वारोचनाकल्क भद्रश्रियः कल्क योन्यां धारयेत् । तयोरेव कषायमाचमन भवति । भवति चात्र । विधिमुत्तरबस्त्यन्त कुर्यादार्तवशुद्धये' इत्यादि । ३ 'क्षौद्रतैलसमं तथा' इति ता. । ४ अयमर्धश्लोकस्ता. पुस्तके नास्ति ।

ग्रन्थिभूते पिबेत् पाठां त्र्यूषणं वृक्षकाणि च ॥
दुर्गन्धिपूयसङ्काशे[१] मज्जतुल्ये तथाऽऽर्तवे ॥ १४ ॥
पिबेद्भद्रश्रियः[२] क्काथं चन्दनक्काथमेव च ॥
शुक्रदोषहराणां च यथास्वमवचारणम् ॥ १५ ॥
योगानां[३] शुद्धिकरणं शेषास्वप्यार्तवार्तिषु ॥
अन्नं शालियवं मद्यं हितं मांसं च पित्तलम् ॥ १६ ॥
शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम् ॥
तदार्तवं प्रशंसन्ति यद्वासो[४] न विरञ्जयेत् ॥ १७ ॥
तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि ॥
असृग्दरं[५] विजानीयादतोऽन्यद्रक्तलक्षणात् ॥ १८ ॥
असृग्दरो[६] भवेत् सर्वः साङ्गमर्दः सवेदनः ॥
तस्यातिवृत्तौ[७] दौर्बल्यं भ्रमो मूर्च्छा तमस्तृषा ॥ १९ ॥
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥
तरुण्या हितसेविन्यास्तमल्पोपद्रवं[८] भिषक् ॥ २० ॥
रक्तपित्तविधानेन[९] यथावत् समुपाचरेत् ॥
दोषैरावृतमार्गत्वादार्तवं नश्यति स्त्रियाः ॥ २१ ॥
तत्र मत्स्यकुलत्थाम्लतिलमाषसुरा[१०] हिताः ॥

---

१ 'दुर्गन्धे पूतिसङ्काशे मज्जाभे चापि शोणिते' इति ता०। 'दुर्गन्धे पूयसङ्काशे' इति च पा० तथैव च हा०। २ 'पिबेद्भद्रश्रियः क्काथं चन्दनक्काथमेव च' इत्यस्मात् श्लोकार्धात्परं ता० पुस्तके 'ग्रन्थिभूते पिबेत् पाठां त्र्यूषणं वृक्षकाणि च। क्षारनागरहिङ्गूनां निक्काथं सुरसाग्पिबेत्'॥ इति पठ्यते। ३ 'दोषाणां' इति पा० तथैव च हा०। ४ 'यद्वाप्सु न विरज्यते' इति ता०। ५ 'असृग्दरं विजानीयाद्रक्तलक्षणलक्षितम्' इति ता०। 'असृग्दरं विजानीयादुक्तलक्षणलक्षितम्' इति च पा०। ६ 'असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम्' इति ता०। ७ 'अतिप्रवृत्तौ दौर्बल्यभ्रममूर्च्छातमस्तृषाः' इति ता०। ८ 'तदल्पोपद्रवं भवेत्' इति ता०। ९ अयमर्धश्लोकस्ता० पुस्तके नास्ति। १० 'मांस°' इति ता०।

पाने मूत्रमुदश्विच्च दधि शुक्रं च भोजने ॥ २२ ॥
क्षीणं प्रागीरितं रक्तं सलक्षणचिकित्सितम् ॥
[1]तथाऽप्यत्र विधातव्यं विधानं नष्ट[2]रक्तवत् ॥ २३ ॥

[3]एवमदुष्टशुक्रः शुद्धार्तवा च ॥ २४ ॥

ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत्। किं कारणं? दिवा स्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनाद्दु[4]:खशीलः, तैलाभ्यङ्गात् कुष्ठी, नखापकर्तनात् कुनखी[5], प्र[6]धावनाच्चञ्चलः, हसनाच्छयावदन्तौष्ठतालुजिह्वः, प्रलापी चातिकथनात्, अतिशब्दश्रवणाद्बधिरः, अव[7]लेखनात् खलतिः, मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत्। दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं त्र्[8]यहं च भर्तुः संरक्षेत्। ततः शुद्धस्नातां [9]चतुर्थेऽहन्यहतवासःसमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्तारं [10]दर्शयेत्। तत् कस्य हेतोः? ॥ २५ ॥

पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ॥
तादृशं जनयेत् पुत्रं भर्तारं दर्शयेदतः ॥ २६ ॥
ततो वि[11]धानं पुत्रीयमुपाध्यायः समाचरेत् ॥
कर्मान्ते च क्रमं ह्ये[12]तमारभेत विचक्षणः ॥ २७ ॥

---

१ 'तथाप्यस्य' इति ता० 'तथाऽप्यत्र' इति हा० 'अथाप्यत्र' इति च पा०। २ 'रक्तपित्तवत्' इति ता.। ३ 'एवमष्टदुशुक्र शुद्धार्तवामृतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी स्नानानुलेपनालङ्कारविलेखनविरहितां दिवास्वप्नाञ्जनाश्रुपाताभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणायासान् परिहरेत् किं कारणं दिवास्वपन्त्या बधिरः' इति ता.। ४ 'दुःशीलः' इति ता.। ५ 'कुनखः' इति ता.। ६ ता पुस्तके-'प्रधावनाच्चञ्चल.' 'हसनाच्छयावदन्तौष्ठतालुजिव्हः' इति च द्वौ पाठौ नोपलभ्येते। ७ 'प्रलेपनात् खलतिः' इति ता.। ८ 'त्र्यहं च भर्ता संरक्षेत्' इति ता.। ९ 'चतुर्थ्यामनाहतवस्त्रवासिनी' इति ता.। १० 'दर्शयेदपि' इति ता.। ११ 'विधेयं' इति ता.। १२ 'ह्येनम्' इति हा०।

[1]ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामभिरभिविश्वास्य; विकल्प्यैवं चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्यां चोपेयादिति पुत्रकामः ॥ २८ ॥

[2]एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च ॥
प्रजासौभाग्यमैश्वर्यं बलं च दिवसेषु वै ॥ २९ ॥

[3]अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्यां च स्त्रीकामः; त्रयोदशीप्रभृतयो निन्द्याः ॥ ३० ॥

तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति, यश्च तत्राधीयते गर्भः स[4] प्रसवमानो विमुच्यते; द्वितीयेऽप्येवं सूति[5]कागृहे वा; [6]तृतीयेऽप्येवमसंपूर्णाङ्गोऽल्पायुर्वा भवति; [7]चतुर्थे तु संपूर्णाङ्गो दीर्घायुश्च भवति। न च प्रवर्तमाने रक्ते बीजं प्रविष्टं गुणकरं भवति, यथा नद्यां प्रतिस्रोतः प्लाविद्रव्यं प्रक्षिप्तं प्रतिनिवर्तते [8]नोर्ध्वं गच्छति तद्व[9]देतद्द्रष्टव्यम्। तस्मा[10]न्नियमवतीं त्रिरात्रं परिहरेत्। [11]अतः परं मासादुपेयात् ॥ ३१ ॥

---

१ 'ततोऽपराह्णे पुमान् सर्पि क्षीराभ्यां शाल्योदनमभिप्राश्य मासं ब्रह्मचारी तैलमाषोत्तराहारां नारीमुपगच्छेद्रात्रौ सामभिरभिश्वास्य, विकल्पमेव चतुर्थ्यां षष्ठ्यामष्टम्या दशम्या द्वादश्या चोपेयादत. पर मासादुपेयाल्लब्धगर्भा[न्नैव च' इति ता.। २ ता० पुस्तके एतदेकोनत्रिंशत्तमसङ्ख्याकं पद्य नास्ति। ३ एतत् त्रिंशत्तमसङ्ख्याकं गद्य ता० पुस्तके नास्ति। ४ 'स प्रसवतो विपद्यते' इति ता.। 'स प्रसवमानो विमुच्यते प्राणैः' इति च पा०। ५ 'सूतिकागृहे विपद्यते' इति ता.। ६ 'अल्पायुश्च भवति तस्मात्त्रिरात्रं परिहरेत्' इति ता.। ७ ता० पुस्तके 'चतुर्थे तु संपूर्णाङ्गो दीर्घायुश्च भवति' इत्यय पाठो नोपलभ्यते। ८ ता० पुस्तके 'नोर्ध्वं गच्छति' इत्येष पाठो नास्ति। ९ 'तद्वद्बीज द्रष्टव्यं' इति ता.। 'तद्वदेव द्रष्टव्य' इति च हा०। १० 'तस्मात्त्रिरात्र नियमवती परिहरेत्' इति ता.। ११ 'अतः परम् मासादुपेयात्' इति वाक्यं ता० पुस्तके न दृश्यते।

लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गसहदेवाविश्वदेवानामन्यतमां क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै, न च तान्निष्ठीवेत् ॥ ३२ ॥

ध्रुवं चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्वकम् ॥
ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा ॥ ३३ ॥
एवं जाता रूपवन्तः सत्त्ववन्तश्चिरायुषः ॥
भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः ॥ ३४ ॥

तत्र तेजोधातुर्वर्णानां प्रभवः; स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति, पृथिवीधातुप्रायः कृष्णं, पृथिव्याकाशधातुप्रायः कृष्णश्यामं, तोयाकाशधातुप्रायो गौरश्यामम् । 'यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवति' इत्येके भाषन्ते । तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं पिङ्गाक्षं, श्लेष्मानुगतं शुक्लाक्षं, वातानुगत विकृताक्षमिति ॥ ३५ ॥

---

१ ता० पुस्तके 'लब्धगर्भायाश्च' इति पदमपठित्वैव द्वात्रिंशत्तमसूत्र पठितमुपलभ्यते । २ 'अभिषूयात्' इति ता । ३ 'दद्याद्दक्षिणे नासापुटे पुत्रकामायै वामे स्त्रीकामायै न चैनन्निष्ठीवेदिति' इति ता । ४ अस्याग्रे 'वामे दुहितृकामायै' इत्यधिक पठ्यते क्वचित्पुस्तके । ५ 'सान्निध्ये' इति ता. । ६ 'क्षेत्रबीजोदकर्तूणा' इति ता. । ७ 'महासत्त्वाश्चिरायुष.' इति हा० तथैव च पा० । ८ 'ऋणप्रमोक्तार.' इति ता. । ९ 'सपुत्राः पुत्रिणां हिता.' इति ता. । १० 'तत्र तेजोधातुर्वर्णानां प्रभव इति कृत्वा यदा गर्भोत्पत्तावपां धातुप्राय' आहारो भवति तदा गर्भस्य गौरत्वम्, पृथिवीधातुप्रायः कृष्णत्वम्, पृथिव्याकाशधातुप्रायः कृष्णश्यामत्व' इति ता० 'तत्र तेजोधातु सर्ववर्णानां प्रभव.' इत्यादि च हा० । ११ ता० पुस्तके 'तोयाकाशधातुप्रायो गौरश्यामम्' इति पाठस्तस्य पाठस्य वा पाठान्तरमपि न दृश्यते । १२ 'उपसेवेत' इति ता. । १३ 'तद्वर्णः प्रसवो' इति ता. । १४ ता० पुस्तके 'भाषन्ते' इति पदस्याग्रे 'यथा कृष्णपीतश्वेतासु भूमिषु सर्पवृश्चिकगलगोण्डिकादयः सत्त्वाः कृष्णपीतश्वेता इति' इत्यधिक पठ्यते ।

[1]भवन्ति चात्र—

[2]घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते ॥
विसर्पत्यार्तवं नार्यास्तथा पुंसां समागमे ॥ ३६ ॥
[3]बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ ॥
यमावित्यभिधीयेते धर्मेतरपुरःसरौ[4] ॥ ३७ ॥
[5]पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् ॥
स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥ ३८ ॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ॥
स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ॥ ३९ ॥
स्वे गुदेऽब्रह्मचर्याद्यः [6]स्त्रीषु पुंवत् प्रवर्तते ॥
कुम्भीकः स तु विज्ञेयः ईर्ष्यकं शृणु चापरम् ॥ ४० ॥
दृष्ट्वा व्यवायमन्येषां व्यवाये[7] यः प्रवर्तते ॥
ईर्ष्यकः स तु विज्ञेयः, षण्ढकं शृणु पञ्चमम् ॥ ४१ ॥

---

१ 'भवन्ति चात्र श्लोकाः' इति ता० पुस्तके पठित्वा तदनन्तरं पुरोनिर्दिष्टाः श्लोकास्तत्रपठिता अवलोक्यन्ते यथा—"विशुद्धः पवनो यस्य नयने प्रतिपद्यते ॥ जायेते नयने तस्य निम्ने कृष्णे सिते तथा । पित्त कफयुत यस्य निर्मल याति लोचने ॥ हरिपिङ्गलसंज्ञे वै जायेते तस्य लोचने ॥ विनिर्धूतमलः श्लेष्मा यदा व्रजति लोचने ॥ तस्य नेत्रे प्रकाशेते शुक्लमण्डलमण्डले ॥ रक्तं कफयुत यस्य यदा व्रजति लोचने ॥ कपोतनीले नयने रक्ते वा जायते नृणाम्' इति ॥ २ 'घृतकुम्भो यथैवाग्निमाश्रित प्रविलीयते ॥ प्रसर्पेदार्तवं नार्या :पुरुषस्य समागमात्' ॥ इति ता. । ३ 'बीजे तु वायुना' इति ता. । ४ 'धर्मेतरपुराकृतौ' इति ता. पुस्तके पठित्वा तदनन्तर ता० पुस्तके "मिश्रीभावे यदा पुंसां रेतस्तु बहु निर्मलम् ॥ तदा प्रसूयते नारी गर्भिणी दारकद्वयम् ॥ मिश्रीभावे स्त्रियाश्चैव बहु शुक्र यदा भवेत् ॥ कन्याद्वय तदा नारी सूयते नात्र संशयः" ॥ इत्यधिक पठ्यते ॥ ५ 'आसेक्यो नाम भवति स्त्रीपुंसोरल्पबीजयोः' इति ता. । ६ 'स्त्रीषु स्वासु प्रवर्तते' इति ता. । ७ 'व्यवायाय' इति ता. ।

यो भार्यायामृतौ मोहादङ्गनेव प्रवर्तते ॥
ततः स्त्रीचेष्टिताकारो जायते [1]षण्ढसंज्ञितः ॥ ४२ ॥
[2]ऋतौ पुरुषवद्वाऽपि प्रवर्तेताङ्गना यदि ॥
तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥ ४३ ॥
आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा ॥
[3]सरेतसस्त्वमी ज्ञेया अशुक्रः षण्ढसंज्ञितः ॥ ४४ ॥
[4]अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः ॥
हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ॥ ४५ ॥
[5]आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ॥
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः
[6]यदा नार्यावुपेयातां वृषस्यन्त्यौ कथंचन ॥
मुञ्चतः शुक्रमन्योन्यमनस्थिस्तत्र जायते ॥ ४७ ॥
ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ॥
आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥ ४८ ॥
मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम् ॥
कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥ ४९ ॥
सर्पवृश्चिककूष्माण्डविकृताकृतयश्च ये ॥
[7]गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृतो भृशम् ॥ ५० ॥
गर्भो वातप्रकोपेण [8]दौर्हृदे वाऽवमानिते ॥
भवेत् [9]कुब्जः कुणिः पङ्गुर्मूको मिन्मिण एव वा ॥ ५१ ॥

१ 'षण्डसञ्ज्ञकः' इति ता० । २ 'ऋतौ पुरुषवच्चापि यदि योषित्प्रपद्यते' इति ता. । ३ 'सशुक्रकास्त्वमी ज्ञेया ह्यशुक्राः षण्ढसंज्ञकाः' इति ता. । ४ 'अनयोः' इति ता. । ५ 'आकाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ॥ स्त्रीपुंसौ तु भवेयातां तयोर्गर्भोऽपि तादृशः" ॥ इति ता. । ६ "यदा तु नारी नारी च मैथुनायोपकल्पतः ॥ मुञ्चतः' इत्यादि ता. । ७ 'गर्भा एवंविधाश्चान्ये ज्ञेयाः पापकृतो भृशम्' ॥ इति ता । ८ 'दौहृदेन विमानितः' इति ता. । ९ 'भवेत् कुब्जोऽथवा कूणिः पङ्गुर्मूकोऽथ मिन्मिणः' इति ता. ।

मातापित्रोस्तु[1] नास्तिक्यादशुभैश्च पुराकृतैः ॥
वातादीनां[2] प्रकोपेण गर्भो वैकृतमाप्नुयात् ॥ ५२ ॥
मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च ॥
वातमूत्रपुरीषाणि न गर्भस्थः करोति हि[3] ॥ ५३ ॥
जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते ॥
वायोर्मार्गनिरोधाच्च[4] न गर्भस्थः प्ररोदिति ॥ ५४ ॥
निःश्वासोच्छ्वाससङ्क्षोभस्वप्नान् गर्भोऽधिगच्छति ॥
मातुर्निश्वसितोच्छ्वाससङ्क्षोभस्वप्नसंभवान् ॥ ५५ ॥
सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ ॥
तलेष्वसंभवो यश्च रोम्णामेतत् स्वभावतः ॥ ५६ ॥
भाविताः पूर्वदेहेषु सततं शास्त्रबुद्धयः ॥
भवन्ति सत्त्वभूयिष्ठाः[5] पूर्वजातिस्मरा नराः ॥ ५७ ॥
कर्मणा चोदितो येन तदाप्नोति पुनर्भवे ॥
अभ्यस्ताः पूर्वदेहे ये तानेव भजते गुणान् ॥ ५८ ॥

इति सुश्रुतसंहितायां शारीरस्थाने शुक्रशोणित-
शुद्धिशारीरं नाम द्वितीयोऽध्यायः ॥२॥

---

## तृतीयोऽध्यायः ।

अथातो गर्भावक्रान्ति[6] शारीरं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'मातापित्रोरनाचारादशुभैश्च पुराकृतैः ॥ वातादीनां प्रकोपेण गर्भो वैकृतमाप्नुयात्' ॥ इति ता० । २ 'वातादीनां च कोपेन गर्भो विकृतिमाप्नुयात्' इति हा० तथा च पा० । ३ 'ह' इति ता० । ४ 'वायोर्गतिनिरोधाच्च' इति ता० । ५ 'ज्ञानबहुलाः' इति ता० । ६ 'गर्भावक्रान्तिशारीर' इति हा० ।

सौम्यं शुक्रमार्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण, परस्परोपकारात् (परस्परा[1]नुग्रहात्) परस्परानुप्रवेशाच्च ॥ ३ ॥

तत्र स्त्रीपुं[2]सयोः संयोगे तेजः शरीराद्वा[3]युरुदीरयति, [4]ततस्तेजोनिलसन्निपाताच्छुक्रं च्युतं योनिमभि[5]प्रतिपद्यते संसृज्यते चार्तवेन, ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भाशयमनु[6]प्रतिपद्यते क्षेत्र[7]ज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः [8]स्रष्टा गन्ता साक्षी धाता वक्ता यः कोऽसावित्येवमादिभिः पर्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूता[9]त्मना सहान्वक्षं सत्त्वरजस्तमोभि[9]र्दैवासुरैर[10]परैश्च भावैर्वायुनाऽभिप्रेर्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते ॥ ४ ॥

तत्र शुक्रबाहुल्यात् पुमान्, आर्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकमिति ॥ ५ ॥

[11]ऋतस्तु द्वादशरात्रं भवति दृष्टार्तवः; अदृष्टार्तवोऽप्यस्तीत्येके भाषन्ते ॥ ६ ॥

भवन्ति चात्र—

पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम् ॥
नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्धजाम् ॥ ७ ॥

---

१ ता० पुस्तके 'परस्परानुग्रहात्' इति पदं नोपलभ्यते। २ 'दम्पत्योः सम्प्रयोगे' इति ता०। ३ 'वायुः समीरयति' इति ता०। ४ 'तत्र' इति ता०। ५ 'अभिप्रपद्यते' इति ता०। ६ 'अनुप्रपद्यते' इति ता०। ७ 'क्षेत्रज्ञश्चेतयिता' इति ता०। ८ ता० पुस्तके 'स्रष्टा' इति पदं नावलोक्यते। ९ ता० पुस्तके 'भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिः' इति पाठाभावे 'भूतात्मा सत्त्वरजस्तमोभिः' इत्येष पाठः पठ्यते। १० 'अपरैश्च सहभावैः' इति ता०। ११ 'तत्र ऋतुर्द्वादशरात्रं भवति' इति ता०।

स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचाम् ॥
हर्षौत्सुक्यपरां चापि[1] विद्यादृतुमतीमिति[2] ॥ ८ ॥
नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा ॥
ऋतौ व्यतीते नार्यास्तु योनिः [3]संव्रियते तथा ॥ ९ ॥
मासेनोपचितं काले धमनीभ्यां त[4]दार्तवम् ॥
ईषत्कृष्णं विवर्णं च वायुर्योनिमुखं नयेत् ॥ १० ॥
तद्वर्षाद्द्वादशात् काले वर्तमानमसृक् पुनः ॥
जरापक्वशरीराणां [5]याति पञ्चाशतः क्षयम् ॥ ११ ॥
युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला ॥
पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत् ॥ १२ ॥

तत्र सद्योगृहीतगर्भाया लिङ्गानि—[6]श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणं च योनेः ॥ १३ ॥

[7]स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा ॥
[8]अक्षिपक्ष्माणि चाप्यस्याः संमीलयन्ते विशेषतः ॥ १४ ॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात् ॥
प्रसेकः सदनं चापि गर्भिण्या लिङ्गमुच्यते ॥ १५ ॥

त[9]दा [10]प्रभृति व्यवायं व्यायाममतितर्पणमतिकर्शनं दिवास्वप्नं

---

१ 'चैव' इति ता०। २ 'ऋतुमती स्त्रियम्' इति ता। ३ 'सङ्कुचते तथा' इति ता०। ४ 'यदा गतम्' इति ता०। ५ 'पञ्चाशाद्विनिवर्तते' इति ता०। ६ 'श्रमो ग्लानि० पिपासा सक्थिसदनमाटोप० शुक्रशोणितयोरवबन्धः खरस्फुरण च योन्या' इति ता०। ७ ता० पुस्तके 'स्तनयो० कृष्णमुखतारोमराज्युद्गमस्तया' इत्ययमर्धश्लोकः 'भवति चात्र' इति पठित्वा तदनन्तरमभिहितः। ८ ता० पुस्तके 'अक्षिपक्ष्माणि चाप्यस्या०' इत्यादिः 'अकामतश्छर्दयति' इत्यादिश्चामू द्वौ श्लोकार्धौ नोपलभ्येते। ९ 'ततः प्रभृति व्यवायं व्यायामतिकर्षण दिवास्वप्न रात्रिजागरणं शोकं यानारोहण भयमुत्कटकासनं चैकान्ततः स्नेहादिकर्म शोणितमोक्षण चाकाले नासेवेत' इति ता०। १० 'प्रभृत्येव' इति हा०।

रात्रिजागरणं शोकं यानारोहणं[1] भयमुत्कुटुकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणं च न सेवेत ॥ १६ ॥

दोषाभिघातैर्गर्भिण्या[2] यो यो भाग. प्रपीड्यते ॥
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥ १७ ॥

तत्र प्रथमे मासि[3] कललं जायते; द्वितीये [4]शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां संघातो घनः[5] संजायते, यदि पिण्डः[6] पुमान्, स्त्री चेत् पेशी, नपुंसकं [7]चेदर्बुदमिति तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्तन्तेऽङ्गप्रत्यङ्गविभागश्च[8] सूक्ष्मो भवति; चतुर्थे[9] सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति, गर्भहृदयप्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो[10] भवति, कस्मात्? तत्स्थानत्वात् । तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति, द्विहृदयां[11] च नारीं दौहृदिनीमाचक्षते । दौहृदविमाननात्[12] कुब्जं[13] कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति, तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत्, लब्धदौहृदा हि वीर्यवन्तं चिरायुषं च [14]पुत्रं जनयति १८

भवन्ति चात्र—

इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी ॥
गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् ॥ १९ ॥

---

१ 'यानावरोहण' इति हा० । २ अत्र षोडशसख्याकसूत्रानन्तर यः सप्तदशसङ्ख्याक॰ श्लोकः पठितोऽस्ति स ता० पुस्तके तत्र नोपलभ्यते । ३ 'मासे' इति ता. । ४ 'शोणितोष्मानिलै॰ पच्यमानानां' इति ता. । ५ 'घन जायते' इति ता. । ६ 'ग्रन्थिः' इति ता । ७ 'अर्बुद भवति' इति ता. । ८ 'पिटका अभिनिर्वर्तन्ते सर्वाङ्गप्रत्यङ्गविभागश्च' इति ता. । ९ 'चतुर्थे सर्वाङ्गप्रत्यङ्गविभागश्च प्रव्यक्तो भवति पञ्चमे सर्वाङ्गप्रत्यङ्गविभागश्च प्रव्यक्ततरो भवति' इति ता. । १० 'गर्भहृत्प्रव्यक्तिभावात्' इति ता. । ११ 'द्विहृदया च नारी भवति द्विहृदयनिमित्तान्याचक्षते' इति ता. । १२ 'दौहृदयविमाननात्' इति ता. । १३ 'कुब्ज कुणि षण्ढ वामन' इति ता. । १४ ता० पुस्तके 'पुत्रं' इत्येतत्पदं न दृष्टिपथमायाति ।

सा प्राप्तदौहृदा[1] पुत्रं जनयेत गुणान्वितम् ॥
अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥ २० ॥
येषु येष्विन्द्रियार्थेषु दौहृदे [2]वै विमानना ॥
प्रजायेत सुत[3]स्यार्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥ २१ ॥
राजसंदर्शने यस्या दौहृदं जायते स्त्रियाः ॥
अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥ २२ ॥
दुकूलपट्टकौशेयभूषणादिषु दौहृदात् ॥
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥ २३ ॥
आश्रमे संयतात्मानं धर्मशीलं प्रसूयते ॥
देवताप्रतिमायां तु प्रसूते पार्षदोपमम् ॥
दर्शने [4]व्यालजातीनां हिंसाशीलं प्र[5]सूयते ॥ २४ ॥
गो[6]धामांसाशने पुत्रं सुषुप्सुं [7]धारणात्मकम् ॥
गवां [8]मांसे तु बलिन सर्वक्लेशसहं तथा ॥ २५ ॥
माहिषे दौहृदाच्छूरं रक्ताक्षं लो[9]मसंयुतम् ॥
[10]वराहमांसात् स्वप्नालुं शूरं संजनयेत् सुतम् ॥ २६ ॥
मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम् ॥
सृमराद्विग्नमनसं नित्यभीतं च तैत्तिरात् ॥ २७ ॥
अतोऽनुक्तेषु या नारी [11]समभिध्याति दौहृदम् ॥
शरीराचारशीलैः सा समानं जनयिष्यति ॥ २८ ॥

---

१ 'सम्प्राप्य दौहृदं' इति ता.। २ 'या' इति ता.। ३ 'सुतं सार्तिः' इति ता.। ४ 'व्याड०' इति ता.। ५ 'प्रजायते' इति ता। ६ 'गोधामांसाशिनी' इति ता.। ७ 'मारणात्मकम्' इति ता. 'धावनात्मकम्' इति च हा०। ८ 'मांसेन' इति ता० 'मासे च' इति च हा०। ९ 'लोमश सुतम्' इति ता। १० 'वराहमांसात् स्वप्नालु' इत्यादेरर्धश्लोकस्य तदग्रेतनस्य सप्तविंशतितमस्य सम्पूर्णश्लोकस्य चामू द्वौ पाठौ ता० पुस्तके नोपलभ्येते। ११ 'अभिध्यायति' इति ता.।

कर्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत् ॥
यथा तथा दैवयोगाद्दौर्हृदं जनयेद्धृदि ॥ २९ ॥

पञ्चमे मनः प्रतिबुद्धतरं भवति, षष्ठे बुद्धिः, [1]सप्तमे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः; [2]अष्टमेऽस्थिरीभवत्योजः, तत्र [3]जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च, ततो बलिं मांसौदनमस्मै दापयेत्; नवमदशमैकादशद्वादशानामन्यतमस्मिञ्जायते अतोऽन्यथा विकारी भवति ॥ ३० ॥

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडीप्रतिबद्धा, साऽस्य मातुराहाररसवीर्यम[4]भिवहति । तेनोपस्नेहेनास्याभिवृद्धिर्भवति । [5]असंजाताङ्गप्रत्यङ्गप्रविभागमानिषेकात् प्रभृति [6]सर्वशरीरावयवानुसारिणीनां रसवाहानां तिर्य[7]ग्गतानां धमनीनामुपस्नेहो जीवयति ॥ ३१ ॥

गर्भस्य खलु संभवतः पूर्वं शिरः संभवतीत्याह शौनकः, शिरो[8]मूलत्वात् [9]प्रधानेन्द्रियाणां; हृदयमिति कृतवीर्यो, बुद्धेर्मनसश्च स्थानत्वात्; नाभिरिति पाराशर्यः, ततो हि वर्धते देहो देहिनः, पाणिपादमिति मार्कण्डेयः, तन्मूलत्वाच्चेष्टाया गर्भस्य; [10]मध्यशरीरमिति सुभूतिगौतमः, तन्निबद्धत्वात् सर्वगात्रसंभवस्य । तत्तु न सम्यक्, सर्वाण्यङ्गप्रत्यङ्गानि युगपत् संभवन्तीत्याह धन्वन्तरिः, गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च; तद्यथा—

---

१ 'सप्तमे सर्वं प्रव्यक्त शरीर' इति ता. । २ 'अष्टमेऽस्थिर भवत्योज.' इति पा० ३ 'जातो न जीवति नैर्ऋतभागधेयत्वात्' इति ता. । ४ 'अभ्यवहरति' इति ता. । ५ 'असजाताङ्गविभागमपि निषेकात्प्रभृति' इति ता० 'असजाताङ्गप्रत्यङ्गविभाग तु गर्भ निषेकात्प्रभृति' इति च हा० । ६ 'सर्वशरीरानुसारिणीनां' इति ता. । ७ 'तिर्यग्गतीनां' इति ता. । ८ 'तन्मूलत्वात्' इति ता. । ९ 'देहेन्द्रियाणां' इति हा० । १० 'मध्यशरीरम्' इत्यभावे 'शरीरमिति सुभूतिगौतमः' इति ता. ।

चूतफले परिपक्के केशरमांसास्थिमज्जानः पृथक् पृथग्दृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्; तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति; एतेनैव वंशाङ्कुरोऽपि व्याख्यातः। एवं गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः, [1]तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ॥ ३२ ॥

तत्र [2]गर्भस्य पितृजमातृजरसजात्मजसत्त्वजसात्म्यजानि शरीर[3]लक्षणानि व्याख्यास्यामः। [4]गर्भस्य [5]केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि, मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि, [6]शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि, [7]इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकं चात्मजानि, सत्त्वजान्युत्तरत्र वक्ष्यामः, [8]वीर्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि ॥ ३३ ॥

तत्र यस्या दक्षिणे स्तने प्राक् [9]पयोदर्शनं भवति [10]दक्षिणकुक्षिमहत्त्वं च [11]पूर्वं च दक्षिणं सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति [12]स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि [13]पुन्नामान्येव प्रसन्नमुखवर्णा च भवति तां [14]ब्रूयात् पुत्रमियं जनयि-

१ 'तान्येव कालप्रकर्षात्प्रव्यक्तानि भवन्ति पूर्वोत्तरकालयोगो नास्तीति केवलन्तु सौक्ष्म्यान्नाभिव्यज्यन्ते यथाकालं प्रव्यक्तानि भवन्ति' इति ता.। २ ता० पुस्तकेऽस्मिन्स्थले 'गर्भस्य' इति पदं न वर्तते। ३ 'शरीरे लक्षणानि वक्ष्यामः' इति ता.। ४ ता० पुस्तकेऽस्मिन्स्थले 'गर्भस्य' इति पदं न वर्तते। ५ 'तत्र केशश्मश्रुदन्तनखलोमास्थिरेतःप्रभृतीनि पितृजानि' इति ता.। ६ 'शरीरोपचयो बलवृद्धिर्वर्णस्थितिर्हानिश्च रसजानि' इति ता.। ७ 'इन्द्रियाणि ज्ञानमायुः सुखदुःखादिकं चात्मनः' इति ता.। ८ 'वीर्यमारोग्यं बलं वर्णो मेधा च सात्म्यजम्' इति ता.। ९ ता० पुस्तके 'पयोदर्शनं भवति' इत्यभावे 'पयसो दर्शनम्' इति पठ्यते। १० 'दक्षिणाक्षिमहत्त्वं' इति हा०। ११ पूर्वं दक्षिणं सक्थ्युत्कर्षति' इति ता। १२ 'स्वप्ने चोपलभते' इति ता.। १३ 'पुन्नामान्येव वा प्रसन्नमुखवर्णा च भवेत्तां ब्रूयात् पुत्रमियं प्रजनयिष्यति' इति ता.। १४ 'विद्यात्' इति पा०।

ष्यतीति, तद्विपर्यये कन्यां, यस्याः पार्श्वद्वयमवनतं पुरस्तान्निर्गतमुदरं प्रागभिहितं च लक्षणं च तस्या नपुंसकमिति विद्यात्, [1]यस्या मध्ये निम्नं [2]द्रोणीभूतमुदरं सा युग्मं प्रसूयत इति ॥ ३४ ॥

भवन्ति चात्र—

देवताब्राह्मणपराः शौचाचारहिते रताः ॥
[3]महागुणान् प्रसूयन्ते विपरीतास्तु [4]निर्गुणान् ॥ ३५ ॥
अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते ॥
अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः ॥
ते ते गर्भस्य विज्ञेया धर्माधर्मनिमित्तजाः ॥ ३६ ॥

इति सुश्रुतसंहितायां शारीरस्थाने गर्भावक्रान्ति-
शारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

अथातो गर्भव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि [5]भूतात्मेति प्राणाः ॥ ३ ॥

[6]तस्य खल्वेवंप्रवृत्तस्य [7]शुक्रशोणितस्याभिपच्यमानस्य [8]क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। [9]तासां प्रथमाऽवभासिनी नाम, या

---

१ 'यस्याः पार्श्वद्वयमुन्नत' इति हा०। २ 'द्रोणीप्राभूतमुदर' इति ता.। ३ 'महागुणाः' इति ता.। ४ 'निर्गुणाः इति ता। ५ 'भूतात्मा मनश्चेति' इति ता.। ६ 'ता० पुस्तके 'तस्य खल्वेवप्रवृत्तस्य शुक्रशोणितस्य' इति पाठाभावे 'तस्य खलु शुक्रशोणितस्य' इत्येव पठ्यते। ७ केषुचिद्धस्तलिखितपुस्तकेषु 'शुक्रशोणितस्य' इति पदं नैव पठ्यते। ८ वृद्धवाग्भटाचार्यः 'असृजः पच्यमानस्य क्षीरस्येव सन्तानिकाः सप्तत्वचो भवन्ति' इति पठति। ९ "तासामुदकधरा चाद्या। द्वितीयाऽसृग्धरा तृतीया सिध्मकिलासाधि-

सर्वान् वर्णानवभासयति पञ्चविधां च छायां प्रकाशयति, सा व्रीहेरष्टादशभागप्रमाणा, सिध्म[1]पद्मकण्टकाधिष्ठाना; [2]द्वितीया लोहिता नाम, षोडशभागप्रमाणा, तिलकालकन्यच्छव्यङ्गाधिष्ठाना; [3]तृतीया श्वेता नाम, द्वादशभागप्रमाणा, चर्मदलाजगल्लीमषकाधिष्ठाना; [4]चतुर्थी ताम्रा नामाष्टभागप्रमाणा, विविधकिलासकुष्ठाधिष्ठाना; [5]पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा, कुष्ठविसर्पाधिष्ठाना; [6]षष्ठी रोहिणी नाम व्रीहिप्रमाणा, ग्रन्थ्यपच्यर्बुदश्लीपदगलगण्डाधिष्ठाना; [7]सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा, भगन्दरविद्रध्यर्शोऽधिष्ठाना। यदेतत् प्रमाणं निर्दिष्टं तन्मांसलेष्ववकाशेषु, न ललाटे सूक्ष्माङ्गुल्यादिषु च; [8]यतो वक्ष्यत्युदरेषु—'व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत्' ( चि. अ. १४ ) इति ॥ ४ ॥

---

ष्ठाना। चतुर्थी सर्वकुष्ठाधिष्ठाना। पञ्चमी पुनरलजी विद्रध्यधिष्ठाना। षष्ठी तु प्राणधरा। यस्या छिन्नाया ताम्यत्यन्ध इव च तमः प्रविशति, यां चाधिष्ठायारूंषि जायन्ते, पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि"॥ इति वृ० वा०।

१ 'तासा प्रथमावभासिनी नाम, या सर्ववर्णानवभासयति। पञ्चविधां छाया प्रकाशयति' इति ता०। २ 'द्वितीया लोहिता नाम षोडशभागप्रमाणा' इति ता०। 'द्वितीया लोहिता नाम व्रीहिषोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना' इति च हा०। ३ 'तृतीया श्वेता द्वादशभागप्रमाणा' इति ता०। 'तृतीया श्वेता नाम व्रीहिद्वादशभागप्रमाणा चर्मदलाजगल्लीमपकाधिष्ठाना' इति च हा०। ४ 'चतुर्थी ताम्राऽष्टभागप्रमाणा' इति ता०। 'चतुर्थी ताम्रा नाम व्रीहेरष्टमभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना' इति च हा०। ५ 'पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा' इति ता०। 'पञ्चमी वेदिनी नाम व्रीहिपञ्चमभागप्रमाणा कुष्ठविसर्पाधिष्ठाना' इति च हा०। ६ 'षष्ठी रोहिणी नाम व्रीहिप्रमाणा' इति ता०। 'षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्बुदश्लीपदगलगण्डाधिष्ठाना' इति च हा०। ७ 'सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा' इति ता०। 'सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना' इति च हा०। ८ 'यतो वक्ष्यत्युदरे व्रीहिमुखमङ्गुलमङ्गुष्ठोदरमात्रं वाऽवगाढ्येति' इति ता.।

[1]कलाः खल्वपि सप्त भवन्ति धात्वाशयान्तरमर्यादाः ॥ ५ ॥

[2]भवतश्चात्र—

यथा हि सारः काष्ठेपु छिद्यमानेषु दृश्यते ॥
[3]तथाहि धातुर्मांसेषु छिद्यमानेषु दृश्यते ॥ ६ ॥

स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा ॥
श्लेष्मणा वेष्टितांश्चापि [4]कलाभागांस्तु तान् विदुः[5] ॥ ७ ॥

तासां प्रथमा मांसधरा, [6]यस्यां [7]मांसे सिरास्नायुधमनीस्रोतसां प्रताना भवन्ति ॥ ८ ॥

यथा बिसमृणालानि विवर्धन्ते समन्ततः ॥
भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः ॥ ९ ॥

द्वितीया रक्तधरा मांसस्याभ्यन्तरतः, तस्यां शोणितं [8]विशेषतश्च सिरासु यकृत्प्लीह्नोश्च [9]भवति ॥ १० ॥

वृक्षाद्यथाभिप्रहतात् क्षीरिणः [10]क्षीरमावहेत् ॥
मांसादेवं क्षतात् क्षिप्रं शोणितं [11]संप्रसिच्यते ॥ ११ ॥

[12]तृतीया मेदोधरा; मेदो हि सर्वभूतानामुदरस्थमण्वस्थिषु च, महत्सु च मज्जा भवति ॥ १२ ॥

---

१ 'कलाः खल्वपि सप्त सम्भवन्ति धात्वन्तराशयमर्यादा' इति ता० । 'ता धात्वाशयान्तरमर्यादाः सप्त कलाः' इति च वृ० वा० । २ 'श्लोकौ भवतश्चात्र' इति ता० । 'भवन्ति चात्र' इति पा० । ३ 'तथा धातुर्हि मांसेषु' इति च ता. । ४ 'कलाभागान्विदुर्बुधाः' इति ता. । ५ अस्याग्रे 'धात्वाशयान्तरेऽन्नस्य यः क्लेदस्त्वधितिष्ठति ॥ देहोष्मणा विपक्वस्तु सा कलेत्यभिधीयते' ॥ इत्यधिकं पठ्यते क्वचित्पुस्तके । वृद्धवाग्भटाचार्येणाष्टाङ्गसंग्रहे 'यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातुसारशेषो रसशेषोऽल्पत्वात् कलासंज्ञ' इति कलानिरुक्तिः पठ्यते । ६ 'तस्यां मांसे सिरास्नायुधमनीस्रोतसां नवनवप्रतानानि भवन्ति' इति ता. । ७ 'मांसगतानां' इति हा० । 'मांससिरास्नायुधमनीस्रोतसां' इति वै० प० हरिप्रपन्नसम्मतः पाठः । ८ 'विशेषतः सिरासु च' इति ता. । ९ 'स्रवति' इति पा० तथा च 'विशेषतश्च सिराप्लीहयकृत्सु भवति' इति वृ० वा० । १० 'आस्रवेत्' इति ता. । ११ 'प्रतिरिच्यते' इति पा० । १२ 'तृतीया मेदोधरा नाम मेदस्तु खलु सर्वभूतानामुदरेष्वस्थिषु च महत्सु चान्तर्मज्जा च भवति' इति ता. ।

स्थूलास्थिषु विशेषेण मज्जा [1]त्वभ्यन्तराश्रितः ॥
[2]अथेतरेषु सर्वेषु सरक्तं मेद उच्यते ॥
[3]शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता ॥ १३ ॥

[4]चतुर्थी श्लेष्मधरा सर्वसन्धिषु प्राणभृतां भवति ॥ १४ ॥

स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्तते ॥
सन्धयः साधु वर्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥ १५ ॥

[5]पञ्चमी पुरीषधरा नाम; याऽन्तःकोष्ठे मलमभिविभजते पक्काशयस्था ॥ १६ ॥

यकृत्समन्तात् कोष्ठं च तथाऽन्त्राणि समाश्रिता ॥
उण्डु(न्दु)कस्थं विभजते मलं मलधरा कला ॥ १७ ॥

[6]षष्ठी पित्तधरा; या चतुर्विधमन्नपानमामाशयात् प्रच्युतं पक्काशयोपस्थितं धारयति ॥ १८ ॥

---

१ 'तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुङ्गाख्य च स्थूलास्थिषु च मज्जा' इति वृ० वा० । २ 'तथेतरेषु' इति ता । ३ 'शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता' इत्ययमर्धश्लोकस्ता० पुस्तके नास्ति । ४ 'चतुर्थी श्लेष्मधरा नाम या सर्वसंधिषु सर्वप्राणभृतां भवति' इति ता० तथा च 'चतुर्थी श्लेष्मधरा नाम तत्स्थेन हि श्लेष्मणाऽऽश्लेषिता· सर्वसन्धयो दृढा भवन्ति सोपाङ्गा इवाक्षाः' इति वृ० वा० । ५ 'पञ्चमी पुरीषधरा नाम या चतुर्विधमप्यन्नमामाशयात् प्रच्युत पक्काशयोपस्थित धारयति कोष्ठान्तर्विभजति पक्काशयस्था' इति ता० । तथा च 'पञ्चमी पुरीषधरा नाम साह्यन्त्रामपक्काशयाश्रिता कोष्ठान्तरुन्दुकस्थ मल विभजति' इति वृ० वा० । तथा च ' पञ्चम्यासा विडाधारा साऽऽमपक्काशयाश्रया ॥ उन्दुकस्थ विभजते मलम्' इत्यरुणदत्त आह । ६ षष्ठी पित्तधरा नाम या चतुर्विधमशितपीतखादितलीढमिति पचति' इति ता० । तथा च 'षष्ठी पित्तधरा नाम पक्कामाशयमध्यस्था, सा ह्यन्तरग्नेरधिष्ठानतयाऽऽमाशयात् पक्काशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयति पचति पक्क च विमुञ्चति । दोषाधिष्ठिता तु दौर्बल्यादाममेव । ततोऽसावन्नस्य ग्रहणात्

[1]अशितं खादितं पीतं [2]लीढं कोष्ठगतं नृणाम् ॥
तज्जीर्यति यथाकालं शोषितं पित्ततेजसा ॥ १९ ॥

सप्तमी शुक्रधरा, या सर्वप्राणिनां सर्वशरीरव्यापिनी ॥ २० ॥

यथा पयसि सर्पिस्तु [3]गूढश्चेक्षौ रसो यथा ॥
शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः ॥ २१ ॥
[4]द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य [5]चाप्यधः ॥
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्तते ॥ २२ ॥
[6]कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा ॥
स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् संप्रवर्तते ॥ २३ ॥

[7]गृहीतगर्भाणामार्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद्गृहीतगर्भाणामार्तवं न दृश्यते; [8]ततस्तदधः प्रतिहतमूर्ध्वमाग-

---

पुनर्ग्रहणीसंज्ञा । बलं च तस्य पित्तमेवाग्न्यभिधानमतः साऽग्निनोपबृंहितयोगक्षेमा शरीरं वर्तयति' इति वृ० वा० तथा च 'पित्तधरा पुनः ॥ षष्ठी पक्वाशयान्तस्था वह्न्यधिष्ठानभावतः ॥ पक्वाशयोन्मुखं कृत्वा बलात् पित्तस्य तेजसा ॥ शोषयन्ती पचत्यन्नं तदेव च विमुञ्चति ॥ दोषदुष्टाऽथ दौर्बल्यादाममेव निरस्यति ॥ लभते ग्रहणीसंज्ञामस्याश्चाग्निबलं बलम् ॥ शरीरं धारयत्यग्निबलोपष्टम्भबृंहिता' ॥ इत्यरुणदत्त आह ।

१ 'अशितादिविशेषेणाक्रान्त' इति पा० । २ ता० पुस्तके 'लीढं कोष्ठगतं नृणाम्' इत्यभावे 'लीढं यत् कोष्ठमागतम्' इति पठ्यते । ३ 'गुडश्चेक्षुरसे यथा' इति ता० तथैव च हा० । ४ 'सप्तमी शुक्रधरा नाम द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्याधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्तयति' इति वृ० वा० । ५ 'चाप्यवाक्' इति ता. । ६ 'कृत्स्नदेहाश्रितं शुक्रं' इत्यादिरयं त्रयोविंशतितमः श्लोकस्ता० पुस्तके न पठ्यते । ७ 'गृहीतगर्भाणां आर्तववहानां स्रोतसां वर्त्मान्यवरुद्धानि गर्भेण भवन्ति तस्माद्गृहीतगर्भाणामार्तवं न तु दृश्यते' इति ता. । ८ 'ततस्तदधः प्रतिहतमूर्ध्वमागतमुपरि चोपचीयमानमुदरे मुच्यते' इति ता. ।

तमपरं चोपचीयमानमपरेत्यभिधीयते; शेषं चोर्ध्वतरमागतं पयोधरावभिप्रतिपद्यते[1], तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति ॥२४॥

गर्भस्य[2] यकृत्प्लीहानौ[3] शोणितजौ, शोणितफेनप्रभवः फुप्फुसः[4], शोणितकिट्टप्रभव उण्डुकः[5] ॥ २५ ॥

[6]असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः ॥
तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति[7] ॥ २६ ॥
ततोऽस्यान्त्राणि जायन्ते गुदं बस्तिश्च देहिनः ॥
उदरे पच्यमानानामाध्मानाद्रुक्मसारवत्[8] ॥ २७ ॥
कफशोणितमांसानां साराज्जिह्वा प्रजायते ॥
यथार्थमूष्मणा[9] युक्तो वायुः स्रोतांसि दारयेत् ॥ २८ ॥
अनुप्रविश्य पिशितं पेशीर्विभजते तथा ॥
मेदसः[10] स्नेहमादाय सिरास्नायुत्वमाप्नुयात् ॥ २९ ॥

---

१ 'प्रपद्यते' इति ता. । २ अत्र स्थित 'गर्भस्य' इति यत्पदं तत् ता० पुस्तके न पठ्यते । ३ 'समानेनाध्मायमानस्य देहोष्मणा पच्यमानस्य शोणितस्याच्छतो जायते यकृत् प्लीहा च' इति वृ० वा० । तथा च 'समानवायुप्रध्मातादक्ताद्देहोष्मपाचितात् ॥ किञ्चिदुच्छ्रितरूपस्तु जायते क्लोमसञ्ज्ञकः ॥ तत्तुल्यहेतुजे प्लीहयकृती भिषजा मते' इत्यरुण० । ४ 'रक्तफेनात् फुप्फुसम्' इति वृ० वा० । ५ 'रक्तकिट्टादुण्डुक.' इति वृ० वा० । ६ ता० पुस्तके 'भवतश्चात्र' इति प्राक् पठित्वा तदनन्तरं षड्विंशतितमः सप्तविंशतितमश्चामू श्लोकौ पठितौ । ७ 'वातश्चाप्यनुधावति' इति ता. । ८ 'तत्रास्य मथ्यमानस्य धाम्यमानस्य रुक्मवत् । जन्तोः सञ्जायते जिह्वा यदा वेदयते रसान्' इति ता० । 'तत्रास्य मथ्यमानस्य धाम्यमानस्य रुक्मवत् ॥ जिह्वा सञ्जायते सौमी यथा वेदयते रसान् ॥' इति च पा० । ९ ता० पुस्तकेऽष्टाविंशतितम-श्लोकस्योत्तरार्धस्तथा च सम्पूर्ण एकोनत्रिंशत्तम- श्लोकः सम्पूर्णस्त्रिंशत्तमः श्लोकश्चैते नोपलभ्यन्ते । १० वै० प० हरिप्रपन्नशर्मणा तु अयं पाठोऽन्यथा पठितः यथा 'मेद- स स्नेहमादाय सिरास्नायुत्वमप्यथ ॥ सिराणां तु मृदुः पाक- स्नायूनां च ततः खरः ॥ आशय्याभ्यासयोगेन करोत्याशयसम्भवम्' ॥ इति ।

सिराणां तु मृदुः पाकः स्नायूनां च ततः खरः ॥
आशय्याभ्यासयोगेन करोत्याशयसंभवम् ॥ ३० ॥

[1]रक्तमेदःप्रसादाद्वृक्कौ; मांसासृक्कफमेदःप्रसादाद्वृषणौ; [2]शोणितकफप्रसादजं हृदयं, यदाश्रया हि धमन्यः प्राणवहाः; [3]तस्याधो वामतः प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम च; [4]तद्विशेषेण चेतनास्थानम्, अतस्तस्मिंस्तमसाऽऽवृते सर्वप्राणिनः स्वपन्ति ॥ ३१ ॥

[5]भवति चात्र—

पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ॥
जाग्रतस्तद्विकसति स्वपतश्च निमीलति ॥ ३२ ॥

---

१ अत्र पठिते 'रक्तमेदःप्रसादाद्वृक्कौ' 'मांसासृक्कफमेदःप्रसादाद्वृषणौ' इति च द्वे प्रस्तुतसूत्रस्थिते वाक्ये ता० पुस्तके न वर्तेते। २ 'हृदय पुनः श्लेष्मरक्तप्रसादात् सभवति पद्मकोशसङ्काश सुषिरमधोमुखम्, तद्विशेषेण चेतनायाः स्थान सर्वभावानां च चेतनानुगतानाम्' इति वृ० वा० तथा च कफरक्तप्रसादात्स्याद्धृदय पुष्पसस्थितम्॥ चेतनानुगभावाना परमं चिन्तितस्य च॥ मासपेशीचयो रक्तपद्माकारमधोमुखम्' इति चन्द्रनन्दन.। ३ 'तस्य (हृदयस्य) वामपार्श्वे प्लीहा पुष्पसश्च । दक्षिणतो यकृत् क्लोम च' इति वृ० वा० ॥ तथा च 'तस्य ( हृदयस्य ) दक्षिणत क्लोम यकृत् फुप्फुसमास्थितम्' ॥ इत्यरुणदत्त.। तथा च 'सव्ये प्लीहा फुप्फुसश्चापसव्ये तस्या (हृदयस्य) सृक्त' क्लोमसंज्ञो यकृच्च' ॥ इति भिषग्भास्करः शारीरपद्मिन्या पठति । 'फुप्फुसो हृदयनाडिकालग्न स्वनामख्यातः' ॥ इति डल्लनाचार्य.। 'तस्याऽधो वामत. प्लीहा दक्षिणे क्लोममुच्यते ॥ तथैव च यकृद्विद्याद्धृदय चेतन स्मृतम्' ॥ इति तोडरानन्दः। 'वामेऽधस्ताद्धृदः प्लीहा दक्षिणे तु यकृन्मतम् ॥ हृन्नाडिका निबद्धस्तु फुप्फुसः प्रोच्यते बुधै. ॥ हृदो दक्षिणभागेऽधो विज्ञेय क्लोम रक्तजम्' ॥ इति त्रिमल्लभट्ट । ता० पुस्तके तु 'तस्याधो वामत. प्लीहा फुप्फुसश्चदक्षिणतो यकृत् क्लोम च'। इतीद सूत्रमेव न दरीदृश्यते। ४ 'तद्विशेषेण चेतनास्थानमुक्त तस्मिंस्तु तमसाऽऽवृते सर्वप्राणिनः स्वपन्ति' इति ता.। ५ ता० पुस्तकेऽस्मिस्थले 'भवति चात्र' इति न पठ्यते तथा च तदनुपठ्यमानः 'पुण्डरीकेण सदृश हृदय' इत्यादिरय द्वात्रिंशत्तमः श्लोकोऽपि न पठ्यते।

निद्रां तु वैष्णवीं पाप्मानमुपदिशन्ति, [1]सा स्वभावत एव सर्व-प्राणिनोऽभिस्पृशति। तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रा संभवत्यनवबोधिनी, सा प्रलयकाले; तमोभूयिष्ठानामहःसु निशासु च भवति, रजोभूयिष्ठा-नामनिमित्तं, सत्त्वभूयिष्ठानामर्धरात्रे; क्षीण[2]श्लेष्मणामनिलबहुलानां मनःशरीराभितापवतां च नैव, सा वैकारिकी भवति ॥ ३३ ॥

भवतश्चात्र—

हृदयं चेतनास्थानमुक्तं सुश्रुत! देहिनाम् ॥
तमोभिभूते तस्मिंस्तु निद्रा विशति देहिनम् ॥ ३४ ॥
निद्राहेतुस्तमः, सत्त्वं बोधने हेतुरुच्यते ॥
स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते ॥ ३५ ॥
पूर्वदेहानुभूतांस्तु भूतात्मा स्व[3]पतः प्रभुः ॥
रजोयुक्तेन मनसा गृ[4]ह्णात्यर्थाञ् शुभाशुभान् ॥ ३६ ॥
करणानां तु वै[5]कल्ये तमसाऽभिप्रवर्धिते ॥
अस्वपन्नपि भूतात्मा प्रसु[6]प्त इव चोच्यते ॥ ३७ ॥

स[7]र्वर्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्, प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्शितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्ताना-मभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनां च [8]मुहूर्तं दिवा-

---

१ 'यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः ॥ विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः' इति चर०। २ 'क्षीणश्लेष्मणामनिलबहुलाना मनोऽ-भिघाताच्च वैकारिकी' इति ता.। ३ 'स्वपिति प्रभुः' इति ता.। ४ 'गृह्णी-तेऽर्थाञ् शुभाशुभान्' इति ता.। ५ 'वैगुण्ये' इति ता.। ६ 'प्रसुप्त इति चोच्यते' इति ता। ७ 'सर्वर्तुषु दिवा स्वप्नः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्, प्रतिषिद्धेष्वप्यप्रतिषिद्धो बालवृद्धक्षतक्षीणमद्यपीतस्त्रीयानवाहनाध्वकर्मपरि-श्रान्तानामभुक्तवतां मेदोमारुतकफरक्तक्षीणानां मुहूर्तं प्रशमन्ति' इति ता.। ८ 'मुहूर्तं स्वपनमप्रतिषिद्धम्' इति पा०।

स्वपनमप्रतिषिद्धम् । रात्रावपि जागरितवतां जागरितकालादर्धमिष्यते दिवास्वपनम् । विकृतिर्हि[1] दिवास्वप्नो नाम; तत्र स्वपतामधर्मः सर्वदोषप्रकोपश्च[2], तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरव[3]-वाङ्गमर्दारोचकज्वराग्निदौर्बल्यानि भवन्ति; रात्रावपि[4] जागरितवतां वातपित्तनिमित्तास्त एवोपद्रवा भवन्ति ॥ ३८ ॥

भवन्ति[5] चात्र—

तस्मान्न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत् ॥
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितं चरेत् ॥ ३९ ॥
अरोगः[6] सुमना ह्येवं बलवर्णान्वितो वृषः ॥
नातिस्थूलकृशः श्रीमान् नरो[7] जीवेत् समाः शतम् ॥ ४० ॥
(निद्रा[8] सात्म्यीकृता यैस्तु रात्रौ च यदि वा दिवा ॥)
दिवारात्रौ च ये नित्यं स्वप्नजागरणोचिताः ।
न तेषां स्वपतां दोषो जाग्रतां वाऽपि जायते ॥ ४१ ॥
निद्रानाशोऽनिलात् पित्तान्मनस्तापात् क्षयादपि ॥
संभवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति[9] ॥ ४२ ॥

---

१ 'विकृतिस्तु दिवास्वप्नो नाम' इति ता । २ 'सर्वदोषकोपश्च' इति ता. । ३ "°शिरोगौरवाङ्गमर्दारोचकाग्निदौर्बल्यानि' इति ता । तथा च "°शि-रोगौरवज्वराग्निदौर्बल्यानि' इति पा० । ४ 'रात्रावपि खलु जागरितवतां तन्निमित्तास्त एव दोषाः प्रादुर्भवन्ति' इति ता. । ५ 'भवन्ति चात्र श्लोकाः' इति ता. । ६ 'तथाह्यरोगः सुमना बलवर्णान्वितो भृशम्' इति ता. । ७ ता० पुस्तके 'नरो जीवेत् समाः शतम्' इत्यन्तस्य चत्वारिंशत्तमश्लोकस्याग्रे 'मूर्च्छा पित्ततमः प्राया निद्रा श्लेष्मतमोभवा' इत्ययं श्लोकपठितो लक्ष्यते । ८ ता० पुस्तकेऽस्मिस्थले 'निद्रा सात्म्यीकृता यैस्तु' इत्यादिरयमर्धश्लोकस्तथैवैकचत्वारिंशत्तमः श्लोकश्च न विद्यते । ९ 'स शाम्यति' इति ता० ।

निद्रानाशेऽभ्यङ्गयोगो मूर्ध्नि तैलनिषेवणम् ॥
गात्रस्योद्वर्तनं चैव हितं संवाहनानि च ॥ ४३ ॥
शालिगोधूमपिष्टान्नभक्ष्यैरैक्षवसंस्कृतैः ॥
भोजनं मधुरं स्निग्धं क्षीरमांसरसादिभिः ॥ ४४ ॥
रसैर्बिलेशयानां च विष्किराणां तथैव च ॥
द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि ॥ ४५ ॥
शयनासनयानानि मनोज्ञानि मृदूनि च ॥
निद्रानाशे तु कुर्वीत तथाऽन्यान्यपि बुद्धिमान् ॥ ४६ ॥
निद्रातियोगे वमनं हितं संशोधनानि च ॥
लङ्घनं रक्तमोक्षश्च मनोव्याकुलनानि च ॥ ४७ ॥
कफमेदोविषार्तानां रात्रौ जागरणं हितम् ॥
दिवास्वप्नश्च तृट्शूलहिक्काजीर्णातिसारिणाम् ॥ ४८ ॥
इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः ॥
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥ ४९ ॥
पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृताननः ॥
यं मुञ्चति सनेत्रास्र स जृम्भ इति संज्ञितः ॥ ५० ॥
योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ॥
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ ५१ ॥
सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता ॥
शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ॥ ५२ ॥
उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम् ॥
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥ ५३ ॥

---

१ ता० पुस्तके 'त्रिचत्वारिंशत्तमचतुश्चत्वारिंशत्तमपञ्चचत्वारिंशत्तमषट्चत्वारिंशत्तमसंख्याकाः श्लोकाः न पठ्यन्ते। २ 'वमेन्निद्रातियोगे तु कुर्यात्' इति पा०। ३ 'इन्द्रियार्थेष्वसंवित्तिर्जृम्भणं गौरवं क्लमः' इति ता०। ४ 'यस्येह' इति ता० 'यस्यैते' इति पा०। ५ 'प्राणकोष्ठानिलेरितम्' इति पा०।

वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ॥
न चान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् ॥ ५४ ॥
आर्द्रचर्मावनद्धं वा [1]यो गात्रं मन्यते नरः ॥
तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् ॥ ५५ ॥
मूर्च्छा पित्ततमःप्राया, रजःपित्तानिलाद्भ्रमः ॥
तमोवातकफात्तन्द्रा, निद्रा श्लेष्मतमोभवा ॥ ५६ ॥

[2]गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धिर्भवति ॥ ५७ ॥

[3]भवन्ति चात्र—

[4]तस्यान्तरेण नाभेस्तु ज्योतिःस्थानं ध्रुवं स्मृतम् ॥
तदाधमति वातस्तु देहस्तेनास्य वर्धते ॥ ५८ ॥
ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः ॥
ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥ ५९ ॥
दृष्टिश्च रोमकूपाश्च न वर्धन्ते [5]कदाचन ॥
ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ॥ ६० ॥
शरीरे क्षीयमाणेऽपि वर्धेते द्वाविमौ सदा ॥
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥ ६१

[6]सप्त प्रकृतयो भवन्ति—दोषैः पृथक्, द्विशः, समस्तैश्च ॥६२॥

[7]शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ॥
प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥ ६३ ॥

---

१ 'यो गात्रमभिमन्यते' इति हा० । २ 'गर्भस्य खलु रसगुणनिमित्तान्मातुराहारनिमित्ताच्च परिवृद्धिर्भवति' इति ता. । ३ 'भवतश्चात्र' इति ता. । ४ ता० पुस्तकेऽष्टापञ्चाशत्तम एकोनषष्टितमश्चामू श्लोकौ नोपलभ्येते । ५ 'कथंचन' इति पा० । ६ ता० पुस्तके 'सप्त प्रकृतयो भवन्ति—दोषैः पृथक्, द्विशः, समस्तैश्च' इतीदं सूत्रं न पठ्यते तदभावे तु 'तिस्रः प्रकृतयो भवन्तिवातपित्तकफनिमित्ताः' इत्येव सूत्र पठ्यते । ७ ता० पुस्तके द्विषष्टितमसूत्रानन्तर 'भवति चात्र' इति पठित्वा तदग्रे त्रिषष्टितमोऽय श्लोकः पठितो लक्ष्यते ।

तत्र[1] वातप्रकृतिः प्रजागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्यनार्यो गन्धर्वचित्तः स्फुटितकरचरणोऽल्प[2]रूक्षश्मश्रुनखकेशः[3] क्राथी दन्तखादी च भवति ॥ ६४ ॥

[4]अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी ॥ द्रुतगतिरटनोऽनवस्थितात्मा वियति[5] च गच्छति संभ्रमेण सुप्तः ॥ ६५ ॥

अव्यवस्थितमतिश्चल[6]दृष्टिर्मन्द[7]रत्नधनसंचयमित्रः ॥
किंचिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष[8] मनुष्यः ॥ ६६ ॥
( [9]वातिकाश्चाजगोमायुशशाखूष्ट्रशुनां तथा ॥
गृध्रकाकखरादीनामनूकैः कीर्तिता नराः ॥ ६७ ॥ )

पित्त[10]प्रकृतिस्तु स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्र[11]कोपप्रसादो मध्यबलो मध्यायुश्च भवति ॥ ६८ ॥

मेधावी[12] निपुणमतिर्विगृह्य वक्ता तेजस्वी समितिषु दुर्निवारवीर्यः ॥ सुप्तः सन् कनकपलाशकर्णिकारान् संपश्येदपि च हुताश[13] विद्युदुल्काः ॥ ६९ ॥

---

१ 'तत्र वातप्रकृतिर्जागरूकः शीतद्वेषी दुर्भगः स्तेनोऽनार्यो मत्सरी गान्धर्वः स्फुटितचरणो रूक्षाल्पकेशश्मश्रुः कठिनक्रोधी दन्तखादी अल्पबलोऽल्पायुश्च भवति' इति ता.। २ 'अतिरूक्षश्मश्रुनखकेशः' इति पा०। ३ 'क्रोधी' इति पा०। ४ ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरम् 'अधृतिरदृढसौहृदः कृतघ्नः' इत्यादिरय पञ्चषष्टितमः श्लोकः पठ्यते। ५ 'नभसि च' इति ता.। 'वियदपि' इति पा०। ६ 'चलच्चित्तो' इति ता.। ७ 'मन्ददन्त°' इति ता.। ८ 'मारुतप्रकृतिरस्थिरसत्त्वः' इति पा०। ९ अय सप्तषष्टितमः श्लोकस्ता० पुस्तके न पठितोऽस्ति। १० 'पित्तप्रकृतिस्तु स्वेदनः शीतसहः पीतः कालो वा शिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपादपाणितलो दुर्भग' इति ता.। ११ 'क्षिप्रकोपप्रसादशीलो मध्यमायुश्च भवति' इति ता.। १२ ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरमयं 'मेधावी निपुणमतिः' इत्यादिरेकोनसप्ततितमः श्लोकः पठितो लक्ष्यते। १३ 'हुताशविद्युदुल्काम्' इति ता.।

[1]न भयात् प्रणमेदनतेष्वमृदुः प्रणतेष्वपि सान्त्वनदानरुचिः ॥
भवतीह सदा व्यथितास्यगतिः स भवेदिह पित्तकृतप्रकृतिः ॥७०॥
( [2]भुजङ्गोलूकगन्धर्वयक्षमार्जारवानरैः ॥
व्याघ्रर्क्षनकुलानूकैः पैत्तिकास्तु नराः स्मृताः ॥ ७१ ॥ )

श्लेष्मप्रकृतिस्तु दूर्वेन्दीवरनिस्त्रिंशार्द्रारिष्टकशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही [3]दृढवैरश्च भवति ॥ ७२ ॥

[4]शुक्लाक्षः स्थिरकुटिलालिनील[5]केशो
लक्ष्मीवान् जलदमृदङ्गसिंहघोषः ॥
सुप्तः सन् सकमलहंसचक्रवाकान्
संपश्येदपि च जलाशयान् मनोज्ञान् ॥ ७३ ॥

[6]रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः ॥
क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः ॥७४॥

( दृढशास्त्रमतिः स्थिर[7]मित्रधनः
परिगण्य चिरात् प्रददाति बहु ॥
[8]परिनिश्चितवाक्यपदः सततं
गुरुमानकरश्च [9]भवेत् स सदा ॥ ७५ ॥

[10]ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः ॥
तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः ॥ ७६ ॥ )

---

१ 'न भयात्प्रणमेत्प्रणतेषु मृदु.' इति ता.। २ अयमेकसप्ततितमः श्लोकस्ता० पुस्तके न पठितोऽवलोक्यते। ३ 'दृढवैरो दीर्घायुश्च भवति' इति ता.। ४ 'ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरमयं त्रिसप्ततितमः श्लोकः पठितो लक्ष्यते। तथाचात्र स्थिते 'शुक्लाक्षः' इत्यभावे 'स्निग्धाक्षः' इति पदं पठ्यते। ५ '°चारुगात्रो' इति ता.। ६ ता० पुस्तकेऽयं चतुःसप्ततितमः श्लोको नास्ति। ७ 'स्थिरमित्रमनः इति ता.। ८ 'परिनिष्ठित०' इति ता.। ९ 'कफप्रकृतिः' इति ता.। १० ता० पुस्तकेऽयं षट्सप्ततितमः श्लोको न पठितोऽस्ति।

द्वयोर्वा[1] तिसृणां वाऽपि प्रकृतीनां तु लक्षणैः ॥
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत् ॥ ७७ ॥
प्रकोपो वाऽन्यथाभावो क्षयो वा नोपजायते ॥
प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥ ७८ ॥
विषजातो[2] यथा कीटो न विषेण विपद्यते ॥
तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥ ७९ ॥
प्रकृतिमिह नराणां भौतिकीं केचिदाहुः
पवनदहनतोयैः कीर्तितास्तास्तु तिस्रः ॥
स्थिरविपुलशरीरः पार्थिवश्च क्षमावाञ्
शुचिरथ चिरजीवी नाभसः खैर्महद्भिः ॥ ८० ॥
शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् ॥
प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥ ८१ ॥
माहात्म्यं[3] शौर्यमाज्ञा च सततं शास्त्रबुद्धिता ॥
भृत्यानां भरणं चापि[4] माहेन्द्रं कायलक्षणम् ॥ ८२ ॥
शीतसेवा[5] सहिष्णुत्वं पैङ्गल्यं हरिकेशता ॥
प्रियवादित्वमित्येतद्वारुणं[6] कायलक्षणम् ॥ ८३ ॥
मध्यस्थता सहिष्णुत्वमर्थस्यागमसंचयौ ॥
महाप्रसवशक्तित्वं[7] कौबेरं कायलक्षणम् ॥ ८४ ॥
गन्धमाल्यप्रियत्वं च नृत्यवादिप्रकामिता ॥
विहारशीलता चैव गान्धर्वं कायलक्षणम् ॥ ८५ ॥

---

१ 'दृश्यते प्रकृतौ रूप यदा दोषद्वयस्य तु ॥ संसर्गं त विजानीयात् संसर्गस्त्रिविधश्च स.' ॥ इति ता. । २ 'विषेण न विपद्यते ॥ तद्वत्प्रकृतिभिर्देहस्तज्जातत्वान्न बाधते' इति ता. । ३ 'शौर्यमाज्ञा महाभाग्य' इति ता. । ४ 'चैव' इति ता. । ५ 'सहिष्णुता शीतसेवा पैङ्गाख्यं हरिकेशता । प्रियोदकत्व च तथा वारुणं कायलक्षणम्' ॥ इति ता. । ६ 'प्रियोदकत्व च तथा' इति ता. । ७ 'महाप्रसवशक्तिश्च' इति ता. ।

प्राप्तकारी दृढोत्थानो निर्भयः स्मृतिमाञ्छुचिः[1] ॥
रागमोहमदद्वेषैर्वर्जितो[2] याम्यसत्त्ववान् ॥ ८६ ॥
जपव्रतब्रह्मचर्यहोमाध्ययनसेविनम्[3] ॥
ज्ञानविज्ञानसंपन्नमृषिसत्त्वं नरं[4] विदुः ॥ ८७ ॥
सप्तैते सात्त्विकाः काया राजसांस्तु निबोध मे ॥
ऐश्वर्यवन्तं रौद्रं च शूरं चण्डमसूयकम् ॥ ८८ ॥
एकाशिनं चौदरिकमासुरं सत्त्वमीदृशम् ॥
तीक्ष्णमायासिनं[5] भीरुं चण्डं मायान्वितं तथा ॥ ८९ ॥
विहाराचारचपलं सर्पसत्त्वं विदुर्नरम् ॥
प्रवृद्धकामसेवी[6] चाप्यजस्राहार एव च ॥ ९० ॥
अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम् ॥
एकान्तग्राहिता रौद्रमसूया[7] धर्मबाह्यता ॥ ९१ ॥
भृशमात्रं[8] तमश्चापि राक्षसं कायलक्षणम् ॥
उच्छिष्टाहारता[9] तैक्ष्ण्यं साहसप्रियता तथा ॥ ९२ ॥
स्त्रीलोलुपत्वं नैर्लज्यं पैशाचं कायलक्षणम् ॥
असंविभागमलसं दुःखशीलमसूयकम् ॥ ९३ ॥
लोलुपं चाप्यदातारं प्रेतसत्त्वं विदुर्नरम् ॥
षडेते राजसाः कायाः, तामसांस्तु निबोध मे ॥ ९४ ॥
दुर्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता ॥
निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः ॥ ९५ ॥

---

१ 'धृतिमान् स्मृतिमाञ्छुचि' इति ता.। २ 'रागद्वेषभयाज्ञानैर्वर्जितो याम्यसत्त्ववान्' इति ता.। ३ 'ब्रह्मचर्यव्रतजपहोमाध्ययनसेविनम्' इति ता.। ४ 'विदुर्नरम्' इति ता.। ५ 'तीक्ष्णमायासबहुल क्रोधन सत्वभीरुकम्' इति ता.। ६ 'अबद्धकामसेवी' इति पा०। ७ 'रौक्ष्यमसूया' इति पा०। ८ 'भृशमात्मस्तवश्चापि' इति पा०। ९ 'उत्सृष्टाचारता रौक्ष्यं' इति ता.।

अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता ॥
परस्पराभिमर्दश्च मत्स्यसत्त्वस्य लक्षणम् ॥ ९६ ॥
एकस्थानरतिर्नित्यमाहारे केवले रतः ॥
वानस्पत्यो नरः सत्त्वधर्मकामार्थवर्जितः ॥ ९७ ॥
इत्येते त्रिविधाः कायाः प्रोक्ता वै तामसास्तथा ॥
[1]कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत् ॥ ९८ ॥
महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः ॥
प्रोक्ता लक्षणतः सम्यग्भिषक् ताश्च वि[2]भावयेत् ॥ ९९ ॥

इति सुश्रुतसंहितायां शारीरस्थाने गर्भव्याकरणं शारीरं नाम चतुर्थोऽध्यायः ॥ १४ ॥

---

## पञ्चमोऽध्यायः।

अथातः शरीरसंख्याव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं 'गर्भ' इत्युच्यते [3]तं चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्धयति; एवं विवर्धितः स यदा हस्त[4]पादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा 'शरीरं'

---

१ 'विज्ञायकायप्रकृतीरनुरूपां' इति पा०। २ 'तथा पुनः सप्तप्रकृतयो जातिकुलदेशकालवयोबलप्रत्ययात्मसंश्रयाः॥ दृश्यन्ते हि पुरुषाणां जात्यादिनियतास्ते ते भावविशेषाः॥ सत्त्वादीनां च तरतमयोगाच्छरीरविशेषेभ्यश्चान्यानुविधायित्वाच्च भेदाश्रयमसंख्येयं भवति॥ शरीरमपि सत्त्वादीननुरुध्यते। सत्त्वादयोऽपि शरीरम् ॥' इति वृद्धवाग्भटाचार्यैरभिहितः प्रकृतिविमर्शोऽपीह विचिन्त्यो भवति। ३ 'त च चेतनावस्थित' इति हा०। ४ 'हस्तपादजिह्वाघ्राणवदनकर्णादिभिरुपेतः' इति ता.। 'हस्तपादजिह्वाघ्राणकर्णादिभिः' इति पा.।

इति संज्ञां लभते। तच्च षडङ्गं—शाखाश्चतस्रो, मध्यं पञ्चमं, षष्ठं शिर इति ॥ ३ ॥

अतः परं प्रत्यङ्गानि वक्ष्यन्ते—मस्तकोदरपृष्ठनाभिललाटनासाचिबुकबस्तिग्रीवा इत्येता एकैकाः, कर्णनेत्रभ्रूशङ्खांसगण्डकक्षस्तनवङ्क्षणवृषणपार्श्वस्फिग्जानुकूर्परबाहूरुप्रभृतयो द्वे द्वे, विंशतिरङ्गुलयः, स्रोतांसि वक्ष्य[1]माणानि, एष प्रत्यङ्गविभाग उक्तः ॥ ४ ॥

[2]तस्य पुनः संख्यानं—त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस [3]उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्चा रज्जवः सेवन्यः सङ्घाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्माणि सिरा धमन्यो योग[4]वहानि स्रोतांसि च ॥ ५ ॥

त्वचः सप्त, कलाः सप्त, आशयाः सप्त, धातवः सप्त, सप्त सिराशतानि, पञ्च पेशीशतानि, नव स्नायुशतानि, त्रीण्यस्थिशतानि, द्वे दशोत्तरे संधिशते, सप्तोत्तरं मर्मशतं, चतुर्विंशतिर्धमन्यः, त्रयो दोषाः, त्रयो मलाः, नव स्रोतांसि, ( [5]षोडश कण्डराः, षोडश जालानि, षट् कूर्चाः, चतस्रो रज्जवः, सप्त सेवन्यः, चतुर्दश सङ्घाताः, चतुर्दश सीमन्ताः, द्वाविंशतिर्योगवहानि स्रोतांसि, द्वि[6]कान्यन्त्राणि ) चेति, समासः ॥ ६ ॥

विस्तारोऽत ऊर्ध्वं—त्वचोऽभिहिताः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस [7]उण्डुको हृदयं वृक्कौ च ॥ ७ ॥

---

१ 'वक्ष्यन्ते' इति पा० । २ 'तस्य पुनः संख्येयानि' इति पा० । ३ 'उन्दुक' इति पा० । ४ 'योगवाहीनि' इति पा० । ५ 'षोडशकण्डरा' इत्यारभ्य 'द्विकान्यन्त्राणि' इत्यन्तोऽयं पाठो हाराणचन्द्रपठितत्वादिह पठ्यते । नायं पाठो हस्तलिखितपुस्तके ह्युपलभ्यते । ६ द्विकान्यन्त्राणीति सूक्ष्मस्थूलभेदेन भगवता पुनर्वसुनापि 'क्षुद्रान्त्रं स्थूलान्त्रं च' इति पठ्यते । ७ 'उन्दुकः' इति पा० ।

आ[1]शयास्तु-वाताशयः, पित्ताशयः, श्लेष्माशयो, रक्ताशय, आमाशयः, पक्वाशयो, मूत्राशयः, स्त्रीणां गर्भाशयोऽष्टम इति ॥ ८ ॥

सार्धत्रिव्यामान्यन्त्राणि पुंसां, स्त्रीणामर्धव्यामहीनानि ॥ ९ ॥

श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां बहिर्मुखानि, ए[2]तान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहं च ॥ १० ॥

षोडश कण्डराः—तासां चतस्रः पादयोः, तावत्यो हस्तग्रीवापृष्ठेषु; तत्र हस्तपादगतानां कण्डराणां नखा अग्रप्ररोहाः, ग्रीवा[3]हृदयनिबन्धिनीनामधो[4]भागगतानां मेढ्रं, श्रोणिपृष्ठनिबन्धिनीनामधोभागगतानां [5]बिम्बं, मू[6]र्धोरुवक्षोंऽसपिण्डादीनां च ॥ ११ ॥

मां[7]ससिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि; तानि मणिबन्धगुल्फसंश्रितानि [8]परस्परनिबद्धानि परस्परगवाक्षितानि चेति, यैर्गवाक्षितमिदं शरीरम् ॥ १२ ॥

षट् कूर्चाः, ते हस्तपादग्रीवामेढ्रेषु; ह[9]स्तयोर्द्वौ, पादयोर्द्वौ, ग्रीवामेढ्रयोरेकैकः ॥ १३ ॥

मह[10]त्यो मांसरज्जवश्चतस्रः—पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये, आभ्यन्तरे च द्वे ॥ १४ ॥

---

१ 'आशयास्तु वातपित्तश्लेष्मामपक्वाग्निमूत्राणां सप्त' इति ता.। 'सप्ताशयाः क्रमादसृक्कफामपित्तपक्ववायुमूत्राधाराः' इति वृ० वा०। २ तान्येव स्त्रीणामपराणि त्रीणि द्वे स्तनयोरधस्ताद्रक्तवाहि च' इति ता.। ३ 'ग्रीवाहृदयसम्बन्धनीना' इति पा०। ४ 'अधोमुखाना मेढ्र' इति ता.। ५ 'बिम्ब०' इति हा०। 'नितम्ब०' इति ता. तथा च पा०। ६ 'मूर्धोरुवक्षोऽक्षपिण्डादीनां च' इति पा०। 'ऊरुवक्षोऽक्षपिण्डादिगतानाञ्च मूर्धा' इति हा०। ७ 'मासंसिरास्नाय्वस्थिधमनीजालानि' इति ता.। ८ ता० पुस्तके 'परस्परनिबद्धानि परस्परगवाक्षितानि चेति' इति पदचतुष्टय नोपलभ्यते। ९ ता० पुस्तके 'हस्तयोर्द्वौ पादयोर्द्वौ ग्रीवामेढ्रयोरेकैक०' इति षट्कूर्चास्थलबोधकानि त्रीणि वाक्यानि नावलोक्यन्ते। १० 'महत्यो मांसरज्जवश्चतस्रः पेशीनिबन्धनार्थम्पृष्ठवंशमुभयतो द्वे बाह्ये अभ्यन्तरे च द्वे इति ता.।

सप्त[1] सेवन्यः; सिरसि विभक्ताः पञ्च, जिह्वाशेफसोरेकैका; ताः परिहर्तव्याः शस्त्रेण ॥ १५ ॥

चतुर्दशास्थ्नां संघाताः[2]; तेषां[3] त्रयो गुल्फजानुवङ्क्षणेषु, एतेनेतरसक्थि बाहू च व्याख्यातौ, त्रिकशिरसोरेकैकः ॥ १६ ॥

चतुर्दशैव[4] सीमन्ताः; ते चास्थिसङ्घातवद्गणनीयाः, यतस्तैर्युक्ता अस्थिसंघाताः; ये ह्युक्ताः संघातास्ते[5] खल्वष्टादशैकेषाम् ॥ १७ ॥

त्रीणि सषष्ठीन्यस्थिशतानि[6] वेदवादिनो भाषन्ते; शल्यतन्त्रेषु तु त्रीण्यैव शतानि । तेषां[7] सविंशमस्थिशतं शाखासु, सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोरःसु, ग्रीवां[8] प्रत्यूर्ध्वं त्रिषष्टिः, एवमस्थ्नां[9] त्रीणि शतानि पूर्यन्ते ॥ १८ ॥

एकैकस्यां तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश, तलकूर्चगुल्फसंश्रितानि दश, पार्ष्ण्यामेकं, जङ्घायां द्वे, जानुन्येकम्, एकमूराविति, त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थि बाहू च व्याख्यातौ; श्रोण्यां पञ्च, तेषां गुदभगनितम्बेषु[10] चत्वारि, त्रिकसंश्रितमेकं, पार्श्वे[11] षट्त्रिंशदेकस्मिन्, [12]द्वितीयेऽप्येवं, [13]पृष्ठे

---

१ 'सप्तसीवन्यस्तु प्रविभक्ताः शिरसि पञ्च' इति ता.। २ 'संहताः' इति ता.। ३ 'तेषामेकैको गुल्फजानुवक्षणमणिबन्धकूर्परकक्ष्यासु त्रिकशिरसोश्च' इति वृ० वा०। ४ 'तद्वत्सीमन्तास्तेतु पञ्चशिरसीत्यष्टादश' इति वृ० वा०। ५ 'सीमन्तास्तु खल्वाष्टादशैकेषाम्' इति पा०। ६ त्रीणि षष्ठ्या शतान्यस्थ्नामिति वेदवादिनो भाषन्ते' इति ता.। 'त्रीणि षष्ट्यधिकान्यस्थिशतानि-इति पा०। 'त्रीणि षष्ट्याऽधिकान्यस्थिशतानि'। इति च वृ० वा०। ७ 'तेषा च चत्वारिंशच्छत शाखासु। सविंशच्छतमन्तराधौ। शतमूर्ध्वम्' इति वृ० वा०। ८ 'ग्रीवाया' इति ता। ९ ता० पुस्तके 'एवमस्थ्ना त्रीणिशतानि पूर्यन्ते' इति वाक्य नास्ति। १० 'भगगुदनितम्बेषु' इति पा०। ११ 'पार्श्वयोरष्टचत्वारिंशत्' इति ह्रा०। १२ 'तावन्त्येव द्वितीये' इति ता.। १३ 'पृष्ठे द्वात्रिंशदेव' इति ता.। 'त्रिंशत्पृष्ठे' इति वृ० वा०।

त्रिंशत्, [1]अष्टावुरसि, द्वे अंस[2]फलके; ग्री[3]वायां नव, कण्ठ[4]नाड्यां चत्वारि, द्वे [5]हन्वोः, दन्ता द्वात्रिंशत्, ना[6]सायां त्रीणि, एकं तालुनि, गण्डकर्णशङ्खेष्वेकैकं, [7]षट् शिरसीति ॥ १९ ॥

ए[8]तानि पञ्चविधानि भवन्ति; तद्यथा—कपालरुचकतरुणवलय-नलकसं[9]ज्ञानि । तेषां जानुनितम्बांसगण्डता[10]लुशङ्खशिरःसु कपालानि, दशनास्तु [11]रुचकानि, [12]घ्राणकर्णग्रीवाक्षिकोषेषु तरुणानि, [13]पार्श्वपृष्ठोरःसु वलयानि, शे[14]षाणि नलकसंज्ञानि ॥ २० ॥

भवन्ति चात्र—

[15]अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ॥
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥ २१ ॥

---

१ 'उरसि त्रीणि' इति हा० । २ 'असपीठे' इति हा० । 'अक्षकसंज्ञे' इति ता. । ३ ग्रीवाया· पुरस्तान्नवक तदूर्ध्वमेकम्' इति हा० । 'त्रयोदश ग्रीवायाम्' इति वृ० वा० । ४ 'फुप्फुसनिबद्धाया कण्ठसंसक्तायां नाड्या-मेकविंशतिः ति हा० । ५ 'द्वे हनुसज्ञे' इति ता. । 'हनुसमाख्यमेकम्' इति हा० । 'द्वे हनुबन्धने' इति वृ० वा० । ६ 'नासायामष्टौ नासायामुपकनीनक द्वे' इति पठित्वा तदनन्तर 'अपाङ्गयोरधस्ता द्वे, वर्त्मसज्ञे द्वे' इति हाराणचन्द्र सपादितायां सुश्रुतसंहितायामधिक पठ्यते । ७ हाराणचन्द्रसपादिताया सुश्रुतसहिताया 'षट् शिरसि' इति पठित्वा तदनन्तर 'शिरसोऽभ्यन्तरे च द्वे' इत्यधिक पठ्यते । ८ 'तान्येतान्यस्थीनि पञ्चविधानि भवन्ति' इति ता. । ९ '°सज्ञानि' इति पदस्याग्रे 'भवन्ति' इति ता पुस्तकेऽधिक पठ्यते । १० '°तालुमध्यशिरःसु' इति ता । ११ 'रुचका·' इति ता. तथैव च वृ० वा० । १२ 'घ्राणकण्ठकर्णाक्षिकूटेषु तरुणानि' इति ता. । 'घ्राणकर्णग्रीवाक्षिकोषकण्ठनाडीषु तरुणानि' इति हा० । 'घ्राणकर्णग्रीवाक्षिकोशेषु तरुणानि' इति च वृ० वा० । १३ 'पादहस्तग्रीवापृष्ठेषु वलयानि' इति ता. । 'पाणिपादपार्श्वपृष्ठोरःसु वलयानि इति हा० । 'पाणिपादपार्श्वपृष्ठेषु वलयानि' इति च वृ० वा० । १४ 'शेषास्तु नलकाः' इति ता. । १५ 'यथा हि सारो वृक्षस्य तिष्ठत्यभ्यन्तराश्रित ॥ एवमस्थीनि जन्तूना शरीर ध्रियते तु तैः ॥ तस्माच्चिर विनष्टेऽपि त्वङ्मांसे तु शरीरिणाम् ॥ अस्थीनि न विनश्यन्ति सारो ह्येष विधीयते' ॥ इति ता. ।

तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ॥
अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम् ॥ २२ ॥
मांसान्यत्र निबद्धानि सिराभिः स्नायुभिस्तथा ॥
अस्थीन्यालम्बनं कृत्वा न शीर्यन्ते पतन्ति वा ॥ २३ ॥
सन्धयस्तु द्विविधाश्चेष्टावन्तः, स्थिराश्च ॥ २४ ॥
शाखासु[1] हन्वोः कट्यां च चेष्टावन्तस्तु सन्धयः ॥
शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः ॥ २५ ॥

सङ्ख्यातस्तु[2] दशोत्तरे द्वे शते । तेषां शाखास्वष्टषष्टिः, एकोन-[3]षष्टिः कोष्ठे, ग्रीवां प्रत्यूर्ध्वं त्र्यशीतिः । एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयः, द्वावङ्गुष्ठे, ते चतुर्दश, जानुगुल्फवङ्क्षणेष्वेकैकः, एवं सप्तदशैकस्मिन् सक्थ्नि[4] भवन्ति; एतेनेतरसक्थि बाहू च व्याख्यातौ; त्रयः[5] कटीकपालेषु, चतुर्विंशतिः पृष्ठवंशे, तावन्त एव पार्श्वयोः उरस्यष्टौ[6]; तावन्त एव ग्रीवायां, त्रयः[7] कण्ठे, नाडीषु हृदयक्लोमनिबद्धास्वष्टादश, दन्तपरिमाणा दन्तमूलेषु, एकः[8] काकलके नासायां[9] च, द्वौ[10] वर्त्ममण्डलयोर्नेत्राश्रयौ, गण्डकर्णशङ्खेष्वेकैकः, द्वौ हनु-

---

१ 'शाखासु हन्वो॰ कट्यां च' इत्यादिरयं पञ्चविंशतितमः श्लोकस्ता॰ पुस्तके नास्ति । २ 'सङ्ख्यातस्तु द्वे दशोत्तरे' इति ता॰ । 'द्वे सन्धिशते' इति च॰ । ३ 'एकोननवतिः कोष्ठे, ग्रीवा प्रत्यूर्ध्वं त्रिपञ्चाशत्' इति हा॰ । ४ 'सक्थिनि' इति ता. । ५ 'पञ्च कटीकपालेषु' इति हा॰ । ६ 'अष्टावुरसि' इति ता॰ । ७ 'त्रयः कण्ठनाड्यां हृदयक्लोमफुप्फुसनाडीष्वष्टादश तास्वेव निबद्धाः' इति ता. । 'त्रयः कण्ठनाड्याम् । अष्टादश कण्ठनाडीनिबद्धा हृदययकृत्क्लोमनाडीषु' इति वृ॰ वा॰ । त्रयः कण्ठनाड्यां हृदयक्लोमनिबद्धासु नाडीष्वष्टादश' इति च पा॰ । केचित्वत्र 'नाडीषु फुप्फुसक्लोमनिबद्धासु इत्यपि पठन्ति । ८ 'एकैकः' इति ता॰ । ९ 'नासायां पञ्च' इति पा॰ । १० 'द्वौ द्वौ वर्त्ममण्डलयोर्नेत्राश्रितौ' इति ता. । 'द्वौ द्वावेव द्वयोर्नेत्रयोर्भवतः । द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ इति च पा॰ ।

सन्धी, द्वावुपरिष्टाद्भ्रुवोः[1] शङ्खयोश्च[2], पञ्च शिरःकपालेषु, एको मूर्ध्नि[3] ॥ २६ ॥

ते[4] एते सन्धयोऽष्टविधाः—कोरोलूखलसामुद्गप्रतरतुन्नसेवनी-वायसतुण्डमण्डलशङ्खावर्ताः। तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः, कक्षावङ्क्षणदशनेषूलूखलाः[5], अंसपीठगुदभग-नितम्बेषु[6] सामुद्गाः, ग्रीवापृष्ठवंशयोः प्रतराः, शिरःकटीकपालेषु तुन्नसेवन्यः[7], हन्वोरुभयतस्तु[8] वायसतुण्डाः, कण्ठहृदयनेत्रक्लोम-नाडीषु मण्डलाः[9], श्रोत्रशृङ्गाटकेषु शङ्खावर्ताः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ २७ ॥

अस्थ्नां[10] तु सन्धयो ह्येते केवलाः[11] परिकीर्तिताः ॥
पेशीस्नायुसिराणां तु सन्धिसङ्ख्या न विद्यते ॥ २८ ॥

---

१ हाराणचन्द्रसंपादितायां सुश्रुतसंहितायां 'द्वावुपरिष्टाद्भ्रुवोः' इति वाक्यं नोपलभ्यते। २ 'द्वावधस्ताच्छङ्खयोः' इति हा०। ३ हाराणचन्द्रसंपादितायां सुश्रुतसंहितायां 'एको मूर्ध्नि' इति वाक्यं नोपलभ्यते। ४ 'त एते सन्धयोऽष्टविधा भवन्ति' इति ता.। ५ कक्षावक्षणदशनेषूलूखलसंज्ञाः' इति ता.। 'कक्षावक्षणदन्तमूलेषूलूखलसंज्ञाः' इति च वृ० वा०। ६ 'असपीठ-गुदपादनितम्बेषु सामुद्गाः' इति पा०। ७ 'तूनसेवनीसंज्ञाः' इति ता.। 'तुन्नसेवनीसंज्ञाः' इति च वृ० वा०। ८ 'हनोः' इति पा०। ९ 'कण्ठ-हृदयनेत्रवर्त्मक्लोमनाडीषु मण्डलसंज्ञाः' इति ता.। 'कण्ठनेत्रहृदयाग्न्यकृत्प्लीह-क्लोमनाडीषु मण्डलसंज्ञाः' इति च वृ० वा०। १० ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरमयमष्टाविंशतितमः श्लोकः पठितोऽस्ति। तथा च वृद्धवाग्भटाचार्यैरस्थिसन्धीन् वर्णयित्वा तदुपसंहारप्रसङ्गे केवलास्थिस-न्धिवर्णनस्यैव किं प्रयोजनं तदितरसन्धिवर्णनस्य च किमप्रयोजनं तदुभ-यमभिहितं तद्यथा 'स्नायुपेशीसिराश्रितैस्तु सह सहस्रद्वयम्। न पुनः शस्त्र-प्रणिधाने तेषु वाच्यमस्तीति पृथक् नोच्यते' इति। ११ 'केवल' इति ता.।

नव स्नायुशतानि । तासां[2] शाखासु षट्शतानि, द्वे शते त्रिंशच्च कोष्ठे, ग्रीवां[3] प्रत्यूर्ध्वं सप्ततिः । एकैकस्यां तु पादाङ्गुल्यां षण्णिचि[4]तास्त्रिंशत्, तावत्य[5] एव तलकूर्चगुल्फेषु[6], तावत्य[7] एव जङ्घायां, दश जानुनि, चत्वारिंशदूरौ, दश वङ्क्षणे, शतमध्यर्धमेवमेकस्मिन्[8] सक्थ्नि[9] भवन्ति; एतेनेतरसक्थि बाहू च व्याख्यातौ; षष्टिः कट्यां[10], पृष्ठेऽशीतिः, पार्श्वयोः षष्टिः, उरसि त्रिंशत्; षट्त्रिंशद्ग्रीवायां, मूर्ध्नि चतुस्त्रिंशत्; एवं नव स्नायुशतानि व्याख्यातानि भवन्ति[11] ॥ २९ ॥

भवन्ति[12] चात्र—

स्नायूश्चतुर्विधा[13] विद्यात्तास्तु सर्वा निबोध मे ॥
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥ ३० ॥

---

१ 'नवस्नायुशतानि भवन्ति' इति ता. । २ 'तेषाम्' इति ता. ।' ३ 'ग्रीवायां' इति ता. । ४ 'षट् षण्णिचिताः' इति पा० । ५ 'तावन्त्येव इति ता. । ६ 'पादतलकूर्चगुल्फेषु' इति वृ० वा० ७ 'तावन्त्येव' इति ता. । ८ 'पञ्चाशच्छतमेवमेकस्मिन्' इति ता. । ९ 'सक्थनि' इति ता. । १० 'कट्योः' इति ता. । ११ अस्याग्रे ता० पुस्तके 'महास्नायुषु कण्डरेति सञ्ज्ञा' इत्यधिकं पठ्यते। पुनश्चात्रेद विशेषेण चिन्त्य भवति यत् सुश्रुतसंहितायां या कोष्ठस्थितस्नायुसख्या या चोर्ध्वागस्थितस्नायुसख्याभिहिता तदपेक्षया वृद्धवाग्भटाचार्यप्रणीतेऽष्टांगसंग्रहे सा कोष्ठस्थितस्नायुसंख्या सा चोर्ध्वांगस्थितस्नायुसंख्याऽधिकविस्तरेणाभिहिता यथा—'चत्वारिंशत्कट्याम् । विंशतिर्मुष्कमेढ्रवस्त्यन्त्रेषु । अशीति· पृष्ठे । षष्टि पार्श्वयोः । अष्टादशोरसि । चत्वार्यक्षकयोः । अष्टावसयो । द्वे द्वे मन्यावटुनेत्रौष्ठतालुपु । त्रिंशद् ग्रीवायाम् । त्रीणि जत्रुणि । चत्वारि हन्वोः । पञ्च जिव्हायाम् । द्वादशोत्तराधरेषुदन्तमासेपु । षण्मूर्धनि' । इति । १२ 'भवन्ति चात्र श्लोकाः' इति ता । १३ 'चतुर्विधानि स्नायूनि नाम तेषां निबोध मे ॥ प्रतानवन्ति वृन्तानि सुषिराणि पृथूनि च' ॥ इति ता. ।

प्रतानवत्यः[1] शाखासु सर्वसन्धिषु चाप्यथ ॥
वृत्तास्तु[2] कण्डराः सर्वा विज्ञेयाः कुशलैरिह ॥ ३१ ॥
आमपक्काशयान्तेषु[3] बस्तौ च शुषिराः खलु ॥
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च[4] शिरस्यथ ॥ ३२ ॥
नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता ॥
भारक्षमा[5] भवेदप्सु नृयुक्ता सुसमाहिता ॥ ३३ ॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ॥
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः[6] ॥ ३४ ॥
न[7] ह्यस्थीनि न वा पेश्यो न सिरा न च सन्धयः ॥
व्यापादितास्तथा हन्युर्यथा[8] स्नायुः शरीरिणम् ॥ ३५ ॥
यः[9] स्नायूः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा ॥
स गूढं शल्यमाहर्तुं देहाच्छक्नोति देहिनाम् ॥ ३६ ॥

पञ्च पेशीशतानि भवन्ति[10] । तासां[11] चत्वारि शतानि शाखासु,

---

१ 'प्रतानवन्ति' इति ता.। २ 'वृत्तानि' इति ता.। ३ 'आमपक्काशयाश्रेषु सुषिराणि पृथूनि च' ॥ इति ता.। 'बस्त्यामपक्काशयाश्रेषु सुषिराणि' इति च वृ० वा०। ४ 'पृथुलानि शिरस्सु च' इति ता। ५ 'भवेद्भारक्षमा ह्यप्सु दृढसन्धिसमाश्रिता' इति ता.। ६ 'स्मृता.' इति ता.। ७ 'नह्यस्थीनि न पेश्यो वा' इति ता.। ८ 'यथा स्नायूनि देहिनाम्' इति ता.। 'स्नावबन्धनैर्हि सन्धिषु सुबद्धतनुर्नौरिव सम्यग्गीह्यते। तस्मादस्थिः सिरादिभ्योऽपि तानि यत्नतो रक्षेत्' इति वृ० वा०। ९ 'यः स्नायूनि विजानाति सबाह्याभ्यन्तराणि च॥ स गूढ शल्यमाहर्तु देहाच्छक्नोति मानवः'॥ इति ता। १० ता० पुस्तके 'भवन्ति' इति पद नोपलभ्यते। ११ 'तासां चत्वारि शतानि शाखासु। कोष्ठे षष्टिः। ग्रीवाया प्रत्यूर्ध्वं चत्वारिंशत्' इति ता.। 'तासां चत्वारि शतानि शाखासु। षष्टिरन्तराधौ। चत्वारिंशदूर्ध्वम्' इति वृ० वा०।

कोष्ठे षट्षष्टिः, ग्रीवां प्रत्यूर्ध्वं चतुस्त्रिंशत् । एकैकस्यां तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश, दश[1] प्रपदे, पादोपरि कूर्चसन्निविष्टास्तावत्य[2] एव, दश गुल्फतलयोः, गुल्फजान्वन्तरे विंशतिः, पञ्च जानुनि, विंशतिरूरौ, दश[3] वङ्क्षणे, शतमेवमेकस्मिन् सक्थ्नि[4] भवति; एतेनेतरसक्थिबाहू च व्याख्यातौ; तिस्रः पायौ, एका[5] मेढ्रे, सेवन्यां चापरा, द्वे वृषणयोः, स्फिचोः पञ्च पञ्च, द्वे बस्तिशिरसि, पञ्चोदरे[6], नाभ्यामेका, पृष्ठोर्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः, षट् पार्श्वयोः[7], दश[8] वक्षसि, अक्षकांसौ प्रति समन्तात् सप्त, द्वे हृदया[9]माशययोः, षट्[10] यकृत्प्लीहोण्डु(न्दु)केषु; ग्रीवायां[11] चतस्रः, अष्टौ हन्वोः[12], एकैका काकलकगलयोः[13], द्वे तालुनि, एका जिह्वायां[14], द्वे ओष्ठयोः, द्वे नासायां, द्वे नेत्रयोः, गण्डयोश्चतस्रः[15], कर्णयोर्द्वे, चतस्रो ललाटे, एका शिरसीति[17]; एवमेतानि[18] पञ्च पेशीशतानि ॥ ३७ ॥

---

१ 'पञ्चदश प्रपदे' इति ता. । २ 'तावन्त्य०' इति ता. । ३ 'वङ्क्षणे दश' इति ता. । ४ 'सक्थिनि' इति ता. । ५ 'एका मेढ्रसीवन्याम् । अपरे द्वे वृषणयोः । गुदे तिस्रः ।' इति ता० । 'एकैका मेढ्सेवन्योः । द्वे वृषणयोः । दश स्फिचोः । तिस्रो गुदे, तास्तु वलीसंज्ञाः ।' इति च वृ० वा० । ६ 'सप्तोदरे' इति ता. । 'चतस्र उदरे' इति च वृ० वा० । ७ 'पार्श्वयोर्दश' इति ता. । 'दश दीर्घाः पार्श्वयोः' इति च वृ० वा० । ८ 'द्वे वक्षसि' इति ता. । ९ 'द्वे हृद्यामाशये । एकाभ्यन्तरतः कोष्ठे' इति ता० । 'द्वे हृद्यामाशये च' इति च वृ० वा० । १० अत्र पठ्यमान 'षट् यकृत्प्लीहोण्डु( न्दु )केषु' इति वाक्यं तत्ता० पुस्तके न दरीदृश्यते । ११ 'दश ग्रीवाया' इति वृ. वा० । १२ 'अष्टौ हनुसमाख्ये' इति हा० । १३ 'गलकाकलयो' इति ता. । १४ 'जिह्वाया षट्' इति ता. । 'जिह्वायां द्वे' इति च पा० । १५ 'चतस्रः नेत्रयोः' इति पा० । 'नेत्रयोर्द्वे' इति च ता. । १६ 'अष्टौ गण्डयोः' इति वृ. वा० । 'गण्डयोश्चतस्रश्चतस्रः' इति च ता० । १७ षट् शिरसीति' इति ता. । १८ 'तान्येतानि पञ्चपेशीशतानि पुंसां भवन्ति' इति ता. ।

[1]भवति चात्र—

शिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम्॥
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः॥ ३८॥

[2]स्त्रीणां तु विंशतिरधिका। दश तासां स्तनयोरेकैकस्मिन् पञ्च-पञ्चेति, [3]यौवने तासां परिवृद्धिः; [4]अपत्यपथे चतस्रः—तासां प्रसृते अभ्यन्तरतो द्वे, मुखाश्रिते बाह्ये च वृत्ते द्वे, [5]गर्भच्छिद्रसंश्रितास्तिस्रः, [6]शुक्रार्तवप्रवेशिन्यस्तिस्र एव। [7]पित्तपक्वाशययोर्मध्ये गर्भशय्या, यत्र गर्भस्तिष्ठति॥ ३९॥

[8]तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिसिरास्नायुप्रच्छादका यथाप्रदेशं स्वभावत एव भवन्ति॥ ४०॥

भवति चात्र—

[9]पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः॥
स्त्रीणां[10]मावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः॥ ४१॥
मर्मसिराधमनीस्रोतसामन्यत्र प्रतिभागः॥ ४२॥

---

१ 'भवति चात्र' इत्यत्र पठ्यमान वाक्य तत्ता० पुस्तके नास्ति। तथा च तदग्रे पठ्यमानोऽष्टात्रिंशत्तमः श्लोकश्चापि नास्ति। २ 'स्त्रीणां चतुर्दशाभ्यधिका' इति ता.। ३ 'यौवने तासां परिवृद्धिर्भवति' इति ता.। ४ 'भगापत्यपथे चतस्रः' इति पा० 'दश योनौ' इति वृ० वा०। ५ 'गर्भमाश्रितास्तिस्रः इति ता.। ६ शुक्रार्तवप्रवेशिन्यस्तिस्रः एव गर्भशय्याया यत्र गर्भस्तिष्ठति' इति ता.। 'शुक्रार्तवप्रवेशिन्यो गर्भाशये तिस्र एव' इति च पा०। ७ 'पित्तपक्वाशययोर्मध्ये गर्भशय्या' इत्यत्र पठ्यमान वाक्य तत्ता० पुस्तके नास्ति। ८ ता० पुस्तके इमे चत्वारिंशत्तमैकचत्वारिंशत्तमसंख्याके सूत्रे नोपलभ्येते। ९ 'लक्षणमुष्कयोः' इति पा०। १० 'स्त्रीणामाश्रित्य' इति पा०।

शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता[1] सा प्रकीर्तिता ॥
तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रतिष्ठिता ॥ ४३ ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः ॥
तत्संस्थानां[2] तथारूपां गर्भशय्यां विदुर्बुधाः ॥ ४४ ॥
आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः ॥
स[3] योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥ ४५ ॥
त्वक्पर्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः ॥
शल्यज्ञानादृते नैष[4] वर्ण्यतेऽङ्गेषु केषुचित् ॥ ४६ ॥
तस्मान्निःसंशयं[5] ज्ञानं हर्त्रा शल्यस्य वाञ्छता ॥
शोधयित्वा[6] मृतं सम्यग्द्रष्टव्योऽङ्गविनिश्चयः ॥ ४७ ॥
प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टं च यद्भवेत् ॥
समासतस्तदुभयं[7] भूयो ज्ञानविवर्धनम् ॥ ४८ ॥

तस्मात्[8] समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकं

---

१ ता०पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरं 'शङ्खनाभ्याकृतिर्योनिः' इत्यादिस्त्रिचत्वारिंशत्तमः श्लोकः पठितोऽस्ति । २ 'तत्स्थानञ्च यथारूपं' इति ता. । ३ 'स योनिं याति शिरसा' इति ता. । ४ 'नाय' इति ता. । 'नैव' इति च पा० । ५ 'तस्मान्निःसंशयं ज्ञानं शल्यहर्त्राऽभिवाञ्छता' इति ता. । 'तस्मान्निःसंशयं ज्ञानमिच्छता शल्यजीविना इति च पा० । ६ 'शोधयित्वा मृतं तावत्' इति पा० । ७ 'समागतं तदुभयं भूयो ज्ञानं विवर्धयेत्' इति ता० तथैव च बृ० वा० । 'समागतं द्वयं तत्तु भूयो ज्ञानविवर्धनम्' इति च पा० । ८ 'तस्मात्समस्तगात्रमविहतमदीर्घव्याधिपीडितं पुरुषमवहन्त्यामापगायां विबद्धं मुञ्जवल्कलैः पञ्जरस्थमप्रकाशे देशे कोथयेत् । सम्यक्प्रकुथितं चोद्धृत्यायतदेहं कृत्वोशीरतृणवेणुकूर्चादीनामन्यतमेन शनैः शनैरवघृष्य त्वगादीन्सर्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तानुपलक्षयेच्चक्षुषा' इति ता. । 'युक्तकारी भिषग्बुभूषुः पुरुषं सम्पूर्णगात्रमविषहतमदीर्घव्याधिपीडितं निष्क्रष्टान्नमावहन्त्यामापगायां मुञ्जवल्कलवेष्टितं पञ्जरस्थमप्रकाशे देशे कोथयेत् । तं सम्यक् प्रकुथितं चोद्धृत्यायतदेहं कृत्वोशीरवेणुकूर्चादीनामन्यतमेन शनैः शनैरवघृष्य सर्वानेव बाह्याभ्यन्तराङ्गसिरास्नाय्वादीनवयवानाचार्योपदर्शितेनागमेन चक्षुषा च लक्षयेत्' इति च बृ० वा० ।

निःसृष्टान्त्रपुरीषं पुरुषमावहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जव-ल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत्, सम्यक्प्रकुथितं चोद्धृत्य, ततो देहं सप्तरात्रादुशीरबालवेणुबल्वज-कूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्य-न्तरानङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥ ४९ ॥

न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः ॥
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥ ५० ॥
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ॥
दृष्टश्रुताभ्यां संदेहमवापोह्याचरेत् क्रियाः ॥ ५१ ॥

इति सुश्रुतसंहितायां शारीरस्थाने शरीरसङ्ख्याव्याकरण-
शारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः प्रत्येकमर्मनिर्देशं शारीरं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सप्तोत्तरं मर्मशतम् । तानि मर्माणि पञ्चात्मकानि भवन्ति; तद्यथा—मांसमर्माणि, सिरामर्माणि, स्नायुमर्माणि, अस्थिमर्माणि सन्धिमर्माणि चेति । न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेके-णान्यानि मर्माणि भवन्ति, यस्मान्नोपलभ्यन्ते ॥ ३ ॥

---

१ "°वल्कल°" इति पा० । २ 'न शक्यश्चक्षुषा द्रष्टुं सौक्ष्म्यात्सूक्ष्मतरं विदुः ॥ दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव वा' ॥ इति ता. । ३ 'शरीरे वापि शास्त्रे वा दृष्टार्थस्तु विशारदः ॥ दृष्टश्रुताभ्यां सन्देहं व्यपोह्यारभते क्रियाम्' ॥ इति ता. । ४ 'तानि पञ्चविधानि मर्माणि भवन्ति' इति ता. । 'षोढैवं मर्मकल्पना' इति च ल० वा० । 'तानि पञ्चविधानि मर्माणि भवन्ति' इति ता. ।

तत्रैकादश मांस[1]मर्माणि, एकचत्वारिंशत् सिरा[2]मर्माणि, सप्तविंशतिः स्ना[3]युमर्माणि, अष्टावस्थिमर्माणि, विंशतिः सन्धिमर्माणि चेति । तदेतत् सप्तोत्तरं मर्मशतम् ॥ ४ ॥

तेषामेकादशैकस्मिन् सक्थ्नि[4] भवन्ति, एतेनेतरसक्थिबाहू च व्याख्यातौ[5], उदरोरसोर्द्वादश, चतुर्दश पृष्ठे, ग्रीवां[6] प्रत्यूर्ध्वं सप्तत्रिंशत् ॥ ५ ॥

तत्र सक्थिमर्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रबस्तिजा[7]न्वाण्युर्वीलोहिताक्षाणि विटपं चेति, एतेनेतरत्सक्थि व्याख्यातम् । उद[8]रोरसोस्तु गुदबस्तिनाभिहृदयस्तनमूलस्तन[9]रोहितापलापान्यप[10]स्तम्भौ चेति । पृष्ठमर्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति । बा[11]हुमर्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रबस्तिकूर्पराण्युर्वीलोहिताक्षाणि कक्षधरं चेति; एतेनेतरो बाहुर्व्याख्यातः । जत्रुण ऊर्ध्वं चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वे फ[12]णे द्वावपा[13]ङ्गौ द्वावावर्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति ॥ ६ ॥

---

१ 'दश मांसजानि मर्माणि' इति लघुवाग्भटः । २ 'सप्तत्रिंशत्सिराश्रयाणि मर्माणि' 'नव मर्माणि धमनीस्थानि' इति ल० वा० । ३ 'स्नायुमर्माणि त्रयोविंशतिः' इति ल० वा० । ४ 'सक्थिनि' इति ता । ५ 'व्याख्यातौ भवतः' इति ता. । ६ 'ग्रीवायाः' इति ता । ७ 'जानुश्चाण्यूर्वी°' इति ता. । ८ 'उदरोरसोस्तु मर्माण्यनुव्याख्यास्यामः । गुदो बस्तिर्नाभिर्हृदय स्तनमूले स्तनलोहिते अपालापे अपस्तम्भे चेति' इति ता. । ९ 'स्तनरोहितापस्तम्बावपलापौ चेति' इति पा० । १० '°न्यपस्तम्बौ चेति' इति पा० । ११ ता० पुस्तके 'बाहुमर्माणि' न पृथक्तया पठितानि । १२ 'द्वौ फणौ' इति पा० । १३ 'द्वावपाङ्गौ । द्वौ शङ्खौ । द्वावर्तौ । द्वावुत्क्षेपौ । एका स्थपनी' इति ता. ।

तत्र तलहृदयेन्द्रबस्तिगुदस्तनरोहितानि मांसमर्माणि, नीलधमनीमातृका[1]शृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिता[2]क्षोर्व्यः सिरामर्माणि, आ[3]णी(णि)विटपकक्षधरकूर्चकूर्चशिरोबस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्माणि, कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्माणि, जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्तकृकाटिकाश्चेति सन्धिमर्माणि॥ ७ ॥

ता[4]न्येतानि पञ्चविकल्पानि भवन्ति; तद्यथा—सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणि चेति। तत्र सद्यःप्राणहराण्येकोनविंशतिः, कालान्तरप्राणहराणि त्रयस्त्रिंशत्, त्रीणि विशल्य[5]घ्नानि, चतुश्चत्वारिंशद्वैकल्यकराणि, अष्टौ रुजाकराणीति ॥ ८ ॥

भवन्ति चात्र—

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठसिरा गु[6]दम् ॥
हृदयं बस्तिनाभ्यौ(भी) च घ्नन्ति स[7]द्यो हतानि तु ॥ ९ ॥
वक्षोमर्माणि सी[8]मन्ततलक्षिप्रेन्द्रबस्तयः ॥
कटीकतरुणे सन्धी पा[9]र्श्वजौ बृ[10]हती च या ॥ १० ॥
नितम्बाविति चैतानि कालान्तरहराणि तु ॥
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्दिशेत् ॥ ११ ॥

---

१ "°मातृकासिराशृङ्गाटकापाङ्ग°" इति ता.। २ "°लोहिताक्षाण्यूर्व्यः" इति ता। ३ ता० पुस्तके 'आण्यभिधान मर्म' सिरामर्मस्वेव पठ्यते न तत्स्नायुमर्मसु पठ्यते। ४ 'तान्येतानि मर्माणि पञ्चविधानि भवन्ति' इति ता.। ५ 'विशल्यघ्नानि त्रीणि' इति ता.। ६ 'गुदः' इति ता.। ७ 'सद्योहराणि' इति पा०। ८ 'सीमन्तास्तलाः क्षिप्रेन्द्रबस्तयः' इति ता.। ९ 'पार्श्वगौ' इति 'पार्श्वयोः' इति च पा०। १० 'बृहती च ये' इति ता.।

लोहिताक्षाणि[1] जानूर्वीकूर्च[2]विटपकूर्पराः ॥
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥ १२ ॥
अंसांसफलकापाङ्गा[3] नीले मन्ये फणौ तथा ॥
वैकल्यकरणान्याहुरावर्तौ द्वौ तथैव च ॥ १३ ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्चशिरांसि च ॥
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ॥
क्षिप्राणि[4] विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥ १४ ॥

मर्माणि[5] मांससिरास्नाय्वस्थिसन्धिसन्निपाताः; तेषु[6] स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति; तस्मान्[7]मर्मस्वभिहतास्तांस्तान् भावानापद्यन्ते ॥ १५ ॥

तत्र सद्यःप्राणहराण्याग्नेयानि, अग्निगुणेष्वाशु[8] क्षीणेषु क्षपयन्ति; कालान्तर[9]प्राणहराणि सौम्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति; विशल्य[10]प्राणहराणि वाय-

१ 'लोहिताक्षाश्च' इति ता। २ '°कूर्चाविटपकूर्पराः' इति ता०। ३ 'असासफलकापाङ्गे' इति ता। ४ 'क्षिप्राणि विद्धमात्राणि घ्नन्तिकालान्तरेण च' इत्ययमर्धश्लोकस्ता० पुस्तके नास्ति तदभावे तु तत्र 'पञ्चोक्तानि विकल्पानि मर्मणा कर्मणा पृथक्' इत्ययमर्धश्लोकः पठितोऽवलोक्यते। ५ 'मर्माणि नाम मांससिरास्नाय्वस्थिसन्धिसन्निपात०' इति ता०। 'मरणकारित्वान्मर्म। तत्पुनर्मांससिरास्नाय्वस्थिसन्धिसन्निपातः। तेन तस्मिन् पीड्यमाने विशेषतः प्राणाबाध०। बाहुल्येन तु निर्देश'। इति वृ. वा० 'मांसास्थिस्नायुधमनीसिरासन्धिसमागमः ॥ स्यान्मर्मेति च तेनाऽत्र सुतरां जीवित स्थितम् ॥ बाहुल्येन तु निर्देशः षोढैव मर्मकल्पना'॥ इति च ल० वा०। ६ 'तेषु स्वभावत एव प्राणास्तिष्ठन्ति' इति ता०। ७ 'तस्मात्' इति हेतुनिदर्शक पाद तत्ता० पुस्तके नास्ति। ८ 'अग्निगुणेषु क्षीणेषु' इति ता.। ९ 'कालान्तराणि सौम्याग्नेयानि। अग्निगुणेषु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति' इति ता.। १० 'विशल्यघ्नानि वायवीयानि' इति ता०। 'उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि तत्र हि ॥ वायुर्मांसवसामज्जमस्तुलुङ्गानि शोषयन्। शल्यापाये विनिर्गच्छन् श्वासात्कासाच्च हन्त्यसून्' इति च ल. वा०।

व्यानि, शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति, उद्धृतमात्रे तु शल्ये मर्मस्थाना[1]श्रितो वायुर्निष्क्रामति, तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते ([2]पाकात्पतितशल्यो वा जीवति); वैकल्यकराणि सौम्यानि, [3]सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति; रु[4]जाकराण्यग्निवायुगुणभूयिष्ठानि, विशेष[5]तश्च तौ रुजाकरौ; [6]पाञ्चभौतिकीं च रुजामाहुरेके ॥ १६ ॥

केचिद[7]ाहुर्मांसादीनां पञ्चानामपि स[8]मस्तानां विवृद्धानां समवायात् सद्यःप्राणहराणि, एकहीनानामल्पानां [9]वा कालान्तरप्राणहराणि, द्विहीनानां विशल्य[10]प्राणहराणि, त्रिहीनानां वैकल्यकराणि, एकस्मिन्नेव रुजाकराणीति । [11]नैवं, य[12]तोऽस्थिमर्मस्वप्यभिहतेषु शोणितागमनं भवति ॥ १७ ॥

---

१ 'मर्मस्थानाश्रयो वायु.' इति ता. । २ 'पाकात्पतितशल्यो वा जीवति इत्यय पाठ. केषुचिद्धस्तलिखितपुस्तकेषु तथा ताडपत्रलिखितपुस्तकेऽपि च नोपलभ्यते । ३ 'सोमो हि शैत्यात्स्थिरत्वाच्च' इति ता० । 'सोमो हि स्थैर्यशैत्याभ्या प्राणान् धारयति । तान्यपि च कदाचिदभिहतानि मारयन्ति' इति च वृ० वा० । ४ रुजाकराण्यग्निमारुतभूयिष्ठानि इति ता० । 'कूर्चशिरोगुल्फमणिबन्धास्त्वष्टौ रुजाकराण्यग्निवायुसोमगुणबाहुल्यात् । अग्निवायू हि विशेषेण रुजाकरौ । सोमस्तु प्राणानवलम्बते' इति च वृ वा० । ५ 'विशेषेण तौ' इति ता. । ६ 'पाञ्चभौतिकी च रुजामपरे त्वाहु.' इति ता. । ७ 'केचिदाहुर्मांसादीना समस्ताना समृद्धानाञ्च समवायात् सद्य प्राणहराणि' इति ता० । 'अन्ये त्वाहुः मासादीना पञ्चानामपि विवृद्धाना समवायात् सद्यःप्राणहराणि । एकैकहीनानामल्पानां च क्रमादितराणि स्वभावत एव च अन्ये वदन्ति प्रतिनियतकर्माणि चन्द्रसूर्यायस्कान्तोपलानामिवाम्बुवह्निकाललोहसश्लेप तथा च छिन्नेपु बहुमर्मस्वपि पाणिपादेपु स्वभावत एव न मृत्यु.' इति च वृ० वा० । ८ 'समवृद्धाना' इति पा० । ९ 'च' इति पा० । १० 'विशल्यघ्नानि' इति पा० । ११ 'नैवं' इति ता० पुस्तके नास्ति । १२ यतश्चैवमतोऽस्थिमर्मस्वपि क्षतेपु शोणितागमन भवति' इति ता० । 'यतश्चैवमतोऽस्थिमर्मस्वभिहतेपु शोणितागमन भवति' इति च पा० ।

[1]चतुर्विधा यास्तु सिराः शरीरे
प्रायेण ता मर्मसु सन्निविष्टाः ॥
स्नाय्वस्थिमांसानि तथैव सन्धीन्
[2]सन्तर्प्य देहं प्रतियापयन्ति[3] ॥ १८ ॥
[4]ततः क्षते मर्मणि ताः प्रवृद्धः[5]
समन्ततो वायुरभिस्तृणोति ॥
विवर्धमानस्तु स मातरिश्वा
रुजः[6] सुतीव्राः प्रतनोति काये ॥ १९ ॥
[7]रुजाभिभूतं तु ततः शरीरं
प्रलीयते नश्यति चास्य संज्ञा ॥
[8]अतो हि शल्यं विनिहर्तुमिच्छ-
न्मर्माणि यत्नेन परीक्ष्य कर्षेत् ॥ २० ॥

एतेन शेषं व्याख्यातम् ॥ २१ ॥

तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति, कालान्तर-

---

१ ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनतर 'चतुर्विधायास्तु सिराः शरीरे' इत्यादिश्लोक पठितोऽस्ति। २ 'सन्तर्पयित्वोपचयन्ति देहम्' इति ता०। 'संतर्प्य देह प्रतिपालयन्ति' इति हा०। 'सन्तर्प्य देह प्रतिपालयन्ति' इति च पा०। ३ अत्रत्य एव श्लोकोक्ताभिप्रायो वाग्भटाचार्येणाप्यष्टाङ्गहृदयेऽभिधीयते यथा 'चतुर्धोक्ता॰ सिरास्तु याः ॥ तर्पयन्ति वपुः कृत्स्न ता मर्माण्याश्रितास्तत॰' ॥ इति। ४ 'तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसंक्षये ॥ वृद्धश्चलो रुजस्तीव्रा॰ प्रतनोति समीरयन् ॥ तेजस्तदुद्धूत धत्ते तृष्णाशोषमदभ्रमान् ॥ स्विन्नस्रस्तश्लथतनु हरत्येन ततोऽन्तक॰' ॥ इति वाग्भटोक्तमप्यत्र चिन्त्यम्। ५ 'प्रवृद्धाः' इति ता॰। ७ 'रुजाभिभूतस्तु पुन॰' इति हा०। ८ 'अतो हि शल्यं विनिहर्तुमिच्छन्मर्माणि यत्नेन परीक्ष्य कर्षेत्' इत्ययमर्धश्लोकस्ता० पुस्तके न पठ्यते।

प्राणहरमन्ते विद्धं वैकल्यमापादयति[1], विशल्यघ्नं वैकल्यकरं च भवति, वैकल्यकरं कालान्तरेण क्लेशयति रुजां चै[3] करोति, रुजाकरमतीव्रवेदनं[4] भवति ॥ २२ ॥

तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति, कालान्तरप्राणहराणि पक्षान्मासाद्वा, तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि[5] मारयन्ति ॥ २३ ॥

[6]अत ऊर्ध्वं सक्थिमर्माणि व्याख्यास्यामः—तत्र पादस्याङ्गुष्ठाङ्गुल्योर्मध्ये [7]क्षिप्रं नाम मर्म, तत्र विद्धस्याक्षेपकेण मरणं; मध्यमाङ्गुलीमनुपूर्वेण मध्ये पादतलस्य [8]तलहृदयं नाम, तत्र रुजाभिर्मरणं; क्षिप्रस्योपरिष्टादुभयतः कूर्चो नाम, तत्र पादस्य भ्रमणवेपने भवतः; गुल्फसन्धेरध उभयतः कूर्चशिरः, [9]तत्र रुजाशोफौ; [10]पादजङ्घयोः सन्धाने गुल्फः, [11]तत्र रुजः स्तब्धपादता खञ्जता वा; पार्ष्णिं प्रति जङ्घामध्ये [12]इन्द्रबस्तिः, तत्र शोणित[13]क्षयेण मरणं; [14]जङ्घोर्वोः सन्धाने

---

१ 'वैकल्यकर भवति' इति ता । २ 'विशल्यघ्नं च वैकल्यकर भवति नाना तीव्रा वेदना जनयति' इति ता० । 'विशल्यप्राणहरमन्ते विद्ध कालान्तरेण क्लेशयति रुजा च करोति' इति च हा० । ३ 'वा' इति ता० । ४ रुजाकरश्चाल्पवेदनां करोति' इति ता० । ५ कदाचिदभिहतानि' इति ता. । ६ 'अतऊर्ध्वं सक्थिमर्माण्यनुव्याख्यास्याम·' इति ता । 'अत ऊर्ध्वं प्रत्येकशो मर्मस्थानान्यनुव्याख्यास्याम·' इति हा० । ७ 'क्षिप्रमिति मर्म' इति पा० । 'क्षिप्र मर्म' इत्यपि च पा० । ८ तलहृदय नाम मर्म तत्र रुजायां मरण' इति ता । ९ 'तत्र रुजाशोफौ भवत·' इति ता. । १० 'पदजङ्घयोः सन्धाने' इति हा० । ११ 'तत्र रुज· स्तब्धसक्थिता षण्ढता वा भवति इति ता० । तथैवच वृ. वा० । १२ 'पार्ष्णि प्रभृति द्वादशभिरङ्गुलैर्जङ्घामध्ये इन्द्रबस्तिः। तत्र शोणितक्षयान्मरणम्' इति वृ० वा० । १३ शोणितक्षये मरण' इति ता० तथैव च हा० । १४ 'मध्यमाङ्गुलीमानुपूर्व्येण जङ्घोर्वोः सन्धाने' इति पा० ।

जानु, [1]तत्र खञ्जता; [2]जानुन ऊर्ध्वमुभयतस्त्र्यङ्गुलमाणी, तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च; ऊरुमध्ये [3]उर्वी, तत्र शोणितक्षयात् सक्थिशोषः; उर्व्या ऊर्ध्वमधो वङ्क्षणसंधेरूरु[4]मूले लोहिताक्षं, तत्र लोहितक्षयेण मरणं पक्षाघातो वा; वङ्क्षणवृषणयोरन्तरे विटपं, तत्र षाण्ढ्यमल्पशुक्रता [5]वा भवति; एवमेतान्येकादश सक्थिमर्माणि व्याख्यातानि । एतेनेतरसक्थि बाहू च व्याख्यातौ । विशेषतस्तु यानि सक्थ्नि गु[6]ल्फजानुविटपानि, तानि[7] बाहौ मणिबन्धकूर्परकक्षधराणि; यथा वङ्क्षणवृषणयोरन्तरे वि[8]टपमेवं वक्षःकक्षयोर्मध्ये कक्षधरं, तस्मिन् विद्धे त एवोपद्रवाः; विशे[9]षतस्तु मणिबन्धे कुण्ठता, कूर्पराख्ये कुणिः, कक्षधरे पक्षाघातः । ए[10]वमेतानि चतुश्चत्वारिंशच्छाखासु मर्माणि व्याख्यातानि ॥ २४ ॥

---

१ 'तत्र खञ्जता भवति' इति ता. । २ जानुनस्त्र्यङ्गुलादूर्ध्वमुभयत आणिर्नाम मर्म' इति ता० तथैव च वृ० वा० । 'जानुसन्धेरुभयतस्त्र्यङ्गुल आणी इति च पा० । ३ 'उर्वी नाम मर्म' इति ता. । ४ 'उरुमध्ये लोहिताक्ष' इति पा० । उर्व्यास्तूर्ध्वमधो वक्षणसन्धेरूरुमूले लोहिताक्षम् । तत्र रक्तक्षयात् पक्षाघातः' इति च वृ. वा० । ५ 'च' इति ता. । ६ गुल्फजानुवक्षणविटपानि' इति ता. । ७ 'तानि बाहौ मणिबन्धकूर्परकक्षधराणि भवन्ति । यथा च पादजङ्घयोस्तु सन्धौ गुल्फो नाम मर्म । एव हस्ततलप्रकोष्ठयोः सन्धौ मणिबन्धो नाम मर्म । यथा च जङ्घोर्वोः सन्धाने जानुर्नाम मर्म । एव हस्तबाह्वोः सन्धाने कूर्परो नाम मर्म । यथा च वंक्षणवृषणयोरन्तरे विटप नाम मर्म । एव वक्षःकक्षयोर्मध्ये कक्षधरो नाम मर्म' इति ता. । ८ 'विटप एव' इति पा० । ९ 'विशेषतस्तु मणिबन्धे कुण्ठता । कूर्परे पक्षाघातः । कुणित्व कक्षधरे चेति, इति ता० । १० 'एवमेतानि चतुश्चत्वारिशच्छाखामर्माणि व्याख्यातानि भवन्ति' इति ता. ।

[1]अत ऊर्ध्वमुदरोरसोर्मर्माण्यनुव्याख्यास्यामः—तत्र [2]वातवर्चोनिरसनं स्थूलान्त्रप्रतिबद्धं [3]गुदं नाम मर्म, तत्र सद्योमरणं; [4]अल्पमांसशोणितोऽभ्यन्तरतः कव्यां [5]मूत्राशयो बस्तिः, तत्रापि सद्योमरणमश्मरीव्रणादृते, [6]तत्राप्युभयतो भिन्ने न जीवति, एकतो भिन्ने मूत्रस्रावी व्रणो भवति, स तु यत्नेनोपक्रान्तो रोहति; [7]पक्वामाशययोर्मध्ये सिराप्रभवा [8]नाभिः, तत्रापि सद्योमरणं; [9]स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं [10]हृदयं, तत्रापि सद्य एव मरणं; [11]स्तनयोरधस्ताद् द्व्यङ्गुलमुभयतः [12]स्तनमूले तत्र कफपूर्णकोष्ठतया ([13]कासश्वासाभ्यां) [14]म्रियते; स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः

---

१ 'अत ऊर्ध्वमुदरोरसोर्द्वादशमर्माण्यनुव्याख्यास्यामः' इति ता०। 'अत ऊर्ध्वमुदरोरसोर्मर्मस्थानान्यनुव्याख्यास्यामः' इति च पा०। २ वातवर्चोनिरसनः स्थूलान्त्रप्रतिबद्धो गुदः। तत्र सद्योमरणम्' इति वृ. वा०। ३ 'वातवर्चोनिःसरणः स्थूलान्त्रप्रतिबद्धो महागुदो नाम' इति ता.। ४ 'अल्पमांसशोणितोऽभ्यन्तरतः कट्यां धनुर्वक्र एकद्वारोऽधोमुखो बस्तिः। इति वृ. वा०। ५ 'अभ्यन्तरतः कट्या मूत्राशययोर्बस्तिर्नाम मर्म' इति ता.। "बस्तिनाभिपृष्ठकटीगुदवङ्क्षणशेफसाम्॥ मध्ये बस्तिस्तनुत्वक् च एकद्वारो ह्यधोमुखः" इति च श्रीभिषग्भावमिश्रः। ६ 'तत्राप्युभयतो विद्धे मरणमेकतो भिन्ने मूत्रस्रावी व्रणो भवति' इति ता। ७ 'पक्वामाशयमध्ये नाभि॰' इति वृ० वा०। 'देहामपक्वस्थानाना मध्ये सर्वसिराश्रयः॥ नाभिः' इति च ल० वा०। ८ 'सिराप्रभवो नाभिर्नाम मर्म' इति ता.। ९ 'कोष्ठवक्षसोः स्तनयोश्च मध्ये सत्वरजस्तमोऽधिष्ठानमामाशयद्वार हृदयम्'। इति वृ वा०। 'द्वारमामाशयस्य च॥ सत्त्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम्' इति च ल० वा०। १० 'हृदय नाम मर्म' इति ता.। ११ 'स्तन॰योरधस्ताद् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्मणी' इति ता०। तथैव च हा०। 'स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत्। ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात्।' इति च ल० वा०। १२ 'स्तनमूले नाम मर्मणी' इति ता.। १३ 'कासश्वासाभ्यां' इत्यत्र स्थित पद तत्ता० पुस्तके नोपलभ्यते। १४ 'म्रियते' इत्यभावे 'मरणं' इति ता० पुस्तके पठ्यते।

स्तनरोहितौ, तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्यां च म्रियते; अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम, तत्र रक्तेन पूयभावं गतेन मरणं; उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम, तत्र वातपूर्णकोष्ठतया कासश्वासाभ्यां च मरणम्; एवमेतान्युदरोरसोर्द्वादश मर्माणि व्याख्यातानि ॥ २५ ॥

अत ऊर्ध्वं पृष्ठमर्माणि व्याख्यास्यामः—तत्र पृष्ठवंशमुभयतः प्रतिश्रोणिकाण्डमस्थिनी कटीकतरुणे, तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते; पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमुभयतो कुकुन्दरे, तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च; श्रोणीकाण्डयोरुपर्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ, तत्राधःकायशोषो दौर्बल्याच्च मरणं, अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य-

१ 'स्तनचूचुकयोरूर्ध्वं स्तनरोहिते नाम मर्मणी। तत्र रक्तपूर्णकोष्ठतया कासश्वासाभ्या मरण' इति ता०। 'स्तनचूचुकयोर्मध्ये स्तनरोहितौ' इति च पा०। २ 'असकूटयोरधस्तात्पार्श्वयोरुपरिभागयोरपालापौ नाम मर्मणी। तत्र पूयभावमापन्ने शोणिते मरण' इति ता०। 'असकूटयोरधःपार्श्वयोरुपरिभागयोरपालापौ। तयोः पूयत्वमापन्नेन रक्तेन मरणम्' इति च वृ वा०। ३ 'अपस्तम्भौ नाम मर्मणी' इति ता.। ४ 'तयोः शोणितपूर्णकोष्ठतया' इति वृ. वा०। ५ 'च' इत्यत्र स्थितमव्ययं तत्ता० पुस्तके नोपलभ्यते। ६ 'अत ऊर्ध्वं पृष्ठमर्माण्यनुव्याख्यास्यामः' इति ता० तथैव च हा०। ७ प्रतिश्रोणीकर्णावस्थिनी' इति ता०। तथैव च वृ० वा०। ८ 'हीनरूपो वा मरण' इति ता०। 'हीनदेहश्च म्रियते' इति पा०। 'हीनरूपो म्रियते' इति च वृ. वा०। ९ 'ककुन्दरे नाम मर्मणी' इति ता०। 'ककुन्दरौ' इति च वृ० वा०। १० 'तत्र स्पर्शाज्ञानमध काये दौर्बल्यश्चेष्टानाशश्च भवति' इति ता०। 'तयोः स्पर्शाज्ञानमध-काये चेष्टानाशश्च' इति च वृ० वा०। ११ 'श्रोणीकर्णयोरुपर्यामाशयाच्छादने पार्श्वान्तरप्रतिबद्धे नितम्बे नाम मर्मणी तत्राध -कायशोषो दौर्बल्य मरणञ्च' इति ता०। १२ 'तयोरध काये शोफो दौर्बल्य मरणं च' इति वृ० वा०। १३ 'अधः पार्श्वान्तरप्रतिबद्धे जघनपार्श्वमध्ये तिर्यगूर्ध्वञ्च जघनात् पार्श्वसन्धी नाम मर्मणी तत्र शोणितपूर्णकोष्ठतया म्रियते'

**र्यगूर्ध्वं च जघनात् पार्श्वसन्धी, तत्र लोहितपूर्णकोष्ठतया म्रियते; स्तनमूलादृजूभयतः पृष्ठवंशस्य बृहती, तत्र शोणितातिप्रवृत्तिनिमित्तै-रुपद्रवैर्म्रियते; पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसंबद्धे अंसफलके, तत्र बाह्वोः स्वापशोषौ; बाहुमूर्धग्रीवामध्येंऽसपीठस्कन्धबन्धनावंसौ, तत्र स्तब्धबाहुता, एवमेतानि चतुर्दश पृष्ठमर्माणि व्याख्यातानि॥ २६॥**

**अत ऊर्ध्वमूर्ध्वजत्रुगतानि व्याख्यास्यामः—तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्युत्यासेन, तत्र मूकता स्वरवैकृतमरसग्राहिता च; ग्रीवायामुभयतश्चतस्रः सिरा मातृकाः,**

---

इति ता०। 'अधः पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ये तिर्यगूर्ध्वं च पार्श्वसन्धी तयोः शोणितपूर्णकोष्ठतया मरणम्'। इति च बृ० वा०। 'पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयोः। तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात्। रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः'। इति च ल० वा०। १ 'स्तनमूलादृजूभयतः पृष्ठवंशस्य बृहतीनाम मर्मणी' इति ता.। 'स्तनमूलादुभयतः पृष्ठवंशस्य बृहत्यौ नाम' इति हा०। 'स्तनमूलयोरार्जवेनोभयतः पृष्ठवंशं बृहत्यौ' इति च वृ० वा०। २ 'स्तनमूलार्जवे भागे पृष्ठवंशाश्रये सिरे। बृहत्यौ, तत्र विद्धस्य मरणं रक्तसंक्षयात्' इति ल० वा० ३ 'तयो.' इति वृ० वा०। ४ 'मरणम्' इति वृ० वा०। ५ पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बन्धे असफले नाम मर्मणी तत्र बाहुस्वापशोषो' इति ता०। 'पृष्ठवंशमुभयतो बाहुमूलसम्बन्धे अंसफलके। तयोर्बाहुस्वापशोषौ' इति च वृ० वा०। ६ 'तत्र बाह्वोः स्वापः शोषो वा' इति हा०। ७ 'ग्रीवामुभयत स्नाय्नी ग्रीवाबाहुशिरोऽन्तरे। स्कन्धांसपीठसबन्धावसौ बाहुक्रियाहरौ' इति च ल० वा०। ८ 'अत ऊर्ध्वमूर्ध्व-जत्रुगतानि मर्माण्यनुव्याख्यास्यामः' इति ता.। ९ 'कण्ठनाडीमुभयतः सिरा-हनुसमाश्रिता.। चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते। स्वरप्रणाशवैकल्य रसाज्ञानं च तद्व्यधे' इति च ल० वा०। १० 'चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्ययेन' इति पा०। ११ 'ग्रीवामुभयतश्चतस्रः सिरा मातृका नाम मर्माणि तत्र सद्योमरण' इति ता०। 'ग्रीवामुभयतः पृथक् चतस्रः सिरा मातृकास्तासु सद्यो मरणम्' इति च वृ० वा०। 'कण्ठनाडीमुभयतो जिह्वानासा-गताः सिराः। पृथक् चतस्रस्ताः सद्यो घ्नन्त्यसून्मातृकाह्वयाः' इति च ल० वा०।

तत्र सद्योमरणं; शिरोग्रीवयो[1]: सन्धाने कृकाटिके, तत्र चलमूर्धता; कर्णपृष्ठतोऽधःसंश्रिते विधुरे[2], तत्र बाधिर्यं; घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरत फणे[3], तत्र[4] गन्धाज्ञानं; भ्रूपुच्छान्त-[5] योरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ, तत्रान्ध्यं दृष्ट्युपघातो वा; भ्रुवोरुपरि निम्नयोरावर्तौ[6] नाम, तत्राप्यान्ध्यं दृष्ट्युपघातो वा; भ्रुवोरन्त-[7] योरुपरि कर्णललाटयोर्मध्ये शङ्खौ[8], तत्र सद्योमरणं; शङ्खयोरुपरि केशान्त उत्क्षेपौ[9], तत्र सशल्यो जीवेत् पाकात् पतितशल्यो वा नोद्धृतशल्यः; भ्रुवोर्मध्ये स्थपनी[10], तत्रोत्क्षेपवत्; पञ्च[11] सन्धयः शिरसि विभक्ताः सीमन्ता[12] नाम, तत्रोन्मादभयचित्तनाशैर्मरणं;

---

१ 'शिरोग्रीवयोः कृकाटिके नाम तत्र चलशीर्षता मरण वा' इति ता०। अस्मिन्सूत्रे 'शिरोग्रीवयोः इति पदस्याग्रे 'सन्धाने' इत्यावश्यकस्यापि पदस्य या त्रुटिर्दृश्यते सा ताडपत्रपुस्तके लेखकप्रमादादेवेति चिन्त्यम्। २ 'विधुरे नाम मर्मणी' इति ता.। ३ 'घ्राणमार्गमुभयतः श्रोत्रमार्गप्रतिबद्धावभ्यन्तरतः फणौ तयोर्गन्धाज्ञानम्' इति वृ० वा०। फणावुभयतो घ्राणमार्गं श्रोत्रपथानुगौ । अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ' इति च ल० वा०। ४ 'तत्र गन्धाज्ञानमापादयति' इति ता.। ५ 'भ्रुवो' पुच्छान्तयोरधो नेत्रयोर्बाह्यतोऽपाङ्गौ नाम मर्मणी' इति ता.। ६ 'भ्रुवोरुपरि निम्नयोरावर्तौ नाम तत्राप्यान्ध्य दृष्ट्युपघातो वा' इत्यस्य सूत्रावयवस्य ता० पुस्तके त्रुटिर्दृश्यते सा ता० पुस्तके लेखकप्रमादादेवेति चिन्त्यम्। ७ 'भ्रुवोरन्तोपरि' इति पा०। ८ 'शङ्खौ नाम मर्मणी' इति ता०। 'भ्रुवो पुच्छान्तयोरुपर्यनुकर्णं ललाटे शङ्खौ। तयोः सद्योमरणम्' इति च वृ० वा०। ९ 'शखयोरुपरि केशान्त उत्क्षेपौ। तयोः सशल्यः पाकात् पतितशल्यो वा जीवेन्नोद्धृतशल्य.॥' इति वृ० वा०। १० 'स्थपनी नाम मर्म' इति ता.। ११ 'पञ्च सन्धय' शिरसि तिर्यगूर्ध्वं च सीमन्ता नाम तेषून्मादभ्रमचित्तनाशैर्मरणम्'॥ इति वृ० वा० । 'कपाले सन्धयः पञ्च सीमन्तास्तिर्यगूर्ध्वगाः। भ्रमोन्मादमनोनाशैस्तेषु विद्धेषु नश्यति॥' इति च ल० वा०। १२ 'सीमन्ता नाम मर्माणि' इति ता.।

[1]घ्राणश्रोत्राक्षिजिह्वासंतर्पणीनां सिराणां मध्ये सिरासन्निपातः [2]शृङ्गाटकानि, तानि चत्वारि मर्माणि, [3]तत्रापि सद्योमरणं; मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्तो[4]ऽधिपतिः, तत्रापि सद्य एव। [5]एवमेतानि सप्तत्रिंशदूर्ध्वजत्रुगतानि मर्माणि व्याख्यातानि ॥ २७ ॥

भवन्ति चात्र श्लोकाः—

[6]ऊर्व्यः शिरांसि विटपे च सकक्षपार्श्वे
एकैकमङ्गुलमितं स्तनपूर्वमूलम् ॥
वि[7]द्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥ २८ ॥
हृद्बस्तिकूर्चगुदनाभि वदन्ति मूर्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे ॥
तानि स्वपाणितलकुञ्चितसंमितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्धम् ॥ २९ ॥

---

१ 'घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां सिराणां मध्ये शिरः स्रोतःसन्निपातस्तानि शृङ्गाटकानि चत्वारि मर्माणि तत्रापि सद्यो मरणं' इति ता०। 'जिह्वाघ्राणाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि सन्निपातः। तासां मुखानि चत्वारि शृङ्गाटकसंज्ञानि तेषु सद्योमरणम्' इति च बृ० वा०। २ शृङ्गाटकसंज्ञश्चतुर्धा तत्रापि सद्योमरणं' इति पा०। ३ 'तत्रापि सद्य एव मरणं' इति पा०। ४ 'सोऽधिपतिर्नाम मर्म तत्रापि सद्योमरणं' इति ता०। ५ 'एवमेतान्यूर्ध्वजत्रुगतानि सप्तत्रिंशन्मर्माणि व्याख्यातानि भवन्ति' इति ता०। ६ 'ऊर्व्यः शिरांसि विटपे सहकक्षपार्श्वे। एकैकमङ्गुलमिता स्तनमूलगुल्फा' इति ता०। ७ 'ज्ञेया द्विरङ्गुलमिता मणिबन्धपृष्ठाः त्रीण्येव जानुनि परं सह कूर्पराभ्याम्' इति ता०।

एतत्प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः[1]
शस्त्रेण कर्मकरणं परिहृत्य कार्यम् ॥
पार्श्वाभिघातितमपीह निहन्ति मर्म
तस्माद्धि मर्मसदनं परिवर्जनीयम् ॥ ३० ॥
छिन्नेषु[2] पाणिचरणेषु सिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति ॥
प्राप्यामितव्यसनमुग्रमतो मनुष्याः
संच्छिन्नशाखतरुवन्निधनं न यान्ति ॥ ३१ ॥
क्षिप्रेषु[3] तत्र सतलेषु हतेषु रक्तं
गच्छत्यतीव पवनश्च रुजं करोति ॥
एवं विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा[4] इवायुधनिपातनिकृत्तमूलाः ॥ ३२ ॥
तस्मात्तयोरभिहतस्य[5] तु पाणिपादं
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे ॥
मर्माणि शल्यविषयार्धमुदाहरन्ति
यस्माच्च[6] मर्मसु हता न भवन्ति सद्यः ॥ ३३ ॥
जीवन्ति तत्र यदि वैद्यगुणेन केचि-
त्ते प्राप्नुवन्ति विकलत्वमसंशयं हि ॥

---

१ 'एतत्प्राणमभिवीक्ष्य' इत्यादिरयं त्रिंशत्तमश्लोकस्ता० पुस्तके नास्ति। २ 'छिन्नेषु पाणिचरणेषु सिरामुखानामाकुञ्चनात् खलु नृणामसृगल्पमेति। छिन्नेषु पाणिचरणेपु भवन्त्यतस्तु नालेपु वृत्तमथितेषु यथोत्पलेषु'॥ इति ता०। ३ 'क्षिप्रेषु वत्स तलजेषु भवेददोषाद्गच्छत्यसृग् बहुरुजश्च करोति वायुः' इति ता.। ४ 'किञ्जल्कपत्रमथनादिव पङ्कजानि' इति ता०। ५ 'तस्मात्तयोरभिहतस्य तु पाणिपाद। छेत्तव्यमाशु मणिबन्धनगुल्फदेशे।' इत्ययमर्धश्लोकस्ता० पुस्तके नास्ति। ६ 'यस्माद्धि मर्मसु हता न भवन्ति मर्त्याः' इति ता.।

संभिन्नजर्जरितकोष्ठशिरःकपाला
जीवन्ति शस्त्रनिहतैश्च[1] शरीरदेशैः ॥ ३४ ॥
छिन्नैश्च सक्थिभुजपादकरैरशेषै-[2]
र्येषां न मर्मसु कृता[3] विविधाः प्रहाराः ॥
सोम[4]मारुततेजांसि रजःसत्त्वतमांसि च ॥
मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥ ३५ ॥
मर्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः ॥
इन्द्रियार्थेष्वसंप्राप्ति[5]र्मनोबुद्धिविपर्ययः ॥ ३६ ॥
रुज[6]श्च विविधास्तीव्रा भवन्त्याशुहरे हते ॥
हते कालान्तरघ्ने तु ध्रुवं धातुक्षयो नृणाम् ॥ ३७ ॥
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ॥
हते वैकल्यजनने[7] केवलं वैद्यनैपुणात् ॥ ३८ ॥
शरीरं[8] क्रियया युक्तं विकलत्वमवाप्नुयात् ॥
विशल्यघ्ने[9] तु विज्ञेयं पूर्वोक्तं यच्च कारणम् ॥ ३९ ॥
रुजाकराणि मर्माणि क्षतानि विविधा रुजः ॥
कुर्वन्त्यन्ते[10] च वैकल्यं कुवैद्यवशगो यदि ॥ ४० ॥
छेदभेदाभिघातेभ्यो दहनाद्दारणादपि[11] ॥
उपघातं विजानीयान्मर्मणां तुल्यलक्षणम् ॥ ४१ ॥

---

१ 'शस्त्रविहतैश्च शरीरदेशैः' इति ता० तथैव च हा०। २ 'सक्थिभुजपादकरैरशेष' इति ता.। ३ 'मर्मपतिता' इति ता० तथैव च हा०। ४ 'अग्नीषोमानिलाः सत्व रजश्च तम एव च ॥ प्रायेण मर्मसु नृणां सन्ति भूतात्मना सह ॥ तस्मान्मर्मस्वभिहता न जीवन्ति शरीरिण' ॥ इति ता.। ५ "सविक्ति' इति ता०। ६ 'रुजासु तीव्रा विविधा भवन्त्याशुहते नरे। हते कालान्तरे चापि ध्रुवो धातुक्षयो नृणाम्' ॥ इति ता.। ७ 'वैकल्यजनके' इति ता.। ८ 'शरीर क्षयमासाद्य' इति ता.। ९ 'विशल्यघ्नेषु विज्ञेयो यो हेतुः प्रागुदीरितः' इति ता.। १० 'कुर्वन्त्येते' इति ता.। ११ दहनाहरणात्तथा' इति ता.।

मर्माभिघातस्तु न कश्चिदस्ति योऽल्पात्ययो वापि निरत्ययो वा ॥
प्रायेण मर्मस्वभिताडितास्तु वैकल्यमृच्छन्त्यथवा म्रियन्ते ॥ ४२ ॥
मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम् ॥
प्रायेण ते कृच्छ्रतमा भवन्ति नरस्य यत्नैरपि साध्यमानाः ॥ ४३ ॥

इति सुश्रुतसंहितायां शारीरस्थाने प्रत्येकमर्मनिर्देश-
शारीरं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथातः सिरावर्णविभक्तिशारीरं[1] व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सप्त सिराशतानि भवन्ति; याभिरिदं शरीरमाराम इव जलं-हारिणीभिः[2] केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते[3] चाकुञ्चन-प्रसारणादिभिर्विशेषैः; द्रुमपत्रसेवनीनामिव तासां[4] प्रतानाः; तासां[5] नाभिर्मूलं[6], ततश्च प्रसरन्त्यूर्ध्वमधस्तिर्यक् च ॥ ३ ॥

---

१ 'अथात· सिरावर्णनविभक्ति नाम शारीर' इति ता०। 'अथात सिरा-वर्णविभक्ति नाम शारीर' इति च पा०। २ 'जलहरिणीभि' इति ता.। ३ 'अनुगृह्यते' इति पद ता० पुस्तके नोपलभ्यते। ४ 'चासां' इति ता। ५ 'तासा खलु नाभिर्मूलं तत प्रसरन्त्यूर्ध्वमधस्तिर्यक् च' इति ता.। ६ 'दश मूलसिरा हृदयप्रतिबद्धा· सर्वाङ्गप्रत्यङ्गेष्वोजो नयन्ति। तत्प्रतिबद्धा हि शरीर-चेष्टाः। तास्तु द्व्यङ्गुलमङ्गुलमर्धाङ्गुल यव यवार्धं च गत्वा द्रुमपत्रसेवनी-प्रतानवद्भिद्यमाना· सप्तशतानि भवन्ति।' इति वृ० वा०। 'दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः॥ रसात्मक वहन्त्योजस्तन्निबद्धं हि चेष्टितम्॥ स्थूलमूलाः सुसूक्ष्माग्रा· पत्ररेखाप्रतानवत्॥ भिद्यन्ते तास्तत· सप्त शतान्यासा भवन्ति तु'॥ इति च ल० वा०।

[1]भवतश्चात्र श्लोकौ—

[2]यावत्यस्तु सिराः काये संभवन्ति शरीरिणाम् ॥
नाभ्यां सर्वा निबद्धास्ताः [3]प्रतन्वन्ति समन्ततः ॥ ४ ॥
नाभिस्थाः[4] प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता ॥
सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ ५ ॥

[5]तासां मूलसिराश्चत्वारिंशत्; तासां वातवाहिन्यो दश, पित्त-वाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः। तासां तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति, तावत्य एव पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च कफस्थाने, रक्तवाहिन्यश्च यकृत्प्लीह्नोः; एवमेतानि सप्त सिराशतानि ॥ ६ ॥

[6]तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः; एतेने-तरसक्थि बाहू च व्याख्यातौ विशेषतस्तु कोष्ठे चतुस्त्रिंशत्; तासां

१ भवति चात्र' इत्येव ता० पुस्तके पठ्यते। २ 'यावन्त्यस्तु' इति ता.। ३ 'प्रवर्तन्ते' इति पा०। ४ 'नाभिस्था प्राणिना प्राणा·' इत्यादिरयं पञ्चमः श्लोकस्ता० पुस्तके नोपलभ्यते। ५ 'तासा खलु मूलसिराश्चत्वारिंशत्; तासु दश वातवहा, दश पित्तवहा, दश श्लेष्मवहा दश रक्तवहा·। तासा खलु वातवहानां सिराणा वातस्थानगतानां पञ्चसप्ततिशत भवति तावन्त्य एव पित्तवहा रक्तवहाश्च यकृत्प्लीह्नो· कफवहाश्च कफस्थाने। एवमेतानि सप्त सिराशतानि भवन्ति' इति ता.। ६ 'तत्र वातवहानामेकस्मिन् सक्थिनि पञ्चविंशति सिरा भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ॥ कोष्ठे चतुस्त्रिंशत्; तासां तु गुदमेढ्रसंश्रिता श्रोण्यामष्टौ, द्वे द्वे पार्श्वयो, षट् पृष्ठे, तावन्त्य एवोदरे, दश वक्षसि। जत्रुण ऊर्ध्वमेकचत्वारिंशत्; तासामष्टौ जिह्वायां, नव नासाया, द्वे ग्रीवायां, हन्वोश्चतस्र, नेत्रयोः षट्, ललाटे तिस्रः कर्णयोश्चतस्र, द्वे शङ्खयो, तिस्र शिरसीत्येवमेनत्पञ्चसप्ततिशत वातवहानां सिराणां व्याख्यात। एष एव विभागः शेषाणामेवमेतानि सप्त सिराशतानि व्याख्यातानि भवन्ति' इति ता.।

गुदमेढ्राश्रिताः श्रोण्यामष्टौ, द्वे द्वे पार्श्वयोः, षट् पृष्ठे, तावत्य एवोदरे, दश वक्षसि । एकचत्वारिंशज्जत्रुण ऊर्ध्वं; तासां चतुर्दश ग्रीवायां, कर्णयोश्चतस्रः, नव जिह्वायां, षण् नासिकायां, अष्टौ नेत्रयोः, एवमेतत् पञ्चसप्ततिशतं वातवाहिनीनां सिराणां व्याख्यातं भवति । एष एव विभागः शेषाणामपि । विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे; एवं रक्तवहाः कफवहाश्च । एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि ॥ ७ ॥

भवन्ति[1] चात्र—

क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम् ॥
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन् ॥ ८ ॥

यदा[2] तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते ॥
तदाऽस्य विविधा रोगा जायन्ते वातसंभवाः ॥ ९ ॥

भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्[3] ॥
संसर्पत् स्वाः सिराः पित्तं कुर्याच्चान्यान् गुणानपि ॥ १० ॥

यदा[4] प्रकुपितं पित्तं सेवते स्ववहाः सिराः ॥
तदाऽस्य विविधा रोगा जायन्ते पित्तसंभवाः ॥ ११ ॥

---

१ ता० पुस्तके 'भवन्ति चात्र' इति पठित्वा तदनन्तरं 'यदा वायुरदुष्टस्तु सेवते स्ववहाः सिराः ॥ तदा तु बलवर्णौजः प्रसीदेच्च मनस्तथा ॥' इत्ययमधिकश्लोकः पठित उपलभ्यते । २ 'यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते । तदाऽस्य रोगा जायन्ते विविधा वातसंभवाः ॥' इति ता । ३ 'यदात्वकुपितं पित्तं सेवते स्ववहाः सिराः ॥ अव्यापन्नस्तदाग्निस्तु सम्यक् पचति भोजनम् ॥ भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम् ॥ करोत्यन्यान्गुणांश्चापि पित्तमात्मसिराश्चरम् ॥' इति ता. । ४ 'यदा तु कुपितं पित्तं स्वाः सिराः प्रतिपद्यते । तदाऽस्य रोगा जायन्ते विविधा पित्तसंभवाः ॥' इति ता. ।

स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमुदीर्णताम् ॥
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिराश्चरन् ॥ १२ ॥
²यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते ॥
तदाऽस्य विविधा रोगा जायन्ते श्लेष्मसंभवाः ॥ १३ ॥
³धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ॥
स्वाः सिराः संचरद्रक्तं कुर्याच्चान्यान् गुणानपि ॥ १४ ॥
⁴यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः ॥
तदाऽस्य विविधा रोगा जायन्ते रक्तसंभवाः ॥ १५ ॥
⁵न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा ॥
श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः ॥ १६ ॥
प्रदुष्टानां हि दोषाणां मूर्च्छितानां⁶ प्रधावताम् ॥
⁷ध्रुवमुन्मार्गगमनमतः सर्ववहाः स्मृताः ॥ १७ ॥

---

१ 'यदा त्वकुपितः श्लेष्मा स्वा सिरा सम्प्रपद्यते ॥ आशयाः सन्धयश्चैव वर्तन्तेऽस्य निरामया ॥ स्नेहमङ्गेषु सन्धीना स्थैर्य बलमदीनताम् ॥ करोत्यन्यान्गुणाश्चापि बलास स्वा· सिराश्चरन् ॥' इति **ता.**। २ यदा तु कुपितः श्लेष्मा स्वा सिरा प्रतिपद्यते। तदाऽस्य रोगा जायन्ते विविधा श्लेष्मसभवा ॥' इति **ता.**। ३ 'यदात्वकुपित रक्त सेवते स्ववहा सिराः। तदा सम्यक् प्रजानाति स्पर्शानान्तु शुभाशुभम् ॥ वर्णप्रसादन स्थैर्य धातूना पुष्टिमेव च ॥ करोत्यन्यान् गुणांश्चापि रक्तमात्मसिराश्चरन् ॥' इति ता०। 'धातूना पूरण वर्णञ्च सन्तानमसशयम् ॥ स्वशिरासु चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि ॥' इति च भावमिश्र। ४ 'यदा तु कुपित रक्त स्वा· सिरा· प्रतिपद्यते ॥ तदास्य रोगा जायन्ते विविधा रक्तसभवा ॥ अप्रदुष्टा शरीराणि धारयन्ति रसैर्हितै। कल्पन्ते च विकाराय प्रदुष्टा नात्र सशय ॥' इति **ता.**। ५ 'न हि वात सिरा काश्चिन्न पित्त केवल सिरा। श्लेष्माण वा वहन्त्येता' सर्वा· सर्ववहा· सिरा ॥' इति **ता**। ६ 'उच्छ्रितानां' इति हा०। ७ 'ध्रुवमुन्मार्गगमन सर्वा सर्ववहा यत' इति **ता.**।

तत्रारुणा[1] वातवहाः पूर्यन्ते वायुना सिराः ॥
पित्तादुष्णाश्च नीलाश्च, शीता गौर्यः स्थिराः कफात् ॥
असृग्वहास्तु[2] रोहिण्यः सिरा नात्युष्णशीतलाः ॥ १८ ॥

अत[3] ऊर्ध्वं प्रवक्ष्यामि न विध्येद्याः सिरा भिषक् ॥
वैकल्यं मरणं चापि[4] व्यधात्तासां ध्रुवं भवेत् ॥ १९ ॥

सिराशतानि[5] चत्वारि विद्याच्छाखासु बुद्धिमान् ॥
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्ठं च मूर्धनि ॥ २० ॥

शाखासु षोडश सिराः कोष्ठे द्वात्रिंशदेव तु ॥
पञ्चाशज्जत्रुणश्चोर्ध्वमव्यध्याः परिकीर्तिताः ॥ २१ ॥

---

१ 'तत्रारुणा वातवहा नीलाः पित्तवहाः सिराः । असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः सिरा' इति ता० । 'तत्र श्यावारुणाः प्रस्पन्दिन्यः सूक्ष्माः क्षणपूर्णरिक्ता वातरक्तं वहन्ति । नीलपीतासिताः स्पर्शोष्णाः क्षिप्रस्राविण्यः पित्तरक्तम् । गौर्यः स्निग्धाः स्थिरा शीताः कण्डूमत्यः कफरक्तम् । लक्षणसंकरे संसर्गसन्निपातरक्तम् । समा गूढा स्निग्धा रोहिण्यः शुद्धरक्तमिति ।' इति च वृ० वा० । 'नीला शीता मरुत्पूर्णाः शिरा स्युर्मरुदाश्रयाः ॥ पीतोष्णाः पित्तलास्तास्तु श्लेष्मलाः स्यु सिताः स्थिरा ॥ यकृत्प्लीह्नो रक्तवहाः कृष्णात्युष्णारुणारुणा ॥ प्राप्नुवन्त्यभितो देह नाभितः प्रसृताः शिराः ॥' प्रतानाः पद्मिनीकन्दाद्बिसादीना यथा जलम् ॥ यथा द्रुपत्रसेवन्यः प्रसृताः स्युः समन्ततः ॥ तथा शिराप्रतानास्तु प्रसरन्त्यत्र वर्ष्मणि ॥' इति च भिषक् त्रिमल्लः । २ 'असृग्धरास्तु ता रक्ताः स्युश्च नात्युष्णशीतलाः ॥' इति भावमिश्र । ३ 'अत ऊर्ध्वं प्रवक्ष्यामि यास्त्ववेध्याः सिरा नृणाम् ॥ शाखासु षोडशाव्यध्याः कोष्ठे द्वात्रिंशदेव तु ॥ जत्रोरूर्ध्वन्तु पञ्चाशदव्यध्याः परिकीर्तिताः ॥ वैकल्य मरणं वाशु व्यधात्तासां ध्रुव भवेत् ॥' इति ता० । ४ 'चाशु' इति पा० । ५ ता० पुस्तके 'सिराशतानि चत्वारि' इत्यादिरयं विंशतितमः श्लोको नोपलभ्यते ।

तत्र सिराशतमेकस्मिन् सक्थ्नि[1] भवति; तासां जालधरा[2] त्वेका, तिस्रश्चाभ्यन्तराः[3]—तत्रोर्वीसंज्ञे द्वे, लोहिताक्षसंज्ञा[4] चैका, तास्त्वव्यध्याः[5]; एतेनेतरसक्थि बाहू च व्याख्यातौ; एवमशस्त्रकृत्याः षोडश शाखासु। द्वात्रिंशच्छ्रोण्यां[6], तासामष्टावशस्त्रकृत्याः—द्वे द्वे विटपयोः[7], कटीकतरुणयोश्च; अष्टावष्टावेकैकस्मिन् पार्श्वे[8], तासामेकैकामूर्ध्वगां[9] परिहरेत्, पार्श्वसन्धिगते च द्वे; चतस्रो विंशतिश्च [10]पृष्ठे पृष्ठवंशमुभयतः, तासामूर्ध्वगामिन्यौ द्वे द्वे परिहरेद्बृहतीसिरे; तावत्य[11] एवोदरे, तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्; चत्वारिंशद्वक्षसि[12], तासां चतुर्दशाशस्त्रकृत्याः—हृदये[13] द्वे, द्वे द्वे स्तनमूले, स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ; एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति। चतुःषष्टं सिराशतं जत्रुण[14] ऊर्ध्वं भवति; तत्र षट्पञ्चाशच्छिरोधरायां, तासामष्टौ चतस्रश्च मर्मसंज्ञाः परिहरेत्,

---

१ 'सक्थिनि' इति ता०। २ 'तत्र न विध्येज्जालन्धराम्। तिस्रश्चाभ्यन्तरगताः' इति वृ० वा०। ३ 'तिस्रश्चाभ्यन्तरत' इति ता०। ४ 'लोहिताक्षसंज्ञका' इति ता। ५ 'एतास्त्वव्यध्या.' इति पा० ६ 'द्वात्रिंशच्छ्रोण्यां गुदमेढ्राश्रयाः। तासा द्वे द्वे वक्षणयो. कटीकतरुणयोश्चेत्यष्टौ शस्त्रतो रक्षेत्' इति वृ० वा० ७ 'वक्षणविटपयो' इति ता०। ८ 'षोडश पार्श्वयोस्तयोरूर्ध्वगामेकैका पार्श्वसन्धिसज्ञाम्' इति वृ० वा०। ९ 'तासामेकैके ऊर्ध्वगे उभयतो द्वे प्रार्श्वसन्धिसश्रिते च परिहरेत्। चतुर्विंशतिः पृष्ठे पृष्ठवशमुभयतः। तासा बृहतीसञ्ज्ञे ऊर्ध्वगामिन्यौ द्वे परिहरेत्' इति ता०। १० 'पृष्ठे' इति पद केषुचित्पुस्तकेषु नोपलभ्यते। ११ 'तावन्त्य एवोदरे' इति ता०। १२ 'चत्वारिशाद्वक्षसि। तासा द्वे हृदये द्वे च स्तनमूलस्तनरोहितेषु। एकैकापस्तभालपेष्विति। ताश्चतुर्दश' इति वृ० वा०। १३ हृदि द्वे स्तनमूलसश्रिते तु द्वे द्वे परिहरेत्। स्तनमुभयतश्चतस्रश्चतस्र. परिहरेत्। द्वे द्वे चापालापस्तम्भेष्वित्येव द्वात्रिशदशस्त्रकृत्या. श्रोणिपृष्ठोदरोरस्सु भवन्ति' इति ता०। १४ 'चतुष्षष्टिशत मूर्धनि तासां विशतिः शिरोधरायां तासामष्टौ चतस्रश्च मर्मसंज्ञा' इति ता०। 'चतु षष्ट सिराशत जत्रुण ऊर्ध्व भवति, तत्राष्टपञ्चाशच्छिरोधराया, तासामष्टौ चतस्रश्च मर्मसंज्ञाः परिहेत्' इति च पा०।

द्वे कृकाटिकयोः, द्वे विधुरयोः, एवं ग्रीवायां षोडशाऽप्यध्याः; हन्वोरुभयतोऽष्टावष्टौ, तासां तु सन्धिधर्मन्यौ द्वे द्वे परिहरेत्, षट्त्रिंशज्जिह्वायां, तासामधः षोडशाशस्त्रकृत्याः, रसवहे द्वे, वाग्वहे च द्वे; द्विर्द्वादश नासायां, तासामौपनासिक्यश्चतस्रः परिहरेत्, तासामेव च तालुन्येकां मृद्दावुद्देशे; अष्टत्रिंशदुभयोर्नेत्रयोः, तासामेकैकामपाङ्गयोः परिहरेत्; कर्णयोर्दश, तासां शब्दवाहिनीमेकैकां परिहरेत्; नासानेत्रगतास्तु ललाटे षष्टिः, तासां केशान्तानुगताश्चतस्रः, आवर्तयोरेकैका, स्थपन्यां चैका परिहर्तव्या; शङ्खयोर्दश, तासां शङ्खसन्धिगतामेकैकां परिहरेत्; द्वादश मूर्ध्नि, तासामुत्क्षेपयोर्द्वे परिहरेत्, सीमन्तेष्वेकैकाम्, एकामधिपताविति; एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्ध्वमिति ॥ २२ ॥

---

१ 'द्वे कृकाटिकयोस्तावन्त्य एव विधुरयोः' इति ता०। २ ता० पुस्तके 'एव ग्रीवाया षोडशाव्यध्याः' इति न पठ्यते। ३ 'चतुर्विंशतिर्ग्रीवायाम्। तासां चतस्रोऽष्टौ च मर्मसंज्ञाः द्वे कृकाटिकयोर्द्वे विधुरयोरिति षोडश शस्त्रेण न स्पृशेत्' इति वृ० वा०। ४ 'सन्धिनिबन्धन्यौ' इति ता०। ५ 'षोडश जिह्वायाम्। तासामधो द्वे रसवेदिन्यौ द्वे वाक्प्रवर्तिन्यौ ताश्चतस्रः' इति वृ० वा०। ६ 'रसवाहिन्यश्चतुर्विंशतिर्नासायां तासामौपनास्याश्चतस्रः परिहरेत्' इति ता। ७ 'चतुर्विंशतिर्नासायाम्। तासां द्वे गन्धवेदिन्यौ तासामेव च तालुन्येकामिति तिस्रः' इति वृ० वा०। ८ 'मृदावुद्देशे' इति ता० पुस्तके नोपलभ्यते। ९ 'षट्त्रिंशदुभयोर्नेत्रयोः' इति ता०। १० 'षट्पञ्चाशन्नेत्रयोः। तयोरुन्मेषनिमेषक्रिये द्वे द्वे द्वे चापाङ्गयोरिति षट्।' इति वृ० वा०। ११ कर्णयोः षोडश। तासां शब्दवाहिन्यौ द्वे। त एव च शखयोस्तासां शखसन्धिगते द्वे।' इति वृ० वा०। १२ 'तासां केशान्तानुगताश्चतस्रः परिहरेत्' इति ता०। १३ 'स्थपन्यां चैका परिहर्तव्या। कर्णयोः पञ्च पञ्च तासां गन्धवहामेकैकां परिहरेत्। शङ्खयोश्च तावन्त्य एव तासां शङ्खसन्धिगतामेकैकां परिहरेत्' इति ता०। १४ 'द्वादश मूर्धनि तासामुत्क्षेपयोर्द्वे द्वे सीमन्तकेष्वेकैकामधिपतौ परिहरेदिति' इति ता०। १५ ता० पुस्तके 'एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्ध्वमिति' इतीदं वाक्यं नास्ति।

भवति[1] चात्र—

व्याप्नुवन्त्यभितो[2] देहं नाभितः प्रसृताः सिराः ॥
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम् ॥ २३ ॥

इति सुश्रुतसंहितायां शारीरस्थाने सिरावर्णविभक्तिशारीरं
नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः।

अथातः[3] सिराव्यधविधिं शारीरं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

**बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तमद्यपाध्वस्त्रीकर्शितवमितविरिक्तास्थापितानुवासितजागरितक्लीबकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीडितानां च सिरां न विध्येत्, याश्चाऽव्यध्याः, व्यध्याश्चादृष्टाः, दृष्टाश्चायन्त्रिताः, यन्त्रिताश्चानुत्थिता इति ॥ ३ ॥**[4]

---

१ 'भवन्ति चात्र श्लोकाः' इति ता०। एवं ता० पुस्तके 'भवन्ति चात्र श्लोकाः' इति पठित्वा तदनन्तरमग्रे पुरोनिर्दिष्ट सार्धश्लोकद्वयमधिकं पठितमुपलभ्यते। यथा—'सिराशतानां सप्तानां शरीरेषु शरीरिणाम्। अशस्त्रकृत्या नवतिस्तथाष्टौ च विनिर्दिशेत्। स्पन्दिन्यौ जलधारिण्यौ याश्च मर्मसमाश्रिताः। अव्यध्यास्ता विजानीयात् स्नायूसन्धिगताश्च याः। वैकल्यमरणञ्चापि व्यधादासां ध्रुवं भवेत्'। २ 'व्याप्नुयाद्वाखिलं देहं नाभितः प्रसृताः सिराः। प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्।' इति ता। ३ 'अथातो व्यधविधिशारीरं व्याख्यास्यामः' इति ता०। ४ 'तत्र बालस्थविरभीरुरूक्षक्षतक्षीणमद्याध्वस्त्रीकर्षितानुवासितवान्तविरिक्तदत्तबस्तिक्लीबगर्भिणीकासश्वासशोषप्रवृद्धज्वरातीसाराक्षेपकपक्षाघातोपवासपीडितानां सिरा न व्यध्या। किं कारणमेषां तु खलु वेधादिन्द्रियसंमोहः शोषो वा भवति। रक्तपित्तिनो रक्तात्ययाद्वातकोपो मृत्युर्वा सिरावेधेन सम्भवेत्। याश्चाव्यध्या-दृष्टा दृष्टाश्चायन्त्रिता यन्त्रिता नोत्थिता इति' इति ता०।

[1]शोणितावसेकसाध्याश्च ये विकाराः प्रागभिहितास्तेषु चापक्वेष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायं च सिरां विध्येत् ॥ ४ ॥

[2]प्रतिषिद्धानामपि च विषोपसर्गे आत्ययिके च सिराव्यधनमप्रतिषिद्धम् ॥ ५ ॥

तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकं द्रवप्रायमन्नं भुक्तवन्तं यवागूं पीत[3]वन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा [4]प्राणानबाधमानो वस्त्रपट्टचर्मान्तर्वल्कललतानामन्यतमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य [5]प्राप्तं शस्त्रमादाय सिरां विध्येत् ॥ ६ ॥

नैवातिशीते नात्युष्णे न प्रवाते [6]न चाभ्रिते ॥
सिराणां व्यधनं कार्यमरोगे वा कदाचन ॥ ७ ॥

तत्र व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने स[7]क्थ्नोराकुञ्चितयोर्निवेश्य [8]कूर्परे सन्धिद्वयस्योपरि [9]हस्तावन्त-

---

१ 'शोणितमोक्षसाध्याश्च विकाराः प्रागभिहिताः । तेष्वपक्वेषु वान्येषु चानुक्तेषु यथाभ्यासमनत्ययञ्च सिरा व्यधयेत्' इति ता । २ 'प्रतिषिद्धानामपि च विषोपसर्गसिराव्यधनमप्रतिषिद्ध' इति ता० । ३ 'पीत वा' इति ता० । 'प्रतिपीत वा' । इति च पा० । ४ 'प्राणानबाधमानः प्लोतपट्टचर्मान्तरवल्कललतानामन्यतमेन यन्त्रेण यन्त्रयित्वा नातिगाढ नातिशिथिल शरीरप्रदेशमासाद्यविधिवच्छस्त्रमादाय यथोक्ता सिरा व्यधयेत्' इति ता । ५ 'यथोक्त शस्त्र गृहीत्वा' इति हा० । ६ 'न च दुर्दिने' इति ता । ७ 'सक्थ्नोराकुञ्चितयोरुपरि कूर्परसन्धिद्वय निवेश्य' इति हा० । ८ 'कूर्परसन्धिद्वयं' इति ता । ९ 'हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टी मन्ययो स्थापयित्वा यन्त्रशाटकेन परिक्षिप्य ग्रीवायामन्येन पश्चात्स्थितेन पुरुषेण वामहस्तेन शाटकान्तद्वय ग्राहयित्वा सिरोत्थापनार्थमसृक्स्रावणार्थञ्च यन्त्रप्रमाणेन पीडयेत् । कर्मपुरुषश्च मुख वायुना पूरयेत् । उत्तमाङ्गगतानामेष सिरोत्थापनयन्त्रविधिः । स्थितसक्थिमीषत्कुञ्चितपादमुच्चैः स्थापयित्वा व्यधप्रदेशस्योपरि सम्यग्यन्त्र्य व्यध्या पादसिरां व्यध्येत् । उपविष्टस्य हस्त गूढाङ्गुष्ठनिबद्धमुष्टि सम्यगासने स्थापयित्वा हस्तसिरां विध्येत् । गृध्रसीविश्वाच्योराकुञ्चितजानुकूर्परस्य । श्रोणीपृष्ठस्कन्धेषून्नमितपृष्ठस्य । उदरोरसोः प्रसारितोरसः स्फूर्जितदेहस्य बाहुभ्यामवलम्बमानस्य पार्श्वयो अवनमितमेढ्रस्य मेढ्रे । उन्नामितविदष्टजिह्वस्याधो जिह्वाया । अतिव्यात्ताननस्य तालुनि दन्तमूले च' इति ता. ।

गूढाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो ब्रूयात्—दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयेति, असृक्स्रावणार्थं च यन्त्रं[१] पृष्ठमध्ये पीडयेति, कर्मपुरुषं[२] च वायुपूर्णमुखं स्थापयेत्, एष उत्तमाङ्गगतानामन्तर्मुखवर्जानां सिराणां व्यधने यन्त्रणविधिः। पादव्यध्यसिरस्य पादं समे स्थाने सुस्थितं स्थापयित्वाऽन्यं पादमीषत्संकुचितमुच्चैः कृत्वा व्यध्यसिरं पादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां[३] प्रपीड्य गुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुले प्लोतादीनामन्यतमेन बद्ध्वा वा पादसिरां विध्येत्। अथोपरिष्टाद्धस्तौ गूढाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत्। गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परस्य श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य विस्फूर्जितपृष्ठस्य विध्येत्। उदरोरसोः प्रसारितोरस्कस्योन्नामितशिरस्कस्य विस्फूर्जितदेहस्य। बाहुभ्यामवलम्बमानदेहस्य पार्श्वयोः। अनामितमेढ्रस्य मेढ्रे। उन्नमितविदष्टजिह्वाग्रस्याधो जिह्वायाम्[४]। अतिव्यात्ताननस्य तालुनि दन्तमूलेषु च। एवं यन्त्रोपायानन्यांश्च[५] सिरोत्थापनहेतून् बुद्ध्वाऽवेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात्[६]॥ ८॥

मांसलेष्ववकाशेषु[७] यवमात्रं शस्त्रं निदध्यात्, अतोऽन्यथाऽर्धयवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन, अस्थ्नामुपरि कुठारिकया विध्येदर्धयवमात्रम्[८]॥ ९॥

---

१ 'यन्त्र पीडयेति' इति, 'पृष्ठमध्ये च पीडयेत्' इति च पा०। २ 'कर्मपुरुषस्य मुखं वायुना पूरयेत्' इति पा०। ३ 'हस्ताभ्यां वा प्रपीड्य गुल्फं' इति पा० 'हस्ताभ्यां प्रपीड्यागुल्फं' इति च हा०। ४ 'अधोजिह्वायाः' इति पा०। ५ 'बन्धोपायान्' इति पा०। ६ 'विदध्यादिति' इति ता। ७ 'मांसलेष्ववकाशेषु व्रीहिमुखेन यवमात्रं निदध्याद् व्रीहिमात्रं वा। अतोन्यथार्धयवमात्रमस्थ्नामुपरिकुठारिकया' इति ता.। ८ ता० पुस्तके नवमसूत्रास्याग्रे 'भवति चात्र' इति पठित्वा तदनन्तरं दशमश्लोकः पठित उपलभ्यते।

व्यभ्रे वर्षासु विध्येत्तु[1] ग्रीष्मकाले तु शीतले ॥
हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः ॥ १० ॥

सम्यक्[2]शस्त्रनिपातेन धारया या स्रवेदसृक् ॥
मुहूर्तं रुद्ध्वा तिष्ठेच्च सुविद्धां तां विनिर्दिशेत् ॥ ११ ॥

यथा कुसुम्भपुष्पेभ्यः पूर्वं स्रवति पीतिका ॥
तथा सिरासु विद्धासु दुष्टमग्रे प्रवर्तते ॥ १२ ॥

मूर्च्छि[3]तस्यातिभीतस्य श्रान्तस्य तृषितस्य च ॥
न वहन्ति सिरा विद्धास्तथाऽनुत्थितयन्त्रिताः ॥ १३ ॥

क्षीणस्य बहुदोषस्य मूर्च्छया[4]ऽभिहतस्य च ॥
भूयोऽपराह्णे विस्राव्या सा[5]ऽपरेद्युस्त्र्यहेऽपि वा ॥ १४ ॥

रक्तं[6] सशेषदोषं तु कुर्यादपि विचक्षणः ॥
न[7] चातिनिःसृतं कुर्याच्छेषं संशमनैर्जयेत् ॥ १५ ॥

बलिनो[8] बहुदोषस्य वयःस्थस्य शरीरिणः ॥
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥ १६ ॥

---

१ 'विध्येत' इति ता० । २ 'द्विप्रकारप्रमथितधारया या स्रवेदसृक्' ॥ इति ता. । ३ ता० पुस्तके 'मूर्च्छितस्यातिभीतस्य' इत्यादिरयं त्रयोदशश्लोको न पठितोऽस्ति । ४ 'मूर्च्छयोपद्रुतस्य वा' इति ता० । 'मूर्च्छया विहतस्य च' इति च पा० । ५ 'तूत्तरेऽहनि वा पुन.' इति ता० । 'ह्यपरेद्युस्त्र्यहेऽपि वा' इति च पा० । ६ 'सशेषदोष रुधिरमपि कुर्याद्विचक्षणः' इति ता । ७ 'न चाति-प्रस्रुतं' इति हा० । ८ ता० पुस्तके 'बलिनो बहुदोषस्य' इत्यादिरयं षोडशः श्लोको न पठ्यते ।

तत्र[1] पाददाहपादहर्षचिप्पविसर्प[2]वातशोणितवातकण्टकविचर्चिकापाददारीप्रभृतिषु क्षिप्रमर्मण उपरिष्टाद् द्व्यङ्गुले व्रीहिमुखेन सिरां विध्येत्, श्लीपदे तच्चिकित्सिते यथा वक्ष्यते, क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले, अपच्यामिन्द्रबस्तेरधस्ताद्‌द्व्यङ्गुले, जानुसन्धेरुपर्यधो वा चतुरङ्गुले गृध्रस्यां, ऊरुमूलसंश्रितां गलगण्डे, एतेनेतरसक्थि बाहू च व्याख्यातौ; विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीहि

---

१ 'तत्र पाददाहपादहर्षचिप्पवातशोणितपादकण्टकविपादिकापाददारीप्रभृतिषु रोगेषु क्षिप्रमर्मोपरिष्टाद् द्व्यङ्गुले व्रीहिमुखेन सिरां व्यधयेत्। श्लीपदेषु यथोक्तम्। क्रोष्टुकशीर्षवातवेदनासु सक्थि संश्रिताम्। गुल्फसन्धेरुपरि चतुरङ्गुले। अपच्यामिन्द्रविशेषतस्तु वामबाहुकूर्परसन्धावभ्यन्तरतो बाहुमध्ये प्लीह्नि। एतामेव दक्षिणबाहु·....यकृद्दाल्ये। एतामेव च कासश्वासयोरप्यादिशन्ति। गृध्रस्यामिव विपच्या वामपार्श्वकक्षास्तनान्तरयोरन्तरस्थां विद्रधौ पार्श्वशूले च। एतामेव च कफोदरे। दक्षिणपार्श्वे बाहुशोषाववबाहुकयोर्बाहुमध्ये। एके वदन्त्यसमध्ये। त्रिकसन्धिमध्यगता तृतीयके स्कन्धसन्धिगतानामन्यतरपार्श्वसंस्थिताना चातुर्थके हनुसन्धिगतामपस्मारे। शङ्खसन्धिगतानामुन्मादे। जिह्वारोगेष्वधोजिह्वाया। दन्तव्याधिषु दन्तमूले। तालुनि तालव्ये च। कर्णयोरुपरिसमन्तात् कर्णशूले तद्रोगे च। गन्धाघ्राणे.नासारोगेषु नासाग्रे। तिमिराक्षिपाकप्रभृतिष्वक्ष्यामयेषूपनास्या लालाटीमापाङ्गी वा। एतामेव शिरोरोगाधिमन्थप्रभृतिषु च रोगेषु'। इति ता। बस्तेरधस्ताद् द्व्यङ्गुले। जानुसन्धेरुपरि चतुरङ्गुले गृध्रस्यामूरुसन्धिसन्निविष्टाम्। गलगण्डे श्रोणि प्रति समतात्। प्रवाहिकाया शूलिन्या परिवर्तिकोपदशशूक्व्यापत्सु मेढ्रमध्ये। एतेनेतरसक्थिबाहू च व्याख्यातौ। २ अत्र 'विसर्प' शब्दस्ता. पुस्तके तथैव च तदितरेषु हस्तलिखितपुस्तकेषु न पठ्यते।

कनिष्ठिकानामिकयोर्मध्ये वा, एवं दक्षिणबाहौ यकृद्दाल्ये (कफोदरे च,) एतामेव च कासश्वासयोरप्यादिशन्ति, गृध्रस्यामिव विश्वाच्यां, श्रोणिं प्रति समन्ताद् द्व्यङ्गुले प्रवाहिकायां शूलिन्यां, परिवर्तिकोपदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये, (वृषणयोः पार्श्वे मूत्रवृद्ध्यां, नाभेरधश्चतुरङ्गुले सेवन्या वामपार्श्वे दकोदरे,) वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च, बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे, त्रिकसन्धिमध्यगतां तृतीयके, अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थितां चतुर्थके; हनुसन्धिमध्यगतामपस्मारे, शङ्खकेशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादे, जिह्वारोगेष्वधोजिह्वायां दन्तव्याधिषु च, तालुनि तालव्येषु, कर्णयोरुपरि समन्तात् कर्णशूले तद्रोगेषु च, गन्धाग्रहणे नासारोगेषु च नासाग्रे, तिमिराक्षिपाकप्रभृतिष्वक्ष्यामयेषूपनासिके ललाट्यामपाङ्ग्यां वा, एता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति ॥ १७ ॥

दुष्टव्यधा विंशतिः—दुर्विद्धाऽतिविद्धा कुञ्चिता पिच्चिता कुट्टि

---

१ 'एव दक्षिणबाहौ यकृद्दाल्ये एतामेव च कासश्वासयोरप्यादिशन्ति' इति हा० । अस्मिन्पाठे 'कफोदरे च' इति न पठ्यते । 'एवमेव दक्षिणे बाहौ यकृतदाख्ये । तथा कासश्वासयोरप्यादिशन्ति' । इति च वृ० वा० । अस्मि पि पाठे यकृद्दाल्येन सह कफोदरस्य निर्देशो नोपदिष्टः । किन्तु ता० पुस्तकोक्ते पाठे कफोदर सिराव्यधार्हमुक्त दृश्यतामित पूर्वं ४१४ पृष्ठे प्रथमाङ्केनाङ्कितस्तद्बोधकस्तदुक्तः पाठः । २ 'यकृदाख्ये' इति पा० । ३ ता० पुस्तकोक्तसिराव्यधाधिकारे वृद्धवाग्भटाचार्योक्ते च सिराव्यधाधिकारे दकोदर सिराव्यधार्ह नोक्त मूत्रवृद्धिश्चापि सिरावधार्हा नोक्तेति चिन्त्यम् । ४ '°संश्रिताम्' 'संसृताम्' इति च पा० । ५ 'स्कन्धसन्धिगतामन्यतरपार्श्वसस्थिताञ्चातुर्थके' इति ता० । 'चतुर्थके स्कन्धाधोगतामन्यतरपार्श्वाश्रयाम्' इति च वृ० वा० । ६ 'उपनासा ललाटीमापाङ्गी वा' इति ता० ।

ताऽप्रस्रुताऽत्युदीर्णा[1]ऽन्ते विद्धा परिशुष्का कूणिता वेपिताऽनुत्थित-विद्धा[2] शस्त्रहता तिर्यग्विद्धा[3]विद्धाऽव्यध्या विद्रुता धेनुका पुनः पुनर्विद्धा सिरा[4]स्नाय्वस्थिसन्धिमर्मसु चेति ॥ १८ ॥

तत्र[5] या सूक्ष्मशस्त्रविद्धाऽव्यक्त[6]मसृक् स्रवति रुजाशोफवती च सा दुर्विद्धा, प्रमाणातिरिक्तविद्धायामन्तः प्रविशति शोणितं शोणितातिप्रवृत्तिर्वा[7] साऽतिविद्धा, कुञ्चितायामप्येवं, कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता, अनासादिता पुनः पुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता, शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता, तीक्ष्णमहामुखशस्त्रविद्धाऽत्युदीर्णा, अल्परक्तस्राविण्यन्तेविद्धा, क्षीण-

---

१ 'अनुत्तीर्णाऽन्तेविद्धा' इति ता। २ 'अनुत्थितविद्धा। अव्यध्यविद्धा शस्त्रहता।' इति ता। ३ 'अविद्धा, विद्रुता, धेनुका' इति ता०। 'अपविद्धा' अव्यध्या, विद्रुता' इति च हा०। ४ 'मर्मसिरास्नाय्वस्थिसन्धिषु विद्धा चेति' इति ता०। ५ 'तत्र सूक्ष्मशस्त्रप्रणिधानान्नासृग्व्यक्त स्रवति तत्र रुजाशोफौ भवतः सा दुर्विद्धा नाम। प्रमाणातिरिक्तविद्धायामन्तःशोणित प्रविशत्यतिप्रवृत्तिर्वा भवति साऽतिविद्धा नाम। कुञ्चितायामप्येव कुण्ठशस्त्रप्रमथिता पृथुलभावमापन्ना पिच्चिता नाम। अनासादितमन्तयोश्च बहुश· कुट्टिता कुट्टिता नाम। शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रसृता नाम। तीक्ष्णमहामुखशस्त्रविद्धाऽनुदीर्णा नाम। अल्परक्तस्राविण्यन्तेविद्धा नाम। क्षीणशोणितानिलपूर्णा परिशुष्का नाम। चतुर्थभागमासादिता किञ्चित्प्रवृत्तशोणिता कूणिता नाम। दु'स्थानबन्धाद्वेपमानायाः शोणितसंमोहो भवति सा वेपिता नाम। अनुत्थितायामप्येवमशस्त्रकृत्याऽव्यध्या नाम। छित्वाऽतिप्रवृत्तशोणिता क्रियासंग्रहकरी शस्त्रहता नाम। तिर्यक्प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्यग्विद्धा नाम। बहुश क्षताहीनशस्त्रप्रणिधानेनाऽविद्धा नाम। अनवस्थितविद्धा विद्रुता नाम। व्यधप्रदेशस्य बहुशोऽवघट्टनादसंरोहमाणव्यधा रक्तस्राविण्यत्यर्थं धेनुका नाम। पुन· पुन प्रणिधानात्सिरामर्मस्नाय्वस्थिसन्धिषु विद्धा रुजाशोफौ वैकल्य मरण वा भवति'। इति ता०। ६ 'न व्यक्तमसृक्'इति हा०। ७ 'अतिप्रवृत्तशोणितां' इति पा०।

शोणितस्यानिलपूर्णा परिशुष्का, चतुर्भागासादिता किंचित्प्रवृत्त-शोणिता कूणिता, दुःस्थानबन्धनाद्वेपमानायाः शोणितसंमोहो भवति सा वेपिता, अनुत्थितविद्धायामप्येवं, छिन्नाऽतिप्रवृत्त-शोणिता क्रियासङ्गकरी शस्त्रहता, तिर्यक्प्रणिहितशस्त्रा किंचिच्छेषा तिर्यग्विद्धा, बहुशः क्षता हीनशस्त्रप्रणिधानेनाविद्धा, अशस्त्रकृत्या अव्यध्या, अनवस्थितविद्धा विद्रुता, प्रदेशस्य बहुशोऽवघट्टनादा-रोहद्व्यधा मुहुर्मुहुः शोणितस्रावा धेनुका, सूक्ष्मशस्त्रव्यधनाद्ब-हुशो भिन्ना[1] पुनः पुनर्विद्धा, स्नाय्वस्थिसिरासन्धिमर्मसु विद्धा रुजां शोफं वैकल्यं मरणं चापादयति ॥ १९ ॥

भवन्ति चात्र—

सिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः ॥
मत्स्यवत् परिवर्तन्ते तस्माद्यत्नेन ताडयेत् ॥ २० ॥
अजानता गृहीते तु शस्त्रे कायनिपातिते ॥
भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः ॥ २१ ॥
स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि ॥
यान्त्याशु व्याधयः शान्तिं यथा सम्यक् सिराव्यधात् २२
सिराव्यधश्चिकित्सार्धं[2] शल्यतन्त्रे प्रकीर्तितः ॥
यथा प्रणिहितः सम्यग्बस्तिः कायचिकित्सिते ॥ २३ ॥

तत्र[3] स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवसितसिराविद्धैः परि-हर्तव्यानि—क्रोधायासमैथुनदिवास्वप्न[4]वाग्व्यायामयानाध्ययनस्था-

---

१ 'विच्छिन्ना' इति हा० । २ 'सिराव्यध चिकित्सार्धं शल्यतन्त्रे विधीयते ॥ यथा सम्यक्प्रणिहितो बस्तिः कायचिकित्सिते' इति ता. । ३ 'तत्र स्निग्ध-स्विन्नवान्तविरिक्तानुवासितास्थापितविद्धसिरैर्मनुष्यैः परिहर्तव्यानि-क्रोधाया-समैथुनदिवास्वप्नोच्चैर्भाष्यव्यायामयानासनानि स्थानचक्रमणशीतवातातप॰" इति ता. । ४ "दिवास्वप्नव्यायाम॰" इति पा० ।

नासनचङ्क्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्याबललाभात्, मासमेके मन्यन्ते। एतेषां विस्तरमुपरिष्टाद्वक्ष्यामः॥ २४॥

सिरा[2]विषाणतु[3]म्बैस्तु जलौकाभिः पदैस्तथा॥
अवगाढं यथापूर्वं [4]निर्हरेद्दुष्टशोणितम्॥ २५॥
[5]अवगाढे जलौका स्यात् प्रच्छन्नं पिण्डिते हितम्॥
सिराऽङ्गव्यापके रक्ते शृङ्गालाबू त्वचि स्थिते॥ २५॥

इति सुश्रुतसंहितायां शारीरस्थाने सिराव्यधविधिशारीरं नामाष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः॥ १॥

यथोवाच भगवान् धन्वन्तरिः॥ २॥

[6]चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः— सिराधमनीस्रोतसामविभागः, सिराविकारा एव हि धमन्यः स्रोतांसि चेति। [7]तत्तु न सम्यक्, अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः, कस्मात्? व्यञ्जनान्यत्वात्, मूलसन्नियमात्, कर्मवैशेष्यात्, आगमाच्च; के[8]वलं तु परस्परसन्निकर्षात् सदृशागमकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव कर्मसु भवति॥ ३॥

---

१ 'विस्तरमेषामुपरिष्टाद्वक्ष्यामः' इति ता। २ ता० पुस्तके चतुर्विंशतितमस्य सूत्रस्याग्रे 'भवति चात्र' इति पठित्वा तदनन्तरं पञ्चविंशतितमः श्लोकः पठितोऽवलोक्यते। ३ '°तुम्बीभिः' इति ता.। ४ 'ह्रियते' इति ता ५ 'अवगाढे जलौकास्यात्' इत्यादिरयं षड्विंशतितमः श्लोकस्ता० पुस्तके नोपलभ्यते। ६ 'चतुर्विंशतिर्धमन्यो भवन्ति। तास्तु नाभिप्रभवाः। तत्र केचिदाहुराचार्याः' इति ता.। ७ 'तत्तु न सम्यगत्रोच्यते। अन्या एव हि धमन्यः स्रोतांसि सिराश्चेति। कस्मात्?' इति ता.। ८ 'केवलन्तु परस्परप्रतानसन्निकर्षात् सदृशकर्मत्वात् सौक्ष्म्याच्च' इति ता.।

तासां तु खलु नाभिप्रभवाणां धमनीनामूर्ध्वगा दश, दश चाधोगामिन्यः चतस्रस्तिर्यग्गाः ॥ ४ ॥

ऊर्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते, तास्त्रिंशत्। तासां तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, शब्दरूपरसगन्धानष्टाभिर्गृह्णीते, द्वाभ्यां भाषते, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते, द्वे चाश्रुवाहिन्यौ, द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते, ते[5] एव शुक्रं नरस्य स्तनाभ्यामभिवहतः, तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरूर्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्यन्ते याप्यन्ते च ॥ ५ ॥

भवंति चात्र—

ऊर्ध्वगमास्तु कुर्वन्ति कर्माण्येतानि सर्वशः ॥

---

१ 'तासां तु खलु नाभिप्रभवाणामूर्ध्वगा दश। दश चाधोगामिन्यः। चतस्रस्तिर्यग्गाः याभिरिदं शरीरं गवाक्षितं विवर्धमानञ्च।' इति ता.। 'तासां खलु धमनीनां दशोर्ध्वं प्रसृता दशाधश्चतस्रस्तिर्यक्। ततस्ताभिर्यथास्वमङ्गावयवा धार्यन्ते याप्यन्ते च।' इति च वृ० वा०। 'धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तराः। ताभिः परिवृतो नाभिश्चक्रनाभिरिवारकैः। ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते।' इति च ल० वा०। २ ऊर्ध्वगाः खलु शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासप्रेक्षितजृम्भितहसितकथितरुदितादीन्विशेषानभिवहन्त्यः शरीरं धारयन्ति' इति ता.। ३ 'तास्तु हृदयमभिप्रपन्नास्त्रिधा त्रिधा जायन्ते, तास्त्रिंशत्' इति ता.। ४ °श्लेष्म°' इति ता.। ५ 'ते एव शुक्रं नरस्य स्तनयोरभिवहतः' इति ता.। 'द्वे च स्तनाश्रिते नार्यां स्तन्यं नरस्य शुक्रम्' इति च वृ० वा०। ६ 'एताभिरुदरपार्श्वपृष्ठोरस्कन्धग्रीवाशिरोबाहवो धार्यन्ते चाल्यन्ते च' इति भावमिश्रः। 'एताभिरूर्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाशीर्षबाहवो धार्यन्ते याप्यन्ते' इति च ता.। ७ ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरम् 'पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चधा भावयन्ति। पञ्चेन्द्रियं पञ्चधा भावयित्वा पञ्चत्वमायान्ति विनाशकाले' इत्ययमग्रतः पठ्यमानः एकादशः श्लोक इह पठितोऽवलोक्यते। ८ ता० पुस्तके 'ऊर्ध्वगमास्तु कुर्वन्ति' इत्यादिरयं श्लोको दृष्टिपथं नायाति।

अधोगमास्तु वक्ष्यामि कर्म चासां यथायथम् ॥ ६ ॥

[1]अधोगमास्तु वातमूत्रपुरीषशुक्रार्तवादीन्यधो वहन्ति । तास्तु पित्ताशयमभिप्रपन्नास्तत्रस्थमेवान्नपानरसं विपक्वमौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्ति, अर्पयन्ति चोर्ध्वगानां[2] तिर्यग्गाणां च, रसस्थानं चाभिपूरयन्ति, मूत्रपुरीषस्वेदांश्च विवेचयन्ति; [3]आमपक्वाशयान्तरे च त्रिधा जायन्ते, तास्त्रिंशत्; तासां तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, द्वे अन्नवाहिन्यावन्त्राश्रिते, तोयवहे द्वे, मूत्रबस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे विसर्गाय, ते[4] एव रक्तमभिवहतो विसृजतश्च नारीणामार्तवसंज्ञं, द्वे वर्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे, अष्टावन्यास्तिर्यग्गामिनीनां धमनीनां स्वेदमर्पयन्ति; तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः । एताभिरधोनाभेः पक्वाशयकटीमूत्रपुरीषगुदबस्तिमेढ्रसक्थीनि धार्यन्ते याप्यन्ते च ॥ ७ ॥

भवति चात्र—

अधोगमास्तु कुर्वन्ति कर्माण्येतानि सर्वशः ॥

---

१ 'अधोगमास्तु वातमूत्रपुरीषशुक्रार्तवानभिवहन्ति । तास्तु पित्ताशयमभिप्रपन्नास्तत्रस्थमन्नपानरसमभिपक्वमौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यस्तर्पयन्ति। ऊर्ध्वगाना तिर्यग्गाना रसस्थानाञ्चाभिपूरयन्ति तत्र मूत्रपुरीषस्वेदांश्च विवेचयन्त्यामपक्वाशयान्तरे त्रिधा त्रिधा जायन्ते तास्त्रिशत् । तासा तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश । द्वे अन्नवाहिन्यौ अन्त्राश्रिते । तोयवहे द्वे द्वे मूत्रबस्तिमभिप्रपन्ने । शुक्रप्रादुर्भावाय च द्वे । एव रक्तमभिवहतो नारीणामार्तवसंज्ञ द्वे । वर्चो निःसरतः स्थूलान्त्रप्रतिबद्धे द्वे । अष्टावन्यास्तिर्यग्गास्ताः स्वेदमर्पयन्ति । तास्त्वेतास्त्रिशत् सविभागा व्याख्याताः । ताभिरधोनाभेः पक्वाशयकटीमूत्रबस्तिगुदमेढ्रसक्थीनि धार्यन्ते' । इति ता. । २ 'चोर्ध्वगताना तिर्यग्गताना' इति हा० । ३ 'आमपक्वाशयान्तरे च त्रिविधा जायन्ते' इति पा० । अधोगमाः पक्वाशयस्था एव त्रिधा जायन्ते' इति च मू० वा० । ४ 'ता एव रक्तमभिवहन्ति' इति पा० ।

तिर्यग्गाः[1] संप्रवक्ष्यामि कर्म चासां यथायथम् ॥ ८ ॥

तिर्यग्गाणां तु चतसृणां धमनीनामेकैका शतधा सहस्रधा[2] चोत्तरोत्तरं विभज्यन्ते, तास्त्वसङ्ख्येयाः, ताभिरिदं शरीरं गवाक्षितं विबद्धमाततं च, तासां[3] मुखानि रोमकूपप्रतिबद्धानि, यैः स्वेदमभिवहन्ति रसं चाभितर्पयन्त्यन्तर्बहिश्च[4], तैरेवं[5] चाभ्यङ्गपरिषेकावगाहालेपनवीर्याण्यन्तःशरीरमभिप्रतिपद्यन्ते[6] त्वचि विपक्वानि, तैरेव च स्पर्शं सुखमसुखं[7] वा गृह्णीते, तास्त्वेताश्चतस्रो धमन्यः सर्वाङ्गगताः सविभागा व्याख्याताः[8] ॥ ९ ॥

यथा स्वभावतः खानि मृणालेषु बिसेषु च ॥
धमनीनां[9] तथा खानि रसो यैरुपचीयते ॥ १० ॥

पञ्चाभिभूतास्त्वथ[10] पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति ॥
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥ ११ ॥

अत ऊर्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः[11]। तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्तववहानि, येष्वधिकारः एकेषां बहूनि; [12]एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे, तयोर्मूलं

---

१ 'तिर्यग्गास्त्वेव वक्ष्यामि' इति ता.। २ 'सहस्रधा च भिद्यन्ते' इति ता.। ३ 'तासा च मुखानि' इति ता.। ४ 'यैः स्वेदं प्रस्रवति रसश्चाभिसन्तर्पयति' इति ता. । 'रसश्चापि सन्तर्पयन्ति' इति च पा०। ५ 'एताभिरेव' इति ता.। ६ 'अभिप्रपद्यन्ते' इति ता.। ७ 'शुभमशुभ' इति ता.। ८ ता० पुस्तकेऽस्य नवमसूत्रस्याग्रे 'भवतश्चात्र श्लोकौ' इति पठ्यते तदनन्तरञ्च 'धमन्यः सर्वा एवैताः प्रतिबद्धा यथेन्द्रिय ॥ जाग्रता स्वपता वापि वहन्तीन्द्रियगोचरम्' ॥ इत्यधिक पठ्यते। ९ 'तथैव तासा द्वाराणि रसो यैरुपचीयते' इति ता.। १० ता० पुस्तके इत पूर्वञ्चतस्य पञ्चमसूत्रस्याग्रे 'पञ्चाभिभूतास्त्वथ पञ्चकृत्वः' इत्यादिरय श्लोक पठितो लक्ष्यते। ११ 'व्याख्यास्यामः' इति ता.। १२ 'तेषा विशेषा बहवः' इति ता.।

हृदयं रसवाहिन्यश्च[1] धमन्यः तत्र[2] विद्धस्याक्रोशनविनमनमोहनभ्रमण-वेपनानि मरणं वा भवति; अन्नवहे द्वे, तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यः, तत्र[3] विद्धस्याध्मानं शूलोऽन्नद्वेषश्छर्दिः पिपासाऽऽन्ध्यं मरणं च; उदकवहे द्वे, तयोर्मूलं तालु क्लोम च, तत्र[4] विद्धस्य पिपासा सद्योमरणं च; रसवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः, तत्र[5] विद्धस्य शोषः प्राणवहविद्धवच्च मरणं; तल्लिङ्गानि च; रक्तवहे[6] द्वे, तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यः, तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितागमनं[7] रक्तनेत्रता च; मांसवहे[8] द्वे, तयोर्मूलं स्नायुत्वचं रक्तवहाश्च[9] धमन्यः, तत्र विद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरण च; मेदोवहे द्वे, तयोर्मूलं कटी वृक्कौ च, तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता[10] तालुशोषः स्थूलशोफता[11] पिपासा च; मूत्रवहे द्वे, तयोर्मूलं बस्तिर्मेढ्रं च, तत्र विद्धस्यानद्धबस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च; पुरीषवहे द्वे, तयोर्मूलं पक्काशयो गुदं[12] च, तत्र विद्धस्यानाहो दुर्गन्धता ग्रथिताश्रता च; शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च;

---

१ 'प्राणवाहिन्यश्च धमन्य.' इति पा०। २ 'तत्र विद्धस्य क्रोशनविनमनभ्रमणानि सञ्ज्ञानाशो मरणञ्च' इति ता। ३ 'तत्र विद्धस्यान्नद्वेषः छर्दिर्मूर्च्छा मरणञ्च' इति ता.। ४ 'तत्र विद्धस्य पिपासाध्मानता मरणञ्च' इति ता.। 'तत्र विद्धस्य पिपासाऽसाध्याश्यावाङ्गता' इति च पा०। ५ 'तत्र विद्धस्य प्राणवहविद्धवन्मरण तल्लिङ्गञ्च' इति ता.। ६ 'रक्तवहे द्वे तयोर्मूल यकृत्प्लीहानौ तत्र विद्धस्य श्यावाङ्गता ज्वरः पाण्डुता दाहः शोणिताभिगमनञ्च' इति ता.। ७ 'शोणितातिगमन' इति पा०। ८ 'मासवहे द्वे तयोर्मूल स्नायुस्त्वग्रक्तवहाश्च नाड्यः' इति ता.। ९ 'रक्तवाहिन्यश्च' इति पा०। १० 'स्निग्धाङ्ग तालुशोषश्च' इति ता.। ११ 'स्थूलशोफता पिपासा च' इति ता. पुस्तके न पठ्यते। १२ 'गुदश्च' इति ता.।

तत्र विद्धस्य क्लीबता चिरात् प्रसेको रक्तशुक्रता च[1]; आर्तववहे[2] द्वे, तयोर्मूलं गर्भाशय आर्तववाहिन्यश्च धमन्यः, तत्र विद्धाया वन्ध्यात्वं मैथुनासहिष्णुत्वमार्तवनाशश्च; सेवनीच्छेदाद्रुजाप्रादुर्भावः; बस्तिगुदविद्धलक्षणं प्रागुक्तमिति[3]। स्रोतोविद्धं तु प्रत्याख्यायोपचरेत्, उद्धृतशल्यं तु क्षतविधानेनोपचरेत्॥ १२॥

भवति[4] चात्र—

मूलात्[5] खादन्तरं देहे प्रसृतं त्वभिवाहि यत्॥
स्रोतस्तदिति विज्ञेयं सिराधमनिवर्जितम्॥ १३॥

इति सुश्रुतसंहितायां शारीरस्थाने धमनीव्याकरणशारीरं नाम नवमोऽध्यायः॥ ९॥

---

## दशमोऽध्यायः।

अथातो गर्भिणीव्याकरणं शारीरं व्याख्यास्यामः॥ १॥

यथोवाच भगवान् धन्वन्तरिः॥ २॥

---

१ 'तत्र विद्धस्य क्लैब्य च्चिराद्वा प्रसेकः प्रसेके चाल्पशुक्रतादर्शनम्। सेवनीच्छेदाद्रुजाप्रादुर्भावो मरणञ्च। स्रोतोविद्ध तु प्रत्याख्यायोपक्रमेत। उद्धृतशल्य तु क्षतविधानेनोपक्रमेदिति'। इति ता.। २ 'रक्तशुक्रता वाऽप्रसेकश्च' इति पा०। ३ 'आर्तवहे द्वे, तयोर्मूल गर्भाशय आर्तववाहिन्यश्च धमन्यः, तत्र विद्धाया वन्ध्यात्व मैथुनासहिष्णुत्वमार्तवनाशश्च,' तथैव 'बस्तिगुदविद्धलक्षण प्रागुक्तमिति' इत्यपि च ता० पुस्तके नोपलभ्यते। ४ 'श्लोकौ' इति ता.। ५ ता० पुस्तके 'मूलात् खादन्तर देहे' इत्यादिरय त्रयोदशश्लोको नोपलभ्यते। किन्तु तदभावे "य एव न प्रजानाति स्रोतसा मूलनिश्चयम्॥ महद्भयमवाप्नोति न च कर्मसु सिध्यति॥ य. सम्यगेतज्जानीयात्स भवेद्राजसम्मत.॥ पूजार्हो भिषजां ह्येष इति धन्वन्तरेर्मतम्" इत्यमू द्वौ श्लोकौ उपलभ्येते।

गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेत्, मलिनविकृतहीनगात्राणि न स्पृशेत्, दुर्गन्धदुर्दर्शनानि परिहरेत्, उद्वेजनीयाश्च कथाः, शुष्कं पर्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत, बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयशस्करांश्च[2] भावानुच्चैर्भाष्यादिकं च परिहरेद्यानि च गर्भं व्यापादयन्ति, न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि सेवेत, न चायासयेच्छरीरं, पूर्वोक्तानि च परिहरेत्, शयनासनं[3] मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसंबाधं च विदध्यात्, हृद्यं द्रवमधुरप्रायं स्निग्धं दीपनीयसंस्कृतं च भोजनं भोजयेत्, सामान्यमेतदाप्रसवात्[1] ॥ ३ ॥

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु[4] मधुरशीतद्रवप्रायमाहारमुपसेवेत[5]; विशेषतस्तु[6] तृतीये षष्टिकौदनं पयसा भोज-

---

१ 'तत्र गर्भिणी प्रथमदिवसात्प्रभृत्यादिशेन्नित्यम् हृष्टशुच्यलङ्कृतवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरया च भवितव्यम्। मलिनविकृतहीनगात्राणि च न स्पृशेत्। दुर्गन्धदुर्दर्शनानि च दूरत एव परिहरेत्। बहिर्निष्कूटा शून्यागारचैत्यश्मशानचैत्यवृक्षसेवाक्रोधायासकराश्च भावानुच्चैर्भाष्यादिक परिहरेत्। उद्वेजनीयाश्च कथाः शुष्कं पर्युषित कुथित क्लिन्न चान्न नोपयुञ्जीत यानि च गर्भं व्यापदयन्ति। न च तैलाभ्यङ्गोत्सादनादीनि निषेवेत।' इति ता। २ 'क्रोधभयसङ्करांश्च भावान्' इति हा०। ३ 'शयनासन वा समृद्धास्तरण नात्युच्छ्रितमपाश्रयोपेतमसम्बाध विदध्यात्। हृद्य द्रवमधुरप्राय स्निग्ध दीपनीय सस्कृतभोजनञ्च भोजयेत्सामान्यमेतदाप्रसवकालात्' इति ता.। ४ 'प्रथमद्वितीयतृतीयेषु मासेषु' इति ता.। ५ 'आसेवेत' इति ता.। ६ 'विशेषतस्तु तृतीये षष्टिकौदन पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके' इत्येकीयमतसङ्ग्रहवाक्य तत्ता० पुस्तके नोपलभ्यते।

येत्, चतुर्थे दध्ना, पञ्चमे पयसा, षष्ठे सर्पिषेत्येके; [1]चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं च भोजयेत्, [2]पञ्चमे क्षीरसर्पिःसंसृष्टं षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद् यवागूं वा, सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धम्, एवमाप्यायते गर्भः, अष्टमे बदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थं च वायोः, ततः [3]पयोमधुरकषायसिद्धेन तैलेनानुवासयेत्, अनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति, अत ऊर्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चो[4]पक्रमेदाप्रसवकालात्; एवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते ॥ ४ ॥

[5]नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ते तिथ्यादौ । [6]तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बि[7]ल्वन्यग्रोधतिन्दुकभल्लातकनिर्मितसर्वागारं यथासङ्ख्यं तन्मयपर्यङ्कं समुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाऽष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसंपन्नं विधेयम् ॥ ५ ॥

[8]जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने ॥
सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥ ६ ॥

---

१ 'चतुर्थे मासे पयोनवनीतमाहारमाहरेत् । पञ्चमे क्षीरसर्पिः संसृष्टं । षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषोऽक्षमात्रां यवागूं पाययेत् । सप्तमे पृथक्पर्ण्यादिसिद्धमेवमाप्यायते गर्भः । अष्टमे खल्वेना बदरोदकेन बलातिबलापयोदधिमस्तुतैलमधुघृतशतपुष्पामिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमार्थञ्च वायोस्ततः पयोमधुरसिद्धेन तैलेनानुवासयेत् ।' इति ता. । २ 'पञ्चमे क्षीर सर्पिःसंसृष्ट' इति पा० । ३ 'पयोमधुककषायसिद्धेन' इति पा० । ४ 'चोपहरेत्' इति ता. । ५ 'नवमे मासे' इति ता. । ६ 'तत्रेष्टागार' इति ता० । 'तत्रारिष्टमगार' इति च पा० । ७ 'बिल्वन्यग्रोधतिन्दुकनिर्मित सर्वागार तन्मयञ्च पर्यवनद्धं समुपलिप्तभित्तिपरिच्छद प्राग्द्वारमुदग्द्वार वा' इति ता. । ८ ता० पुस्तके 'जाते हि शिथिले कुक्षौ' इत्यादिरयं षष्ठः श्लोको नोपलभ्यते ।

तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखाच्छ्लेष्मा च ॥ ७ ॥

प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत्, ततः कृतोपधाने मृदुनि विस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्तितनखाः परिचरेयुरिति ॥ ८ ॥

अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्यानुब्रूयाच्चैतामेका—सुभगे प्रवाहस्वेति, नचाप्राप्तावी प्रवाहस्व, ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणबस्तिशिरःसु च प्रवाहेथाः शनैः शनैः, ततो गर्भनिर्गमे प्रगाढं, ततो गर्भे योनिमुखं प्रपन्ने गाढतरमाविशल्यभावात्; अकालप्रवाहणाद्बधिरं मूकं कुब्जं व्यस्तहनुमूर्धाभिघातिनं कासश्वासशोषोपद्रुतं विकटं वा जनयति ॥ ९ ॥

तत्र प्रतिलोममनुलोमयेत्, प्राञ्जलमाकर्षेत् ॥ १० ॥

---

१ 'समन्ताद्वेदना भवति। मूत्रमभीक्ष्ण प्रसिच्यते। योनिमुखाच्च श्लेष्मा' इति ता.। २ 'प्रजायिष्यमाणां तु स्वभ्यक्तामुष्णोदकपरिषिक्तगात्री कृतमङ्गलामथैनां सघृतां यवागूमाकण्ठात्पीतवती मृदुनि कृतोपधाने विस्तीर्णे शयने स्थितामाभुग्नसक्थिमुक्तानामशङ्कनीयाः स्त्रियः परिणतवयसः प्रजननकुशलाः कल्पितनख्यः परिचरेयुरिति' इति ता.। ३ अनुलोममनुसुख' इति ता.। अनुलोममनुमुख' इति च हा०। ४ 'सुभगे प्रवाहस्वेति। माचाप्राप्तावी प्रवाहिष्ठा.। अनागतास्वाविपु प्रवाहमाणा बधिर मूक स्रस्तहनु मूर्धाविघातिन कासश्वासशोषोपद्रुत कुब्जं विकटं जनयति। तस्मादनागतावि न प्रवाहेत। स्रस्ते तु कुक्षौ विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवक्षणबस्तिशिरस्सु प्रवाहेत शनै· शनैस्ततो गर्भे योनिमुख प्रपन्ने गाढतरमाविशल्यभावात्। तत्र प्रतिलोममनुलोमयेत् पान पाययेत्'। इति ता०। ५ 'व्यस्तहनु मूर्धाविघातिन' इति हा०।

[1]गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण पिण्डीतकेन वा, बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोः, धारयेत् सुवर्चलां विशल्यां वा ॥ ११ ॥

[2]अथ जातस्योल्बं मुखं च सैन्धवसर्पिषा विशोध्य, घृताक्तं मूर्ध्नि पिचुं दद्यात्; ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत्, तत्सूत्रैकदेशं च कुमारस्य ग्रीवायां सम्यग् बध्नीयात् ॥ १२ ॥

[3]अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्मणि कृते मधुसर्पिरनन्तचूर्णमङ्गुल्याऽनामिकया लेहयेत्; ततो बलातैलेनाभ्यज्य, क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवं च ॥ १३ ॥

[4]धमनीनां हृदिस्थानां विवृतत्वादनन्तरम् ॥
चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्तते ॥ १४ ॥

तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तमिश्रं मन्त्रपूतं त्रिकालं पाययेत्, द्वितीये लक्ष्मणासिद्धं सर्पिः, तृतीये च; ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसंमितं द्विकालं पाययेत् ॥ १५ ॥

---

१ ता० पुस्तके 'गर्भसङ्गे तु योनिं धूपयेत्' इत्यादि एकादशसूत्र नोपलभ्यते। २ 'जातस्योल्ब विशोध्यास्य सैन्धवसर्पिषाऽष्टाङ्गुलावशेषा नाडी वर्धयित्वा कुष्ठतैलेनाभ्यज्य सूत्रेणाबध्य कुमारस्य ग्रीवाया बध्नीयात्' इति ता०। 'जातस्योल्बमपनीय मुख च सैन्धवसर्पिषा विशोध्य' इति च हा०। ३ 'अथ कुमार शीताभिरद्भिराश्वास्य जातकर्मणि मधुसर्पिरनन्तामिश्र ब्राह्मीरसेन सुवर्णमङ्गुल्यानामिकया लेहयेत्। सुतिकाञ्च घृततैलयोरन्यतरस्य मात्रां पिप्पल्यादिकषायमनुपान पाययेत्। बलवतीमबला यवागू त्रिरात्र पञ्चरात्र वा। अत ऊर्ध्वं स्निग्धेनान्नसंसर्गेनोपचरेत्। स्नेहनित्या च स्यात्।' इति ता. ४ ता० पुस्तकेऽय चतुर्दशश्लोकः पञ्चदशसङ्ख्याक षोडशसङ्ख्याक चामू सूत्रे नोपलभ्यन्ते।

अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिष्क्वाथेनोपचरेत्। सशेषदोषां तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत्, एवं द्विरात्रं त्रिरात्रं वा कुर्यादादुष्टशोणितात्। विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत्त्रिरात्रम्। ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलं चावेक्ष्य। अनेन विधिनाऽध्यर्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात्, पुनरार्तवदर्शनादित्येके ॥ १६ ॥

धन्वभूमिजातां[1] तु सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत् पिप्पल्यादिकषायानुपानां स्नेहनित्या च स्यात्त्रिरात्रं पञ्चरात्रं वा बलवती; अबलां यवागूं पाययेत्त्रिरात्रं पञ्चरात्रं वा। अत ऊर्ध्वं स्निग्धेनान्नसंसर्गेणोपचरेत् ॥ १७ ॥

प्रायशश्चैनां[2] प्रभूतेनोष्णोदकेन परिषिञ्चेत् क्रोधायासमैथुनादींश्च[3] परिहरेत्[4] ॥ १८ ॥

मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते ॥
स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात्[5] ॥ १९ ॥
तस्मात्तां देशकालौ च[6] व्याधिसात्म्येन कर्मणा ॥
परीक्ष्योपचरेन्नित्यमेवं नात्ययमाप्नुयात् ॥ २० ॥

अथापराऽपतन्त्यानाहाध्मानौ[7] कुरुते, तस्मात् कण्ठमस्याः केशवेष्टितयाऽङ्गुल्या प्रमृजेत्, कटुकालाबुकृतवेधनसर्षपसर्पनि-

१ ता० पुस्तके सप्तदशसङ्ख्याकं सूत्रमिदं पाठभेदेन त्रयोदशसूत्रस्याग्रे पठितमवलोक्यते। २ 'प्रायश्चैना' इति ता.। ३ '°मैथुनादीन्परिहरेत्' इति हा०। ४ ता० पुस्तकेऽष्टादशसङ्ख्याकस्य सूत्रस्याग्रे 'भवतश्चात्र' इति पठ्यते। ५ 'भवेद्धात्वपकर्षणात्' इति ता। ६ 'तु' इति ता.। ७ 'अथामरामपतन्ती पातयेत्। कण्ठमस्या॰ केशवेष्टितयाङ्गुल्या प्रमृशेत्।' इति ता.।

मोकैर्वा[1] कटुतैलविमिश्रैर्योनिमुखं धूपयेत्, लाङ्गलीमूलकल्केन वाऽस्याः[2] पाणिपादतलमालिम्पेत्, मूर्ध्नि[3] वाऽस्या[4] महावृक्षक्षीरमनुसेचयेत्, कुष्ठलाङ्गलीमूलकल्कं[5] वा मद्यमूत्रयोरन्यतरेण पाययेत्, शालमूलकल्कं[6] वा पिप्पल्यादिं वा मद्येन, सिद्धार्थककुष्ठलाङ्गलीमहावृक्षक्षीरमिश्रेण[7] सुरामण्डेन वाऽऽस्थापयेत्, एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरबस्तिं दद्यात्, स्निग्धेन वा कृत्तनखेन हस्तेनापहरेत् ॥ २१ ॥

प्रजातायाश्च[8] नार्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगतेनातिसंरुद्धं नाभेरधः पार्श्वयोर्बस्तौ बस्तिशिरसि वा ग्रन्थिं करोति; ततश्च नाभिबस्त्युदरशूलानि भवन्ति, सूचीभिरिव निस्तुद्यते भिद्यते दीर्यत इव च पक्वाशयः, समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्ललक्षणम्। तत्र वीरतर्वादिसिद्धं जलमुषकादिप्रतीवापं पाययेत्, यवक्षारचूर्णं वा सुखोदकेन पिप्पल्यादिक्काथेन वा, पिप्पल्यादिचूर्णं वा सुरामण्डेन, वरुणादिक्काथं वा पञ्चकोलैलाप्रतीवापं, पृथक्पर्ण्यादिक्काथं वा भद्रदारुमरिचसंसृष्टं, पुराणगुडं वा त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्रं खादेत्, अच्छं वा पिबेदरिष्टमिति ॥ २२ ॥

---

१ 'कटुतैलमिश्रेण योनिमुद्धूपयेत्' इति ता.। २ 'चास्याः' इति पा०। ३ 'मूर्ध्नि वाऽस्या महावृक्षक्षीरमनुसेचयेत्' इति वाक्य ता० पुस्तके नास्ति। ४ 'चास्या.' इति पा०। ५ "लाङ्गलकी°" इति ता.। ६ 'शालिमूलकल्क वा पिप्पल्यादिकल्क वा मद्येन' इति ता.। ७ 'सिद्धार्थककुष्ठैलालाङ्गलकीमहावृक्षक्षीरसुरामण्डैरास्थापयेत्। एतेष्वेव च सिद्धेन सिद्धार्थकतैलेनोत्तरबस्तिं चास्यै दद्यात्। हस्तेन चापहरेत्'। इति ता.। ८ प्रजातायास्तु बस्तिशिरउदरयोनिशूल रक्त संरुध्य वायुः करोति स मक्कल.। तत्र यवक्षारचूर्णं सर्पिषा सुखोदकेन पाययेत्। लवणचूर्णं वा सुरामण्डेन पुराणगुड वा त्रिकटुकत्रिजातककुस्तुम्बुरुमिश्र वा खादयेत्। पृथक्पर्ण्यादिक्काथ भद्रदारुमरिचवचासंसृष्ट पाययेत्।' इति ता.।

[1]अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्, पीलुबदरीनिम्बपरूषकशाखाभिश्चैनं परिवीजयेत्, मूर्ध्नि चास्याहरहस्तैलपिचुमवचारयेत्, धूपयेच्चैनं रक्षोघ्नैर्धूपैः, रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत्, तिलातसीसर्षपकणांश्चात्र प्रकिरेत्, अधिष्ठाने चाग्निं प्रज्वालयेत्, व्रणितोपासनीयं चावेक्षेत ॥ २३ ॥

[2]ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्यातां यदभिप्रेतं नक्षत्र नाम वा ॥ २४ ॥

[3]ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयस्का(सा)मरोगां शीलवतीमचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्मिणीं कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्मामामारोग्यबलवृद्धये बालस्य। तत्रोर्ध्वस्तनी करालं कुर्यात्, लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत्। ततः प्रशस्तायां तिथौ शिरःस्नातमहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीं चोपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् ॥ २५ ॥

---

१ 'अथ बाल क्षौमपरिहित क्षौमकार्पासास्तृताया (शय्यायां) शाययीत। निम्बपीलुपरूषकशाखाभिश्चैन परिवीजयेत्। मूर्ध्नि चास्य तैलपिचुमवतारयेत्। धूपयेच्चेन रक्षोघ्नैः धूपैः। इत्यादि ता०। २ 'ततो दशम्या मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचकपूर्वक नाम कुर्याताम् यथाभिप्रेत नक्षत्रनाम वा' इति ता। ३ 'ततो यथावर्ण धात्रीमुपस्थापयेत्। अकृशामस्थूला वयस्थामव्याधितां प्रसन्नक्षीरामलम्बोर्ध्वस्तनीमव्यङ्गामव्यसनिनी जीवद्वत्सा वत्सला दोग्ध्रीमक्षुद्रा कुलेजातामतो भूयिष्ठैश्च गुणैरन्वितामारोग्यबलवृद्धये कुमारस्य। तत्रातिकृशातिस्थूलानिन्दिता व्याधिताश्च व्याख्यातास्ता विषमधातुत्वाद्रोगानापादयन्ति बालस्य विशेषतः। ऊर्ध्वस्तनी करालङ्कुमार कुर्यात्। लम्बस्तनी नासिकामुख छादयित्वा मरणमापादति। अथ प्रशस्ता शिरःस्नातामहतवाससमुदङ्मुखीमुपवेश्य दक्षिण स्तन कुमार पूर्वं पाययेत् अनेन मन्त्रेणाभिमन्त्र्य' इति ता.।

चत्वारः[1] सागरास्तुभ्यं स्तनयोः क्षीरवाहिनः ।
भवन्तु सुभगे नित्यं बालस्य बलवृद्धये ॥ २६ ॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने ।
दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥ २७ ॥

अतो[2]ऽन्यथा नानास्तन्योपयोगस्यासात्म्याद्व्याधिजन्म भवति २८

अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानादुत्सुहितस्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः । तस्मादेवंविधानां स्तन्यं न पाययेत् २९

क्रोध[3]शोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति । अथा[4]स्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरससुरासौवीरकपिण्याकलशुनमत्स्यकशेरुकशृङ्गाटकबिसविदारिकन्दमधुकशतावरीनालिकालाबूकालशाकप्रभृतीनि विदध्यात्॥३०॥

अथा[5]स्याः स्तन्यमप्सु परीक्षेत तच्चे[6]च्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवतेऽवसीदति वा तच्छुद्धमिति विद्यात्, तेन कुमारस्यारोग्यं शरीरोपचयो

---

१ 'चत्वारः सागरास्तुभ्य स्तनाना क्षीरवाहिना ॥ सन्तु ते सुभगे नित्य बालस्यानुबलप्रदाः ॥ पिबेन्बालोऽमृतरस पयस्तव शुभानने ॥ दीर्घमायुरवाप्नोतु देवाः प्राश्यामृत यथा' ॥ इति ता. । २ ता० पुस्तकेऽष्टाविंशतितम सूत्रमेकोनविंशतितम सूत्रञ्चामु सूत्रे नोपलभ्येते । ३ ता० पुस्तके त्रिंशत्तमसूत्रगत 'क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति' इति वाक्य नोपलभ्यते ।. ४ 'अथास्याः क्षीरसजननार्थं यवगोधूमशालिषष्टिकमासक्षीरसुरासौवीरपिण्याकरसोनमत्स्यकशेरुकशृङ्गाटकविदारीकन्दशतावरीबिसमृणालनालिकलाबुकालशाकप्रभृतीनि विदध्यात्' इति ता. । ५ 'अथ तस्याः इति ता. । ६ 'तच्चेच्छीतमलममल तनु शङ्खावभासमप्सु चैकीभाव गच्छत्यफेनिलमतन्तुल न प्लवते सीदति वा तच्छुद्धमिति विद्यात्। तेन कुमारस्यारोग्य भवति' । इति ता. ।

बलवृद्धिश्च भवति। [1]न च क्षुधितशोकार्तश्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलवि[2]दग्धभक्तविरुद्धाहारतर्पितायाः स्तन्यं पाययेत्; नाजीर्णौषधं च बालं, दोषौ[3]षधमलानां तीव्रवेगोत्पत्तिभयात् ॥ ३१ ॥

[4]भवन्ति चात्र—

धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा ॥
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदु[5]ष्यति ॥ ३२ ॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः ॥
दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः ॥
भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत् ॥ ३३ ॥
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ॥
मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति ॥ ३४ ॥
निमीलिताक्षो मूर्धस्थे शिरो रोगे न धारयेत् ॥
बस्तिस्थे मूत्रसङ्गार्तो रुजा तृष्यति मूर्च्छति ॥ ३५ ॥
विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः ॥
कोष्ठे दोषान् विजानीयात् सर्वत्रस्थांश्च रोदनैः ॥ ३६ ॥

---

१ 'न च क्षुधितशोकार्तश्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलविदग्धभक्तविरुद्धाहारतर्पितायाः स्तन्यं पाययेत्; नाजीर्णौषधं च बालं, दोषौषधमलानां तीव्रवेगोत्पत्तिभयात्' इतीदं वाक्यं ता० पुस्तके न दृष्टिपथमायाति। २ "°विदग्धभक्ष्य°" इति हा०। ३ 'दोषौषधाशनानां' इति हा०। ४ 'भवति चात्र' इति ता०। ५ ता० पुस्तके द्वात्रिंशत्तमस्य श्लोकस्याग्रे काचिदेकापङ्क्तिरधिकोपऽलभ्यते सा शब्दतश्चार्थतश्च दुर्बोधतया नोद्ध्रियते। तथैव च तस्याग्रेतनाः त्रयस्त्रिंशत्तमश्चतुस्त्रिंशत्तमः पञ्चत्रिंशत्तमः षट्त्रिंशत्तमश्चैते श्लोकाः नोपलभ्यन्ते।

तेषु यथाभिहितं मृद्वच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा संयुक्तं विदध्यात्, धात्र्याश्च केवलं, क्षीरान्नादस्यात्मनि धात्र्याश्च पूर्ववत्, अन्नादस्य कषायादीनात्मन्येव न धात्र्याः[1] ॥३७॥

तत्र मासादूर्ध्वं क्षीरपायाङ्गुलिपर्वद्वयग्रहणसंमितामौषधमात्रां विदध्यात्, कोलास्थिसंमितां कल्कमात्रां क्षीरान्नादाय, कोलसंमितामन्नादायेति ॥ ३८ ॥

येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः ॥
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥ ३९ ॥
एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे ॥
स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥ ४० ॥
न च तृष्णाभयादत्र पाययेत शिशुं स्तनौ ॥
विरेकबस्तिवमनान्यृते कुर्याच्च नात्ययात् ॥ ४१ ॥
मस्तुलुङ्गक्षयाद्यस्य वायुस्ताल्वस्थि नामयेत् ॥
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ॥ ४२ ॥
पानाभ्यञ्जनयोर्योज्यं शीताम्बूद्वेजनं तथा ॥
वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम् ॥ ४३ ॥
मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ॥
गुद[3]पाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ॥
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ४४ ॥

---

१ क्षीरान्नादस्य कल्कीकृत धात्र्याश्च पूर्ववत् । अन्नादस्य कषायादीनामात्मन्येव न धात्र्या.' इति ता. । २ ता० पुस्तके प्रस्तुतस्य सप्तत्रिंशत्तमस्य सूत्रस्याग्रे 'भवति चात्र' इति पठित्वा तदनन्तरं 'गुदपाकेषु बालानां' इत्यादिश्चतुश्चत्वारिंशत्तमश्लोकः पठित उपलभ्यते सप्तत्रिंशत्तमसूत्रस्य चतुश्चत्वारिंशत्तमश्लोकस्य चोभयोर्मध्यगताः श्लोकास्तत्र नोपलभ्यन्ते । ३ 'बालानां गुदपाकेषु पित्तघ्नीं कारयेत्क्रियाम्' इति ता. ।

क्षीराहाराय सर्पिः पाययेत् सिद्धार्थकवचामांसीपयस्यापामार्ग-शतावरीसारिवाब्राह्मीपिप्पलीहरिद्राकुष्ठसैन्धवसिद्धं, क्षीरान्नादाय मधुकवचापिप्पलीचित्रकत्रिफलासिद्धम्, अन्नादाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधुकविडङ्गद्राक्षाद्विब्राह्मीसिद्धं; तेनारोग्य-बलमेधायूंषि शिशोर्भवन्ति ॥ ४५ ॥

बालं[3] पुनर्गात्रसुखं गृह्णीयात्, न चैनं तर्जयेत्, सहसा[4] न प्रतिबोधयेद्वित्रासभयात्, सहसा नापहरे[5]दुत्क्षिपेद्वा वाताद्यभिघा[6]तभयात्, नोपवेशयेत् कौब्ज्यभयात्, नित्यं चैनमनुवर्तेत प्रियै[7]-श्चैरजिघांसुः; एवम[8]विहतमना ह्यभिवर्धते नित्य[9]मुदग्रसत्त्वसंपन्नो नीरोगः सु[10]प्रसन्नमनाश्च भवति। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानग्रहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत् ४६

नाशुचौ[11] विसृजेद्बालं नाकाशे विषमे न च॥
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च[12] ॥ ४७ ॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा ॥
दद्यादा[13]स्तन्यपर्याप्तेर्बालानां वीक्ष्य मात्रया ॥ ४८ ॥

---

१ 'क्षीराहारस्य सिद्धार्थकवचापयस्यासारिवाब्राह्मीकुष्ठसैन्धवसिद्धं सर्पिः पातुं प्रयच्छेत्। क्षीरान्नादस्य मधुकवचात्रिफलासिद्धम्। अन्नादस्य द्विपञ्च-मूलीक्षीरतगरभद्रदारुविडङ्गद्राक्षादि सिद्धम्। तेन कुमारस्यारोग्यबलमेधायूंषि भवन्ति'। इति ता.। २ "मधुकविडङ्गद्राक्षाद्विब्राह्मीसिद्धम्' इति हा०। ३ 'बाल पुनर्गात्रेषु न गृह्णीयात्' इति ता.। ४ 'सहसा वा न प्रबोधयेत्' इति ता.। ५ 'नाहरेत्' इति ता.। ६ 'वाताद्यभिघातभयात्' इति ता। ७ 'प्रियहितै.' इति ता.। ८ 'एवमनभिहतमनास्त्वभिवर्धते' इति हा० ९ 'नित्यमुदग्रसत्वसंपन्नस्त्वरोगो भवति' इति ता.। १० 'सुप्रसन्नमनाश्च भवति। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानग्रहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बाल रक्षेत्' इति द्वे वाक्ये ता० पुस्तके नोपलभ्येते। ११ ता० पुस्तके 'भवति चात्र' इति पठित्वा तदनन्तरम् 'नाशुचौ विसृजे-द्बाल' इत्यादिश्लोकः पठितोऽस्ति। १२ 'वा' इति ता.। १३ 'दद्यात् स्तन्यस्य चाप्राप्तौ बालेभ्यो वीक्ष्य मात्रया' इति ता.।

षण्मासं[1] चैनमन्नं प्राशयेल्लघु हितं च ॥ ४९ ॥

नित्यमवरोधरतश्च स्यात् कृतरक्ष उपसर्गभयात्; प्रयत्नतश्च[2] ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति ॥ ५० ॥

अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानं च परिणुदति[3] दन्तान् खादति कूजति जृम्भते [4]भ्रुवौ विक्षिपत्यूर्ध्वं निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा[5] दीनार्तस्वरो निशि जागर्ति दुर्बलो म्लानाङ्गो मत्स्यच्छुच्छुन्दरिमत्कुणगन्धो यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं, विस्तरेणोत्तरे वक्ष्यामः ॥ ५१ ॥

शक्तिमन्तं[6] चैनं ज्ञात्वा यथावर्णं[7] विद्यां ग्राहयेत् ॥ ५२ ॥

अथास्मै[8] पञ्चविंशतिवर्षाय षोडशदशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति[9][10] ॥ ५३ ॥

---

१ 'षण्मासाच्चैनमन्नं प्राशयेल्लघुहितं' इति ता । २ इह स्थितं 'प्रयत्नतश्च' इति पदं तत्ता० पुस्तके न पठ्यते । ३ 'परितुदति' इति ता । ४ भ्रुवावुत्क्षिपति' इति ता. । ५ 'भिन्नार्तस्वरो निशि जागर्ति दुर्बलो म्लानाङ्गो यथापूर्वं धात्र्याः स्तन्यं नाभिलषतीति सामान्यं ग्रहोपसृष्टलक्षणमुक्तम्' इति ता । ६ 'शक्तिमन्तं यथावर्णं विद्यामध्यापयेत्ततः । अनुशिष्यात् सदा चैनं धर्माय विनयाय च । यथा नेन्द्रियदुष्टाश्वैर्ह्रियते यौवनागमे' । इति वृ० वा० । ७ 'यथास्वं' इति ता. । ८ अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेन्मित्रधर्मार्थकामप्रजाः प्राप्स्यामीति' इति ता० । 'अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति' इतीतरेषु हस्तलिखितपुस्तकेषु पठ्यते । वाग्भटे तु 'पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता' इति पठ्यते । वृद्धवाग्भटे तु 'पुमानेकविंशतिवर्षः कन्यां द्वादशवर्षदेशीयां ..उद्वहेत्, तस्यां षोडशवर्षायां पञ्चविंशतिवर्षः पुरुषः पुत्रार्थं यतेत, तदा हि तौ प्राप्तवीर्यौ वीर्यान्वितमपत्यं जनयतः' इति पठ्यते । ९ 'आहरेत्' इति हा० । १० ता० पु० पञ्चाशत्तमस्य श्लोकस्याग्रे 'भवति चात्र' इति पठित्वा तदनन्तरं 'ऊनषोडशवर्षायां' इत्यादिश्चतुःपञ्चाशत्तमः श्लोकः पठितोऽवलोक्यते ।

[1]ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ॥
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥ ५४ ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः ॥
त[2]स्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥ ५५ ॥

अति[3]वृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत। पुरुषस्याप्येवंविधस्य त एव दोषाः संभवन्ति ५६

तत्र पूर्वोक्तैः कारणैः पतिष्यति गर्भे [4]गर्भाशयकटीवङ्क्षणबस्तिशूलानि रक्तदर्शनं च। त[5]त्र शीतैः परिषेकावगाहप्रदेहादिभिरुपचरेज्जीवनीयशृतक्षीरपानैश्च। गर्भस्फुरणे मुहुर्मुहुस्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पाययेत्। प्रस्रंसमाने सदाहपार्श्वपृष्ठशूलासृग्दरानाहमूत्रसङ्गाः, स्थानात् स्थानं च प्र[6]क्रामति गर्भे कोष्ठे संरम्भः, तत्र स्निग्धशीताः क्रियाः। वेदनायां महासहाक्षुद्रसहामधुकश्वदंष्ट्राकण्टकारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत्; मूत्रसङ्गे दर्भादिसिद्धम्; [7]आनाहे हिङ्गुसौवर्चलशुनवचासिद्धम्। अत्यर्थं स्रवति रक्ते कोष्ठागारिकागारमृत्पिण्डसमङ्गाधातकीकुसुमनवमालिकागैरिकसर्जरसरसाञ्जनचूर्णं मधुनाऽवलिह्यात्, यथालाभं न्यग्रोधादित्वक्प्रवालकल्कं वा पयसा पाययेत्, उत्पलादिकल्कं वा

---

१ 'ऊनद्वादशवर्षायां' इति हस्तलिखितपुस्तकेषु पाठ उपलभ्यते। २ अयमर्धश्लोकस्ताडपत्रपुस्तके न पठ्यते। ३ ता० पुस्तके इदं षट्पञ्चाशत्तमं सूत्रं नास्ति। ४ 'गर्भाशयश्रोणीवङ्क्षणबस्तिशूलानि भवन्ति रक्तदर्शनञ्च'। इति ता.। ५ 'तासां परिषेकावगाहलेपनैरुपचरेत् क्षीरपानैश्च। अल्पाल्पस्पन्दने क्षीरमुत्पलादिसिद्धं पाययेत्। स्रसमाने सवातपार्श्वशूलासृग्दरानाहमूत्रसङ्गाः स्थानात्स्थानं चोपक्रामति गर्भः। तत्र स्निग्धशीताः क्रियाः।' इति ता.। ६ 'चाक्रामति' इति हा०। ७ 'आनाहे हिङ्गु सौवर्चलरसोनसिद्धम्। स्रवति रक्ते कोष्ठागारिककण्टकारिकामृत्पिण्डसमङ्गाधातकीकुसुमगैरिकसर्जरसाञ्जनचूर्णं यथालाभं न्यग्रोधादित्वक्प्रवालकल्कं वा पाययेत्। उत्पलादिकशेरुशृङ्गाटककल्कं वा' इति ता.।

कशेरुशृङ्गाटकशालूककल्कं वा [1]शृतेन पयसा, उदुम्बरफलौदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिपिष्टं; [2]न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत्। अथादृष्टशोणितवेदनायां मधुकदेवदारुमञ्जिष्ठापयस्यासिद्धं पयः पाययेत्, [3]तदेवाश्मन्तकशतावरीपयस्यासिद्धं विदारिगन्धादिसिद्धं वा, बृहतीद्वयोत्पलशतावरीसारिवापयस्यामधुकसिद्धं वा; एवमुपक्रान्ताया उपावर्तन्ते रुजो [4]गर्भश्चाप्यायते। व्यवस्थिते च गर्भे गव्येनोदुम्बरशलाटुसिद्धेन पयसा भोजयेत्। [5]अतीते लवणस्नेहवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि। [6]बस्त्युदरशूलेषु पुराणगुडं दीपनीयसंयुक्तं पाययेदरिष्टं वा। [7]वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः, सोऽतिकालमवतिष्ठमानो व्यापद्यते, तां मृदुना [8]स्नेहादिक्रमेणोपचरेत्, [9]उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत्, [10]माषतिलबिल्वशलाटु-

---

१ ता० पुस्तके 'शृतेन पयसा' इति वाक्यावयवस्तथा च 'उदुम्बरफलौदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिपिष्टम्' इति वाक्यञ्च नोपलभ्यते। २ ता० पुस्तके 'न्यग्रोधादिस्वरसपरिपीत वा वस्त्रावयव योन्यां धारयेत्' इति वाक्यस्याग्रे 'औदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिषष्टिकसिद्ध वा' इति वाक्यमुपलभ्यते। ३ 'तदेवाश्मन्तकशतावरीपयस्यासिद्ध वा विदारिगन्धादिसिद्ध वा' इति ता.। ४ ता० पुस्तके 'गर्भश्चाप्यायते' इति वाक्यस्याग्रे 'मासानुमासिकमत उर्ध्वं वक्ष्याम.' इत्यष्टपञ्चाशत्तम सूत्र पठितमुपलभ्यते। ५ 'अतीते लवणवर्ज्याभिरुद्दालकादीना पाचनीयोपसम्भृताभिरुपक्रमेत्' इति ता.। ६ ता० पुस्तके 'बस्त्युदरशूले' इति पठ्यते न तत्र 'बस्त्युदरशूलेषु' इति पठ्यते। ७ 'वातातपश्रमसेविन्याः वातोपहितत्वात् स्रोतसां लीयते गर्भः' इति ता.। ८ 'स्नेहादिना क्रमेण' इति ता.। ९ 'उत्क्रोशरसं यवागूं चाल्पस्नेहा प्रयच्छेत्' इति ता.। १० ता० पुस्तके 'माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेन्मधुमाध्वीक चानुपिबेत् सप्तरात्रम्' इति पाठ नोपलभ्यते।

सिद्धान् वा कुल्माषान् भक्षयेन्मधुमाध्वीकं चानुपिबेत् सप्तरात्रम्। कालातीतस्थायिनि गर्भे विशेषतः [1]सधान्यमुदूखलं मुसलेनाभिहन्यात्[2]विषमे वा यानासने सेवेत। वाताभिपन्न एव शुष्यति गर्भः, स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च, तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत्। शुक्रशोणितं वायुनाऽभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं, तं कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति [3]भाषन्ते, तमेव कदाचित् [4]प्रलीयमानं नागोदरमित्याहुः, तत्रापि लीनवत् प्रती[5]कारः॥ ५७॥

[6]अत ऊर्ध्वं मासानुमासिकं वक्ष्यामः—॥ ५८॥

[7]मधुकं शाकबीजं च पयस्या सुरदारु च॥
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी॥ ५९॥
वृक्षादनी पयस्या च लता सोत्पलसारिवा॥
अनन्ता सारिवा रास्ना [8]पद्मा मधुकमेव च॥ ६०॥
[9]बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम्॥
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा [10]मधुपर्णिका॥ ६१॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता॥
वत्सैते सप्त योगाः स्युरर्धश्लोकसमापनाः॥

---

१ 'धान्यमुदूखले मुसलेनाभिहन्यात्' इति ता.। २ 'विषमं वा यानासनमुपसेवेत' इति ता.। ३ 'वदन्ति' इति ता.। ४ 'प्रविलीयमानं' इति ता.। ५ ता० पुस्तकेऽस्य सप्तपञ्चाशत्तमस्य सूत्रस्याग्रे 'निवृत्तप्रसवायाश्च पुनः षड्भ्यो वर्षेभ्य ऊर्ध्वं' इत्यादि षट्पष्टितमं सूत्रं पठ्यते। ६ 'मासानुमासिकमत ऊर्ध्वं वक्ष्यामः' इति ता.। ७ 'मधुकं शालिबीजं च पयस्या सुरदारु च॥ अश्मन्तकः कृष्णतिलास्ताम्रवल्लीशतावरी' इति ता.। ८ 'पद्मम्' इति ता.। ९ 'बृहतीद्वयकाश्मर्य' इति ता.। १० 'मधुयष्टिका' इति ता०।

यथासंख्यं[1] प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥ ६२ ॥
कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिका—॥
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ॥ ६३ ॥
नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥
क्षीरं[2] शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम् ॥ ६४ ॥
सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च ॥
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ६५ ॥

निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्ध्वं प्रसवमानाया नार्याः कुमारोऽल्पायुर्भवति ॥ ६६ ॥

अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्दयेन्मधुराम्लेनान्नोपहितेनानुलोमयेच्च, संशमनीयं[3] च मृदु विदध्यादन्नपानयोः, अश्नीयाच्च[4] मृदुवीर्यं मधुरप्रायं गर्भाविरुद्धं च, गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः ॥ ६७ ॥

सौवर्णं[5] सुकृतं चूर्णं कुष्ठं मधु घृतं वचा ॥
मत्स्याक्षकः शङ्खपुष्पी मधु सर्पिः सकाञ्चनम् ॥ ६८ ॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं[6] वचा ॥
हेमचूर्णानि[7] कैडर्यः श्वेता दूर्वा घृतं मधु ॥ ६९ ॥

---

१ 'यथाक्रम' इति ता.। २ 'पयस्तु दशमे शुण्ठ्या शृतशीत प्रशस्यते' इति ता.। ३ 'संशमनीयं मृदु विदध्यादन्नपानयोरिति' इति ता.। ४ 'अश्नीयाच्च मृदुवीर्यं गर्भाविरुद्धांश्च क्रियायोगान् विदधीत' इति ता.। ५ 'सुवर्ण सुहृद चूर्ण कुष्ठ मधु वचा घृतम् ॥ मत्स्याक्षकः शङ्खपुष्पी सर्पिः काञ्चनमेव च' ॥ इति ता.। ६ 'कनक तथा' इति ता.। ७ 'सुवर्णचूर्ण वैडूर्यं' इति ता.।

चत्वारोऽभिहिताः प्राशाः श्लोकार्धेषु चतुर्ष्वपि ॥
कुमाराणां वपुर्मेधाबलबुद्धिविवर्धनाः ॥ ७० ॥

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण
महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां
तृतीयं शारीरस्थानं समाप्तम् ॥ ३ ॥

इति सुश्रुतसंहितायां शारीरस्थाने गर्भिणीव्याकरणं
शारीरं नाम दशमोऽध्याय. ॥ १० ॥



१ 'चत्वारोऽभिहिताः प्राश्या अर्धश्लोकसमापनाः ॥ कुमाराणां वपुर्मेधाबलारोग्यकराः शुभाः' इति ता । २ ता० पुस्तके सप्ततितमस्यास्य श्लोकस्याग्रे 'भूतचिन्ता शुक्रशुद्धि गर्भसङ्क्रमणन्तथा ॥ गर्भव्याकरणञ्चैव कायव्याकरणञ्च यत् ॥ मर्मसिराविभक्तिश्च सिराताडनमेव च ॥ धमनीव्याकरणञ्चैव गर्भिण्यापूर्यते दश' ॥ इति शारीरस्थानस्योपसंहारश्लोकाः पठ्यन्ते ।

# अथ चिकित्सास्थानम् ।

## प्रथमोऽध्यायः ।

अथातो द्विव्रणीयं[1] चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच[2] भगवान् धन्वन्तरिः ॥ २ ॥

द्वौ व्रणौ[3] भवतः—शारीर; आगन्तुश्च । तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः, आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः । तत्र तुल्ये व्रणसामान्ये द्विकारणोत्थानप्रयोजनसामर्थ्याद् 'द्विव्रणीय' इत्युच्यते ॥ ३ ॥

सर्वस्मिन्नेवागन्तुव्रणे[4] तत्कालमेव क्षतोष्मणः प्रसृतस्योपशमार्थं पित्तवच्छीतक्रियावचारणविधिविशेषः[5] सन्धानार्थं च मधुघृतप्रयोग

---

१ 'व्रणविभक्तिपरिज्ञानीयम्' इति च वृ० वा० । २ यथा शारीरस्थाने तथा चिकित्सास्थानेऽपि सर्वेषामध्यायानामारम्भे पठ्यमान 'यथोवाच भगवान् धन्वन्तरि.' इति पठ्यमान द्वितीय सूत्र तत्ता० पुस्तके न पठ्यते । ३ 'द्वौ व्रणौ भवतः शरीरसमुत्थ आगन्तुश्च । तयो. शरीरसमुत्थो वातपित्तकफशोणितसन्निपातनिमित्त. । आगन्तुकः पुरुषमृगपशुपक्षिव्यालसरीसृपपतनक्रीडनप्रहाराग्निविषास्थिशकलकपालखड्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधप्रहरणाभिघातनिमित्त.' । इति ता० । 'स (व्रणः) च द्विविधो निज आगन्तुश्च । तत्र निजो दोषसमुत्थः । आगन्तु' शस्त्रानुशस्त्रोपललगुडनखदशनविषाणविषारुष्करादिनिमित्त. । सोऽपि पुनर्वातादिभिरधिष्ठितो निजतां लभते । पुनश्च द्वेधा व्रणो दुष्टः शुद्धश्च । तत्र दोषदूषितो दुष्टः' । इति च वृ० वा० । 'व्रणो द्विधा निजागन्तुदुष्टशुद्धविभेदतः । निजो दोषै. शरीरोत्थैरागन्तुर्बाह्यहेतुजः । दोषैरधिष्ठितो दुष्ट शुद्धस्तैरनधिष्ठितः' । इति च ल० वा० । ४ 'आगन्तौ व्रणे' इति ता । ५ 'पित्तवच्छीतक्रियाविभाग.' इति ता० । 'पित्तवच्छीतक्रियावधारणविधिर्विशेषः' । इति च पा० ।

इत्येतद्व्रिकारणोत्थानप्रयोजनम्, उत्तरकालं तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः ॥ ४ ॥

दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः[2], प्रसरणसामर्थ्यात्, यथोक्तो व्रणप्रश्नाधिकारे; शुद्धत्वात् षोडशप्रकार इत्येके ५

तस्य लक्षणं द्विविधं—सामान्यं[3] वैशेषिकं च। तत्र[4] सामान्यं रुक्। 'व्रण'[5] गात्रविचूर्णने, व्रणयतीति व्रणः। विशेषलक्षणं[6] पुनर्वातादिलिङ्गविशेषः ॥ ६ ॥

तत्र श्यावारुणाभस्तनुः शीतः[7] पिच्छिलोऽल्पस्रावी रूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनाबहुलो निर्मांसश्चेति वातात्[8], क्षिप्रजः पीतनीलाभः किंशुकोदकाभोष्णस्रावी दाहपा[9]-

---

१ 'दोषोपप्लवविशेषादवस्थान्तरविशेषा॰ शारीरवत्प्रतीकार' इति ता.। २ 'पञ्चदशप्रकारो भवति। यथोक्ते व्रणप्रश्नाध्याये प्रसरणसामर्थ्याच्छुद्धश्चेति षोडशप्रकार इत्युच्यते'। इति ता.। ३ 'सामान्यलक्षणं विशेषलक्षणञ्च' इति ता.। ४ तस्य सामान्यलिङ्गमतिसंवृतत्वविवृतत्वमतिमृदुकठिनताऽत्युत्सादावसादौ अतिशीतोष्णभावोऽतिरक्तकृष्णपाण्डुता पूतिमांससिरास्नायुप्रतिच्छन्नत्व पुतीपूयास्रावः सोत्सङ्गिता दाहपाककण्डूश्वयथुवेदनासंरम्भपिटकोपद्रवोपद्रुतत्व दीर्घकालानुबन्धश्च' इति वृ० वा०। ५ 'तत्र व्रणो वृणोतीति व्रण॰' इति ता०। 'यावदायुर्वृणीते विवृणोति वा शरीरमितिव्रण॰' इति च वृ० वा०। ६ 'विशेषलक्षण पुनर्वातादिस्वलक्षणविशेषः' इति ता०। 'विशेषतस्तु पञ्चदशधा भिद्यते' इति वृ० वा०। 'स पञ्चदशधा दोषैः सरक्तै॰' इति च ल० वा०। ७ शीतपिच्छिलाल्पस्रावी' इति ता.। ८ 'तत्र श्यावोऽरुणः कृष्णो मसास्थिकपोतगलान्यतमवर्णो वा दधिमस्तुक्षाराम्बुमांसधावनपुलाकोदकनिभाल्पस्रावो रूक्षश्चटचटायमानशीलोऽकस्माद्विविधशूलस्फुरणायामतोदभेदस्वापबहुलो निर्मांसश्च वातात्' इति वृ० वा०। ९ 'दाहपाकविकारी' इति ता.।

कराग विकारकारी पीतपिडकाजुष्टश्चेति पित्तात्[1], प्रततचण्डकण्डू-बहुलः[2] स्थूलौष्ठः[3] स्तब्धसिरास्नायुजालावततः कठिनः पाण्डुवभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति कफात्[4], प्रवालदलनिचयप्रकाशः[5] कृष्णस्फोटपिडकाजालोपचितस्तुरङ्गस्थान-गन्धिः[6][7] सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति रक्तात्, तोर्दंदाहधूमायनप्रायः[8] पीतारुणाभस्तद्वर्णस्रावी[9] चेति वातपित्ताभ्यां, कण्डूयनशीलः संनिस्तोदो[10] रूक्षो गुरुर्दारुणो मुहुर्मुहुः शीतपि-च्छिलाल्पस्रावी चेति वातश्लेष्मभ्यां, गुरुः सदाह उष्णः पीतपा-[11]ण्डुस्रावी चेति पित्तश्लेष्मभ्यां, रूक्षस्तनुस्तोदबहुलः सुप्त इव च रक्तारुणाभस्तद्वर्णास्रावी चेति वातशोणिताभ्यां[12], घृतमण्डाभो[13]

---

१ 'क्षिप्रज पीतनीलहरितकृष्णकपिलपिङ्गलो गोमूत्रभस्मशङ्खकिंशुकोदक-मार्द्वीकतैलाभोष्णभूरिक्लेदो दाहोषाज्वररागपाकावदरणधूमायनान्वित-क्षारो-क्षितक्षतोपमवेदन- पिटकाजुष्टश्च पित्तात्' इति वृ० वा० । २ 'प्रततकण्डू-बहुलः' इति ता० । ३ 'स्थूलौष्ठः स्तब्धसिरास्नायुजालावनद्धः' इति ता० । 'स्थूलो घनः स्तब्धः सिरास्नायुजालावततः' इति च पा० । ४ 'स्निग्धः स्थूलौष्ठः पाण्डुश्चण्डकण्डूर्नवनीतवसामज्जपिष्टतिलनारिकेलाम्बुसदृशश्वेतशी-तबहलपिच्छिलक्लेदः स्वापस्तम्भस्तैमित्यगौरवोपदेहयुक्त- सिरास्नायुजालाव-ततो मन्दवेदन- कठिनश्च कफात्' इति वृ० वा० । ५ 'प्रवालानलनिचयप्र-काशः' इति ता० । 'प्रवालरक्तः' इति च वृ० वा० । ६ '°पिटका°' इति वृ० वा० । ७ '°गन्धी सवेदन- प्रधूयनशीलो' इति ता० । 'वाजिस्थानगन्धिः । सरक्तपूयस्रावी पित्तलिङ्गश्च रक्तात्' । इति च वृ० वा० । ८ 'प्रतोददाहधूमा-यनप्राय-' इति ता० । ९ 'पीतारुणाभास-' इति पा० । १० 'स निस्तोदवान् रूक्षः खरस्तब्धो मुहुर्मुहुः शीतपिच्छिलास्रावी चेति वातश्लेष्मभ्याम्' इति ता० । ११ 'पीत- पाण्डुस्रावी' इति पा० । १२ 'तनू रूक्षस्तोदबहुलः प्रसुप्त इव च कृष्णारुणाभस्तद्वर्णस्रावीचेति वातशोणिताभ्याम्' इति ता० । १३ 'घृतमण्डाभो मीनधावनगन्धिर्मृदुर्विसर्पी कृष्णोष्णस्रावी चेति पित्तशोणि-ताभ्याम्' इति ता० । 'घृतमण्डाभो मत्स्यधावनगन्धिर्मृदुर्विसर्पी कृष्णोष्ण-पूयश्च पित्तरक्ताभ्याम्' इति च वृ० वा० ।

मीनधावनतोयगन्धिर्मृदुर्विसर्प्युष्णकृष्णस्रावी चेति पित्तशोणिताभ्यां, [1]रक्तो गुरुः स्निग्धः पिच्छिलः कण्डूप्रायः स्थिरो सरक्तपाण्डुस्रावी चेति श्लेष्मशोणिताभ्यां, स्फुरणतोददाहधूमायनप्रायः पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्यः, कण्डूस्फुरणचुमचुमायमानप्रायः [2]पाण्डुघनरक्तास्रावी चेति वातश्लेष्मशोणितेभ्यः, दाहपाकरागकण्डूप्रायः [3]पाण्डुघनरक्तास्रावी चेति [4]पित्तश्लेष्मशोणितेभ्यः [5]त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः, निर्दहननिर्मथनस्फुरणतोददाहपाकरागक[6]ण्डूस्वापबहुलो [7]नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः, जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति [8]शुद्धो व्रण इति ॥ ७ ॥

[9]तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति। तद्यथा—अपतर्पणमा[10]लेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः [11]पाचनं विस्रावणं स्नेहो वमनं विरेचनं [12]छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं

१ 'रक्तो गुरुः स्निग्धः कण्डूप्रायः पिच्छिलः सरक्तपाण्डुस्रावी चेति श्लेष्मशोणिताभ्याम्' इति ता.। २ 'पाण्डुतनुरक्तास्रावी' इति ता.। ३ 'पाण्डुरक्तपीतास्रावी' इति ता.। ४ 'श्लेष्मपित्तशोणितेभ्य.' इति पा०। ५ 'विविधदोषवर्णवेदनास्रावविशेषोपेत.' इति ता.। ६ '°कण्डूवान्' इति ता.। ७ 'नानाविधवर्ण°' इति ता.। ८ 'जिह्वातलाभो मृदुः श्लक्ष्णः स्निग्धो विगतवेदन· सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण·' इति ता०। 'वातादिभिरेव च व्रणस्यानधिष्ठान शुद्धिः। यथोक्तदुष्टलिङ्गाभावात् संरम्भरहितत्व जिह्वावर्णताश्लक्ष्णत्व नीरुजत्व निरास्रावता श्यावपर्यन्तत्व समौष्ठमध्यता किञ्चिदुन्नतमध्यता वा'॥ इति च वृ० वा०। ९ 'तस्यैतस्य व्रणस्य' इति ता.। १० 'आलेपन' इति ता.। ११ ता० पुस्तके 'पाचन इत्ययमुपक्रमो नोपलभ्यते। १२ छेद्य भेद्य दारण लेख्यमेष्यमाहार्यं व्यध्य सेव्य पीडन सन्धान विस्राव्य शोणितस्थापन निर्वापण' इति ता.।

विस्रावणं सीवनं सन्धानं पीडनं शोणितास्थापनं निर्वापणमुत्कारिका कषायो वर्तिः कल्कः [1]सर्पिस्तैलं रसक्रियाऽवचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म दारुणकर्म क्षारकर्माग्निकर्म कृष्णकर्म पाण्डुकर्म प्रति[2]सारणं रोम[3]सञ्जननं लोमा[4]पहरणं बस्तिकर्मोत्तरबस्तिकर्म [5]बन्धः पत्रदानं [6]कृमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधु सर्पिर्यन्त्रमाहारो रक्षाविधानमिति ॥ ८ ॥

तेषु कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽव[7]चूर्णमिति शो[8]धनरोपणानि, तेष्वष्टौ शस्त्रकृत्याः, शोणि[9]तास्थापनं क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानं चोक्तानि, स्नेहस्वेदनवमनविरेचनबस्त्युत्तरबस्तिशिरोविरेचननस्यधूमक[10]वलधारणान्यन्यत्र वक्ष्यामः, यदन्यदवशिष्टमुपक्रमजातं तदिह वक्ष्यते ॥ ९ ॥

ष[11]ड्विधः प्रागुपदिष्टः शोफः, तस्यैकादशोपक्रमा भवन्त्यपतर्पणादयो विरेचनान्ताः, ते च विशेषेण शोथ[12]प्रतीकारे वर्तन्ते, [13]व्रणभावमापन्नस्य च न विरुध्यन्ते; शेषास्तु प्रायेण व्रणप्रतीकारहेतव एव ॥ १० ॥

---

१ 'सर्पिस्तैल पिण्डीकरण रसक्रिया चूर्ण' इति ता. । २ ता० पुस्तके 'प्रतिसारण' इत्ययमुपक्रमो नोपलभ्यते । ३ 'समवर्णलोमसञ्जनन' इति ता. । ४ 'लोमसंहरण' इति ता० । 'लोमापनयन' इति 'लोमशातन इति च पा० । ५ 'बन्धन' इति ता० । ६ 'क्रिमिघ्न' इति ता. । ७ 'चूर्ण' इति ता. । ८ ता० पुस्तके 'शोधनरोपणानि' इति पदस्याग्रे 'एवमेते षष्टिरुपक्रमा भवन्ति' इत्युपसंहारवाक्यमुपलभ्यते । ९ 'शोणितस्थापन क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानमित्युक्ताः । स्नेहस्वेदवमनविरेचनबस्त्युत्तरबस्तिविधानशिरोविरेचनरक्षाग्निनस्यधूमकवडविधानान्युत्तरत्र वक्ष्याम । यदन्यदवशिष्टमुपक्रमजात तदत्र वक्ष्यते' । इति ता । १० "कवड (कवल) विधानान्यन्यत्र वक्ष्याम.' इति पा० । ११ 'तत्र षड्विधः प्राक्प्रदिष्ट' शोफ.' इति ता. । १२ 'व्रणप्रतीकारे' इति ता० । 'शोथप्रतीकाराः' इति च पा० । १३ 'व्रणभावमुपगतस्य न विरुद्ध्यन्ते' इति ता. ।

अपतर्पणमाद्य[1] उपक्रमः, एष सर्वशोफानां सामान्यः प्रधानतमश्च ॥ ११ ॥

भवन्ति[2] चात्र—

दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः ॥
अवेक्ष्य दोषं प्राणं च कार्यं स्यादपतर्पणम् ॥ १२ ॥
ऊर्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः[3] ॥
न कार्यं गर्भिणीवृद्धबालदुर्बलभीरुभिः[4] ॥ १३ ॥
शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च ॥
यथास्वैरौषधैर्लेपं[5] प्रत्येकश्येन[6] कारयेत् ॥ १४ ॥
यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम् ॥
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः ॥ १५ ॥
प्रह्लादने शोधने च शोफस्य हरणे तथा ॥
उत्सादने रोपणे च लेपः स्यात्तु तदर्थकृत् ॥ १६ ॥

वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिष्क्वाथैरशीतैः परिषेकान् कुर्वीत, पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिष्क्वाथैरनुष्णैः[7] परिषेकान्[8] कुर्वीत, श्लेष्मशोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिष्क्वाथैरशीतैः परिषेकान्[9] कुर्वीत ॥ १७ ॥

---

१ 'अपतर्पण आद्य उपक्रम । एष सर्वशोफानां सामान्यत' प्रधानतमश्च' इति ता.। २ अत्र 'भवन्ति चात्र' इति यत्पठ्यते तत्कचित्पुस्तके नोपलभ्यते तथा ता० पुस्तकेऽपि च। ३ 'तद्विमारुतक्षुत्तृष्णामुखशोषभ्रमान्वितैः। कार्यं न बाले वृद्धे वा न गुर्विण्यां न दुर्बले' इति ता०। 'दोषोच्छ्रायोपशान्त्यर्थमुपदिष्ट यथायथम्। अवेक्ष्य देहप्राणादीन् कर्तव्यमपतर्पणम्'। इति च वृ० वा०। ४ 'गुर्विणीबालवृद्धदुर्बलभीरुभि·' इति पा०। ५ 'यथोक्तै·' इति ता.। ६ 'प्रत्येकांश्येन' इति ता.। ७ 'क्षीरवृक्षक्षीरशर्करोदकेक्षुरसघृतमधुरौषधनिष्क्वाथैरनुष्णै' इति ता.। ८ ता० पुस्तके 'परिषेकान् कुर्वीत' इति नोपलभ्यते। ९ ता० पुस्तके 'परिषेकान् कुर्वीत' इति नोपलभ्यते।

यथाऽम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ॥[1]
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥ १८ ॥
अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशमं मृदुतां च करोति १९
स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते ॥
पश्चात् कर्मसु चादिष्टः स[2] च विस्रावणादिषु ॥ २० ॥
रुजावतां दारुणानां कठिनानां तथैव च ॥
शोफानां स्वेदनं कार्यं ये चाप्येवंविधा व्रणाः ॥ २१ ॥
स्थिराणां रुजतां मन्दं कार्यं विम्लापनं भवेत् ॥
अभ्यज्य स्वेदयित्वा तु वेणुना[3]ड्या ततः शनैः ॥ २२ ॥
विमर्दयेद्भिषक् प्राज्ञस्तलेनाङ्गुष्ठकेन वा ॥
शोफयोरुपनाहं तु कुर्यादामविदग्धयोः ॥ २३ ॥
अविदग्धः[4] शमं याति विदग्धः पाकमेति च ॥
निवर्तते न यः शोफो विरेकान्तैरुपक्रमैः ॥ २४ ॥
तस्य[5] संपाचनं कुर्यात् समाहृत्यौषधानि तु ॥
दधितक्रसुराशुक्तधान्याम्लैर्योजितानि[6] तु ॥ २५ ॥
स्निग्धानि लवणीकृत्य[7] पचेदुत्कारिकां शुभाम्[8] ॥
सैरण्डपत्रया शोफं नाहयेदुष्णया तथा[9] ॥ २६ ॥
हितं सम्भोजनं चापि पाकायाभिमुखो[10] यदि ॥
वेदनोपशमार्थाय तथा पाकशमाय च ॥ २७ ॥

---

१ 'यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति । दोषाग्निरेव सहसा प्रलेपाद्यैः प्रयोजितैः' इति वृ० वा० । २ 'स तु' इति ता. । ३ 'वेणुना वा शनैः शनैः' इति पा० । ४ 'प्रशाम्यत्यविदग्धस्तु विदग्धः पाकमेति च' इति ता. । ५ 'तत्र सम्पाचनद्रव्याण्याहृत्योक्तानि पिष्यच' इति ता० । (पिष्यचेत्यत्र ल्यप् चिन्त्य.) ६ 'योजयेद्भिषक्' इति ता. । ७ 'लवणीकृत्वा' इति ता. । ८ 'तत.' इति ता. । ९ 'तथा' इति ता. । १० 'पाकाय विमुखो' इति ता. ।

अचिरोत्पतिते शोफे कुर्याच्छोणितमोक्षणम् ॥
सशोफे कठिने ध्यामे[1] सरक्ते वेदनावति ॥ २८ ॥
संरब्धे विषमे चापि[2] व्रणे विस्रावणं हितम् ॥
सविषे[3] च विशेषेण जलौकोभिः पदैस्तथा ॥ २९ ॥
वेदनायाः प्रशान्त्यर्थं पाकस्याप्राप्तये तथा ॥
सोपद्रवाणां रूक्षाणां कृशानां व्रणशोषिणाम् ॥ ३० ॥
यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते ॥
उत्सन्नमांसशोफे[4] तु कफजुष्टे[5] विशेषतः ॥ ३१ ॥
संक्लिष्टश्या(ध्या)मरुधिरे[6] व्रणे प्रच्छर्दनं हितम् ॥
वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ॥ ३२ ॥
विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ॥
अपाकेषु[7] तु रोगेषु[8] कठिनेषु स्थिरेषु च ॥ ३३ ॥
स्नायुकोथादिषु तथा च्छेदनं प्राप्तमुच्यते[9] ॥
अन्तःपूयेष्ववक्रेषु[10] तथैवोत्सङ्गवत्स्वपि ॥ ३४ ॥
गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ॥
बालवृद्धासहक्षीणभीरूणां[11] योषितामपि ॥ ३५ ॥
मर्मोपरि च जातेषु रोगेषूक्तेषु[12] दारणम् ॥

---

१ 'ध्यामे' इति ता०। 'श्यामे' इति च पा०। २ 'चापि' इति ता०। 'वापि' इति च पा०। ३ ता० पुस्तके एकोनत्रिंशत्तमस्य श्लोकस्योत्तरार्धंस्त्रिंशत्तमस्यश्लोकस्य पूर्वार्धश्चामू श्लोकार्धौ नोपलभ्येते। ४ 'उत्सन्नमांसशोफेषु' इति पा०। ५ 'कफदुष्टे' इति ता०। ६ 'ससृष्टध्यामरुधिरे' इति ता०। ७ 'अपाकवत्सु' इति ता०। ८ 'शोफेषु' इति पा०। ९ 'प्राप्तमुच्यते' इति ता०। 'प्राप्तमिष्यते' इति च पा०। १० ता० पुस्तके 'अन्तःपूयेष्ववक्रेषु' इत्यादिरयमर्धश्लोकः 'गतिमत्सु च रोगेषु' इत्यादिरयमर्धश्लोकश्चामू द्वौ श्लोकार्धौ नोपलभ्येते। ११ 'बालवृद्धक्षतक्षीणभीरूणाम्' इति ता०। १२ 'रोगेषूक्त च दारणम्' इति ता०।

सुपक्के [1]पिण्डिते शोफे पीडनै[2]रुपपीडिते ॥ ३६ ॥
[3]पाकोद्वृत्तेषु दोषेषु तत्तु कार्यं विजानता ॥
सुपिष्टैर्दारणद्रव्यैर्युक्तैः[4] क्षारेण वा पुनः ॥ ३७ ॥
कठि[5]नान् स्थूलवृत्तौष्ठान् दीर्यमाणान् पुनः पुनः ॥
कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥ ३८ ॥
समं लिखेत् सुलिखितं लिखेन्निरवशेषतः ॥
[6]वर्त्मनां तु प्रमाणेन समं शस्त्रेण निर्लिखेत्[7] ॥ ३९ ॥
क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवम् ॥
कर्कशानि च पत्राणि लेखनार्थे प्रदापयेत् ॥ ४० ॥
[8]नाडीव्रणान् शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः ॥
करीरबालाङ्गुलिभिरेषण्या वैषयेद्भिषक् ॥ ४१ ॥
ने[9]त्रवर्त्मगुदाभ्यासनाड्योऽवक्राः सशोणिताः ॥
चुच्चूपोदकजैः श्लक्ष्णैः करीरैरेषयेत्तु ताः ॥ ४२ ॥
सं[10]वृतासंवृतास्येषु व्रणेषु मतिमान् भिषक् ॥
यथोक्तमाहरेच्छल्यं [11]प्रांसोद्धरणलक्षणम् ॥ ४३ ॥
शेषे व्यधनसाध्ये तु यथोद्देशं प्रमाणता ॥
शस्त्रं निदध्याद्दोषं च स्रावयेत् कीर्तितं यथा ॥ ॥ ४४ ॥
अपाकोपप्लुता ये च मांसस्था विवृताश्च ये ॥
[12]यथोक्तं सीवनं तेषु कार्यं सन्धानमेव च ॥ ४५ ॥

---

१ 'पिशिते' इति पा० । २ '°रवपीडिते' इति पा० । ३ 'पाकोद्धतेषु' इति इति ता. । ४ 'स्रुतः क्षारेण वा पुनः' इति ता. । ५ 'कठिनस्थूलवृत्तौष्ठान्' पा० । ६ 'चर्मणां' इति ता. । 'वर्त्मनाऽनुप्रमाणेन' इति पा० । ७ 'संलिखेत्' इति ता. । ८ 'नाडीव्रणं शल्यगर्भमुन्मार्ग्युत्सङ्गिन शनैः ॥ करीरबालाङ्गुलिभिरेषण्या वेशयेद्भिषक्' इति ता. । ९ 'नेत्रचर्मगुदाभ्यासगल्योऽवक्रा सशोणिताः ॥ चुच्चूपोदकजै श्लक्ष्णै· करीरैरेषयेद्भिषक्' ॥ इति ता. । १० 'सवृतापावृतास्येषु' इति पा० । ११ 'प्रासोद्धरणलक्षणै.' इति ता. । १२ 'तेषु कार्यं यथोद्दिष्ट सेव्य सन्धानमेव च' इति ता. ।

पूयगर्भा[1]नणुद्वारान् व्रणान्मर्मगतानपि ॥
यथोक्तैः पीडनद्रव्यैः समन्तात् [2]परिपीडयेत् ॥ ४६ ॥
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ॥
न चाभिमुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥ ४७ ॥
तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम् ॥
कार्यं यथोक्तं वैद्येन शोणिता[3]स्थापनं भवेत् ॥ ४८ ॥
दाहपाकज्वरवतां व्रणानां पित्तकोपतः ॥
रक्तेन चाभिभूतानां कार्यं निर्वापणं भवेत् ॥ ४९ ॥
यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृताप्लुतैः ॥
दि[4]ह्याद्बहलान् से[5]कान् सुशीतांश्चावचारयेत् ॥ ५० ॥
व्रणे[6]षु क्षीणमांसेषु तनुस्राविष्वपाकिषु ॥
तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च ॥ ५१ ॥
[7]वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥
स्नैहिकेषु[8] च बीजेषु पचेदुत्कारिकां शुभाम् ॥ ५२ ॥
ते[9]षां च स्वेदनं कार्यं स्थिराणां वेदनावताम् ॥
दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेष[10]तः ॥ ५३ ॥

---

१ 'पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि । निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत् ॥ शुष्यन्त समुपेक्षेत प्रलेपं पीडन प्रति । न मुखे चैनमालिम्पेत्तथा दोषः प्रसिच्यते' ॥ इति वृ० वा० । २ 'प्रतिपीडयेत्' इति ता. । ३ 'शोणितस्थापनं' इति ता. । ४ 'दिह्येत बहलान्सेकान्' इति ता. । ५ 'लेपान्' इति पा० । ६ ता० पुस्तके 'व्रणेषु क्षीणमांसेषु' इत्यादिरयमेकपञ्चाशत्तमः श्लोको नोपलभ्यते । ७ 'वाताभिभूते चलयोः' इति ता० । अस्मिन्पाठे 'चलयोः' इत्युक्तस्य पदस्य स्वारस्यं न बुध्यते । ८ 'स्नेहनेषु च बीजेषु कुर्यादुत्कारिकां शुभाम्' इति पा० । ९ 'एषां' इति ता. । १० 'तथैव च' इति ता. ।

कषायैः शोधनं कार्यं शोधनैः प्रागुदीरितैः ॥
[1]अन्तःशल्यानणुमुखान् गम्भीरान् मांससंश्रितान् ॥ ५४ ॥
शोधनद्रव्ययुक्ताभिर्वर्तिभिस्तान्[2] यथाक्रमम् ॥
पूति[3]मांसप्रतिच्छन्नान् महादोषांश्च शोधयेत् ॥ ५५ ॥
कल्कीकृतैर्यथालाभं वर्तिद्रव्यैः पुरोदितैः ॥
पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान् ॥ ५६ ॥
कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा[4] ॥
उत्सन्नमांसानस्निग्धानल्पस्रावान् व्रणांस्तथा[5] ॥ ५७ ॥
सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥
तैलेना[6]शुध्यमानानां शोधनीयां रसक्रियाम् ॥ ५८ ॥
व्रणानां[7] स्थिरमांसानां कुर्याद्द्रव्यैरुदीरितैः ॥
कषाये विधिवत्तेषां कृते चाधिश्रयेत्[8] पुनः ॥ ५९ ॥
सुराष्ट्रजां सकासीसां दद्याच्चापि मनःशिलाम् ॥
हरितालं च मतिमांस्ततस्तामवचारयेत्[9] ॥ ६० ॥
[10]मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्दिताम् ॥
व्रणेषु दत्त्वा तां तिष्ठेत्रींस्त्रींश्च दिवसान् परम् ॥ ६१ ॥
मेदो[11]जुष्टानगम्भीरान् दुर्गन्धांश्चूर्णशोधनैः ॥
उपाचरेत् भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्तिजैः ॥ ६२ ॥

---

१ 'अन्त·पूयान्' इति ता. । २ 'समुपाचरेत्' इति ता. । ३ 'पूतिमांसप्रतिच्छन्नान् महादोषानुदीरितै ॥ वर्तिद्रव्यैः कल्ककृतैर्यथालाभेन शोधयेत्' ॥ इति ता. । ४ 'युञ्ज्यात्' इति ता । ५ 'नृणां व्रणान्' इति ता । ६ ता० पुस्तके 'तैलेनाशुद्ध्यमानाना' इत्यादिरयमर्धश्लोको नास्ति । ७ 'व्रणाना स्थिरमांसाना तु शोध्यानां तथैव च । रसक्रियां शोधनीया कुर्याद्द्रव्यैरुदीरितै·' । इति ता. । ८ 'व्यामिश्रयेत् पुन·' इति पा० । ९ 'तानवचारयेत्' इति ता. । १० 'मातुलुङ्गरसोपेता सक्षौद्रा· सुप्रमर्दिता' ॥ व्रणेषु दत्त्वा तिष्ठेत्तु त्रीन्त्रींश्च दिवसान् परान् ॥' इति ता. । ११ 'मेदोपमृष्टान्दुर्गन्धान् गम्भीरांश्चूर्ण· शोधनैः ॥ उपाचरेद्भिषक् प्राज्ञः सूक्ष्मै· शोधनबस्तिजैः' ॥ इति ता. ।

[1]शुद्धलक्षणयुक्तानां कषायं रोपणं हितम् ॥
[2]तत्र कार्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता ॥ ६३ ॥
अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥
[3]हिता रोपणवर्त्यङ्गकृता रोपणवर्तयः ॥ ६४ ॥
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥
[4]कल्कः संरोहणः कार्यस्तिलजो मधु[5]संयुतः ॥ ६५ ॥
स माधुर्यात्तथौ[6]ष्ण्याच्च स्नेहाच्चानिलनाशनः ॥
कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्त[7]हृत् ॥ ६६ ॥
औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हित ॥
शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणैः ॥ ६७ ॥
निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ॥
पूर्वाभ्यां सर्पिषा चापि युक्तश्चाप्युपरो[8]पणः ६८ ॥
तिलवद्यवकल्कं तु केचिदाहुर्मनीषिणः ॥
शमयेद[9]विदग्धं च विदग्धमपि पाचयेत् ॥ ६९ ॥
[10]पक्कं भिनत्ति भिन्नं च शोधयेद्रोपये[11]त्तथा ॥
पित्तरक्तविषागन्तून् गम्भीरानपि च व्रणान् ॥ ७० ॥
रोपयेद्रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥
[12]कफवाताभिभूतानां व्रणानां मतिमान् भिषक् ॥ ७१ ॥

---

१ 'शुद्धलक्षणसंयुक्ते' इति ता। २ 'तच्च' इति पा०। ३ 'हिताः संरोपणा वर्त्यो वर्त्यङ्गै रोपणै कृताः' इति ता.। ४ 'कल्कस्तु रोपणः कार्यः' इति ता। ५ 'मधुकान्वितः' इति पा०। ६ 'तथैवौष्ण्यात्' इति ता.। ७ 'पित्तहा' इति ता.। ८ 'संप्ररोपणः' इति पा०। ९ 'अविदग्ध प्रशमयेद्विदग्धञ्चापि पाचयेत्' इति ता.। १० 'पक्वञ्च भिन्द्याद्भिन्नञ्च' इति ता.। ११ 'रोपयेच्च त' इति पा०। १२ 'कफवातार्दितानां तु व्रणानां तैलरोपणम् ॥ कुर्यात्तत्र यथोक्तेषु द्रव्येषु मतिमान् भिषक्' ॥ इति ता.।

कारयेद्रोपणं तैलं भेषजैस्तैर्[1]यथोदितैः ॥
अबन्ध्यानां चलस्थानां शुद्धानां[2] च प्रदुष्यताम् ॥ ७२ ॥
द्विहरिद्रायुतां कुर्याद्रोपणार्थां[3] रसक्रियाम् ॥
समानां स्थिरमांसानां त्वक्स्थानां रोपणं[4] भिषक् ॥ ७३ ॥
[5]चूर्णं विदध्यान्मतिमान् प्राक्स्थानोक्तो विधिर्यथा ॥
शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्तितः ॥ ७४ ॥
सर्वव्रणानां सामान्येनोक्तो दोषा[6]विशेषतः ॥
एष आगमसिद्धत्वात्तथैव फलदर्शनात् ॥ ७५ ॥
मन्त्रवत् संप्रयोक्तव्यो न मीमांस्यः कथञ्चन ॥
स्वबुद्ध्या[7] चापि विभजेत् कषायादिषु सप्तसु ॥ ७६ ॥
भेषजानि यथायोगं यान्युक्तानि पुरा मया ॥
आद्ये द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः ॥ ७७ ॥
स वातदुष्टे दातव्यः[8] कषायादिषु सप्तसु ॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च[9] यः स्मृतः ॥ ७८ ॥
तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु ॥
आरग्वधादिस्तु[10] गणो यश्चोष्णः परिकीर्तितः ॥ ७९ ॥
तौ देयौ कफदुष्टे तु, संसृष्टे संयुता गणाः ॥
वातात्मका[11]नुग्ररुजान् सास्रावानपि च व्रणान् ॥ ८० ॥

---

१ '°स्तैर्यथोदितैः' इति पा० । २ 'शुद्धानां चाप्ररोहताम्' इति पा० । ३ 'रोपणीयै रसक्रियां' इति ता० । 'रोपणार्थं रसक्रियां' इति च पा० । ४ 'चूर्णरोपण' इति ता । ५ 'प्राप्त विदध्यान्मतिमान् प्राक्स उक्तो विधिर्यथा' इति ता । ६ 'दोषविशेषत' इति ता । ७ 'स्वबुद्ध्या विभजेद्युक्त्या कषायादिषु योगवित् ॥ दोषोच्छ्रायेणौषधानि यान्युक्तानि पुरा मया' इति ता. । ८ 'देयस्तु' इति ता. । ९ 'काकोल्यादिश्च यो गणः' इति ता. । १० '°श्च' इति ता० । ११ 'वातोपसृष्टान्' इति ता० ।

सक्षौमयवसर्पिभिर्धूपनाङ्गैश्च धूपयेत् ॥
परिशुष्काल्पमांसानां गम्भीराणां तथैव च ॥ ८१ ॥
कुर्यादुत्सादनीयानि सर्पींष्यालेपनानि च ॥
मांसाशिनां च मांसानि भक्षयेद्विधिवन्नरः ॥ ८२ ॥
विशुद्धमनसस्तस्य मांसं मांसेन वर्धते ॥
उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥ ८३ ॥
कुर्याद्द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह ॥
कठिनानाममांसानां दुष्टानां मातरिश्वना ॥ ८४ ॥
मृद्वी क्रिया विधातव्या शोणितं चापि मोक्षयेत् ॥
वातघ्नौषधसंयुक्तान् स्नेहान् सेकांश्च कारयेत् ॥ ८५ ॥
मृदुत्वमाशुरोहं च गाढो बन्धः करोति हि ॥
व्रणेषु मृदुमांसेषु दारुणीकरणं हितम् ॥
धवप्रियङ्ग्वशोकानां रोहिण्याश्च त्वचस्तथा ॥ ८६ ॥
त्रिफलाधातकीपुष्परोध्रसर्जरसान् समान् ॥
कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत् ॥ ८७ ॥
उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ॥
तथैव खलु दुःशोध्यान् शोधयेत् क्षारकर्मणा ॥ ८८ ॥
स्रवतोऽश्मभवान्मूत्रं ये चान्ये रक्तवाहिनः ॥
निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्मणा ॥ ८९ ॥

---

१ 'मांसादानां' इति ता.। २ 'यथोक्तैस्तु' इति ता.। ३ वातघ्नौषधसंयुक्तैः स्नेहस्वेदौ च कारयेत् ॥ मृदुत्वमाशुरोहञ्च गाढबन्ध करोति हि' इति ता०। ४ 'स्वेदांश्च' इति पा०। ५ 'त्रिफलापुष्पकासीसे तथा सर्जरसं समम्' इति ता.। ६ 'दुःशोधनीयांश्च तथा' इति ता.। ७ 'स्रवतोऽश्मरिजामूत्रं ये चान्ये रक्तवाहिनः ॥ सन्धीन्नि शेषतश्छिन्नान्साधयेदग्निकर्मणा' इति ता.। 'स्रवन्तोऽश्मरिजामूत्रं ये चान्ये रक्तवाहिन. ॥ छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च साधनैः ॥ साध्यमाना न सिध्यन्ति शोध्याः स्युस्तेऽग्निकर्मणा' ॥ इति च वृ० वा०।

दुरूढत्वात्तु शुक्लानां कृष्णकर्म हितं भवेत् ॥
भल्लातकान् वासयेत्तु क्षीरे प्राङ्मूत्रभावितान् ॥
ततो द्विधा च्छेदयित्वा लौहे[1] कुम्भे निधापयेत् ॥ ९० ॥
कुम्भेऽन्यस्मिन् निखाते तु तं[2] कुम्भमथ योजयेत् ॥
मुखं मुखेन सन्धाय गोमयैर्दाहयेत्ततः[3] ॥ ९१ ॥
य:[4] स्नेहश्च्यवते तस्माद्ग्राहयेत्तं शनैर्भिषक् ॥
[5]ग्राम्यानूपशफान् दग्ध्वा सूक्ष्मचूर्णानि कारयेत् ॥ ९२ ॥
तैलेनानेन संसृष्टं[6] शुक्लमालेपयेद्व्रणम् ॥
भल्लातकविधानेन सारस्नेहांस्तु[7] कारयेत् ॥ ९३ ॥
ये च केचित् फलस्नेहा विधानं तेषु पूर्ववत्[8] ॥
दुरूढत्वात्तु कृष्णानां पाण्डुकर्म[9] हितं भवेत् ॥ ९४ ॥
सप्तरात्रं स्थितं क्षीरे छागले[10] रोहिणीफलम् ॥
तेनैव[11] पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम् ॥ ९५ ॥
नवं कपालिकाचूर्णं वैदुलं [12]सर्जनाम च ॥
[13]कासीसं मधुकं चैव क्षौद्रयुक्तं प्रलेपयेत् ॥ ९६ ॥
[14]कपित्थमुद्धृते मांसे [15]मूत्रेणाजेन पूरयेत् ॥
[16]कासीसं रोचनां तुत्थं हरितालं मनःशिलाम् ॥ ९७ ॥

---

१ 'स्नेहकुम्भेऽथ' इति ता.। २ 'कुम्भमधियोजयेत्' इति ता.। ३ दीपयेत्ततः' इति ता। ४ 'य स्नेहः प्रच्युतस्तत्र ग्राहयेत्त शनैर्भिषक्' इति ता। ५ 'ग्राम्यानूपौदकशफान् दग्ध्वा चूर्णानि कारयेत्' इति ता.। ६ 'संसृज्य' इति ता.। ७ 'सारस्नेहान् प्रयोजयेत्' इति ता.। ८ 'वक्ष्यते' इति ता.। 'कीर्तित' इति च पा.। ९ 'हितायाशुक्रिया भवेत्' इति ता.। १० 'बार्क्करे' इति ता। ११ 'तेनैव पिष्ट्वा सुश्लक्ष्ण कृष्णस्याशुकर स्मृतम्' इति ता०। १२ 'सर्जमेव च' इति ता। १३ 'कासीसं मधुकं चैव क्षौद्राक्त लेपने हितम्' इति ता.। १४ 'कपित्थान्मासमुद्धृत्य' इति ता० तथैव च वृ० वा०। १५ 'मूत्रस्याजस्य पूरयेत्' इति पा०। 'मूत्रस्याज्यस्य पूरण' इति च वृ० वा०। १६ 'कासीसं रोचना चैव हरिताल मनःशिला.॥ वेणुनिर्लेखनं चैव प्रपुन्नाडञ्च दापयेत्'॥ इति ता.।

वेणुनिर्लेखनं चापि प्रपुन्नाडरसाञ्जनम् ॥
अधस्तादर्जुनस्यैतन्मासं भूमौ निधापयेत् ॥ ९८ ॥
मासादूर्ध्वं ततस्तेन कृष्णमालेपयेद्व्रणम् ॥
कुक्कुटाण्डकपालानि कतकं मधुकं [1]समम् ॥ ९९ ॥
तथा समुद्रमण्डूकी मणिचूर्णं च दापयेत् ॥
गुटिका[2] मूत्रपिष्टास्ता व्रणानां प्रतिसारणम् ॥ १०० ॥
हस्तिदन्तमसीं कृत्वा मुख्यं चैव रसाञ्जनम् ॥
रोमाण्येतेन जायन्ते लेपात्[3]पाणितलेष्वपि ॥ १०१ ॥
चतुष्पदानां [4]त्वग्रोमखुरशृङ्गास्थिभस्मना ॥
तैलाक्ता चूर्णिता भूमिर्भवेद्[5]रोमवती पुनः ॥ १०२ ॥
कासीसं नक्तमालस्य [6]पल्लवांश्चैव संहरेत् ॥
कपित्थरसपिष्टानि रोमसंजननं परम् ॥ १०३ ॥
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति ॥
क्षुरकर्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत् ॥ १०४ ॥
([7]शङ्खचूर्णस्य भागौ द्वौ हरितालं च भागिकम् ॥
शुक्तेन सह पिष्टानि लोमशातनमुत्तमम् ॥ १०५ ॥
तैलं भल्लातकस्याथ स्नुहीक्षीरं तथैव च ॥
[8]प्रगृह्यैकत्र मतिमान् रोमशातनमुत्तमम् ॥ १०६ ॥
[9]कदलीदीर्घवृन्ताभ्यां भस्मालं लवणं शमी ।
बीजं शीतोदपिष्टं वा रोमशातनमाचरेत् ॥ १०७ ॥

---

१ 'तथा' इति ता. । २ 'तां मूत्रपिष्टां गुटिका' इति ता. । ३ 'तूर्णं' इति ता. । ४ 'त्वग्रोमनखशृङ्गास्थिभसना' इति ता. । ५ 'रोमरुहा' इति ता. । ६ 'पल्लवांश्चापि' इति ता. । ७ अयं श्लोको हस्तलिखितपुस्तके न पठ्यते ता० पुस्तके तु पठितोऽवलोक्यते । ८ 'विमृद्यैकत्र दातव्य' इति ता. । ९ ता० पुस्तके 'कदलीदीर्घवृन्ताभ्यां' इत्यादि 'आगारगोधिकापुच्छ' इत्यादिश्च द्वौ श्लोकौ नोपलभ्येते ।

आगारगोधिकापुच्छं रम्भा[1]ऽऽलं बीजमैङ्गुदम् ॥
दग्ध्वा तद्रसतैलाम्बु सूर्यपक्कं कचान्तकृत् ॥ १०८ ॥
वातदुष्टो व्रणो यस्तु रूक्षश्चात्यर्थवेदनः ॥
अधःकाये विशेषेण तत्र बस्तिर्विधीयते ॥ १०९ ॥
मूत्राघाते मूत्रदोषे शुक्रे[2]दोषेऽश्मरीव्रणे ॥
तथैवार्तवदोषे च बस्तिरप्युत्तरो हितः ॥ ११० ॥
य[3]स्माच्छुध्यति बन्धेन व्रणो याति च मार्दवम् ॥
रोहत्यपि च निःशङ्कस्तस्माद्बन्धो विधीय[4]ते ॥ १११ ॥
स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥
पत्रदानं भवेत् कार्यं यथादोषं यथर्तु च ॥ ११२ ॥
ए[5]रण्डभूर्जपूतीकहरिद्राणां तु वातजे ॥
पत्रमाश्वबलं यच्च का[6]श्मरीपत्रमेव च ॥ ११३ ॥
पत्राणि क्षीरवृक्षाणामौद[7]कानि तथैव च ॥
दूषिते रक्तपित्ताभ्यां व्रणे दद्याद्विचक्षणः ॥ ११४ ॥
पा[8]ठामूर्वागुडूचीनां काकमाचीहरिद्रयोः ॥
पत्रं[9] च शुकनासाया योजयेत् कफजे व्रणे ॥ ११५ ॥
अकर्कशमविच्छिन्नमजी[10]र्णं सुकुमारकम् ॥
अजन्तुजग्धं मृदु च पत्रं गुणवदुच्यते ॥ ११६ ॥

---

१ 'रम्भाली' इति पा० । २ 'शुक्रदोषे तथैव च' इति ता. । 'शुक्रदोषे तथाऽनिले' इति च पा० । ३ 'व्रण' शुध्यति बन्धेन मृदुत्वञ्चोपगच्छति' इति ता. । ४ 'प्रशस्यते' इति ता । ५ 'एरण्डभूर्जपूतीककाश्मर्याणां तु वातजे' इति ता. । ६ 'हरिद्रापत्रमेव च' इति ता । ७ औदकानां' इति ता । ८ 'पाठामूर्वाश्वगन्धानां' इति ता । ९ 'पत्र शुकनसायाश्च' इति ता । १० 'अजीर्णं विषवर्जितम्' इति ता ।

स्नेहमौषधसारं च[1] पट्टः पत्त्रा[2]न्तरीकृतः ॥
ना[3]दत्ते यत्ततः पत्रं लेपस्योपरि दापयेत् ॥ ११७ ॥
[4]शैत्यौष्ण्यजननार्थाय स्नेहसंग्रहणाय च ॥
दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता ॥ ११८ ॥
मक्षिका [5]व्रणमागत्य निःक्षिपन्ति यदा कृमीन् ॥
श्वयथुर्भक्षिते तैस्तु जायते भृशदारुणः ॥ ११९ ॥
तीव्रा रुजो विचित्राश्च र[6]क्तास्रावश्च जायते ॥
सुरसादिर्हितस्तत्र धावने पूरणे तथा ॥ १२० ॥
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ॥
हि[7]ता गोमूत्रपिष्टाश्च सेकः क्षारोदकेन वा ॥ १२१ ॥
प्र[8]च्छाद्य मांसपेश्या वा कृमीनपहरेद्व्रणात् ॥
विंशतिं कृमिजातीस्तु वक्ष्याम्युपरि भागशः ॥ १२२ ॥
दीर्घकालातुराणां तु कृशानां व्रणशोषिणाम् ॥
बृंहणीयो विधिः [9]सर्वः का[10]र्योऽग्निं परिरक्षता ॥ १२३ ॥
विषजुष्टस्य विज्ञानं विषनिश्चयमेव च ॥
चिकित्सितं[11] च वक्ष्यामि कल्पेषु प्रतिभागशः ॥ १२४ ॥
कण्डूमन्तः सशोफाश्च ये च जत्रूपरि व्रणाः ॥
शिरोविरेचनं तेषु वि[12]दध्यात्कुशलो भिषक् ॥ १२५ ॥

---

१ 'वा' इति ता । २ 'पट्टवस्त्रान्तराकृतम् । न दूषयति यत् पत्र' इति पा०। ३ 'तद्ददाति यतस्तस्मादौषधोपरि दापयेत्' इति ता०। 'न दूषयति यत्पत्र लेपस्योपरि दापयेत्' 'नैवादत्ते च यस्मात्तल्लेपस्योपरि दापयेत्' इति च पा०। ४ 'शीतोष्णजननार्थाय' इति ता.। ५ 'व्रणजातस्य' इति पा०। ६ 'रक्तस्राव स्रवेदपि' इति ता। ७ 'गोमूत्रपिष्टाश्च हिताः' इति ता.। ८ 'व्रण प्रच्छादयित्वा च मांसपेश्या विनिर्हरेत्' इति ता.। ९ 'कार्य.' इति ता। १० 'कार्योऽग्नि' इति पा०। ११ 'चिकित्सित तु वक्ष्यामि तत्कल्पेषु विभागशः' इति ता.। १२ 'विधेय वक्ष्यते तथा' इति ता।

रुजावन्तोऽनिलाविष्टा रूक्षा ये चोर्ध्वजत्रुजाः ॥
व्रणेषु तेषु कर्तव्यं नस्यं[1] वैद्येन जानता ॥ १२६ ॥
दोषप्रच्यावनार्थाय रुजादाहक्षयाय च ॥
जिह्वादन्तसमुत्थस्य हरणार्थं मलस्य च ॥ १२७ ॥
शोधनो रोपणश्चैव व्रणस्य मुखजस्य वै ॥
उष्णो वा यदि वा शीतः कवलग्रह इष्यते ॥ १२८ ॥
ऊर्ध्वजत्रुगतान् रोगान् व्रणांश्च[2] कफवातजान् ॥
शोफस्रावरुजायुक्तान् धूमपानैरुपाचरेत् ॥ १२९ ॥
क्षतोष्मणो निग्रहार्थं सन्धानार्थं तथैव च ॥
सद्योव्रणेष्वायतेषु क्षौद्रसर्पिर्[3]विधीयते ॥ १३० ॥
अवगाढास्त्वणुमुखा ये व्रणाः शल्यपीडिताः ॥
निवृत्तहस्तोद्धरणा यन्त्रं तेषु विधीयते ॥ १३१ ॥
लघुमात्रो लघुश्चैव स्निग्ध[4] उष्णोऽग्निदीपनः ॥
सर्वव्रणिभ्यो देयस्तु सदाऽऽहारो विजानता ॥ १३२॥
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः ॥
रक्षाविधानैरुद्दिष्टैर्यमैः[5] सनियमैस्तथा ॥ १३३ ॥
षण्मूलोऽष्टपरिग्राही पञ्चलक्षणलक्षितः ॥
षष्ट्या[6] विधानैर्निर्दिष्टैश्चतुर्भिः साध्यते व्रणः ॥ १३४ ॥
[7]योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया ॥
द्रव्याणां तत्समानानां तत्रावापो न दुष्यति ॥ १३५ ॥

---

१ 'नस्य स्नेहेन जानता' इति ता । २ 'व्रणान्वा' इति ता. । ३ 'मधुसर्पि॰' इति ता. । ४ 'स्निग्धोष्णो वह्निदीपनः' इति ता । ५ 'सदा चापि प्रवर्तते' इति ता. । ६ 'षष्ट्या विधानैः प्राप्नोति' इति ता. । ७ 'अल्पग्रन्थ मृगयता योगो योऽल्पौषधः कृतः' इति ता० । 'अल्पग्रन्थं मृगयता योगो योऽल्पौषधैः कृतः' इति च पा० ।

प्रसङ्गाभिहितो यो वा बहु दुर्लभभेषजः ॥
यथोपपत्ति[1] तत्रापि कार्यमेव चिकित्सितम् ॥ १३६ ॥
गणोक्तमपि[2] यद्द्रव्यं भवेद्व्याधावयौगिकम् ॥
तदुद्धरेद्यौगिकं तु प्रक्षिपेदप्यकीर्तितम् ॥ १३७ ॥
उपद्रवास्तु विविधा व्रणस्य व्रणितस्य च ॥
तत्र गन्धादयः पञ्च व्रणस्योपद्रवाः स्मृताः ॥ १३८ ॥
ज्वरातिसारौ मूर्च्छा च हिक्का च्छर्दिररोचकः ॥
श्वासकासाविपाकाश्च तृष्णा च व्रणितस्य तु ॥ १३९ ॥
व्रणक्रियास्वेवमासु[3] व्यासेनोक्तास्वपि क्रियाम् ॥
भूयोऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते ॥ १४० ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने द्विव्रणीय-
चिकित्सितं नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः।

अथातः सद्योव्रणचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
धन्वन्तरिर्धर्मभृतां वरिष्ठो वाग्विशारदः ॥
विश्वामित्रसुतं[4] शिष्यमृषिं सुश्रुतमन्वशात् ॥ ३ ॥
नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः ॥
नानारूपा[5] व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणम् ॥ ४ ॥
आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा ॥

---

१ 'यथोपपत्त्या' इति ता। २ ता० पुस्तके १३७-१३८-१३९ तमाः श्लोका नोपलभ्यन्ते। ३ 'व्रणक्रियास्विमास्वेव समासोक्ता तु या क्रिया ॥ भूयोऽभिधास्याम्युपरि तथा सद्योव्रणेषु ताम्' ॥ इति ता.। ४ 'विश्वामित्रात्मजमृषिं शिष्य' इति ता। ५ 'भवन्ति नानाकृतयो व्रणांस्तास्तु निबोध मे' इति ता।

अर्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा ॥ ॥ ५ ॥
शरावनिम्नमध्याश्च[1] यवमध्यास्तथाऽपरे ॥
एवंप्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥ ६ ॥
दोषजा वा स्वयं भिन्नाः न तु वैद्यनिमित्तजाः ॥
भिषग्व्रणाकृतिज्ञो[2] हि न मोहमधिगच्छति ॥ ७ ॥
भृशं दुर्दर्शरूपेषु व्रणेषु विकृतेष्वपि ॥
अनन्ताकृतिरागन्तुः[3] स भिषग्भिः पुरातनैः ॥ ८ ॥
समासतो लक्षणतः षड्विधः परिकीर्तितः ॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ॥ ९ ॥
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥
तिरश्चीन[4] ऋजुर्वाऽपि यो व्रणाश्चायतो भवेत् ॥ १० ॥
गात्रस्य[5] पातनं चापि छिन्नमित्युपदिश्यते ॥
कुन्तशक्त्यृष्टिखङ्गाग्रविषाणादिभिराशयः[6] ॥ ११ ॥
हतः[7] किञ्चित् स्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥
स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ॥ १२ ॥
हृदुण्डुकः फुप्फुसश्च कोष्ठ[8] इत्यभिधीयते ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ॥ १३ ॥
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥
मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द[9] एव च ॥ १४ ॥

---

१ 'शरावत्रन्निम्नमध्याः' इति पा० । २ 'व्रणाकृतिज्ञो हि भिषक् न मोहमुपगच्छति ॥ दुर्दर्शनेष्वपि भृश व्रणेषु विकृतेष्वपि' इति ता । ३ 'अनेकाकृतिरागन्तुः' इति ता । ४ 'तिर्यक्चीन'' इति ता । ५ 'गात्रपाती न वा तद्धि छिन्नलक्षणमुच्यते ता० । ६ 'शक्तिकुन्तेषु खड्गादिविषाणैराशयो हतः ॥ यत्किञ्चित्स्रवते तद्धि भिन्नलक्षणमुच्यते' ॥ इति ता. । ७ 'हतो यः स्रवते तद्धि' इति पा० । ८ 'कोष्ठमित्यभिधीयते' इति ता. । ९ 'मूर्च्छाध्मानतृषा श्वासस्त्वभक्तच्छन्द एव च ॥ विण्मूत्रसङ्गश्च तथा स्वेदास्रावोऽक्षिरक्तता' ॥ इति ता ।

विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ॥ १५ ॥
हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयेत्[1] पुनः ॥ १६ ॥
आध्मानमतिमात्रं च शूलं च भृशदारुणम् ॥
पक्वाशयगते चापि रुजो[2] गौरवमेव च ॥ १७ ॥
शीतता[3] चाप्यधो नाभेः खेभ्यो रक्तस्य चागमः ॥
[4]अभिन्नेऽप्याशये[5]ऽन्त्राणां खैः सूक्ष्मैरन्त्रपूरणम् ॥ १८ ॥
पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवम् ॥
सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयाद्[6]विना ॥ १९ ॥
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥
नातिच्छिन्नं नाति[7]भिन्नमुभयोर्लक्षणान्वितम् ॥ २० ॥
विषमं व्रणमङ्गे यत्तत् क्षतं त्वभिनिर्दिशेत् ॥
प्रहारपीडनाभ्यां तु यदङ्गं पृथुतां गतम् ॥ २१ ॥
सास्थि तत् पिच्चितं विद्यान्मज्ज[8]रक्तपरिप्लुतम् ॥
विगत[9]त्वग्यदङ्गं हि संघर्षादन्यथाऽपि वा ॥ २२ ॥
उषास्रावान्वितं तत्तु घृष्टमित्यु[10]पदिश्यते ॥
छिन्ने भिन्ने तथा विद्धे क्षते वाऽसृगतिस्रवेत् ॥ २३ ॥

---

१ 'छर्दयत्यपि' इति ता.। २ 'रुजा' इति ता। ३ 'अध.काये विशेषेण शीतता च भवन्ति हि' इति ता०। ४ अयमष्टादशश्लोकस्योत्तरार्धं एकोनविंशतमश्लोकस्य पूर्वार्धश्च ता० पुस्तके नोपलभ्यते। ५ 'अभिन्नोप्याशयः सूक्ष्मै स्रोतोभिरभिपूर्यते। असृजास्यन्दमानेन पार्श्वैर्मूत्रेणबस्तिवत्'। इति वृ० वा०। ६ 'ह्याशय विना' इति ता.। ७ 'नातिविद्ध' इति ता.। ८ 'मज्जा' इति ता। ९ 'घर्षणादभिघाताद्वा यदङ्ग विगतत्वचम्' इति ता.। १० 'अभिधीयते' इति ता०।

र[1]क्तक्षयाद्रुजस्तत्र करोति पवनो भृशम् ॥
स्नेहपानं हितं तत्र तत्सेको विहितस्तथा ॥ २४ ॥
वेशवारैः सकृशरैः सुस्निग्धैश्चोपनाहनम् ॥
धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च ॥ २५ ॥
वातघ्नौषधसिद्धैश्च स्नेहैर्बस्तिर्विधीयते ॥
पिच्चिते च विघृष्टे च नातिस्रवति शोणितम् ॥ २६ ॥
[2]अगच्छति भृशं तस्मिन् दाहः पाकश्च जायते ॥
तत्रोष्मणो निग्रहार्थं [3]तथा दाहप्रपाकयोः ॥ २७ ॥
शीत[4]मालेपनं कार्यं परिषेकश्च शीतलः ॥
षट्स्वेतेषु यथोक्तेषु छिन्नादिषु समासतः ॥ २८ ॥
ज्ञेयं [5]समर्पितं सर्वं सद्योव्रणचिकित्सितम् ॥
अत ऊर्ध्वं प्रवक्ष्यामि छिन्नानां तु चिकित्सितम् ॥ २९ ॥
ये[6] व्रणा विवृताः केचिच्छिरःपार्श्वावलम्बिनः ॥
तान् सीव्येद्विधिनोक्तेन बध्नीयाद्गाढमेव च ॥ ३० ॥
कर्णं [7]स्थानादपहृतं स्थापयित्वा यथास्थितम् ॥
सीव्येद्यथोक्तं तैलेन [8]स्रोतश्चाभिप्रतर्पयेत् ॥ ३१ ॥
कृकाटिकान्ते छिन्ने तु गच्छत्यपि समीरणे ॥
सम्यङ्निवेश्य बध्नीयात् सीव्येच्चापि निरन्तरम् ॥ ३२ ॥
[9]आजेन सर्पिषा चैवं परिषेकं तु कारयेत् ॥
उत्तानोऽन्न समश्नीयाच्छयीत च सुयन्त्रितः ॥ ३३ ॥

---

१ 'रक्तक्षयादन्नरुजा·' इति ता० । २ 'तस्मिन्न गच्छति भृश' इति ता. । ३ 'दाहपाकभयाय च' इति ता. । ४ 'शीतमालेपन सेक शुद्धी रक्तविमोक्षणम्' इति पा० । ५ 'ससर्पिष' इति ता. । ६ 'ये व्रणा विवृताः केचिच्छिन्ना पार्श्वावलम्बिन' इति ता. । ७ 'स्थानादपोढन्तु' इति ता. । ८ 'स्रोतश्चाप्यभितर्पयेत्' इति ता. । ९ 'आद्येन सर्पिषा चैव परिषेको विधीयते' इति ता. ।

शाखासु [1]पतितांस्तिर्यक् प्रहारान् विवृतान् भृशम् ॥
सीव्येत् सम्यङ्गिवेश्याशु सन्ध्यस्थीन्यनुपूर्वशः ॥ ३४ ॥
बद्ध्वा वे[2]ल्लितकेनाशु ततस्तैलेन सेचयेत् ॥
[3]चर्मणा गोफणाबन्धः कार्यो यो वा हितो भवेत् ॥ ३५ ॥
पृष्ठे व्रणो यस्य भवेदु[4]त्तानं शाययेत्तु तम् ॥
अतोऽन्यथा चोरसिजे [5]शाययेत् पुरुषं व्रणे ॥ ३६ ॥
छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन बुद्धिमान् ॥
बध्नीयात् कोशबन्धेन प्राप्तं [6]कार्यं च रोपणम् ॥ ३७ ॥
चन्दनं पद्मकं रोध्रमुत्प[7]लानि प्रियङ्गवः ॥
हरिद्रा मधुकं चैव प[8]यः स्यादत्र चाष्टमम् ॥ ३८ ॥
तैलमेभिर्विपक्कं [9]तु प्रधानं व्रणरोपणम् ॥
चन्दनं कर्कटाख्या च सहे मांसाह्वयाऽमृता ॥ ३९ ॥
हरेणवो मृणालं व [10]त्रिफला पद्मकोत्पले ॥
त्रयोदशाङ्गं त्रिवृतमेतद्वा पयसाऽन्वितम् ॥ ४० ॥
तैलं विपक्कं सेका[11]र्थे हितं [12]तु व्रणरोपणे ॥
अत ऊर्ध्वं प्रवक्ष्यामि भिन्नानां तु चिकित्सितम् ॥ ४१ ॥
भिन्नं नेत्रमकर्मण्यमभिन्नं लम्बते तु यत् ॥
तन्निवेश्य यथास्थानमव्याविद्धसिरं शनैः ॥ ४२ ॥

---

१ 'तिर्यक् पतितान्' इति ता.। २ 'स्यूत्वावेल्लितबन्धेन बध्नीयात् घनवाससा। चर्मणा गोष्फणाबन्धः कार्यश्चासङ्गते व्रणे'। इति वृ० वा०। ३ 'चर्मणा गोष्फणाबन्ध कार्यश्चासे हतेऽसिना' इति ता.। ४ 'उत्तानः स शयीत च' इति ता.। ५ 'शयीन पुरुषो व्रणे' इति ता.। ६ 'कुर्याच्च' इति ता.। ७ 'उत्पलादि' इति ता.। ८ 'पयश्चाष्टममेव तु' इति ता.। ९ 'स्यात्' इति ता.। १० 'त्रिफला पद्मकोत्पलैः' इति ता.। ११ 'सेकाय' इति ता.। १२ 'तद्' इति ता.।

पीडयेत् पाणिना सम्यक् पक्ष्मपक्ष्मान्तरेण तु ॥
ततोऽस्य तर्पणं कार्यं नस्यं चानेन सर्पिषा ॥ ४३ ॥
[1]आजं घृतं क्षीरपात्रं मधुकं चोत्पलानि च ॥
जीवकर्षभकौ चैवं[2] पिष्ट्वा सर्पिर्विपाचयेत् ॥ ४४ ॥
सर्वनेत्राभिघाते[3] तु सर्पिरेतत् प्रशस्यते ॥
[4]उदरान्मेदसो वर्तिर्निर्गता यस्य देहिनः ॥ ४५ ॥
कषायभस्ममृत्कीर्णां बद्ध्वा सूत्रेण सूत्रवित् ॥
अग्नितप्तेन[5] शस्त्रेण छिन्द्यान्मधुसमायुतम् ॥ ४६ ॥
[6]बद्ध्वा व्रणं सुजीर्णेऽन्ने सर्पिषः पानमिष्यते ॥
स्नेहपानादृते चापि पयःपानं विधीयते ॥ ४७ ॥
शर्करामधुयष्टिभ्यां लाक्षया वा श्वदंष्ट्रया ॥
चित्रासमन्वितं चैव रुजादाहविनाशनम् ॥ ४८ ॥
[7]आटोपो मरणं वा स्याच्छूलो वाऽच्छिद्यमानया ॥
मेदोग्रन्थौ तु यत्तैलं वक्ष्यते तच्च[8] योजयेत् ॥ ४९ ॥
त्वचोऽतीत्य सिरादीनि भित्त्वा वा परिहृत्य वा ॥
कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान् ॥ ५० ॥
तत्रान्तर्लोहितं पाण्डु शीतपादकराननम् ॥
शीतोच्छ्वासं रक्तनेत्रमानद्धं च विवर्जयेत् ॥ ५१ ॥

---

१ 'अजाघृत' इति ता. । २ 'चापि' इति ता. । ३ 'सर्वनेत्राभिघातेषु' इति ता. । ४ 'उदरान्मेदसोवर्तिं निर्गता भस्मना मृदा । अवकीर्य कषायैर्वा श्लक्ष्णैर्मूले ततः समम् ॥ दृढ च बध्वा सूत्रेण वर्धयेत् कुशलो भिषक् । तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु' ॥ इति वृ० वा० । ५ 'सम्यक् छिन्द्याद्व्रण तच्च क्षौद्रेणाभ्यज्य वेष्टयेत्' इति ता. । ६ ता० पुस्तकेऽमू सप्तचत्वारिंशत्तमाष्टाचत्वारिंशत्तमौ श्लोकौ नोपलभ्येते । ७ 'अच्छिद्यमाना मरण कुर्यादाटोपमेव वा' इति ता. । ८ 'तत्तु' इति ता. ।

आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥
पक्काशयस्थे देयं च विरेचनमसंशयम् ॥ ५२ ॥
आस्थापनं च निःस्नेहं कार्यमुष्णैर्विशोधनैः ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च ॥ ५३ ॥
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ॥
अतिनिःस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक् ॥ ५४ ॥
स्वमार्गप्रतिपन्नास्तु यस्य विण्मूत्रमारुताः ॥
व्युपद्रवः[1] स भिन्नेऽपि कोष्ठे जीवति मानवः ॥ ५५ ॥
अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं नान्यथा भवेत् ॥
[2]पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु[3] ॥ ५६ ॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ॥
प्रवेशयेत् कृत्तनखो[4] घृतेनाक्तं शनैः शनैः ॥ ५७ ॥
प्रवेशयेत् क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतम् ॥
अङ्गुल्याऽभिमृशेत् कण्ठं जलेनोद्वेजयेदपि ॥ ५८ ॥
[5]हस्तपादेषु[6] संगृह्य समुत्थाप्य[7] महाबलाः ॥
भवत्यन्तःप्रवेशस्तु यथा निर्धुनुयुस्तथा ॥ ५९ ॥
तथाऽन्त्राणि विशन्त्यन्तः स्वां कलां पीडयन्ति च ॥
[8]व्रणाल्पत्वाद्बहुत्वाद्वा दुष्प्रवेशं भवेत्तु यत् ॥ ६० ॥
तदा[9]पाट्य प्रमाणेन भिषगन्त्रं प्रवेशयेत् ॥
यथास्थानं निविष्टे च व्रणं सीव्येद[10]तन्द्रितः ॥ ६१ ॥

---

१ 'निरुपद्रवसभिन्ने' इति ता. । २ 'अलङ्गलशिरोग्रस्त' इति ता० । 'उलुङ्गिलशिरोग्रस्त' इति वृ० वा० । 'अलाङ्गुलशिरोग्रस्त' इति च गयी । ३ 'हि' इति ता. । ४ 'क्लृप्तनखो' इति ता. । ५ ता० पुस्तकेऽयमेकोनषष्टितमः श्लोको नोपलभ्यते । ६ 'हस्तपादे तु' इति पा० । ७ 'समुत्क्षिप्य' इति पा० । ८ 'व्रणसौक्ष्म्याद्बहुत्वाद्वा दुष्प्रवेशन्तु यद्भवेत्' इति ता. । ९ 'तद्विपाट्य' इति ता. । १० 'सीव्यमतन्द्रितः' इति ता. ।

स्थानादपेतमादत्ते प्राणान् गुपितमेव वा ॥
वेष्टयित्वा तु पट्टेन घृतसेकं प्रदापयेत् ॥ ६२ ॥
घृतं[1] पिबेत् सुखोष्णं च चित्रातैलसमन्वितम् ॥
मृदुक्रियार्थं शकृतो वायोश्चाधःप्रवृत्तये ॥ ६३ ॥
ततस्तैलमिदं कुर्याद्रोपणार्थं चिकित्सकः ॥
त्वचोऽश्वकर्णधवयोर्मोचकीमेषशृङ्गयोः[2] ॥ ६४ ॥
शल्लक्यर्जुनयोश्चापि विदार्याः क्षीरिणां तथा ॥
बलामूलानि चाहृत्य तैलमेतैर्विपाचयेत् ॥ ६५ ॥
[3]व्रणं संरोपयेत्तेन वर्षमात्रं यतेत च ॥
पादौ निरस्तमुष्कस्य जलेन प्रोक्ष्य चाक्षिणी ॥ ६६ ॥
प्रवेश्य[4] तुन्नसेवन्या मुष्कौ सीव्येत्ततः परम् ॥
[5]कार्यो गोफणिकाबन्धः कट्यामावेश्य[6] यन्त्रकम् ॥ ६७ ॥
न कुर्यात् स्नेहसेकं च तेन[7] क्लिद्यति हि व्रणः ॥
कालानुसार्यागुर्वेलाजातीचन्दनपद्मकैः[8] ॥ ६८ ॥
शिलादार्व्यमृतातुत्थैस्तैलं कुर्वीत रोपणम् ॥
[9]शिरसोऽपहृते शल्ये बालवर्तिं निवेशयेत् ॥ ६९ ॥
बालवर्त्यामदत्तायां मस्तुलुङ्गं व्रणात् स्रवेत् ॥
हन्यादेनं ततो वायुस्तस्मादेवमुपाचरेत्[10] ॥ ७० ॥

---

१ 'पयः' इति ता.। २ 'धातकीमेषशृङ्गयो' इति ता.। ३ 'व्रणं सरोपयेत्तेन रक्षेत्संवत्सरञ्च तत्' इति ता। ४ 'प्रवेश्य मुष्कौ सूत्रेण तूनीसेवनसेवितम्' इति ता.। ५ 'कार्यश्च गो॰फणो बन्ध॰' इति ता.। ६ 'कट्यामावेष्ट्य' इति पा०। ७ 'तेन प्रक्लिद्यते व्रण' इति ता.। ८ 'कालानुसारीमगुरु चन्दन देवदारु च॥ मन॰शिलाले चाहृत्य तैलं कुवीत रोपणम्' इति ता.। ९ 'शीर्षाद्यपहृते शल्ये बालवर्ति प्रवेशयेत्' इति ता.। १० 'तस्मादेनमुपाचरेत्' इति ता.।

व्रणे रोहति चैकैकं शनैर्बालमपक्षिपेत्[1] ॥
गात्रादपहृतेऽन्यस्मात्[2] स्नेहवर्तिं प्रवेशयेत् ॥ ७१ ॥
कृते[3] निःशोणिते चापि विधिः सद्यःक्षते हितः ॥
दूरावगाढाः सूक्ष्माः स्युर्ये व्रणास्तान् विशोणितान् ॥ ७२ ॥
कृत्वा[4] सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत् ॥
समङ्गां[5] रजनीं पद्मां त्रिवर्गं तुत्थमेव च ॥ ७३ ॥
विडङ्गं[6] कटुकां पथ्यां गुडूचीं सकरञ्जिकाम् ॥
संहृत्य विपचेत् काले तैलं रोपणमुत्तमम् ॥ ७४ ॥
तालीशं[7] पद्मकं मांसी हरेण्वगुरुचन्दनम् ॥
हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ ७५ ॥
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ॥
क्षते क्षतविधिः कार्यः पिच्चिते भग्नवद्विधिः ॥ ७६ ॥
घृष्टे रुजो विगृह्याशु चूर्णैरुपचरेद्व्रणम् ॥
विश्लिष्टदेहं पतितं मथितं हतमेव च[8] ॥ ७७ ॥
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशनम् ॥
अयमेव विधिः कार्यः क्षीणे मर्महते तथा ॥ ७८ ॥
रोपणे[9] सपरीषेके पाने च व्रणिनां सदा ॥
तैलं घृतं वा[10] संयोज्यं शरीरर्तूनवेक्ष्य हि ॥ ७९ ॥

---

१ 'उपक्षिपेत्' इति ता.। २ 'तस्मिन्' इति ता०। ३ 'नि शोणिते चापि कृते' इति ता.। ४ 'कृत्वा नेत्रेण सूक्ष्मेण' इति ता०। ५ 'पद्मां समङ्गा रजनी त्रिवर्गं तुत्थमेवच ॥ सहृत्य विपचेत् काले तैल रोपणमुत्तमम्' ॥ इति ता.। ६ ता० पुस्तकेऽस्मिन्पाठे 'विडङ्ग कटुका पथ्यां गुडूची सकरञ्जिकाम्' इत्ययमर्धश्लोको न पठ्यते। ७ अत्र रोपणार्थमुपदिष्ट यत्तालीशादि तैल तत्ता० पुस्तके पठित नावलोक्यते। ८ 'वा' इति ता०। ९ 'रोपणे चैव सेके च' इति ता.। १० 'वावचार्य' इति ता.।

घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ ॥
सद्योव्रणेषु देयानि तानि वैद्येन जानता ॥ ८० ॥
सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् ॥
सर्पिषा नातिशीतेन बलातैलेन वा पुनः ॥ ८१ ॥
समङ्गां[1] रजनीं पद्मां पथ्यां तुत्थं सुवर्चलाम् ॥
पद्मकं रोध्रमधुकं विडङ्गानि हरेणुकाम्[2] ॥ ८२ ॥
तालीशपत्रं नलदं चन्दनं पद्मकेशरम् ॥
मञ्जिष्ठोशीरलाक्षाश्च क्षीरिणां चापि पल्लवान् ॥ ८३ ॥
प्रियालबीजं[3] तिन्दुक्यास्तरुणानि फलानि च ॥
यथालाभं[4] समाहृत्य तैलमेभिर्विपाचयेत् ॥ ८४ ॥
सद्योव्रणानां सर्वेषामदुष्टानां तु रोपणम् ॥
कषायमधुराः शीताः क्रियाः स्निग्धाश्च योजयेत् ॥ ८५ ॥
सद्योव्रणानां सप्ताहं पश्चात् पूर्वोक्तमाचरेत् ॥
दुष्टव्रणेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ॥ ८६ ॥
विशोषणं तथाऽऽहारः शोणितस्य च मोक्षणम् ॥
कषायं[5] राजवृक्षादौ सुरसादौ च धावनम् ॥ ८७ ॥
तयोरेव कषायेण तैलं शोधनमिष्यते ॥
क्षारकल्पेन[6] वा तैलं क्षारद्रव्येषु साधितम् ॥ ८८ ॥
द्रवन्ती चिरबिल्वश्च दन्ती चित्रकमेव च ॥
पृथ्वीका निम्बपत्राणि कासीसं तुत्थमेव च ॥ ८९ ॥
त्रिवृत्तेजोवती[7] नीली हरिद्रे सैन्धवं तिलाः ॥

---

१ 'पद्मां समङ्गां रजनी' इति ता०। २ 'हरेणव०' इति ता.। ३ 'पियालबीजं' इति ता.। ४ 'यथालाभेन संहृत्य तैल धीरो विपाचयेत्' इति ता.। ५ 'कषायमारग्वधादि सुरसाद्यञ्च शोधनम् ॥ कषाययोरेतयोस्तु तैलं शोधनमिष्यते' ॥ इति ता.। ६ 'क्षारकल्केन' इति पा०। ७ 'त्रिवृता नीलिनी श्यामा हरिद्रा सैन्धव शिला ॥ नीपः कदम्बः सुवहा शुकाख्य

भूमिकदम्बः सुवहा शुकाख्या लाङ्गलाह्वया ॥ ९० ॥
नैपाली जालिनी चैव मदयन्ती मृगादनी ॥
सुधामूर्वार्ककीटारिहरितालकरञ्जिकाः ॥ ९१ ॥
यथोपपत्ति कर्तव्यं तैलमेतैस्तु शोधनम् ॥
घृतं वा यदि वा प्राशं कल्काः संशोधनास्तथा ॥ ९२ ॥
सैन्[1]धवत्रिवृदेरण्डपत्रकल्कस्तु वातिके ॥
त्रिवृद्धरिद्रामधुककल्कः पैत्ते तिलैर्युतः ॥ ९३ ॥
कफजे तिलतेजोह्वादन्तीस्वर्जिकचित्रकाः ॥
दुष्टव्रणविधिः कार्यो मेह[2]कुष्ठव्रणेष्वपि ॥ ९४ ॥
षड्विधः प्राक् प्रदिष्टो यः सद्योव्रणविनिश्चयः ॥
नातः शक्यं परं वक्तुमपि निश्चित[3]वादिभिः ॥ ९५ ॥
उपसर्गैर्निपातैश्च[4] तत्तु पण्डि[5]तमानिनः ॥
[6]केचित् संयोज्य भाषन्ते बहुधा मानगर्विताः ॥ ९६ ॥
बहु तद्भाषितं तेषां षट्[7]स्वेष्वेवावतिष्ठते ॥
विशेषा इव सामान्ये षट्[8]त्वं तु परमं मतम् ॥ ९७ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने सद्योव्रणचिकित्सितं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

लाङ्गलाह्वयम् ॥ मृगादनी मदयन्ती नेपाली जालिनी सुरा ॥ स्नुही चार्कविडङ्गानि हरितालकरञ्जिका ॥ यथोपपत्त्या कर्तव्य तैलमेतेषु शोधनम्' ॥ इति ता.। १ ता० पुस्तके त्रिनवतितम· श्लोकश्चतुर्नवतितमश्लोकस्य पूर्वार्धश्च नोपलभ्येते। २ 'कुष्ठमेहव्रणेष्वपि' इति ता० 'मेहिकुष्ठिव्रणेषु' इति च पा०। ३ 'पण्डितमानिना' इति ता। ४ 'तु' इति ता.। ५ 'पण्डितवादिनः' इति ता.। ६ 'सयोज्य केचिद्भाषन्ते' इति ता। ७ 'षट्स्वेतेषु निरुद्ध्यते' इति ता। ८ 'तस्मात् षट्क पर मतम्' इति ता०। षट्कं तु परमं मतम्' इति च पा०।

# तृतीयोऽध्यायः ।

अथातो भग्नानां चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च[1] ॥
उपद्रवैर्वा[2] जुष्टस्य भग्नं[3] कृच्छ्रेण सिध्यति ॥ ३ ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम् ॥
व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च ॥ ४ ॥
शालिर्मांसरसः[4] क्षीरं सर्पिर्यूषः सतीनजः ॥
बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता ॥ ५ ॥
मधूकोदुम्बराश्वत्थपलाशककुभत्वचः[5] ॥
वंशसर्जवटानां च कुशार्थमुपसंहरेत् ॥ ६ ॥
आलेपनार्थं[6] मञ्जिष्ठां मधुकं रक्तचन्दनम् ॥
शतधौतघृतोन्मिश्रं शालिपिष्टं च संहरेत् ॥ ७ ॥
सप्ताहादथ[7] सप्ताहात् सौम्येष्वृतुषु बन्धनम् ॥
साधारणेषु कर्तव्यं पञ्चमे पञ्चमेऽहनि ॥ ८ ॥
आग्नेयेषु त्र्यहात् कुर्याद्भग्नदोषवशेन वा ॥
तत्रातिशिथिलं बद्धे सन्धिस्थैर्यं न जायते ॥ ९ ॥
गाढेनापि त्वगादीनां शोफो रुक् पाक एव च ॥
तस्मात् साधारणं बन्धं भग्ने शंसन्ति तद्विदः ॥ १० ॥

---

१ 'वा' इति ता । २ विशिष्टस्य' इति ता । ३ 'भग्न' इति ता. । ४ 'मांस मांसरस क्षीर' इति ता । ५ 'पलाशोदुम्बराश्वत्थकदम्बनिचुलत्वच· ॥ वशसर्जार्जुनादीना कुशार्थमुपसंहरेत्' ॥ इति ता । ६ 'आलेपनार्थे मञ्जिष्ठां मधुकं चाम्लपेषितम् ॥ शतधौतघृतोन्मिश्र शालिपिष्ट च लेपनम्' ॥ इति ता. । ७ 'सप्तरात्रात्सप्तरात्रात् सौम्येष्वृतुषु बन्धनम् ॥ काले तु समशीतोष्णे पञ्चरात्रान्निबन्धयेत् ॥ कर्तव्यञ्च त्रिरात्र स्यात्तथाग्नेयेषु जानता' ॥ इति ता.।

न्यग्रोधादिकषायं तु सुशीतं परिषेचने ॥
पञ्चमूलीविपक्कं[1] तु क्षीरं कुर्यात् सवेदने ॥ ११ ॥
सुखोष्णमवचार्यं वा चक्रतैलं विजानता ॥
विभज्य[2] कालं दोषं च दोषघ्नौषधसंयुतम् ॥ १२ ॥
परिषेकं प्रदेहं च विदध्याच्छीतमेव च ॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥ १३ ॥
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ॥ १४ ॥
प्रतिसार्य कषायैस्तु शेषं भग्नवदाचरेत् ॥
प्रथमे वयसि त्वेवं भग्नं सुकरमादिशेत् ॥ १५ ॥
अल्पदोषस्य जन्तोस्तु काले च शिशिरात्मके ॥
प्रथमे वयसि त्वेवं मासात् सन्धिः स्थिरो भवेत् ॥ १६ ॥
मध्यमे द्विगुणात् कालादुत्तरे त्रिगुणात् स्मृतः ॥
अवनामितमुन्नह्येदुन्नतं चावपीडयेत् ॥ १७ ॥
आञ्छेदतिक्षिप्तमधो गतं चोपरि वर्तयेत् ॥
आञ्छनैः[3] पीडनैश्चैव सङ्क्षेपैर्बन्धनैस्तथा ॥ १८ ॥
सन्धीञ्छरीरे सर्वांस्तु चलानप्यचलानपि ॥
एतैस्तु स्थापनोपायैः स्थापयेन्मतिमान् भिषक् ॥ १९ ॥
उत्पिष्टमथ[4] विश्लिष्टं सन्धिं वैद्यो न घट्टयेत् ॥
तस्य शीतान् परीषेकान् प्रदेहांश्चावचारयेत् ॥ २० ॥
अभिघाते हृते सन्धिः स्वां याति प्रकृतिं पुनः ॥
घृतदिग्धेन पट्टेन वेष्टयित्वा यथाविधि ॥ २१ ॥

---

१ 'पञ्चमूलीकषायन्तु कुर्यात् क्षीर सवेदने' इति ता । २ ता० पुस्तकेऽय द्वादशश्लोकस्योत्तरार्धस्त्रयोदशश्लोकस्य पूर्वार्धश्च नोपलभ्येते । ३ 'आञ्छनोत्पीडनोन्नामसंक्षोभैर्बन्धनैस्तथा' इति ता । ४ ता० पुस्तके 'उत्पिष्टमथविश्लिष्टम्' इत आरभ्य 'यथावद्बन्धमाचरेत्' इत्यन्तः पाठो नोपलभ्यते ।

पट्टोपरि कुशान् दत्त्वा यथावद्बन्धमाचरेत् ॥
[1]प्रत्यङ्गभग्नस्य विधिरत ऊर्ध्वं प्रवक्ष्यते ॥ २२ ॥

नखसन्धि समुत्पिष्टं रक्तानुगतमारया ॥
अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत् ॥ २३ ॥

भग्नां वा सन्धिमुक्तां वा स्थापयित्वाऽङ्गुलीं स[2]माम् ॥
अणुनाऽऽवेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ॥ २४ ॥

अभ्यज्य सर्पिषा पादं [3]तलभग्नं कुशोत्तरम् ॥
वस्त्रपट्टेन बध्नीयान्न [4]च व्यायाममाचरेत् ॥ २५ ॥

[5]अभ्यज्यायामयेज्जङ्घामूरुं च सुसमाहितः ॥
दत्त्वा वृक्षत्वचः शी[6]तां वस्त्रपट्टेन वेष्टयेत् ॥ २६ ॥

[7]मतिमांश्चक्रयोगेन ह्याञ्छेदूर्वस्थि निर्गतम् ॥
स्फुटितं पिच्चितं चापि बध्नीयात् पूर्ववद्भिषक् ॥ २७ ॥

[8]आञ्छेदूर्ध्वमधो वाऽपि कटिभग्नं तु मानवम् ॥
ततः स्थानस्थिते संधौ बस्तिभिः समुपाचरेत् ॥ २८ ॥

पर्शुकास्वथ भग्नासु घृताभ्यक्तस्य तिष्ठतः ॥
द[9]क्षिणास्वथवा वामास्वनुमृज्य निबन्धनीः ॥ २९ ॥

ततः कवलिकां दत्त्वा वेष्टयेत् [10]सुसमाहितः ॥
तैलपूर्णे कटाहे वा द्रो[11]ण्यां वा शाययेन्नरम् ॥ ३० ॥

---

१ 'प्रत्यङ्गभग्नस्य विधिमत ऊर्ध्वं प्रचक्ष्महे' इति ता. । २ 'भिषक्' इति ता. । ३ 'भग्ने दत्त्वा कुश भिषक्' इति ता. । ४ 'तु' इति ता । ५ 'अभ्यज्य समये जङ्घां घृतेनाक्ता सुसस्थिताम्' इति ता. । ६ 'शीतां इति ता. । ७ 'चक्रयोगेन मतिमान् चाञ्छेदूर्वस्थिनिर्गतम्' इति ता. । ८ 'आञ्छेदूर्ध्वमधश्चापि' इति ता । ९ 'दक्षिणास्वथवा वामामनुमृज्यानुबन्धनी.' इति ता. । १० 'सुसमाहितम्' इति ता. । ११ 'द्रोण्या वाप्यवगाहयेत्' इति ता. ।

मुसलेनोत्क्षिपेत् कक्षामांससन्धौ विसंहते ॥
स्थानस्थितं च बध्नीयात्[1] स्वस्तिकेन विचक्षणः ॥ ३१ ॥
कौर्परं तु तथा सन्धिमङ्गुष्ठेनानुमार्जयेत् ॥
अनुमृज्य ततः[2] सन्धिं पीडयेत् कूर्पराच्युतम् ॥ ३२ ॥
प्रसार्याकुञ्चयेच्चैनं स्नेहसेकं च दापयेत् ॥
एवं[3] जानुनि गुल्फे च मणिबन्धे च कारयेत् ॥ ३३ ॥
उभे तले समे कृत्वा तलभग्नस्य देहिनः ॥
बध्नीयादामतैलेन परिषेकं च कारयेत्[4] ॥ ३४ ॥
मृत्पिण्डं[5] धारयेत् पूर्वं लवणं[6] च ततः परम् ॥
हस्ते जातबले चापि कुर्यात् पाषाणधारणम् ॥ ३५ ॥
सन्नमुन्नमयेत्[7] स्विन्नमक्षकं मुसलेन तु ॥
तथोन्नतं पीडयेच्च[8] बध्नीयाद्गाढमेव च ॥ ३६ ॥
ऊरुवच्चापि कर्तव्यं बाहुभग्नचिकित्सितम्[9] ॥
ग्रीवायां तु विवृतायां प्रविष्टायामधोऽपि[10] वा ॥ ३७ ॥
अवटावथ[11] हन्वोश्च प्रगृह्योन्नमयेन्नरम् ॥
ततः कुशां[12] समं दत्त्वा[13] वस्त्रपट्टेन वेष्टयेत् ॥ ३८ ॥
उत्तानं शाययेच्चैनं सप्तरात्रमतन्द्रितः[14] ॥

---

१ 'बध्नीयात्' इति ता. 'बध्नीत' इति च पा.। २ 'तथा' इति ता.। ३ 'मणिबन्धे च जानौ च गुल्फे चैव समाचरेत्' इति ता.। ४ 'दापयेत्' इति ता। ५ 'प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः' इति पा.। ६ 'लवणात्कमतः परम्' इति ता.। ७ 'सन्नमुन्नामयेत्' इति ता.। ८ 'पीडयीत' इति ता.। ९ 'बाहुभग्ने चिकित्सितम्' इति ता। १० 'प्रविष्टायामथापि च' इति ता। ११ 'अवट्वामथ' इति ता.। १२ 'कुशान्' इति पा.। १३ 'कृत्वा' इति ता.। १४ 'सप्तरात्रं सुयन्त्रितः' इति ता.।

हन्वस्थिनी समानीय हनुसन्धौ विसंहते[1] ॥ ३९ ॥
स्वेदयित्वा स्थिते सम्यक् पञ्चाङ्गीं वितरेद्भिषक्[2] ॥
[3]वातघ्नमधुरैः सर्पिः सिद्धं नस्ये च पूजितम् ॥ ४० ॥
अभ[4]ग्नांश्चलितान् दन्तान् सरक्तानवपीडयेत् ॥
तरुणस्य मनुष्यस्य शीतैरालेपयेद्बहिः ॥ ४१ ॥
सिक्त्वाऽम्बुभिस्ततः शीतैः सन्धानीयैरुपाचरेत् ॥
उत्पलस्य च नालेन क्षीरपानं विधीयते ॥ ४२ ॥
जीर्णस्य तु मनुष्यस्य वर्जयेच्चलितान् द्विजान् ॥
नासां सन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया ॥ ४३ ॥
पृथङ्नासिकयोर्नाड्यौ द्विमुख्यौ संप्रवेशयेत् ॥
ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥ ४४ ॥
भग्नं कर्णं तु बध्नीयात् समं कृत्वा घृतप्लुतम् ॥
[5]सद्यः क्षतविधानं च ततः पश्चात् समाचरेत् ॥ ४५ ॥
[6]मस्तुलुङ्गाद्विना भिन्ने कपाले [7]मधुसर्पिषी ॥
[8]दत्त्वा ततो निबध्नीयात् सप्ताहं च पिबेद्घृतम् ॥ ४६ ॥
पतनादभिघाताद्वा शूनसङ्गं यदक्षतम् ॥
[9]शीतान् प्रदेहान् सेकांश्च भिषक् तस्यावचारयेत् ॥ ४७ ॥

---

१ 'विसंगते' इति ता. । २ 'विभजेत्' इति ता. । ३ 'घृत वातघ्नमधुरैः सिद्धं नस्त च पूजितम्' इति ता । ४ 'दन्तानभग्नांश्चलितान्सरक्तानेव पीडयेत् ॥ वयस्थस्य मनुष्यस्य जीर्णस्य तु विवर्जयेत् ॥ ससिच्य वारिभि· शीतैः सन्धानीयैरुपाचरेत् ॥ नासां सन्नां विवृतां वा ऋज्वी कृत्वा शलाकया ॥ प्रत्येक नस्ततो नाडी द्विमुखी सम्प्रवेशयेत् ॥ ततः पट्टेन संवेष्ट्य घृतसेकम्प्रदापयेत्' इति ता. । ५ 'सद्य क्षतविधान च नयने निर्गते हितम्' इति ता । ६ 'मस्तुलुङ्ग विना' इति पा । ७ 'मधुसर्पिषा' इति ता । ८ 'दत्वा बन्ध ततः सर्पिः सप्तरात्र पिबेन्नरः' इति ता । ९ 'शीतान् सेकान् प्रदेहांश्च' इति ता. ।

[1]अथ जङ्घोरुभग्नानां कपाटशयनं हितम् ॥
कीलका बन्धनार्थं च पञ्च कार्या विजानता ॥ ४८ ॥
यथा न चलनं तस्य भग्न[2]स्य क्रियते तथा ॥
सन्धेरुभयतो द्वौ द्वौ तले चैकै[3]श्च कीलकः ॥ ४९ ॥
श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ॥
भग्नसन्धिविमोक्षेषु [4]विधिमेनं समाचरेत् ॥ ५० ॥
सन्धींश्चिरविमुक्तांस्तु स्निग्धा[5]न् स्विन्नान् मृदूकृतान् ॥
उक्तैर्विधानैर्बुद्ध्या च स[6]म्यक् प्रकृतिमानयेत् ॥ ५१ ॥
[7]काण्डभग्ने प्ररूढे तु विषमोल्बणसंहिते ॥
आपोथ्य समयेद्भग्नं ततो भग्नवदाचरेत् ॥ ५२ ॥
कल्पयेन्निर्गतं शुष्कं व्रणान्तेऽस्थि समाहितः ॥
सन्ध्यन्ते वा क्रियां कुर्यात् सव्रणे व्रणभग्नवत् ॥ ५३ ॥
ऊर्ध्वकाये तु भग्नानां मस्तिष्क्यं कर्णपूरणम् ॥
घृ[8]तपानं हितं नस्यं प्रशाखास्वनुवासनम् ॥ ५४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि तैलं भग्नप्रसाधकम् ॥
रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ॥ ५५ ॥
दिवा दिवा शोषयित्वा ग[9]वां क्षीरेण भावयेत् ॥
[10]तृतीयं सप्तरात्रं [11]तु भावयेन्मधुकाम्बुना ॥ ५६ ॥

---

१ 'कटिजङ्घोरुभग्नानां कपाटशयनं हितम् ॥ यन्त्रणार्थं च कीला· स्युस्तत्र कार्या निबन्धना' इति ता. । २ 'भग्नस्य प्रपतेत् तथा' इति ता । ३ 'चैकस्तथा भवेत्' इति ता· । ४ विधिमेव समारभेत्' इति ता. । ५ 'स्निग्धस्विन्नान् मृदूकृतान्' इति ता । ६ 'यथा' इति ता· । ७ 'काण्डभग्ने प्ररूढे तु विषमोल्बणसंस्थिते' इति ता· । ८ 'शस्यते घृतपान च' इति ता । ९ 'क्षीरेण सह भावयेत्' इति ता· । १० 'तृतीये सप्तरात्रे तु' इति ता । ११ 'वा' इति ता. ।

ततः[1] क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक्[2] ॥
काकोल्यादिं सर्यंष्ट्याह्वं[3] मञ्जिष्ठां सारिवां तथा ॥ ५७ ॥
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पां च संचूर्ण्य तिलचूर्णेन योजयेत्[5] ॥ ५८ ॥
पीडनार्थं[4] च कर्तव्यं सर्वगन्धशृतं पयः ॥
चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् ॥ ५९ ॥
एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥
[6]रोध्रं प्रपौण्डरीकं च तथा कालानुसारि(वा)णम्[7] ॥ ६० ॥
सैरेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥
पिष्ट्वा शृङ्गाटकं चैव पूर्वोक्तान्यौषधानि च ॥ ६१ ॥
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाऽग्निना ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ॥ ६२ ॥
आक्षेपके पक्षघाते तालुशोषे तथाऽर्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ॥ ६३ ॥
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥
पथ्यं पाने तथाऽभ्यङ्गे नस्ये बस्तिषु [8]भोजने ॥ ६४ ॥
ग्रीवास्कन्धोरसां वृद्धिरमुनै[9]वोपजायते ॥
मुखं च पद्मप्रतिमं स सुगन्धिसमीरणम् ॥ ६५ ॥
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥
राजार्हमेतत् कर्तव्यं राज्ञामेव विचक्षणैः ॥ ६६ ॥

---

१ 'तत· क्षीरे' इति पा.। २ 'शुष्कान्सूक्ष्मम् विचूर्णयेत्' इति ता.। ३ 'श्वदंष्ट्राह्वम्' इति ता.। ४ 'पीडनार्थे' इति ता.। ५ 'योजयेत् पुन·' इति ता.। ६ 'लोध्रम्' इति ता.। ७ 'कालानुसारिवान्' इति ता.। ८ 'शोधने' इति पा.। ९ 'अनेनैव' इति ता ।

त्रपुसाक्षप्रियालानां तैलानि मधुरैः सह ॥
वसां दत्त्वा यथालाभं क्षीरे दशगुणे पचेत् ॥ ६७ ॥
स्नेहोत्तममिदं चाशु कुर्याद्भग्नप्रसाधनम् ॥
पानाभ्यञ्जननस्येषु बस्तिकर्मणि सेचने ॥ ६८ ॥
भग्नं नैति यथापाकं प्रयतेत तथा भिषक् ॥
[1]पक्कमांससिरास्नायु तद्धि कृच्छ्रेण सिध्यति ॥ ६९ ॥
भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्बणम् ॥
सुखचेष्टाप्रचारं च [2]संहितं सम्यगादिशेत् ॥ ७० ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने भग्नचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
[3]आमाशयगते वाते च्छर्दयित्वा यथाक्रमम् ॥
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ ३ ॥
चित्रकेन्द्रयवे पाठा कटुकाऽतिविषाऽभया ॥
वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥ ४ ॥
पक्काशयगते चापि देयं स्नेहविरेचनम् ॥
बस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ ५ ॥
कार्यो बस्तिगते चापि विधिर्बस्ति[4]विशोधनः ॥
श्रोत्रादिषु प्रकुपिते कार्यश्चानिलहा क्रमः ॥ ६ ॥

---

१ 'पक्कं हि स्यात् सिरास्नायून्' इति ता.। २ 'सम्यक् शोधितमादिशेत्' इति ता.। ३ 'आमाशयगते वायौ च्छर्दिताय यथाक्रमम्' इति ता.। ४ 'बस्तिविशोधन' इति ता.।

स्नेहाभ्यङ्गोपनाहाश्च[1] मर्दनालेपनानि च ॥
त्वङ्मांसासृक्सिराप्राप्ते[2] कुर्यात् चासृग्विमोक्षणम् ॥ ७ ॥
स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ॥
स्नायुसन्ध्यस्थिसंप्राप्ते कुर्याद्वायावतन्द्रितः[3] ॥ ८ ॥
निरुद्धेऽस्थनि[4] वा वायौ पाणिमन्थेन दारिते[5] ॥
नाडीं दत्त्वाऽस्थनि भिषक् चूषयेत्पवनं बली[6] ॥ ९ ॥
शुक्रप्राप्तेऽनिले कार्यं[7] शुक्रदोषचिकित्सितम् ॥
अवगाहकुटीकर्षू[8]प्रस्तराभ्यङ्गबस्तिभिः ॥ १० ॥
जयेत् सर्वाङ्गजं वातं सिरामोक्षैश्च बुद्धिमान् ॥
एकाङ्गगं च[9] मतिमाञ्छृङ्गैश्चावस्थितं जयेत् ॥ ११ ॥
बलासपित्तरक्तैस्तु संसृष्टमविरोधिभिः ॥
सुप्तिवाते त्वसृङ्मोक्षं कुर्यात्तु[10] बहुशो भिषक् ॥ १२ ॥
दिह्याच्च लवणागारधूमैस्तैलसमन्वितैः[11] ॥
पञ्चमूलीश्टतं क्षीरं फलाम्लो रस एव च ॥ १३ ॥
सुस्निग्धो धान्ययूषो वा [12]हितो वातविकारिणाम् ॥
काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ॥ १४ ॥
सानूपौदकमांसस्तु [13]सर्वस्नेहसमन्वितः ॥
सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः ॥ १५ ॥
तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम् ॥
कुञ्च्यमानं रुजार्तं वा गात्रं स्तब्धमथापि वा ॥ १६ ॥

---

१ 'स्नेहाभ्यगोपनाहाश्च' इति ता । २ 'त्वङ्मांसरुधिरे प्राप्ते' इति ता. । ३ 'कुर्यात् वाते विचक्षण.' इति ता. । ४ 'निगूढास्थिगते वायौ' इति ता. । ५ 'दारयेत्' इति पा. । ६ 'आचूषेत् पवन बली' इति ता. । ७ 'कुर्यात्' इति ता. । ८ '°कर्ष°' इति ता. । ९ 'वा' इति ता. । १० 'कुर्याच्च' इति ता. । ११ 'तैलसमायुतैः' इति ता. । १२ 'वातनुङ्गोजनं हितम्' इति ता. । १३ 'सर्वस्नेहसमायुत' इति ता. ।

गाढं पट्टैर्निबध्नीयात् क्षौमकार्पासिकौर्णिकैः ॥
बिडालनकुलोन्द्राणां चर्मगोण्यां मृगस्य वा ॥ १७ ॥
प्रवेशयेद्वा स्वभ्यक्तं साल्वणेनोपनाहितम् ॥
स्कन्धवक्षस्त्रिकप्राप्तं वायुं मन्यागतं तथा ॥ १८ ॥
वमनं हन्ति नस्यं च कुशलेन प्रयोजितम् ॥
शिरोगतं शिरोबस्तिर्हन्ति वाऽसृग्विमोक्षणम् ॥ १९ ॥
स्नेहं मात्रसहस्रं तु धारयेत्तत्र योगतः ॥
सर्वाङ्गगतमेकाङ्गस्थितं वाऽपि समीरणम् ॥ २० ॥
रुणद्धि केवलो बस्तिर्वायुंवेगमिवाचलः ॥
स्नेहस्वेदस्तथाऽभ्यङ्गो बस्तिः स्नेहविरेचनम् ॥ २१ ॥
शिरोबस्तिः शिरःस्नेहो धूमः स्नेहिक एव च ॥
सुखोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च ॥ २२ ॥
रसाः क्षीराणि मांसानि स्नेहाः स्नेहान्वितं च यत् ॥
भोजनानि फलाम्लानि स्निग्धानि लवणानि च ॥ २३ ॥
सुखोष्णाश्च परीषेकास्तथा संवाहनानि च ॥
कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च ॥ २४ ॥
कौशेयौर्णिकरौमाणि कार्पासानि गुरूणि च ॥
निवातातपयुक्तानि तथा गर्भगृहाणि च ॥ २५ ॥
मृद्वी शय्याऽग्निसंतापो ब्रह्मचर्यं तथैव च ॥
समासेनैवमादीनि योज्यान्यनिलरोगिषु ॥ २६ ॥
त्रिवृद्दन्तीसुवर्णक्षीरीसप्तलाशङ्खिनीत्रिफलाविडङ्गानामक्षसमाः

१ 'गाढ पट्टैस्तु बध्नीयात् वल्ककार्पासकौर्णिकैः' इति ता० । 'वाल्ककार्पासकौर्णिकैः' इति पा० । २ 'वक्षस्त्रिकस्कन्धगतम्' इति ता. । ३ 'तस्य वेगमिवानिलः' इति ता. । ४ 'क्षीराणि मांसानि रसाः' इति ता. । ५ 'त्रिवृद्दन्तीशङ्खिनीसुवर्णक्षीरीत्रिफलाविडङ्गानामक्षसमाः कल्काः, बिल्वमात्रस्तिल्वकमूलकपिल्लयो' इति ता ।

भागाः, बिल्वमात्रः कल्कस्तिल्वकमूलकम्पिल्लकयोः, त्रिफलारस-दधिपात्रे द्वे द्वे, घृतपात्रमेकं, तदैकध्यं संसृज्य[1] विपचेत्; तिल्वक-सर्पिरेतत् स्नेहविरेचनमुपदिशन्ति वातरोगिषु। तिल्वकविधिरे-वाशोकरम्यकयोर्द्रष्टव्यः ॥ २७ ॥

तिलपरिपीडनोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्य-णूनि[2] खण्डशः कल्पयित्वाऽवक्षुद्य[3] महति कटाहे पानीयेनाभिप्लाव्य क्वाथयेत्, ततः[4] स्नेहमम्बुपृष्ठाद्यदुदेति तत् सरकपाण्योरन्यतरेणा-दाय वातघ्नौषधप्रतीवापं स्नेहपाककल्पेन विपचेत्, एतदणुतैलमुप-दिशन्ति वातरोगिषु; अणुभ्यस्तैलद्रव्येभ्यो[5] निष्पाद्यत इत्यणु-तैलम् ॥ २८ ॥

अथ[6] महापञ्चमूलकाष्ठैर्बहुभिरवदह्यावनिप्रदेशमसितं[7]मुषितमे-करात्रमुपशान्तेऽग्नावपोह्य भस्म निवृत्तां भूमिं विदारिगन्धादिसिद्धेन तैल[8]घटशतेन तुल्यपयसाऽभिषिच्यैकरात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात्तामादायोष्णोदकेन महति कटाहेऽभ्यासिञ्चेत्, तत्र यत्तैलमुत्तिष्ठेत्तत् पाणिभ्यां पर्यादाय[9] स्वनुगुप्तं निदध्यात्; ततस्तैलं[10] वातहरौषधक्काथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं विपचेद्यावता कालेन शक्नुयात्[11] पक्तुं, प्रतिवापश्चात्र हैमवता

१ 'प्रतिससृज्य' इति ता. । २ ता० पुस्तके 'अणूनि खण्डशः कल्पयित्वा' इति पाठाभावे 'अणूनि छेदयित्वा' इति पठ्यते । ३ 'प्रक्षिप्य' इति ता. । ४ 'ततस्त स्नेहमम्बुपृष्ठात्सरकपाण्योरन्यतरेणादाय वातघ्नौषधदत्तप्रतीवापं स्नेहपाककल्पेन विपचेत्' इति ता । ५ 'अणुतैलद्रव्येभ्यो' इति ता० । ६ 'अथवा महापञ्चमूलीकाष्ठैः' इति ता. । ७ ता० पुस्तके 'असित' 'मुषि-तम्' च इत्येते द्वे पदे नोपलभ्येते । ८ 'तैलघटशतेनाभिषिच्यैकरात्रमवस्थाप्य ततो यावत्पांशुः स्निग्धः स्यात्तावान्ग्राहयित्वोदकेन' इति ता. । ९ 'आदाय' इति ता. । १० 'तत्तैलम्' इति ता. । ११ शक्नुयात्' इति ता० 'शक्नोति' इति पा० ।

दक्षिणापथगाश्च[1] गन्धा वातघ्नानि च, तस्मिन् सिध्यति शङ्खाना[2]-ध्मापयेद्दुन्दुभीनाघातयेच्छत्रं धारयेद्वालव्यजनैश्च वीजयेद्ब्राह्मणस[3]-हस्रं भोजयेत्, तत्[4] साधु सिद्धमवतार्य सौवर्णे राजते मृन्मये[5] वा पात्रे स्वनुगुप्तं निदध्यात्, तदेतत् सहस्रपाकमप्रतिवारवीर्यं राजार्हं तैलम्; एवं[6] भागशतविपक्वं शतपाकम् ॥ २९ ॥

गन्धर्व[7]हस्तमुष्ककनक्तमालाटरूषकपूतीकारग्वधचित्रकादीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य[8] स्नेहघटे प्रक्षिप्यावलिप्य[9] गोशकृद्भिर्दाहयेत्; एतत्पत्रलवणमुपदिशन्ति वातरोगेषु ॥३०॥

[10]एवं स्नुहीकाण्डवार्ताकुशिग्रुलवणानि संक्षुद्य घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेत्; एतत् स्नेहलवणमुपदिशन्ति वातरोगेषु। ( इति काण्डलवणम् ) ॥३१॥

गण्डीरपलाशकुटजबिल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकनादेयी-कृष्णगन्धानीपनिम्ब[11]निर्दहन्यटरूषकनक्तमालकपूतिकबृहतीकण्टका-रिकाभल्लातके[12]ङ्गुदीवैजयन्तीकदली[13]बाष्पद्वयेक्षुरकेन्द्रवारुणीश्वेतमोक्ष-काशोका इत्येवं वर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन सह

---

१ 'दक्षिणापथगाश्चाश्वगन्धा वातघ्नानि च' इति ता.। २ 'शङ्खानाध्मा-पयेच्छत्रं धारयेत् दुदुभीस्ताडयेद्वालव्यजनैश्च व्यजेत्' इति ता। ३ अत्र स्थित 'ब्राह्मणसहस्र भोजयेत्' इति वाक्य तत् ता० पुस्तके नोपलभ्यते। ४ 'तत.' इति ता.। ५ 'मृन्मये वा कुम्भे निदध्यात्' इति ता। ६ 'एव भागशतपक्व शतपाकमिति। सहस्रपक्व सहस्रपाकमिति' इति ता। ७ 'गन्धर्व-हस्ताटरूषकमुष्ककनक्तमालपूतीकचित्रकानां' इति ता। ८ 'सक्षुद्य' इति ता.। ९ आलिप्य' इति ता.। १० 'एव स्नुहीकाण्डवार्ताकुलवणानि संक्षुद्य पूर्णघटे सर्पिस्तैलवसामज्जानः प्रक्षिप्यालिप्य पूर्ववद्दहेत्' इति ता.। ११ अ-यम् "निम्ब"शब्दस्ता० पुस्तके नोपलभ्यते। १२ "भल्लातकाशोकवैज-यन्तीत्येतदेकविंशतिवर्ग" इति ता.। १३ "कदलीवर्षाभूह्रीबेरेक्षुरकेन्द्रवारुण" इति पा०।

संसृज्य[1] पूर्ववद्दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेत्, प्रतिवापश्चात्र[2] हिङ्ग्वादिभिः पिप्पल्यादिभिर्वा। इत्येतत् कल्याणकलवणं वातरोगगुल्मप्लीहाग्निसङ्गाजीर्णार्शोऽरोचकार्तानां कासादिभिः क्रिमिभिरुपद्रुतानां चोपदिशन्ति पानभोजनेष्वपीति ॥ ३२ ॥

भवति[3] चात्र—

विष्यन्दनादुष्णभावाद्दोषाणां च विपाचनात् ॥

संस्कारपाचनाच्चेदं वातरोगेषु शस्यते ॥ ३३ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने वातव्याधिचिकित्सितं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

अथातो महावातव्याधिचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

[4]द्विविधं वातशोणितमुत्तानमवगाढं चेत्येके भाषन्ते; तत्तु न सम्यक्, तद्धि कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढीभवति, तस्मान्न द्विविधम् ॥ ३ ॥

तत्र[5] बलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाध्यशनशीलस्य प्रदुष्टं[6] शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद्वातरक्तनिमित्तां[7]

---

१ 'ससृज्य' इति ता०। 'संसृष्ट' इति च पा०। २ 'प्रतिवापश्चात्र पिपल्यादिरेतत्कल्याणकलवण वातरोगे प्लीहाग्निषगाजीर्णार्शोऽरोचक°' इति ता.। ३ ता० पुस्तके 'भवति चात्र' इतीद वाक्य 'विष्यदनादुष्णभावात्' इत्यादिस्त्रयस्त्रिंशत्तमः श्लोकश्च नोपलभ्यते। ४ 'द्विविध वातरक्तमुत्तानमवगाढ चेत्येके भाषन्ते, तत्तु न सम्यक् कस्मात्? तद्धि कुष्ठवदुत्तान भूत्वा कालान्तरेणावगाढी भवति, तस्मान्न द्वित्वसंख्या हीयते' इति ता.। ५ 'तत्र बलवद्विग्रहादिभिर्विशेषैः प्रकुपितस्य वायो.' इति ता.। ६ 'दुष्ट' इति ता.। ७ 'वातशोणितनिमित्ता' इति ता ।

वेदनां जनयतीति[1] वातरक्तम्। तत्तु पूर्वं हस्तपादयोरवस्थानं कृत्वा पश्चाद्देहं[2] व्याप्नोति। तस्य पूर्वरूपाणि तोददाहकण्डूशोफस्तम्भत्वक्पारुष्यसिरास्नायुधमनीस्पन्दनसक्थिदौर्बल्यानि श्यावारुणमण्डलोत्पत्तिश्चाकस्मात्[3] पाणिपादतलाङ्गुलिगुल्फमणिबन्धप्रभृतिषु,[4] तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्ततरः[5] तस्य लक्षणमुक्तं; तत्राप्रतिकारिणो वैकल्यं भवति ॥ ४ ॥

भवति चात्र—

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥
स्थूलानां सुखिनां चापि वातरक्तं[6] प्रकुप्यति ॥ ५ ॥

तत्र[7] प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरणसंकोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तं चोपक्रमेत् ॥ ६ ॥

तत्र, आदावेव बहुवातरूक्षम्लानाङ्गादृते मार्गावरणाद्दुष्टशोणितमसकृदल्पाल्पमवसिञ्चेद्वातकोपभयात्। ततो वमनादिभिरुपक्रमैरुपपाद्य प्रतिसंसृष्टभक्तं[8] वातप्रबले पुराणघृतं पाययेत्। अजाक्षीरं वाऽर्धतैलं मधुकाक्षययुक्तं, शृगालविन्नासिद्धं वा, शर्करामधुमधुरं, शुण्ठीशृङ्गाटककशेरुकसिद्धं[9] वा, श्यामारास्नासुषवीशृगालविन्नापी-[10]

१ 'जनयति तद्वातशोणितमित्याचक्षते' इति ता। २ 'पश्चाद्देहे विसर्पति' इति ता। ३ 'श्यावारुणमण्डलोत्पत्तिरकस्मात्' इति ता०। 'श्यावरक्तमण्डलोत्पत्तिश्चाकस्मात्' इति च पा०। ४ 'पाणिपादतलाङ्गुलिगुल्फमणिबन्धेष्वेषामुत्पत्तिर्भवति' इति ता। ५ 'प्रव्यक्तो भवति' इति ता.। ६ 'कुप्यते वातशोणितम्' इति ता। ७ 'तत्र प्राणक्षयपिपासाज्वरमूर्च्छाश्वासस्तम्भारोचकानवशीर्यमाण संकोचैरनुपद्रुत' इति ता। ८ 'संसृष्टरक्तवाते प्रबलपुराणघृत पाययेत्' इति ता। ९ 'शुण्ठीकशेरुसिद्धं वा' इति ता। १० 'श्यामारास्नासुषवीशृगालविन्नापीलूशतावरीश्वदंष्ट्राद्विपञ्चमूलीकाथाष्टगुणसिद्धेन वा पयसा मेषशृङ्गीश्वदंष्ट्रामधूकनागबलाभद्रदारुवचासुरभिकल्कप्रतीवाप तैल पाचयित्वा पानादिषूपयुञ्ज्यात्' इति ता।

लुशतावरीश्वदंष्ट्राद्विपञ्चमूलीसिद्धं वा। द्विपञ्चमूलीक्वाथाष्टगुणसिद्धेन पयसा मधुकमेषशृङ्गीश्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्कप्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत, [1]शतावरीमयूरककिणिह्यजमोदामधुकक्षीरविदारीबलातिबलातृणपञ्चमूलीक्वाथसिद्धं वा काकोल्यादिप्रतीवापं, बलातैलं [2]शतपाकं वेति। वातहरमूलसिद्धेन च पयसा [3] परिषेचनमम्लैर्वा कुर्वीत । [4]यवमधुकैरण्डतिलवर्षाभूभिर्वा प्रदेहः कार्यः । तत्र चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु प्रत्येकशः काकोलीक्षीरकाकोलीजीवकर्षभक[5]बलातिबलाबिसमृणालशृगालविन्नामेषशृङ्गीप्रियालशर्कराकशे[6]रुकसुरभिवचाकल्कमिश्रेषू[7]पनाहार्थं सर्पिस्तैलव[8]सामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः [9]स्नैहिकफलसारोत्कारिका वा, चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु मत्स्यपिशितवेशवारो वा, बिल्वपेशिकातगरदेवदारुसर[10]लारास्नाहरेणुकुष्ठश[11]तपुष्पैलासुरादधिमस्तुयुक्त उपनाहः, मातुलुङ्गाम्लसैन्धवघृतमिश्रं [12]मधुशिग्रुमूलमालेपस्तिलकल्को वेति [13]वातप्रबले ॥ ७ ॥

पित्तप्रबले द्राक्षारेवतकट्फलपयस्यामधुकचन्दनकाश्मर्यकषायं [14]शर्करामधुमधुरं पाययेत्, [15]शतावरीमधुकपटोलत्रिफलाकटुरोहिणी-

---

१ 'शतावरीमयूरकधवकमधूकक्षीरविदारि°" इति ता. । २ 'शतपाकमिति' इति ता । ३ 'पयसाम्लैर्वा परिषेक कुर्वीत' ता. । ४ 'यवमधुकैरण्डतिलवर्षाभूभिर्वा प्रदेह· कार्य ' इति वाक्य ता० पुस्तके नोपलभ्यते। ५ "°बलातिबलाशृगालविन्नामेषशृङ्गी°" इति ता । ६ "°कशेरुका" इति ता. । ७ 'उपनाहार्थे' इति ता । ८ "°वसामज्जादुग्धसिद्धाः' इति ता.। ९ 'स्नैहिकफलसारोत्कारिकानलपीनमत्स्यपिशितवेशवारो वा' इति ता । १० "°सरल°" इति ता । ११ "°शतपुष्पसुरादधि°" इति ता.। १२ 'मूलमालेपनं तिलकल्को वेति' इति ता । १३ 'वातप्रबले' इत्यत्र स्थित पद तत् ता० पुस्तके न पठ्यते। १४ ता० पुस्तके 'शर्करामधुमधुर' इत्यभावे केवल 'मधुमधुर' इत्येव पठ्यते। १५ 'शतावरीपटोलपत्रत्रिफला' इति ता.।

कषायं गुडूचीकषायं वा, पित्तज्वरहरं वा चन्दनादिकषायं शर्करामधुमधुरं, मधुरतिक्तकषायसिद्धं वा सर्पिः, बिसमृणालभद्रश्रियपद्मककषायेणार्धक्षीरेण परिषेकः; क्षीरेक्षुरसैर्मधुकशर्करातण्डुलोदकैर्वा द्राक्षेक्षुकषायमिश्रैर्वा मस्तुमद्यधान्याम्लैः; जीवनीयसिद्धेन वा सर्पिषाऽभ्यङ्गः, शतधौतघृतेन वा, काकोल्यादिकल्ककषायविपक्वेन वा सर्पिषा; शालिषष्टिकनलवञ्जुलतालीसशृङ्गाटकगलोड्यगौरीगैरिकशैवलपद्मकपद्मपत्रप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः, वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्यः ॥ ८ ॥

रक्तप्रबलेऽप्येवं, बहुशश्च शोणितमवसेचयेत्, शीततमाश्च प्रदेहाः कार्या इति ॥ ९ ॥

श्लेष्मप्रबले त्वामलकहरिद्राकषायं मधुमधुरं पाययेत्, त्रिफलाकषायं वा; मधुकशृङ्गवेरहरीतकीतिक्तरोहिणीकल्कं वा सक्षौद्रं, मूत्रतोययोरन्यतरेण गुडहरीतकीं वा भक्षयेत्; तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैश्च परिषेकः, आरग्वधादिकषायैर्वोष्णैः; मस्तुमूत्रसुराशुक्तमधुकसारिवापद्मकसिद्धं वा घृतमभ्यङ्गः; तिल-

१ "°कटुरोहिणीकल्क' इति पा० । २ 'पित्तज्वरहर वा चन्दनादिकषाय शर्करामधुमधुर' इति वाक्य ता० पुस्तके नोपलभ्यते । ३ 'वा' इतीदमव्ययं ता० पुस्तके नास्ति । ४ "°पद्मककषायेणाजाक्षीरेण परिषेक' इति ता । ५ 'क्षीरेक्षुरसमधुशर्करातण्डुलोदकैर्वा' इति ता० तथैव च पा० । ६ 'जीवनीयसिद्धेन वा सर्पिषा शतधौतेन वा शालिपिष्टक' इति ता । ७ 'काकोल्यादिकल्ककषायविपक्वेन वा सर्पिषा' इत्यय योगस्ता० पुस्तके नोपलभ्यते । ८ "°शृगाटककालाद्यागौरीशैवालपद्मप्रभृतिभिर्वा धान्याम्लपिष्ट' प्रदेहो घृतमिश्र.' इति ता ९ 'वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्य.' इतीद वाक्य ता पुस्तके नोपलभ्यते । १० 'शीततमाश्च प्रदेहाः कार्या' इत्यत्र स्थित वाक्य नत् ता० पुस्तके नोपलभ्यते । ११ 'मूत्रेण तोयेन हरीतकीं पाययेत्' इति ता.। १२ 'तैलमूत्रक्षारोदकसुरासुक्तैश्च परिषेकः । आरग्वधादिकषायेण वा' इति ता । १३ "°मधुकसारिवापद्मकसिद्धेन वा सर्पिषाभ्यङ्ग.' इति ता. । १४ 'तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्राणि क्षारमूत्रपिष्टानि प्रदेहः' इत्यय योगस्ता० पुस्तके नोपलभ्यते ।

सर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्राणि क्षारमूत्रपिष्टानि प्रदेहः; श्वेतसर्षपकल्कः, तिलाश्वगन्धाकल्कः, प्रियालसे[1]लुकपित्थकल्कः, मधुशिग्रुपुनर्नवाकल्कः व्योषतिक्तापृथक्पर्णीबृहती[2]कल्क इत्येतेषां[3] पञ्च प्रदेहाः सुखोष्णाः क्षारोदकपिष्टाः[4], शालिपर्णी[5] पृश्निपर्णी बृहत्यौ वा क्षीरपिष्टास्तर्पणमिश्राः ॥ १० ॥

संसर्गे सन्निपाते च क्रियापथमुक्तं मिश्रं कुर्यात्[6] ॥ ११ ॥

सर्वेषु च गुडहरीतकीमासेवेत; पिप्पलीर्वा[7] क्षीरपिष्टा वारिपिष्टा वा पञ्चाभिवृद्ध्या दशाभिवृद्ध्या वा पिबेत् क्षीरौदनाहारो दशरात्रं भूयश्चापकर्षयेत्, [8]एव यावत् पञ्च दश वेति; तदेतत् पिप्पलीवर्धमानकं वातशोणितविषमज्वरारोचकपाण्डुरोगप्लीहोदरार्शःकासश्वासशोफशोषाग्निसादहृद्रोगोदराण्यपहन्ति; [9]जीवनीयप्रतीवापं सर्पिः पयसा पाचयित्वाऽभ्यज्यात्; स[10]हासहदेवाचन्दनमूर्वामुस्ताप्रियालशतावरीकशेरुपद्मकमधुकशतपुष्पाविदारीकुष्ठानि क्षीरपिष्टः प्रदेहो घृतमण्डयुक्तः सैरेयकाटरूषकबलातिबलाजीवन्तीसुषवीकल्को वाच्छागक्षीरपिष्टः, क्षीरपिष्टः का[11]श्मर्यमधुकतर्पण-

१ 'दारुशेलुककपित्थकल्कः' इति ता० । सेलुकपित्थप्रियालकल्क ' इति च० पा० । २ '°बृहतीकल्कैर्वा' इति ता । ३ 'एव एते' इति ता० । 'इत्येते' इति च पा० । ४ 'क्षारोदकपिष्टा व्याख्याता.' इति ता. । ५ 'शालिपर्णी पृश्निपणी बृहत्यौ वा क्षीरपिष्टास्तर्पणमिश्रा ' इत्यय योग' ता० पुस्तके नास्ति । ६ 'कुर्यादिति' इति ता । ७ 'पिप्पल्यो वा' इति ता । ८ 'एवमेव यावत् पञ्चेति । तदेतत् पिप्पलीवर्धमानमाचक्षते ॥ तद्धि वातशोणितविषमज्वरारोचक-पाण्डुरोगोदरार्श·श्वासकासशोषाग्निसादहृद्रोगानुपहन्ति' इति ता । ९ 'जीवनीयप्रतीवाप सर्पि· पयसा पाचयित्वाऽभ्यज्यात्' इत्यय योगस्ता० पुस्तके नास्ति । १० 'प्रदेहः सहाचदनमूर्वाप्रियालशतावरीकशेरुकसहदेवापद्मकमधूकशतपुष्पाकुष्ठानि सैलेयकाटरूषकबलातिबलाजीवन्तीकल्को वा क्षीरयुक्तः' इति ता । ११ 'काश्मर्यमधुकतर्पणकल्को वा घृतमण्डयुक्त' । मधूच्छिष्टसारिवासर्जरसमधूकमधुरवर्गक्षीरसिद्ध वा पिण्डतैलमिति । पुराणघृतमामलकरसविपक्क वा पानार्थे' इति ता. ।

कल्को वा मधूच्छिष्टमञ्जिष्ठासर्जरससारिवाक्षीरसिद्धं पिण्डतैलमभ्यङ्गः; सर्वेषु च पुराणघृतमामलकरसविपक्कं वा पानार्थे; जीवनीयसिद्धं परिषेकार्थे, [1]काकोल्यादिक्काथकल्कसिद्धं वा; [2]सुषवीक्काथकल्कसिद्धं वा, [3]कारवेल्लककाथमात्रसिद्धं वा; [4]बलातैलं वा परिषेकावगाहबस्तिभोजनेषु; [5]शालिषष्टिकयवगोधूमान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयूषेण वाऽनम्लेन; शोणितमोक्षं चाभीक्ष्णं कुर्वीत; उच्छ्रितदोषे च वमनविरेचनास्थापनानुवासनकर्म [6]कर्तव्यम् ॥ १२ ॥

( [7]पटोलत्रिफलाभीरुगुडूचीकटुकाकृतम् ॥
क्काथं पीत्वा जयत्याशु वातशोणितजां रुजम् ॥ १३ )

भवन्ति चात्र—

एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखम् ॥
वातासृक् साध्यते वैद्यैर्याप्यते तु चिरोत्थितम् ॥ १४ ॥
[8]उपनाहपरीषेकप्रदेहाभ्यञ्जनानि च ॥
शरणान्यप्रवातानि मनोज्ञानि महान्ति च ॥ १५ ॥
मृदुगण्डोपधानानि शयनानि सुखानि च ॥
वातरक्ते प्रशस्यन्ते मृदुसंवाहनानि च ॥ १६ ॥
व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम् ॥
दिवास्वप्नमभिष्यन्दि गुरु चान्नं [9]विवर्जयेत् ॥ १७ ॥

---

१ 'काकोल्यादिक्काथकल्कसिद्ध वा' इत्यय योगस्ता० पुस्तके नोपलभ्यते। २ 'सुषवीक्काथसिद्ध वा' इति ता। ३ 'कारवेल्लककाथमात्रसिद्ध वा' इत्यय योगस्ता० पुस्तके नोपलभ्यते। ४ 'बलातैल सिद्ध परिषेकावगाहबस्तिभोजनार्थमिति' इति ता। ५ 'शालिषष्टिकयवगोधूमान्नमुपसेवेत' इति ता। ६ 'आसेवेत' इति ता। ७ अय त्रयोदशश्लोकस्ता० पुस्तके नोपलभ्यते। ८ 'अभ्यञ्जनपरीषेकप्रदेहव्यजनानि च' इति ता.। ९ 'विवर्जयेत् इति' इति ता.।

अपतानकिनमस्रस्ताक्षमवक्रभ्रुवमस्तब्धमेढ्रमस्वेदनमवेपनमप्रलापिनमखट्वापातिनमबहिरायामिनं चोपक्रमेत् । तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीडेनेन तीक्ष्णेनोपक्रमेत शिरःशुद्ध्यर्थं; अनन्तरं विदारिगन्धादिक्काथमांसरसक्षीरदधिपक्कं सर्पिरच्छं पाययेत्, तथा हि नातिमात्रं वायुः प्रसरति; ततो भद्रदार्वादिवातघ्नगणमाहृत्य सयवकोलकुलत्थं सानूपौदकमांसं पञ्चवर्गमेकतः प्रक्काथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्य सर्पिस्तैलवसामज्जभिः सह विपचेन्मधुरकप्रतीवापं, तदेतत्त्रैवृतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु विदध्यात्; यथोक्तैश्च स्वेदविधानैः स्वेदयेत्, बलीयसि वाते सुखोष्णतुषबुसकरीषपूर्णे कूपे निदध्यादामुखात्, तप्तायां वा रथकारचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत्, कृशरावेशवारपायसैर्वा स्वेदयेत् । मूलकोरुबूकस्फूर्जार्जकार्कसप्तलाशङ्खिनीस्वरससिद्धं तैलमपतानकिनां परिषेकादिषूपयोज्यम् । अभुक्तवता पीतमम्लं दधि मरिचवचायुक्तमपतानकं हन्ति; तैलसर्पिर्वसाक्षौद्राणि वा । एतच्छुद्धवातापतानकविधानमुक्तं, संसृष्टे संसृष्टं कर्तव्यम् । वेगान्तरेषु

---

१ "°अस्तब्धाङ्गुलम्°" इति ता. । २ "°वेपमानखट्वापातिन°" इति ता. । ३ "°अवपीडेन तीक्ष्णेनोपक्रमेत्' इति ता. । ४ 'अथानन्तरम्' इति ता. । ५ 'विदारिगन्धादिक्काथेक्षुरसक्षीरदधिविपक्कम्' इति ता. । ६ ता० पुस्तके 'हि' इत्यव्यय नास्ति । ७ 'ततो भद्रदार्वादीनि वातघ्नान्यन्यानि चाङ्गान्याहृत्य यवकोलकुलत्थांश्च सानूपोदकमांसान्येकतः क्काथ्यमादाय' इति ता. । ८ 'पचेत्' इति ता. । ९ 'परिषेकाभ्यङ्गपानभोजन°' इति ता. । १० 'अङ्गारचुल्ल्यां' इति पा० । ११ 'तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत्' इति वाक्य ता० पुस्तके नास्ति । १२ 'मूलकोरुबूकस्फूर्जकार्कसप्तलाशङ्खिनीस्वरससिद्धमपतानकिनां परिषेकादिषु योज्यं, अभुक्तवतां पीतमम्ल दधिमरिचयुक्तमपतानकमपहन्ति, सर्पिस्तैलवसामज्जा वा' इति ता. ।

चावपीडं दद्यात्; ताम्रचूडकर्कटकृष्णमत्स्यशिशुमारवराहवसा[1,2]श्चासेवेत, क्षीराणि वा[3] वातहरसिद्धानि, यवकोलकुलत्थमूलकदधिघृततैलसिद्धा वा यवागूः; स्नेहविरेचनास्थापनानुवासनैश्चैनं दशरात्राहृतवेगमुपक्रमेत[4]; वातव्याधिचिकित्सितं चावेक्षेत; रक्षाकर्म च कुर्यादिति[5] ॥ १८ ॥

पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तं[6] चोपक्रमेत्। तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना [7]शोधनेन संशोध्यानुवास्यास्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत्; वैशेषिकश्चात्र[8] मस्तिष्क्यः [9]शिरोबस्तिः, अणुतैलमभ्यङ्गार्थे, साल्वणमुपनाहार्थे, बलातैलमनुवासनार्थे; एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुपसेवेत[10] ॥ १९ ॥

मन्यास्तम्भेऽप्येतदेव[11] विधानं, विशेषतो वातश्लेष्महरैर्नस्यै रूक्षस्वेदैश्चोपचरेत् ॥ २० ॥

अपतन्त्रकातुरं नापतर्पयेत्, वमनानुवासनास्थापनानि न निषेवेत, वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रधमनैर्मोक्षयेत्, तुम्बुरुपुष्कराह्वहिङ्ग्वम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत्, पथ्याशतार्धं सौवर्चलद्विपले चतुर्गुणे पयसि सर्पिःप्रस्थं सिद्धं, वातश्लेष्मापनुच्च कर्म कुर्यात् ॥ २१ ॥

---

१ "°कर्कटक°" इति ता.। २ "°शिशुमारवसाश्चावेक्षेत' इति ता.। ३ ता० पुस्तके 'वा' इत्यव्यय नास्ति। ४ 'दशरात्रमागतवेगमुपचरेत्' इति ता०। दशरात्राद्धतवेगमुपक्रमेत' इति च पा०। ५ ता० पुस्तके 'कुर्यादिति' इति न पठ्यते। ६ 'उपकरणवन्त' इति पद ता० पुस्तके नोपलभ्यते। ७ 'संशोधनेन' इति ता.। ८ 'वैशेषिकश्चात्र मस्तिष्कशिरोबस्ति' इति पा०। ९ 'शिरोबस्तिश्च शिरःशुद्ध्यर्थं' इति पा०। १० 'क्रियामासेवेत' इति ता। ११ ता० पुस्तके 'मन्यास्तम्भेऽप्येतदेव विधान' इत्यादि विंशतितम सूत्र 'अपतन्त्रकातुर नापतर्पयेत्' इत्याद्येकविंशतितम सूत्र च नोपलभ्यते।

अर्दितातुरं बलवन्तमात्मवन्तमुपकरणवन्तं च वातव्याधिविधानेनोपचरेत्, वैशेषिकैश्च मस्तिष्क्यशिरोबस्तिनस्यधूमोपनाहस्नेहनाडीस्वेदादिभिः; ततः सतृणं महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवौदककन्दांश्चाहृत्य द्विगुणोदके क्षीरद्रोणे निःक्काथ्य क्षीरावशिष्टमवतार्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रयेत्, ततस्तैलं क्षीरानुगतमवतार्य शीतीभूतमभिमथ्नीयात्, तत्र यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेत्, एतत् क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यं; तैलहीनं वा क्षीरसर्पिरक्षिततर्पणमिति ॥ २२ ॥

गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टकपाददाहपादहर्षावबाहुकबाधिर्यधमनीगतवातरोगेषु यथोक्तं यथोद्देशं च सिराव्यधं कुर्यात्, अन्यत्रावबाहुकात्; वातव्याधिचिकित्सितं चावेक्षेत २३

कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यात्, अजामूत्रमधुतैलानि वा, मातुलुङ्गदाडिमतिन्तिडीकस्वरसमूत्रसिद्धं तैलं, शुक्तसुरातक्रमूत्रलवणसिद्धं वा; नाडीस्वेदैश्च स्वेदयेत्, वातव्याधिचिकित्सां चावेक्षेत; भूयश्चोत्तरे वक्ष्यामः २४

१ ता० पुस्तके 'आत्मवन्त' इति पद नोपलभ्यते । २ 'वैशेषिकश्च मस्तिष्कशिरोबस्तिनस्यधूपोपनाहनाडीस्वेदैस्ततः सतृणमहत्पञ्चमूलीमाहृत्य द्विगुणोदके क्षीरे काथ्य क्षीरावशिष्टमवतार्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रित्य विपचेत् । ततस्तैल क्षीरानुगतमवतार्य शीतीभूत मथ्नीयात् । तदेतत् क्षीरतैलमर्दितानां पानादिषूपयोज्यमिति' इति ता० । ३ 'पादावशिष्टं' इति पा० । ४ 'गृध्रसीविश्वाचीक्रोष्टुकशीर्षपङ्गुकलायखञ्जवातकण्टकपाददाहपादहर्ष°' इति ता० । ५ 'धमनीजिह्वागतवातरोगेषु यथोक्त यथोद्देशं च शिराव्यध कृत्वान्यत्रावबाहुकात् वातव्याधिचिकित्सितमवेक्षेत' इति ता० । ६ 'कर्णशूले तु शृङ्गवेररसो मधुकतैलसंसृष्टः सैधवोपहितः सुखोष्णः कर्णयोर्देय' इति ता० । ७ '°तिन्तिडीकरस°' इति ता । ८ 'तैलशुक्तसुरातक्रमूत्रसिद्ध वा' इति ता० ।

तूनीप्रतून्योः स्नेहलवणमुष्णोदकेन पाययेत्, पिप्पल्यादिचूर्णं वा, हिङ्गुयवक्षारप्रगाढं वा सर्पिः, बस्तिभिश्चैनमुपक्रमेत् ॥ २५ ॥

[1]आध्माने त्वपतर्पणपाणिताप ( दीपनचूर्ण ) फलवर्तिक्रियापाचनीयदीपनीयबस्तिभिरुपाचरेत्; [2]लङ्घनानन्तरं चान्नकाले धान्यकजीरकादिदीपनसिद्धान्यन्नानि। प्रत्याध्माने छर्दनापतर्पणदीप[3]नानि [4]कुर्यात् ॥ २६ ॥

अष्ठीलाप्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत् क्रियाविभाग इति२७

हिङ्गुत्रिकटुवचाज[5]मोदाधान्याजगन्धादाडिमतिन्तिडीक[6]पाठाचित्रकचव्यक्षारसैन्धवविडसौवर्चलस्वर्जिकापिप्पलीमूलाम्लवेतसशटीपुष्करमूलहपुषाचव्याजाजीपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रा गुटिकाः कारयेत्, ततः प्रातरेकैकां [7]वातविकारी भक्षयेत्, ए[8]ष योगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मानपार्श्वोदरबस्तिशूलानाहमूत्रकृच्छ्रप्लीहार्शस्तूनीप्रतूनीरपहन्ति ॥ २८ ॥

भवन्ति चात्र—

के[9]वलो दोषयुक्तो वा धातुभिर्वाऽऽवृतोऽनिलः ॥
विज्ञेयो लक्षणोहाभ्यां चिकित्स्यश्चाविरोधतः ॥ २९ ॥

---

१ 'आध्माने त्वपतर्पणपाणितापदीपनचूर्णफलवर्तिक्रियादीपनपाचनानि कुर्याच्छोधनबस्त्युपयोगश्चेति' इति ता.। २ 'लङ्घनानन्तर चान्नकाले धान्यकजीरकादिदीपनसिद्धान्यन्नानि' इति वाक्यांशस्ता० पुस्तके नोपलभ्यते। ३ '°दीपनीयानि' इति ता.। ४ 'कुर्यात्' इत्येतद् पद ता० पुस्तके नास्ति। ५ '°अजमोद°' इति ता.। ६ '°पाठाचित्रकचव्यसैन्धवविडसौवर्चलयवक्षारसुवर्चिकापिप्पलामूलाम्लवेतसशटीपुष्करहपुषाजाजीपथ्यास्सञ्चूर्ण्य मातुलुङ्गाम्लेन बहुशः परीभाव्याक्षमात्रा गुटिकाः कारयेत्' इति ता.। ७ 'वातरोगी' इति ता.। ८ 'एषः खलु योगो गुल्मश्वासकासारोचकहृद्रोगाध्मानपार्श्वोदरबस्तिशूलानाहमूत्रकृच्छ्रार्शः-प्लीहोदरपाण्डुरोगानपहन्ति, तूनीप्रतूनीषु चात्यर्थमुपयुज्यते' इति ता.। ९ 'केवलो दोषयुक्तो वा धातूननुगतोऽनिलः॥ विज्ञेयो लक्षणोहाभ्यां चिकित्स्यश्चाविरोधतः' इति ता.।

रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः ॥
करोति यस्य तं वैद्यः शोथवत् समुपाचरेत् ॥ ३० ॥
[1]कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते ॥
तदाऽङ्गमर्दस्तैमित्य[2]रोमहर्षरुजाज्वरैः ॥ ३१ ॥
निद्र[3]या चार्दितौ स्त[4]ब्धौ शीतलावप्रचेतनौ ॥
गुरुकावस्थिरावूरू न[5] स्वाविव च मन्यते ॥ ३२ ॥
त[6]मूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥
स्नेहवर्जं पिबेत्तत्र चूर्णं षड्धरणं नरः ॥ ३३ ॥
हितमु[7]ष्णाम्बुना तद्वत् पिप्पल्यादिगणैः कृतम् ॥
लि[8]ह्याद्वा त्रैफलं चूर्णं क्षौद्रेण कटुकान्वितम् ॥ ३४ ॥
मूत्रैर्वा गुग्गुलं श्रेष्ठं पिबेद्वाऽपि शि[9]लाजतु ॥
त[10]तो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनम् ॥ ३५ ॥
हृद्रोगमरुचिं गुल्मं तथाऽभ्यन्तरविद्रधिम् ॥
सक्षारमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च ॥ ३६ ॥
कुर्याद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥
भोज्या[11]ः पुराणश्यामाककोद्रवोद्दालशालयः ॥ ३७ ॥
शु[12]ष्कमूलकयूषेण पटोलस्य रसेन वा ॥
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥ ३८ ॥

---

१ 'कफमेदोयुतो वायुरूरू संश्रयते यदा' इति ता. । २ '°स्तैमित्य' इति ता० । '°शैथिल्य°' इति च पा० । ३ 'निद्रया चार्दितस्तब्धौ शीतलावप्रवेपनौ' इति ता. । ४ 'स्निग्धौ' इति पा० । ५ 'पारक्याविव मन्यते' इति ता. । ६ 'तदूरुस्तम्भ' इति ता. । ७ 'सुखाम्बुना' इति ता. । ८ 'लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम्' इति ता. । ९ 'शिलाजतुम्' इति ता. । १० 'सोऽपहन्ति' इति ता. । ११ 'भोज्याः पुराणाः श्यामाकाः कोद्रवोद्दालकादयः' इति ता. । १२ 'शुष्कमूलकयूषेण पटोलस्य रसेन वा' इत्ययमर्धश्लोकः ता० पुस्तके नास्ति ।

यँदा स्यातां परिक्षीणे भूयिष्ठे कफमेदसी ॥
तदा स्नेहादिकं कर्म पुनरत्रावचारयेत् ॥ ३९ ॥
सुगेन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसे ॥
कटुपाकः सरो हृद्यो गुग्गुलुः स्निग्धपिच्छिलः ॥ ४० ॥
स नवो बृंहणो वृष्यः पुराणस्त्वपकर्षणः ॥
तैक्ष्ण्यौष्ण्यात्कफवातघ्नः सरत्वान्मलपित्तनुत् ॥ ४१ ॥
सौगन्ध्यात् पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः ॥
तं प्रातस्त्रिफलादार्वीपटोलकुशवारिभिः ॥ ४२ ॥
पिबेदावाप्य वा मूत्रैः क्षारैरुष्णोदकेन वा ॥
जीर्णे यूषरसैः क्षीरैर्भुञ्जानो हन्ति मासतः ॥ ४३ ॥
गुल्मं मेहमुदावर्तमुदरं सभगन्दरम् ॥
क्रिमिकण्डूरुचिश्वित्राण्यर्बुदं ग्रन्थिमेव च ॥ ४४ ॥
नाड्याढ्यवातश्वयथून् कुष्ठदुष्टव्रणांश्च सः ॥
कोष्ठसन्ध्यस्थिगं वायुं वृक्षमिन्द्राशनिर्यथा ॥ ४५ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने महावातव्याधिचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

चैतुर्विधोऽर्शसां साधनोपायः । तद्यथा—भेषजं क्षारोऽग्निः शस्त्रमिति । तत्र, अचिरकालजातान्यल्पदोषलिङ्गोपद्रवाणि भेषज-

---

१ 'परिक्षीणे यदा स्यातां भूयिष्ठ कफमेदसी' इति ता०। २ ता० पुस्तके ४०-४१-४२-४३-४४-४५ इत्येते श्लोका नोपलभ्यन्ते। ३ 'अथ खलु वत्स सुश्रुत चतुर्विधोऽर्शसां साधनोपायः। तद्यथा—' इति ता०।

साध्यानि, मृदुप्रसृतावगाढान्युच्छ्रितानि क्षारेण, कर्कशस्थिरपृथुकठिनान्यग्निना, तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण। तत्र भेषजसाध्यानामर्शसामदृश्यानां तु भेषजं भवति, क्षाराग्निशस्त्रसाध्यानां तु विधानमुच्यमानमुपधारय ॥ ३ ॥

तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाभिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य संवृ(भृ)ते शुचौ देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायमुत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रणशाटकेन परिक्षिप्तग्रीवासक्थि परिकर्मिभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा ततोऽस्मै घृताभ्यक्तगुदाय घृताभ्यक्तं यन्त्रमृज्वनुमुखं पायौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय, प्रविष्टे चार्शो वीक्ष्य, शलाकयोत्पीड्य, पिचुवस्त्रयोरन्यतरेण प्रमृज्य, क्षारं पातयेत् पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शतमात्रमुपेक्षेत, ततः प्रमृज्य क्षारबलं व्याधिबलं चावेक्ष्य पुनरालेपयेत्, अथार्शः पक्वजाम्बवप्रतीकाश-

---

१ 'अतनुमूलानि' इति ता.। २ 'क्षाराग्निशस्त्रसाध्यानां क्षाराग्निशस्त्राणि च तेषां विधानमुपधारयस्व' इति ता.। ३ 'आतुरमिति' पद ता० पुस्तके नास्ति। ४ '°प्रशमनार्थं' इति ता.। ५ 'स्निग्धमनल्पमन्नद्रव भुक्तवन्त सवेश्य शुचौ साधारणे देशे व्यभ्रे काले समे फलके प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायमुत्तानमुन्नतकटीकं यन्त्रशाटकेन इति ता.। ६ 'वस्त्रचुम्भलकोपविष्ट' इति पा०। ७ 'परिकर्मिभिः सुपरिगृहीत कारयित्वा ततोऽस्मै घृताभ्यक्तगुदाय' इति ता.। ८ 'घृताक्तगुदाय' इति पा०। ९ 'प्रवाहमाणस्य' इति पदं ता० पुस्तके नास्ति। १० 'अभिवीक्ष्य' इति ता.। ११ 'पिचुप्लोतयो.' इति ता.। १२ 'तत. प्रमृज्य क्षारलवण चावेक्ष्य पुनः प्रतिसारयेत्' 'अथार्शःपक्वजाम्बूसकाशमभिसमीक्ष्यावसन्नमीषन्नत उपावर्तयेत्' इति ता.।

मवसन्नमीषन्नतमभिसमीक्ष्योपावर्तयेत्, क्षारं[1] प्रक्षालयेद्धान्याम्लेन[2] दधिमस्तुशुक्तफलाम्लैर्वा, ततो यष्टीमधुकमिश्रेण सर्पिषा निर्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं[3] शीताभिरद्भिः परिषिञ्चेत्, अशीताभिरित्येके[4], ततो निवातमागारं[5] प्रवेश्याचारिकमादिशेत्; सावशेषं पुनर्दहेत्[6]; एवं सप्तरात्रात् सप्तरात्रादेकैकमुपक्रमेत, तत्र[7] बहुषु पूर्वं दक्षिणं साधयेत्, दक्षिणाद्वामं, वामात् पृष्ठजं, ततोऽग्रजमिति[8] ॥ ४ ॥

तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत्, क्षारेणैव मृदुना पित्तरक्तनिमित्तानि[9] ॥ ५ ॥

तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं[10] बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि, अतिदग्धे तु गुदावदरणं दाहो मूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति, ध्यामाल्पव्रणता[11] कण्डूरनिलवैगुण्यमिन्द्रियाणामप्रसादो[12] विकारस्य चाशान्तिर्हीनदग्धे ॥ ६ ॥

महान्ति च[13] प्राणवतश्छित्त्वा दहेत्, निर्गतानि[14] चात्यर्थं दोषपूर्णानि यन्त्राद्विना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रावणालेपक्षारा-

---

१ 'क्षारं प्रक्षालयेत्' इति वाक्यं ता० पुस्तके नास्ति। २ 'धान्याम्लदधिमस्तुशुक्तानामन्यतमेन' इति ता.। ३ 'उष्णोदकेऽवगाह्य' इति ता.। ४ 'अशीताभिरद्भिरित्येके' इति ता.। ५ 'निवातमागार' इति ता.। ६ 'पुनर्दाहयेत्' इति ता.। ७ 'तत्र' इति ता.। ८ 'ततो वामं ततः पृष्ठजमग्रजमिति' इति ता.। ९ 'क्षारेणैव पित्तरक्तसमुत्थानि' इति ता.। १० 'अन्नेऽभिरुचि°' इति ता.। ११ 'ध्यामाल्पता कण्डूरनिलवैगुण्यं च हीनदग्धे' इति ता.। १२ ता० पुस्तके 'इन्द्रियाणामप्रसादो विकारस्य चाशान्तिः' इत्यत्र पठिते द्वे हीनदग्धलक्षणे नोपलभ्येते। १३ 'वा' इति ता.। १४ 'निर्गतानि चात्यर्थं दोषपरिपूर्णागतानि स्नेहाभ्यङ्गस्वेदोपनाहविस्रावणालेपनैरुपचरेत्' इति ता।

म्निशस्त्रैरुपाचरेत्; प्रवृत्तरक्तानि च रक्तपित्तविधानेन, भिन्नपुरीषाणि चातीसारविधानेन, बद्धवर्चांसि स्नेहपानविधानेनोदावर्तविधानेन वा; एष सर्वस्थानगतानामर्शसां दहनकल्पः ॥ ७ ॥

आसाद्य च[2] दर्वीकूर्चकशलाकानामन्यतमेन क्षारं पातयेत् । भ्रष्टगुदस्य तु विना य[3]न्त्रेण क्षारादिकर्म प्रयुञ्जीत । सर्वेषु च शालिषष्टिकयवगोधूमान्नं सर्पिःस्निग्धमुपसेवेत पयसा निम्बयूषेण पटोलयूषेण वा, य[4]थादोषं शाकैर्वास्तूकतण्डुलीयकजीवन्त्युपोदिकाश्वबलाबा[5]लमूलकपालङ्क्यसनचिल्लीचुञ्चूकलायवल्लीभिरन्यैर्वा । यच्चान्यदपि स्निग्धमग्निदीपनमर्शोघ्नं सृष्टमूत्रपुरीषं च तदुपसेवेत ॥८॥

द[6]ग्धेषु चार्शःस्वभ्यक्तोऽनलसन्धुक्षणार्थमनिलप्रकोपसंरक्षणार्थं च स्नेहादीनां सामान्यतः क्रियापथमुपसेवेत । विशेषतस्तु वाताशःसु सर्पींषि च वातहरदीपनीयसिद्धानि हिङ्ग्वादिभिश्चूर्णैः प्रतिसंसृज्य पिबेत्, पित्तार्शःसु पृथक्पर्ण्यादीनां कषायेण [7]दीपनीयप्रतीवापं सर्पिः, शोणि[8]तार्शःसु मञ्जिष्ठामुरुङ्ग्यादीनां कषाये पाचयेत्, श्लेष्मार्शःसु सुरसादीनां कषा[9]ये । उपद्रवांश्च यथास्वमुपा[10]चरेत् ॥ ९ ॥

---

१ 'प्रवृत्तरक्तानि वा पित्तरक्तविधानेन। भिन्नवर्चांसि वातीसारविधानेन। बद्धवर्चांसि चोदावर्तविधानेनेति' इति ता. । २ ता० पुस्तके 'च' इत्यव्ययं नास्ति । ३ 'यन्त्रम्' इति ता. । ४ 'यथादोषैर्वास्तूकतण्डुलीयक°' इति ता. । ५ '°बालमूलकचुञ्चुचिल्लीनामन्यतमेन' इति ता. । ६ 'दग्धेषु चार्शस्त्वनलसंधुक्षणार्थं स्नेहादि सामान्यतो विशेषतश्च क्रियापथमासेवेत सर्पींषि च वातहरदीपनीयसिद्धानि हिङ्ग्वादीनां चूर्णैः प्रतिसंसृज्य पिबेत् । ७ 'दीपनीयप्रतीवापं सर्पिः पिबेत्' इति ता । दीपनीयप्रतीवाप भद्रदार्वादिपिप्पल्यादिसर्पिश्च' इति च पा० । ८ 'शोणितार्शःसु मुरुङ्ग्यादीनां कषायैः' इति ता. । ९ 'कषायैः' इति ता. । १० 'उपचरेत्' इति ता. ।

परं च यत्नमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत्, तद्विभ्रमाद्धि षाण्ढ्यशोफदाहमदमूर्च्छाटोपानाहातीसारप्रवाहणानि भवन्ति मरणं वा ॥ १० ॥

अत ऊर्ध्वं यन्त्रप्रमाणमुपदेक्ष्यामः—तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां, षडङ्गुलपरिणाहं नारीणां तलायतं; तद् द्विच्छिद्रं दर्शनार्थम्, एकच्छिद्रं तु कर्मणि; एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति; छिद्रप्रमाणं तु त्र्यङ्गुलायतमङ्गुष्ठोदरपरिणाहं, यदङ्गुलमवशिष्टं तस्यार्धाङ्गुलादधस्तादर्धाङ्गुलोच्छ्रितोपरिवृत्तकर्णिकम्; एष यन्त्राकृतिसमासः ॥ ११ ॥

अत ऊर्ध्वमर्शसामालेपान् वक्ष्यामः—स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः कुक्कुटपुरीषगुञ्जाहरिद्रापिप्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः, दन्तीचित्रकसुवर्चिकालाङ्गलीकल्को वा गोपित्तपिष्टस्तृतीयः, पिप्पलीसैन्धवकुष्ठशिरीषफलकल्कः स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः, कासीसहरितालसैन्धवाश्वमारकविडङ्गपूतीककृतवेधनजम्ब्वर्कोत्तमारणीदन्तीचित्रकालर्कस्नुहीपयःसु तैलं विपक्वमभ्यञ्जनेनार्शः शातयति ॥ १२ ॥

---

१ 'परं च यत्नमास्थाय गुदे शस्त्राण्यवचारयेत्' इति ता। २ 'तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं नारीणां तलायतमित्येके' इति ता। ३ 'एकच्छिद्रे' इति ता। ४ '°विस्तार' इति ता.। ५ 'तस्यार्धाङ्गुलमधस्तादुपर्यर्धाङ्गुलोच्छ्रितमर्धाङ्गुष्ठोपरिवृत्तकर्णिकं' इति ता। ६ सुश्रुतोक्तस्यार्शोयन्त्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'रेक्टल स्पेक्युलम् ( Rectal Speculum )' इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते। ७ ता० पुस्तके "°लाङ्गली°" इति द्रव्यं न पठ्यते। ८ 'गोमूत्रयुक्तस्तृतीयः' इति ता.। ९ 'पिप्पलीसैन्धवकुष्ठशिरीषकल्कार्कक्षीरयुक्तश्चतुर्थः' इति ता.। १० 'स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा इति वाक्यांशस्ता० पुस्तके नास्ति।

[1]अत ऊर्ध्वं भेषजसाध्येष्वदृश्येष्वर्शःसु योगान् यापनार्थं वक्ष्यामः—प्रातः[2] प्रातर्गुडहरीतकीमासेवेत[3], ब्रह्मचारी गोमूत्रद्रोणसिद्धं वा हरीतकीशतं प्रातः प्रातर्यथाबलं क्षौद्रेण, अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः, शतावरीमूलकल्कं वा क्षीरेण, चित्रकचूर्णयुक्तं वा सीधुं पराध्यँ, भल्लातचूर्णयुक्तं वा सक्तुमन्थमलवणं तक्रेण, कलशे वाऽन्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रमम्लमनम्लं वा पानभोजनेषूपयुञ्जीत, एष एव भार्ग्यास्फोतायवान्यामलकगुडूचीषु तक्रकल्पः पिप्पली[4]पिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च पूर्ववदेव, निरन्नो वा तक्रमहरहर्मासमुपसेवेत[5], [6]शृङ्गवेरपुनर्नवाचित्रककषायसिद्धं वा पयः कुटजमूलत्वक्फाणितं वा पिप्पल्यादिप्रतीवापं क्षौद्रेण, महावातव्याध्युक्तं हिङ्ग्वादि[7]चूर्णमुपसेवेत तक्राहारः क्षीराहारो वा, क्षारलवणांश्चित्र[8]कमूलक्षारोदकसिद्धान् वा कुल्माषान् भक्षयेत्, चित्र[9]कमूलक्षारोदकसिद्धं वा पयः पलाशतरुक्षारसिद्धं वा, पलाशतरुक्षारसिद्धान् वा कुल्माषान्, पाटलापामार्गबृहतीपलाशक्षारं वा परिस्रुतमहरहर्घृतसंसृष्टं[10],

---

१ 'अत ऊर्ध्वमदृश्येष्वर्शःसु' इति ता० । तथैव च पा० । २ 'प्रातः प्रातः' इत्यव्ययद्वय ता० पुस्तके न पठ्यते । ३ 'गुडहरीतकीमासेवेत ब्रह्मचारी गोमूत्रद्रोणसिद्ध वा हरीतकीशतमुपसेवेत यथाबल क्षौद्रेण । अपामार्गमूल वा तण्डुलोदकेन शतावरीमूलकल्क वा क्षीरेण, चित्रकचूर्णयुक्त वा सीधुना भल्लातचूर्णयुक्त वा मधुनार्धभल्लातकचूर्णयुक्त वा शक्तून् । लवण तक्रेण । कलशे वाऽन्तश्चित्रकमूलकल्कावलिप्ते निषिक्त तक्रमनम्ल पानभोजनेषूपयुञ्जीत ।' इति ता. । ४ 'पिप्पलीपिप्पलीमूलत्वग्विडङ्गचित्रकशुण्ठीहरीतकीषु च' इति ता. । ५ 'मासमासेवेत' इति ता. । ६ 'शृङ्गवेरपुनर्नवासिद्ध वा पयः' इति ता. । ७ 'हिङ्ग्वादिवटकमुपसेवेत' । ८ 'चित्रकमूलकषायसिद्ध कुल्माष भक्षयेत्' इति ता । ९ 'चित्रकमूलक्षारोदकसिद्ध वा पयः' इति वाक्य ता० पुस्तके नास्ति । १० 'घृतयुक्त' इति ता. ।

कुटजवन्दाकमूलकल्कं वा तक्रेण, चित्रकपूतीकनागरकल्कं वा पूतीकक्षारेण क्षारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापं, कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातः प्रातरुपसेवेत शीतोदकानुपानम्; एभिरभिवर्धतेऽग्निरर्शांसि चोपशाम्यन्ति ॥ १३ ॥

द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्य जलचतुर्द्रोणे विपाचयेत्, ततः पादावशिष्टं कषायमादाय सुशीतं गुडतुलया सहोन्मिश्र्य घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्ले, ततः प्रातः प्रातर्मात्रां पाययेत, तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्तारोचका न भवन्ति दीप्तश्चाग्निर्भवति ॥ १४ ॥

पिप्पलीमरिचविडङ्गैलवालुकलोध्राणां द्वे द्वे पले, इन्द्रवारुण्याः पञ्च पलानि, कपित्थमध्यस्य दश, पथ्याफलानामर्धप्रस्थः, प्रस्थो धात्रीफलानां, एतदैकध्यं जलचतुर्द्रोणे विपाच्य, पादावशेषं परिस्राव्य, सुशीतं गुडतुलाद्वयेनोन्मिश्र्य, घृतभाजने निःक्षिप्य, पक्षमुपेक्षेत यवपल्ले, ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत । एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरकृमिहरो बलवर्णकरश्चेति ॥ १५ ॥

---

१ 'कुटजवन्दाककल्कं वा तक्रेण' इति ता.। २ 'चित्रकपूतीनागरकल्कं वा पूतीकक्षारेण' इति वाक्यं ता० पुस्तके न पठ्यते। ३ 'कृष्णतिलप्रसृतं प्रकुञ्चं वा शीततोयानुपानेन प्रातः प्रातरुपसेवेत'। ४ 'जलद्रोणे' इति ता.। ५ 'ततः' इति ता० पुस्तके नास्ति। ६ 'तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्तश्वासकासारोचकाग्निदौर्बल्यानि न भवन्ति' इति ता.। ७ 'पिप्पलीमरिचविडङ्गैलवालुकलोध्राणां द्विपलिकान् भागानिन्द्रवारुण्याः पञ्चपलानि हरीतक्यामलककपित्थफलानां दश दश पलान्येतदैकध्य जलचतुर्द्रोणे विपाच्य पादावशेषं विस्राव्य सुशीतं गुडतुलाद्वयेनोन्मिश्र्य घृतभाजने निषिच्य पक्षमात्रमुपेक्षीयेत यवपल्ले। ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत। एष खल्वरिष्टोऽर्शोग्रहणीप्लीहहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरक्रिमिहरो बलवर्णकरश्चेति' इति ता.।

तत्र, वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धं[1], पित्तजेषु विरेचनम्[2], एवं रक्तजेषु संशमनं, कफजेषु शृङ्गवेरकुलत्थोपयोगः, सर्वदोषहरं यथोक्तं सर्वजेषु, यथास्वौषधिसिद्धं[3] च पयः सर्वेष्विति ॥ १६ ॥

अत ऊर्ध्वं भल्लातकविधानमुपदेक्ष्यामः—भल्लातकानि[4] परिपक्वान्यनुपहतान्याहृत्य तत एकमादाय द्विधा त्रिधा चतुर्धा वा छेदयित्वा कषायकल्पेन विपाच्य तस्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्तताल्वजिह्वौष्ठः प्रातः प्रातरुपसेवेत, ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहारः; एवमेकैकं वर्धयेद्यावत् पञ्चेति, ततः[5] पञ्च पञ्चाभिवर्धयेद्यावत् सप्ततिरिति, प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत् पञ्चेति, पञ्चभ्यस्त्वेकैकं यावदेकमिति । एवं भल्लातकसहस्रमुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति ॥१७॥

द्विव्रणीयोक्तेन[6] विधानेन भल्लातकनिश्च्युतितं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत, जीर्णे पूर्ववदाहारः फलप्रकर्षश्च । भल्लातकमज्जभ्यो[7] वा[8] स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवा-

---

१ 'स्नेहस्वेदस्नेहविरेचनास्थापन°' इति ता. । २ 'विरेचनमेव' इति ता. । ३ 'यथास्वौषधसिद्ध सर्वजेषु' इति ता. । ४ 'भल्लातकान् परिपकाननुपहतानाहृत्य तत एकमादाय त्रिधा चतुर्धा छेदयित्वा कषायकल्पेन विपाच्य तस्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्तताल्वोष्ठजिह्वः प्रात॰ प्रातरुपसेवेत । अपराह्णे क्षीरसर्पिरोदन इत्याहार॰; एवमेकैक वर्धयेत् यावत्पञ्च' इति ता. । ५ 'ततश्चोर्ध्वं पञ्च पञ्चाभिवर्धयेदाशतादिति । प्राप्य च शतशतमपकर्षयेत्, भूयः पञ्च पञ्च यावत् पञ्चेति पञ्चभ्यश्च यावदेक इति । एव भल्लातकसहस्रद्वयमुपयुज्य सर्वार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति' इति ता॰ । ६ 'द्विव्रणीयोक्तेन विधानेन भल्लातकनिश्च्युतित स्नेहमादाय प्रात प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहारः फलप्रकर्षश्च' इति वाक्यं ता० पुस्तके नास्ति । ७ '°मज्जाभ्य' इति ता. । ८ 'वा' इति ता० पुस्तके नास्ति ।

तमागारं प्रविश्य यथाबलं[1] प्रसृतिं प्रकुञ्चं वोपयुञ्जीत, तस्मिञ्जीर्णे [2]क्षीरं सर्पिरोदन इत्याहारः, एवं मासमुपयुज्य मासत्रयमादिष्टाहारो[3] रक्षेदात्मानं; ततः सर्वोपतापानपहृत्य वर्णवान् बलवान् श्रवणग्रहणधारणशक्तिसंपन्नो वर्षशतायुर्भवति, मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति, एवं दशमासानुपयुज्य वर्षसहस्रायुर्भवति ॥ १८ ॥

भवन्ति[4] चात्र—

यथा सर्वाणि कुष्ठानि हतः खदिरबीजकौ ॥
तथैवार्शांसि सर्वाणि वृक्षकारुष्करौ हतः ॥ १९ ॥
हरिद्रायाः[5] प्रयोगेण प्रमेहा इव षोडश ॥
क्षाराग्नी नातिवर्तन्ते तथा इश्या गुदोद्भवाः ॥ २० ॥
घृतानि दीपनीयानि लेह्यायस्कृतयः सुराः[6] ॥
आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम्[7] ॥ २१ ॥
वेगावरोधस्त्रीपृष्ठपानान्युत्कुटुकासनम् ॥
यथास्वं दोषलं चान्नमर्शःसु परिवर्जयेत्[8] ॥ २२ ॥

इति सुश्रुतसंहितायां चिकित्सास्थानेऽर्शश्चिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

१ 'यथाबलमुपयुञ्जीत' इति ता.। २ 'क्षीरसर्पिरोदन इत्याहारः' इति ता. ३ 'मासत्रयमुपदिष्टाहारो' इति ता। ४ 'भवन्ति चात्र श्लोकाः—अर्शांसि सर्वाणि सदा वृक्षकारुष्करौ हतः। यथा सर्वाणि कुष्ठानि गायत्र्यसनपादपौ ॥ क्षाराग्निना निवर्तन्ते दृश्यान्यर्शांसि सर्वदा। रजन्या नाभिवर्धन्ते प्रमेहा इव षोडश' इति ता.। ५ 'साध्या नाप्यतिवर्तन्ते प्रमेहा रजनी यथा इति ता। ६ 'पुराः' इति पा०। ७ 'दोषसमुच्छ्रयम्' इति ता.। ८ 'परिवर्जयेदिति' इति ता.।

## सप्तमोऽध्यायः ।

अथातोऽ[1]श्मरीचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः ॥
[2]औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति ॥ ३ ॥
तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥
[3]तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः ॥ ४ ॥
पाषाणभेदो वसुको [4]वशिराश्मन्तकौ तथा ॥
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ॥ ५ ॥
कपोतवङ्काऽऽर्तगलः [5]कच्चकोशीरकुब्जकाः ॥
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् ॥ ६ ॥
[6]यवाः कुलत्थाः कोलानि कतकस्य फलानि च ॥
ऊषकादिप्रतीवापमेषां क्वाथैर्घृतं कृतम् ॥ ७ ॥
भिनत्ति वातसंभूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ॥ ८ ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने ॥
[8]कुशः काशः सरो गुन्द्रा इत्कटो मोरटोऽश्मभित् ॥ ९ ॥
वरी विदारी वाराही शालिमूलत्रिकण्टकम् ॥
भल्लूकः पा[9]टला पाठा पत्तूरोऽथ [10]कुरुण्टिका ॥ १० ॥

---

१ 'अश्मरीणा' इति ता. । २ 'भेषजैः' इति ता. । ३ 'तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः' इत्ययमर्धश्लोकः ता० पुस्तके नास्ति । ४ 'वशिराश्मन्तकस्तथा' इति ता. । ५ 'काञ्चनोशीरकौ तथा' इति ता० । 'कुकुभोशीरकुब्जकाः' इति च पा० । ६ 'यवकोलकुलत्थानि' इति ता. । ७ 'पेयानि' इति ता. । ८ 'कुशः काशः शरो कच्छुरित्कटो मोरटोऽश्मभित् ॥ दर्भो विदारी वाराही शालिमूल त्रिकण्टकम् ।' इति ता. । ९ 'पाटली' इति ता. । १० 'कुरूटिका' इति ता. ।

पुनर्नवा शिरीषश्च कथितास्तेषु साधितम् ॥
[1]घृतं शिलाजमधुकबीजैरिन्दीवरस्य च ॥ ११ ॥
त्रपुसैर्वारुकादीनां बीजैश्चावापितं शुभम् ॥
भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव तु ॥ १२ ॥
[2]क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ १३ ॥
गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणवः ॥
कुष्ठभद्रादिमरिचचित्रकैः ससुराह्वयैः ॥ १४ ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ॥
भिनत्ति कफसंभूतामश्मरीं क्षिप्रमेव तु ॥ १५ ॥
[3]क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् कफनाशने ॥ १६ ॥
पि[4]चुकाङ्कोलकतकशाकेन्दीवरजैः फलैः ॥
चूर्णितैः सगुडं तोयं शर्कराशमनं पिबेत् ॥ १७ ॥
क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा [5]तालमूलिका ॥
अजमोदा कदम्बस्य मूलं नागरमेव च ॥ १८ ॥
पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा ॥
त्रि[6]कण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ॥ १९ ॥

---

१ 'घृतं शिलाजैर्मधुकैर्बदरेन्दीवरस्य च' इति ता। २ 'क्षाराण्यवागूः पेयानि' इति ता। ३ 'क्षारान् यवागूः पेयानि' इति ता.। ४ 'पिचुकाकोलकनक शाकेन्दीवरजैः फलैः॥ पीतमुष्णाम्बु सगुड शर्करा पातयेत्यधः॥' इति ता। ५ 'तालपत्रिका' इति ता०। 'तालपादिका' इति च पा०। ६ 'वृत्तकण्टकबीजानां चूर्णं माक्षिकसंयुतम्॥ आविक्षीरेण सप्ताह पेयमश्मरिभेदन' इति ता.।

अविक्षीरेण सप्ताहमश्मरीभेदनं पिबेत् ॥
द्रव्याणां तु घृतोक्तानां क्षारोऽविमूत्रगालितः ॥ २० ॥
ग्राम्यसत्त्वशकृत्क्षारैः संयुक्तः साधितः शनैः ॥
तत्रोषकादिरावापः कार्यस्त्रिकटुकान्वितः[1] ॥ २१ ॥
एष[2] क्षारोऽश्मरीं गुल्मं शर्करां च भिनत्त्यपि ॥
तिलापामार्गकदलीपलाशयवकल्कजः[3] ॥ २२ ॥
क्षारः पेयोऽविमूत्रेण शर्करानाशनः[4] परः ॥
पाटलाकरवीराणां[5] क्षारमेवं समाचरेत् ॥ २३ ॥
श्वदंष्ट्रायष्टिकाब्राह्मीकल्कं वाऽक्षसमं पिबेत् ॥
सहैडकाख्यौ[6] पेयौ वा शोभाञ्जनकमार्कवौ ॥ २४ ॥
कपोतवङ्कामूलं वा पिबेदम्लैः[7] सुरादिभिः ॥
तत्सिद्धं वा पिबेत् क्षीरं वेदनाभिरुपद्रुतः ॥ २५ ॥
हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव[8] वा ॥
सर्वथैवोपयोज्यः स्याद्गणो वीरतरादिकः ॥ २६
घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरबस्तिभिः ॥
यदि[9] नोपशमं गच्छेच्छेदस्तत्रोत्तरो[10] विधिः ॥ २७ ॥
कुशलस्यापि[11] वैद्यस्य यतः सिद्धिरिहाध्रुवा ॥
उपक्रमो जघन्योऽयमतः [12]संपरिकीर्तितः ॥ २८ ॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥
तस्मादापृच्छय कर्तव्यमीश्वरं साधुकारिणा ॥ २९ ॥

---

१ 'त्रिकटुकायुत.' इति ता । २ 'क्षार एपोऽश्मरीं' इति ता । ३ '°ब-ल्वजा.' इति ता. । ४ 'शर्कराश्मरिभेदन.' इति ता । ५ 'पाटलीक-रवीराणा' इति ता । ६ 'सहेलकाख्यौ पेयौ वा तथा शोभाञ्जनार्थजौ' इति ता । ७ 'अम्लसुरादिभि' इति हाराणचन्द्रः । ८ 'सिद्ध वापि पुनर्नवे' इति ता । ९ 'यदि नोपशाम्येत' इति ता । १० 'अतस्तत्रोत्तरो विधि.' इति पा० । ११ 'निश्चितास्य वैद्यस्य यत. सिद्धिरिह ध्रुवा' इति ता. । १२ 'स परिकीर्तित.' इति हाराण० ।

अथ[1] रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्नशरीरं भुक्तवन्तं कृतबलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य,[2] ततो बलवन्तमविक्लवमाजानुसमे फलके प्रागुपविष्टान्यपुरुषस्योत्सङ्गे[3] निषण्णपूर्वकायमुत्तानमुन्नतकटीकं वस्त्राधारकोपविष्ट सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्वा,[4] ततः स्वभ्यक्तनाभिप्रदेशस्य[5] वामपार्श्वं विमृद्य मुष्टिनाऽवपीडयेदधोनाभेर्यावदश्मर्यधः प्रपन्नेति, ततः स्नेहाभ्यक्ते[6] कृत्तनखे वामहस्तप्रदेशिनीमध्यमे अङ्गुल्यौ पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नबलाभ्यां पायुमेढ्रान्तरमानीय,[7] [8]निर्व्यलीकमनायतमविषमं च बस्तिं सन्निवेश्य, भृशमुत्पीडयेदङ्गुलिभ्यां यथा[9] ग्रन्थिरिवोन्नतं शल्यं भवति ॥ ३० ॥

स चेद्गृहीतशल्ये तु विवृताक्षो विचेतनः ॥
हतवल्लम्बशीर्षश्च निर्विकारो मृतोपमः ॥ ३१ ॥
[10]न तस्य निर्हरेच्छल्यं निर्हरेत्तु म्रियेत सः ॥
विना त्वेतेषु रूपेषु निर्हर्तुं प्रयतेत[11] वै ॥ ३२ ॥

[12]ततः सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वाऽवचारयेच्छस्त्रमश्मरीप्रमाणं, दक्षिणतो वा क्रियासौकर्यहेतोरित्येके, यथा[13] सा न

---

१ 'अथारोग्यार्थिनमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तमभुक्तवन्त स्विन्नशरीर कृतवलिमङ्गल°' इति ता। 'अथातुर' इत्यादि पा०। २ 'विधिनानेन सभृतसभारमाश्वास्य' इति ता। ३ 'प्रागुपवेश्य पुरुष च तस्योत्सङ्गे' इति हाराण०। 'प्रागुपवेश्य पुरुष तस्योत्सङ्गे विषण्णपूर्वकायमुत्तानमुन्नतकटीक वस्त्रचुम्बलकोपविष्ट' इति ता। ४ 'सूत्रकेण शाटकेन वा' इति ता। ५ 'स्वभ्यक्तनाभिप्रदेशस्यावमृद्य मुष्टिना पीडयेत्' इति ता। ६ 'स्नेहाभ्यक्त कृत्तनखो वामहस्तप्रदेशिनीमध्यमाङ्गुल्यौ प्रणिधाय' इति ता। ७ 'आनयित्वा' इति ता। ८ 'निर्वलीक°' इति ता.। ९ 'यदा' इति ता। १० 'न तस्य निर्हरेच्छल्य निर्हृतेऽपि म्रियेत स.॥ विना त्वेतैर्विकारैस्तु समाहर्तुमुपाचरेत्।' इति ता.। ११ 'समुपाचरेत्।' इति हाराण०। १२ 'तत सेवन्या. सव्ये पार्श्वे यवमात्रेणावमुच्यावचारयेच्छस्त्रम्' इति ता.। 'तत.' इति हाराण० न पठति। १३ 'यथा च न' इति हाराण०।

भिद्यते चूर्ण्यते[1] वा तथा प्रयतेत, चूर्णमल्पमप्यवस्थितं हि पुनः परिवृद्धिमेति, तस्मात् समस्तामग्रवक्रेणाददीत; स्त्रीणां तु बस्तिपार्श्वगतो गर्भाशयः सन्निकृष्टः[2], तस्मात्तासा[3]मुत्सङ्गवच्छस्त्रं पातयेत्, अतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत्[4], पुरुषस्य वा मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्; अश्मरीव्रणादृते[5] भिन्नबस्ति[6]रेकधाऽपि न भवति, द्विधा भिन्नबस्तिराश्मरिको न सिध्यति, अश्मरीव्रण[7]निमित्तमेकधाभिन्नबस्तिर्जीवति, क्रियाभ्यासा[8]च्छास्त्रविहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति । उद्धृतशल्यं तूष्णोदकद्रोण्या[9]मवगाह्य स्वेदयेत्, तथा हि बस्तिरसृजा न पूर्यते; [10]पूर्णे वा क्षीरवृक्षकषायं पुष्पनेत्रेण विदध्यात् ॥ ३३ ॥

भवति चात्र—

क्षीरवृक्षकषायस्तु पुष्पनेत्रेण [11]योजितः ॥
निर्हरेदश्मरीं[12] तूर्णं रक्तं बस्तिगतं च यत् ॥ ३४ ॥

मूत्र[13]मार्गविशोधनार्थं चास्मै गुडसौहित्यं वितरेत्; उद्धृत्य [14]चैनं [15]मधुघृताभ्यक्तव्रणं [16]मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृतां यवागूं

---

१ 'न विचूर्ण्यते' इति ता. । २ 'सन्निचय.' इति ता. । ३ 'तस्मात् तासा' इति ता. । 'तस्मान्नासा' इति च हाराणचन्द्रः । ४ 'भवति' इति ता. । ५ पुरुषस्य मूत्रप्रसेकक्षणनादश्मरीव्रणादृते भिन्नबस्तिरेकधा द्विधा वा न भवति । द्विधाभिन्नबस्तिराश्मरिकोऽपिन सिध्यति' । ६ 'भिन्नो बस्तिरेकधा न' इति हाराण० । ७ 'अश्मरीनिमित्तश्च व्रणमेकधाभिन्नबस्तिर्विधिना जीवति' इति ता. । ८ 'शास्त्रक्रियाभ्या शस्त्रविहिताच्छेदान्निष्यन्दपरिवृद्धत्वाच्च शल्यस्य जीवेदिति । उद्धृतशस्त्रमुदकद्रोण्या चावगाह्य स्वेदयेत्तथा हि बस्तिरसृजा न पूर्यते' इति ता. । ९ 'पूर्णे वा क्षीरवृक्षकषाय पुष्पनेत्रेण विदध्यात् ॥ भवति चात्र' इति द्वे वाक्ये ता० पुस्तके नोपलभ्येते । १० 'अश्मरीचूर्णम्' इति ता. । ११ '°कषाय तु योजितम्' इति हाराणच० । १२ 'चैना'=अश्मरिं' इति हाराण० । १३ 'अवतार्य' इति हाराण० । १४ 'मूत्रमार्गविशुद्ध्यर्थं चास्मै' इति ता. । १५ 'मधुघृताभ्यक्त व्रण' इति ता. । १६ 'मूत्रविशोधनेन द्रव्येण सिद्धामुष्णा यवागू सघृतां पाययेत्' इति ता. ।

पाययेतोभयकालं[1] त्रिरात्रं; त्रिरात्रादूर्ध्वं गुडप्रगाढेन पयसा मृद्वोदनमल्पं भोजयेद्दशरात्र[2] ([3]मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थं च), [4]दशरात्रादूर्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत्; ततो दशरात्रं चैनमप्रमत्तः स्वेदयेत् स्नेहेन द्रवस्वेदेन वा; क्षीरवृक्षकषायेण [5]चास्य व्रणं प्रक्षालयेत्; रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्कैर्व्रणं प्रतिग्राहयेत्; [6]एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्कं व्रणाभ्यञ्जनमिति; स्त्यानशोणितं चोत्तरबस्तिभिरुपाचरेत्; सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे [7]व्रणं यथोक्तेन विधिना दहेदग्निना, स्वमार्गप्रतिपन्ने चोत्तरबस्त्यास्थापनानुवासनैरुपाचरेन्म[8]धुरकषायैरिति; [9]यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसाऽपहरेत्, एवं चाशक्ये विदार्य[10] नाडीं शस्त्रेण बडिशेनोद्धरेत्। रूढव्रणश्चाङ्गनाश्वनगनागरथद्रुमान् [11]नारोहेत वर्षं, नाप्सु प्लवेत, भुञ्जीत वा गुरु ॥ ३५ ॥

[12]मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुद[13]बस्तीनष्टौ परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णबस्तेः, शुक्रवहच्छेदा-

---

१ 'पाययेदुभय°' इति हाराण०। २ 'मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थं च अथ वाक्यांश· ता० पुस्तके नास्ति। ३ ( ) चिह्नित· पाठो हाराण०-समत। ४ दशरात्रादूर्ध्वं फलाम्लैर्जाङ्गलरसै। दशरात्र चैनमप्रमत्तः स्वेदयेत्। क्षीरवृक्षकषायेण चास्य व्रण प्रक्षालयेत्' इति ता। ५ 'वास्य' हाराण०। ६ एतेष्वेव च हरिद्रायुतेषु घृत विपक्व व्रणाभ्यञ्जनमिति' इति ता। ७ 'यथोक्तविधानेन व्रणमग्निना दहेत्' इति ता। ८ 'मधुककषायै·' इति ता। ९ 'यदृच्छया मूत्रमार्गमप्रतिपन्ना सक्ताश्मरी वा स्रोतसापहरेत्। विदारी वा नाल शस्त्रेणाग्रवक्रेण'। १० अस्याग्रे 'वा' इत्यधिको हाराण० पाठः। ११ 'नारोहेत्' इति ता। १२ 'मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदबस्तीनष्टौ परिहरेत्' इति वाक्य ता० पुस्तके यद्यपि नोपलभ्यते तथापि तत्रैव 'तत्र मूत्रवहच्छेदान्मरण मूत्रपूर्णबस्ते' इत्यादिवाक्यानां दर्शनात् तद्वाक्य लेखकप्रमादेनैव त्रुटित स्यादिति भाति। १३ 'बस्तीन् परिहरेत्' इति हाराण०।

न्मरणं क्लैब्यं वा, मुष्कस्रोतउपघाताद्[1] ध्वजभङ्गः मूत्रप्रसेकक्षणना[2]न्मूत्रप्रक्षरणं, [3]सेवनीयोनिच्छेदाद्रुजः प्रादुर्भावः, बस्तिगुदविद्धलक्षणं[4] प्रागुक्तमिति ॥ ३६ ॥

भवतश्चात्र—

मर्माण्यष्टावसंबुध्य[5] स्रोतोजानि शरीरिणाम् ॥
व्यापादयेद्बहून्मर्त्यान् शस्त्रकर्मापटुर्भिषक् ॥ ३७ ॥
सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम् ॥
मूत्रसेकं मूत्रवहं [6]योनिर्बस्तिस्तथाऽष्टमः ॥ ३८ ॥

इति सुश्रुतसंहितायां चिकित्सास्थानेऽश्मरीचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच[7] भगवान् धन्वन्तरिः ॥ २ ॥

पञ्च भगन्दरा व्याख्याताः[8], तेष्वसाध्यः शम्बूकावर्तः शल्यनिमित्तश्च; शेषाः कृच्छ्रसाध्याः ॥ ३ ॥

तत्र भगन्दरपिडकोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्वपिडकं[9], पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां संनिवेश्यार्शसमिव[10] यन्त्रयित्वा, भगन्दरं समीक्ष्य[11] पराचीनमर्वाचीनं[12] वा, ततः प्रणिधायैषणीमुन्नम्य[13] साशयमुद्धरेच्छस्त्रेण;

---

१ 'मुष्कस्रोतसोरुपघातात्' इति वृ० वा०। २ मूत्रप्रसेकच्छेदान्मूत्रस्रवण' इति वृ० वा०। ३ 'सेवनीच्छेदाद्रुजाप्रादुर्भाव' इति ता। ४ 'गुदबस्तिविद्धस्य सद्योमरणमुक्तं प्रागिति' इति वृ० वा०। ५ 'मर्माण्येतान्यसंबुध्य' इति ता। ६ 'तथा बस्तिमिहाष्टममिति' इति ता.। ७ 'यथोवाच' इत्यादि वाक्यं न पठ्यते हाराण०। ८ 'ख्याताः' इति हाराण०। ९ 'उपचरेत्' इति ता.। १० 'संवेश्य' इति ता.। ११ 'अभिसमीक्ष्य' इति ता। १२ 'अर्वाचीनं' इति ता। 'अवाचीनं वा बहिर्मुखमन्तर्मुखं वा' इत्यधिकपाठः हाराण० संमतः। १३ 'प्रादाय' इति ता.।

अन्तर्मुखे[1] चैवं सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमासाद्यैषणीं दत्त्वा शस्त्रं पातयेत्; आसाद्य वाऽग्निं क्षारं चेति; एतत्[2] सामान्यं सर्वेषु ॥ ४ ॥

विशेषतस्तु—

नाड्यन्तरे व्रणान्[3] कुर्याद्भिषक् तु शतपोनके ॥
ततस्तेषूपरूढेषु[4] शेषा नाडीरुपाचरेत् ॥ ५ ॥
गतयोऽन्योन्यसंबद्धा[5] बाह्याश्छेद्यास्त्वनेकधा ॥
नाडीरनभिसंबद्धा यश्छिनत्त्येकधा भिषक् ॥ ६ ॥
स कुर्याद्विवृतं जन्तोर्व्रणं[6] गुदविदारणम् ॥
तस्य तद्विवृतं मार्गं विण्मूत्रमनुगच्छति[7] ॥ ७ ॥
आटोपं[8] गुदशूलं च करोति पवनो भृशम् ॥
तत्राधिगततन्त्रोऽपि[9] भिषङ्मुह्येदसंशयम् ॥ ८ ॥
तस्मान्न विवृतः कार्यो व्रणस्तु शतपोनके ॥
व्याधौ[10] तत्र बहुच्छिद्रे भिषजा वै विजानता ॥ ९ ॥
अर्धलाङ्गलकश्छेदः कार्यो लाङ्गलकोऽपि वा ॥
सर्वतोभद्रको वाऽपि कार्यो गोतीर्थकोऽपि वा ॥ १० ॥
(द्वाभ्यां[11] समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः ।
ह्रस्वमेकतरं यच्च सोऽर्धलाङ्गलकः स्मृतः ॥
सेवनीं वर्जयित्वा च चतुर्धा दारिते गुदे ।

---

१ 'अन्तर्मुखञ्चैवमशक्य यत्र प्रणिधाय प्रवाहतो भगन्दरमुखमासाद्य' इति ता.। २ 'एतत्' इति ता० पुस्तके नास्ति। ३ 'व्रण' इति ता.। ४ 'ततस्तासूपरूढासु' इति ता.। ५ 'सबन्धा' इति ता.। ६ ता० पुस्तके 'व्रण गुदविदारणम्' इत्यभावे 'मार्गं गुदविदारणम्' इति पठ्यते। ७ 'विण्मूत्रे तु प्रपद्यत' इति ता। ८ 'साटोप' इति ता.। 'आटोपगुद°' इति हाराण०। ९ ता० पुस्तके 'तत्राधिगततन्त्रोऽपि' इत्यभावे 'तत्रापि शततन्त्रोऽपि' इति पठ्यते। १० 'व्याधौ तनुबहुच्छिद्रे भिषजा साधु जानता' इति ता.। ११ कोष्ठकगतः पाठो हाराण० समतः।

सर्वतोभद्रकं छेदमाहुश्छेदविदो जनाः ।
पार्श्वागतेन शस्त्रेण छेदो गोतीर्थको भवेत् ॥ )
[1]सर्वतः स्रावमार्गांस्तु दहेद्वैद्यस्तथाऽग्निना ॥
सुकुमारस्य [2]भीरोर्हि दुष्करः शतपोनकः ॥ ११ ॥
[3]रुजास्रावापहं तत्र स्वेदमाशु प्रयोजयेत् ॥
स्वेदद्रव्यैर्यथोद्दिष्टैः कृशरा[4]पायसादिभिः ॥ १२ ॥
ग्राम्यानूपौदकैर्मांसैर्लावाद्यैर्वाऽपि विष्किरैः ॥
वृक्षादनीमथैरण्ड बिल्वादिं च गणं तथा ॥ १३ ॥
कषाय सुकृतं कृत्वा स्नेहकु[5]म्भे निषेचयेत् ॥
नाडीस्वेदेन तेनास्य तं व्रणं स्वे[6]दयेद्भिषक् ॥ १४ ॥
ति[7]लैरण्डातसीमाषयवगोधूमसर्षपान् ॥
लवणान्यम्लवर्ग च स्थाल्यामेवोपसाधयेत् ॥ १५ ॥
आतुरं स्वेदयेत्तेन तथा सिध्यति कुर्वतः ॥
स्विन्नं च पाययेदेनं कुष्ठं च लवणानि च ॥ १६ ॥
व[8]चाहिङ्ग्वजमोदं च समभागानि सर्पिषा ॥
मार्द्वीकेनाथवाऽम्लेन सुरासौवीरकेण वा ॥ १७ ॥
ततो मधुकतैलेन त[9]स्य सिञ्चेद्भिषग्व्रणम् ॥
[10]परिषिञ्चेद्गुदं चास्य तैलैर्वातरुजापहैः ॥ १८ ॥
विधिनाऽनेन विण्मूत्रं स्वमार्ग[11]मधिगच्छति ॥
अन्ये चोपद्रवास्तीव्राः सिध्यन्त्यत्र न संशयः ॥ १९ ॥

१ 'सर्वानास्रावमार्गांस्तु प्रदहेद्भिषगग्निना' इति ता. । २ 'भीरोश्च' इति ता. । ३ 'तत्र धीर. प्रमाणज्ञ.' इति ता. । ४ 'कृशरापायसैस्तथा' इति ता. । ५ 'तत. कुम्भे निधापयेत्' इति ता. । ६ 'स्वेदयेत् तत ' इति ता. । ७ 'तिलानतसिबीजानि यवगोधूमकोद्रवान् । लवणाम्लकवर्गञ्च स्थाल्यामादाय साधयेत्' इति ता. । ८ 'वचाहिङ्ग्वजमोदश्च' इति ता. । ९ 'तस्य सिञ्चेत् व्रण भिषक्' इति ता. । १० 'प्रतिसारयेत् गुद चास्य' इति ता. । ११ 'अनुपद्यते' इति ता ।

शतपोनक आख्यात उष्ट्रग्रीवे क्रियां शृणु ॥
अथोष्ट्रग्रीवमेषित्वा[1] छित्वा क्षारं निपातयेत् ॥ २० ॥
पूतिमांसव्यपोहार्थमग्निरत्र न पूजितः ॥
अथैनं घृतसंसृष्टैस्तिलैः[2] [3]पिष्टैः प्रलेपयेत् ॥ २१ ॥
[4]बन्धं ततोऽनुकुर्वीत परिषेकं तु सर्पिषा ॥
तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक्[5] ॥ २२ ॥
[6]ततः शुद्धं विदित्वा च रोपयेत्तु यथाक्रमम् ॥
उत्कृत्यास्रावमार्गांस्तु[7] परिस्राविणि बुद्धिमान् ॥ २३ ॥
क्षारेण वा स्रावगतिं दहेद्धुतवहेन वा ॥
सुखोष्णेनाणुतैलेन सेचयेद्गुदमण्डलम् ॥ २४ ॥
उपनाहाः[8] प्रदेहाश्च मूत्रक्षारसमन्विताः ॥
वामनीयौषधैः कार्याः परिषेकाश्च मात्रया ॥ २५ ॥
मृदुभूतं विदित्वैनमल्पस्रावरुगन्वितम्[9] ॥
गतिमन्विष्य शस्त्रेण छिन्द्यात् खर्जूरपत्रकम् ॥ २६ ॥
[10]चन्द्रार्धं चन्द्रचक्रं च सूचीमुखमवाङ्मुखम् ॥
छित्वा[11]ऽग्निना दहेत् सम्यगेवं क्षारेण वा पुनः ॥ २७ ॥
[12]ततः संशोधनैरेव मृदुपूर्वैर्विशोधयेत् ॥
[13]बहिरन्तर्मुखश्चापि शिशोर्यस्य भगन्दरः ॥ २८ ॥

---

१ 'आसाद्य' इति ता। २ 'घृतसमृष्टै' इति ता। ३ 'शुक्लैः इति पा०। ४ 'बन्धं यथावत् कुर्वीत परिषेकञ्च सर्पिषा' इति ता। ५ 'शोधयेद्बुध' इति पा०। ६ 'तत शुद्ध विदित्वा तु रोपयीत यथाक्रमम् ॥ एतत् कर्म समाख्यात सर्वेषामनु पूर्वशः' इति ता। ७ 'मार्ग' इति हाराण०। ८ 'उपनाहान् प्रदेहाश्च मूत्रक्षारसमन्वितान्। वामनीयौषधैर्युक्तान् परिषेकाश्च मात्रया' इति ता.। ९ 'अल्पस्राव रुजान्वित' इति ता.। १० 'चन्द्रार्धचन्द्र वज्र च' इति ता। ११ 'छित्वाऽग्निना दहेच्चापि पाल्यक्षारेण वा तत.' इति ता.। १२ 'ततः सशोधनैस्तैक्ष्णै.' इति ता.। 'तत.' संशोधनैरेव इति हाराण०। १३ 'बहिरन्तर्मुखश्चापि शिशोर्यस्य भगन्दरम्' इति ता।

तस्याहितं विरेकाग्निशस्त्रक्षारावचारणम् ॥
यद्यन्मृदु च तीक्ष्णं च तत्तत्तस्यावचारयेत् ॥ २९ ॥
आरग्वधनिशाकालाचूर्णं मधुघृताप्लुतम् ॥
अग्रवर्तिप्रणिहितं व्रणानां शोधनं हितम् ॥ ३० ॥
योगोऽयं नाशयत्याशु गतिं मेघमिवानिलः ॥
आगन्तुजे भिषङ्नाडीं शस्त्रेणोत्कृत्य यत्नतः ॥ ३१ ॥
जम्ब्वोष्ठेनाग्निवर्णेन तप्तया वा शलाकया ॥
दहेद्यथोक्तं मतिमांस्तं व्रणं सुसमाहितः ॥ ३२ ॥
कृमिघ्नं च विधिं कुर्याच्छल्यानयनमेव च ॥
प्रत्याख्यायैष चारभ्यो वर्ज्यश्चापि त्रिदोषजः ॥ ३३ ॥
एतत् कर्म समाख्यातं सर्वेषामनुपूर्वशः ॥
एषां तु शस्त्रपतनाद्वेदना यत्र जायते ॥ ३४ ॥
तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते ॥
वातघ्नौषधसंपूर्णां स्थालीं छिद्रशराविकाम् ॥ ३५ ॥
स्नेहाभ्यक्तगुदस्तप्तामध्यासीत सबाष्पिकाम् ॥
नाड्या वाऽस्याहरेत् स्वेदं शयानस्य रुजापहम् ॥
उष्णोदकेऽवगाह्यो वा तथा शाम्यति वेदना ॥ ३६ ॥
कदलीमृगलोपाकप्रियकाजिनसंभृतान् ॥
कारयेदुपनाहांश्च साल्वणादीन् विचक्षणः ॥ ३७ ॥
कटुत्रिकं वचाहिङ्गुलवणान्यथ दीप्यकम् ॥
पाययेच्चाम्लकौलत्थसुरासौवीरकादिभिः ॥ ३८ ॥

---

१ अस्मिन्स्थले ता० पुस्तके 'तत्तस्यामवचारयेत्' इति पठ्यतेऽसन्मतेन तत्र 'तत्तस्मिन्नवचारयेत्' इति पाठो भवितव्य इति भाति । २ 'रजन्यारग्वधा-कालाचूर्णं' इति ता । ३ 'सूत्रवर्तिप्रणिहितं' इति ता. । ४ 'परम्' इति ता. । ५ 'शल्यापनयमेव च' इति ता । ६ 'शस्त्रपातेन' इति ता । ७ 'यदि' इति ता । ८ 'पायो. सेकः प्रशस्यते' इति ता. । ९ 'वातघ्नकाथसपूर्णा' इति ता. । १० 'रुजाहरम्' इति ता. ।

ज्योतिष्मतीलाङ्गलकीश्यामादन्तीत्रिवृत्तिलाः ॥
कुष्ठं शताह्वा गोलोमी तिल्वको गिरिकर्णिका ॥ ३९ ॥
कासीसकाञ्चनक्षीर्यौ[1] वर्गः शोधन इष्यते ॥
त्रिवृत्तिला नागदन्ती मञ्जिष्ठा[2] पयसा सह ॥ ४० ॥
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ॥ ४१ ॥
त्रिवृत्तेजोवतीदन्तीकल्को[3] नाडीव्रणापहः ॥
कुष्ठं त्रिवृत्तिला दन्ती मागध्यः सैन्धवं मधु ॥ ४२ ॥
रजनी त्रिफला तुत्थं हितं स्याद्व्रणशोधनम् ॥
मागध्यो मधुकं रोध्रं कुष्ठमेला हरेणवः ॥ ४३ ॥
समङ्गा धातकी चैव सारिवा रजनीद्वयम् ॥
प्रियङ्गवः सर्जरसः[4] पद्मकं पद्मकेसरम् ॥ ४४ ॥
सुधा[5] वचा लाङ्गलकी मधूच्छिष्टं ससैन्धवम् ॥
एतत् संभृत्य संभारं[7] तैलं धीरो विपाचयेत् ॥ ४५ ॥
एतद्धि गण्डमालासु मण्डलेष्वथ[6] मेहिषु ॥
रोपणार्थं हितं तैलं भगन्दरविनाशनम् ॥ ४६ ॥
न्यग्रोधादिगणश्चैव हितः शोधनरोपणे[8] ॥
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ ४७ ॥
त्रिवृद्दन्तीहरिद्रार्कमूलं लोहाश्ममारकौ ॥
विडङ्गसारं त्रिफला स्नुह्यर्कपयसी[9] मधु ॥ ४८ ॥

---

१ 'काञ्चनक्षीरिका चैव वर्ग· शोधनमिष्यते' इति ता। २ 'मञ्जिष्ठा सह सर्पिषा' इति ता.। ३ 'त्रिवृत्तेजोवतीदन्तीलेपो' इति पा० ४ 'सर्जरस' इति ता.। ५ 'मातुलुङ्गस्य पत्राणि' इति ता.। 'सुधा वचा लागलिकीं' इति हाराण०। ६ 'मण्डले मधुमेहिषु' इति ता.। ७ 'सभारान्' इति हाराण०। ८ 'शोधनरोपण' इति ता.। ९ 'अर्कः स्नुहीपयो मधु' इति ता.।

मधूच्छिष्टसमायुक्तैस्तैलमेतैर्विपाचयेत्[1] ॥
भगन्दरविनाशार्थमेतद्योज्यं[2] विशेषतः ॥ ४९ ॥
चित्रकार्कौ त्रिवृत्पाठे[3] मलपू[4] हयमारकम् ॥
सुधां वचां लाङ्गलकीं सप्तपर्णं[5] सुवर्चिकाम् ॥ ५० ॥
ज्योतिष्मतीं च सम्भृत्य [6]तैलं धीरो विपाचयेत् ॥
एतद्धि[7] स्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥ ५१ ॥
शोधनं रोपणं चैव सवर्णकरणं तथा ॥
द्विव्रणीयमवेक्षेत व्रणावस्थासु बुद्धिमान् ॥ ५२ ॥
छिद्रादूर्ध्वं हरेदोष्ठमर्शोयन्त्रस्य यन्त्रवित् ॥
ततो भगन्दरे दद्यादेतदर्धेन्दुसन्निभम् ॥ ५३ ॥
व्यायामं मैथुनं [8]कोपं पृष्ठयानं गुरूणि च ॥
संवत्सरं परिहरेदुपरूढव्रणो नरः[9] ॥ ५४ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने भगन्दरचिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
विरुद्धा[10]ध्यशनासात्म्यवेगविघातैः स्नेहादीनां चायथारम्भैः पापक्रियया पुराकृतकर्मयोगाच्च त्वग्दोषा[11] भवन्ति ॥ ३ ॥

---

१ 'विपाचितम्' इति ता. । २ 'व्रणरोगापह शुभम्' इति ता । ३ 'पाठा' इति ता. । ४ 'मलय' इति ता. । ५ 'हरिताल' इति ता. । ६ 'तैलं निष्यन्दनं पचेत्' इति ता । ७ 'लाक्षादिकप्रतीवापमेतद्विद्याद्भगन्दरे' इति ता । ८ 'युद्ध' इति ता. । ९ 'नर ॥ इति ॥' इति ता. । १० 'विरुद्धाध्यशनासात्म्यवेगविघातैः स्नेहादीना चायथारम्भै' पापक्रियया पुराकृतकर्मयोगाच्च त्वग्दोषा भवन्ति' इति तृतीय सूत्र ता० पुस्तके नोपलभ्यते । ११ 'त्वग्दोषो भवति' इति हाराण० ।

[१]तत्र त्वग्दोषी मांसवसादुग्धदधितैलकुलत्थमाषनिष्पावे[२]क्षुपिष्टविकाराम्लविरुद्धाध्यशनाजीर्णविदाह्यभिष्यन्दीनि दिवास्वप्नं व्य[३]वायं च परिहरेत् ॥ ४ ॥

[४]ततः शालिषष्टिकयवगोधूमकोरदूषश्यामाकोद्दालकादीननवान् भुञ्जीत मुद्गाढक्योरन्यतरस्य यूषेण सूपेन वा निम्बपत्रारुष्करव्यामिश्रेण, मण्डूकपर्ण्यवल्गुजाटरूषकरूपिकापुष्पैः सर्पिःसिद्धैः सर्षपतैलसिद्धैर्वा, तिक्तवर्गेण वाऽभिहितेन; मांससात्म्याय वा जाङ्ग[५]लमांसममेदस्कं वितरेत्; तैलं वज्रकमभ्यङ्गार्थे; आरग्वधादिकषायमुत्सादनार्थे; [६]पानपरिषेकावगाहादिषु च खदिरकषायम्, इत्येष आहाराचारविभागः ॥ ५ ॥

तत्र पूर्वरूपेषूभयतः संशोधनमासेवेत। तत्र त्वक्संप्राप्ते शोधनालेपनानि, शोणितप्राप्ते संशोधनालेपनकषायपानशोणितावसेचनानि, मांसप्राप्ते शो[७]धनालेपनकषायपानशोणितावसेचनारिष्टमन्थ[८]प्राशाः, [९]चतुर्थकर्मगुणप्राप्तं याप्यमात्मवतः संविधानवतश्च, तत्र संशोधना[१०]च्छोणितावसेचनाच्चोर्ध्वं भल्लातशिलाजतु[११]धातुमाक्षीकगुग्गुल्वगुरुतुवरकखदिरासनायस्कृतिविधानमासेवेत; पञ्चमं [१२]नैवोपक्रमेत् ॥ ६ ॥

---

१ 'त्वग्दूषी तु मासदुग्धदधितिलकुलत्थमाषनिष्पावेक्षुविकाराम्लपिष्टमयानि विरुद्धाभिष्यन्दीनि दिवास्वप्न व्यवाय च दूरत एव परिहरेत्' इति ता.। २ 'इक्षुविकार°' इति हाराण०। ३ 'व्यायाम' इति पा०। ४ 'ततः शालिषष्टिकयवगोधूमश्यामाककोरदूषोद्दालकाननवान् भुञ्जीत। मुद्गाढक्योरन्यतरस्य सूपेन यूषेण वा। निम्बपत्रारुष्करविमिश्रेण मण्डूकपर्ण्यवल्गुजाटरूषकपुष्पै.' इति ता.। ५ 'जाङ्गलमासं मेदस्क' इति ता.। ६ 'पानपरिषेकावगाहेषु खदिरकषायमित्येष चाहारविभाग.' इति ता.। ७ 'सशोधनालेपन°' इति ता. हाराण०। ८ '°प्राशान्' इति ता.। ९ 'चतुर्थं' इति हाराण०। १० 'शोणितावसेकाच्चोर्ध्वं भल्लातकशिलाजतुतुवरक°' इति ता.। ११ '°धातुमाक्षीक°' इत्यशो हाराणचन्द्रो न पठति। १२ 'नैव चोपक्रमेत' हा०।

तत्र प्रथममेव कुष्ठिनं स्नेहपानविधानेनोपपादयेत्[1] । मेषशृङ्गी-श्वदंष्ट्राशार्ङ्गेष्टागुडूचीद्विपञ्चमूलीसिद्धं तैलं घृतं वा वातकुष्ठिनां पानाभ्यङ्गयोर्विदध्यात्, धवाश्वकर्णककुभपलाशपिचुमर्दपर्पटकमधुकरोध्रसमङ्गासिद्धं[2] सर्पिः पित्तकुष्ठिनां, प्रियालशालारग्वधनिम्बसप्तपर्णचित्रकमरिचवचाकुष्ठसिद्धं श्लेष्मकुष्ठिनां, भल्लातकाभयाविडङ्गसिद्धं वा, सर्वेषां[3] तुवरकतैलं भल्लातकतैलं वेति[4] ॥ ७ ॥

सप्तपर्णारग्वधा[5]तिविषे[6]क्षुरपाठा[7]कटुरोहिण्यमृतात्रिफलापटोलपिचुमर्दपर्पटकदुरालभात्रायमाणामुस्ताचन्दनपद्मकहरिद्रोपकुल्याविशालामूर्वाशतावरीसारिवेन्द्रयवाटरूषकषड्ग्रन्थामधुकभूनिम्बगृष्टिका इति समभागः कल्कः स्यात्, कल्काच्चतुर्गुणं सर्पिः प्रक्षिप्य तद्द्विगुणो धात्रीफलरसस्तच्चतुर्गुणा आपस्तदैकध्यं समालोड्य विपचेत्, एतन्महातिक्तकं नाम सर्पिः कुष्ठ[8]विषमज्वररक्तपित्तहृद्रोगोन्मादापस्मारगुल्मपिडकासृग्दरगलगण्डगण्डमालाश्लीपदपाण्डुरोगविसर्पा[9]र्शःषाण्ढ्यकण्डूपामादीञ्छमयेदिति ॥ ८ ॥

---

१ 'स्नेहपानेनोपक्रमेत्' इति ता.। २ "°पिचुमर्दमधुकलोध्र°" इति ता.। ३ 'भल्लातकविडङ्गसिद्धं वा सर्वेषां' इति ता.। ४ 'तुवरकतैलं भल्लातकतैलं वेति' वाक्यं ता० पुस्तके नोपलभ्यते। ५ ता०पुस्तकेऽस्मिन्महातिक्तकाख्ये घृते 'आरग्वध' उपयुक्तो न दृश्यते। ६ "°अतिविषोशीरपाठा°" इति ता.। "°अतिविषापाठा°" इति हाराण०। ७ "°कटुरोहिण्यमृणालहरीतक्यामलकविभीतकपटोलपिचुमर्दपर्पटकिराततिक्तकहरिद्रादुरालभात्रायमाणामुस्ताचन्दनपद्मकहरिद्रोपकुल्याविश्वामूर्वाशतावरीसारिवाटरूषककुटजेन्द्रवारुणीपाठावृक्षादनीग्रन्थिका चेति समभागानि कल्कस्याच्चतुर्गुणं सर्पिः प्रक्षिप्य तद्द्विगुणमामलकरसस्तु चतुर्गुणमापस्तदैकध्यं मृद्वग्निसिद्धमवतार्य पाययेत्' इति ता.। ८ 'कुष्ठार्शोवातपित्तविषमज्वरहृद्रोगोन्मादगलगण्डगण्डमालाश्लीपदकामलापाण्डुरोगषाण्ढ्यकच्छुपामादींश्च शमयेत्' इति ता.। ९ 'विसर्पषाण्ढ्यकण्डुपामादींश्च' इति हाराण०।

निपात्य शस्त्रं तिलनागदन्तीयष्ट्याह्वकल्कैः परिपूरयेत्ताम् ॥
प्रक्षालने चापि ससोमनिम्बा निशा प्रयोज्या कुशलेन नित्यम् ॥२१॥
श्यामात्रिभण्डीत्रिफलासु सिद्धं हरिद्रयो रोध्रकवृक्षयोश्च ॥
घृतं सदुग्धं व्रणतर्पणेन हन्याद्गतिं कोष्ठगताऽपि या स्यात् ॥ २२ ॥
नाडीं कफोत्थामुपनाह्य सम्यक् कुलत्थसिद्धार्थकशक्तुकिण्वैः ॥
मृदूकृतामेष्य गतिं विदित्वा निपातयेच्छस्त्रमशेषकारी ॥ २३ ॥
दद्याद्व्रणे निम्बतिलान् सदन्तीन्[1] सुराष्ट्रजासैन्धवसंप्रयुक्तान् ॥
प्रक्षालने चापि[2] करञ्जनिम्बजात्यक्षपीलुस्वरसाः प्रयोज्याः ॥ २४ ॥
सुवर्चिकासैन्धवचित्रकेषु निकुम्भतालीनलरूपिकासु ॥
फलेष्वपामार्गभवेषु चैव कुर्यात् समूत्रेषु हिताय तैलम् ॥ २५ ॥
नाडीं तु शल्यप्रभवां विदार्य निर्हृत्य शल्यं प्रविशोध्य मार्गम् ॥
संशोधयेत् क्षौद्रघृतप्रगाढैस्तिलैस्ततो रोपणमाशु[3] कुर्यात् ॥ २६ ॥
कुम्भीकखर्जूरकपित्थबिल्ववनस्पतीनां च शलाटुवर्गैः ॥
कृत्वा कषायं विपचेत्तु तैलमावाप्य मुस्तासरलाप्रियङ्गूः ॥ २७ ॥
सुगन्धिका मोचरसाहिपुष्पं रोध्रं विदध्यादपि धातकीं च ॥
एतेन शल्यप्रभवा तु नाडी रोहेद्व्रणो वा सुखमाशु चैव ॥ २८ ॥

कृशदुर्बलभीरूणां नाडी मर्माश्रिता च या ॥
क्षारसूत्रेण तां छिन्द्यान्न तु शस्त्रेण बुद्धिमान् ॥ २९ ॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ॥
सूचीं निदध्याद्गत्यन्ते तथोन्नम्याशु निर्हरेत् ॥ ३० ॥
सूत्रस्यान्तं समानीय गाढं[4] बन्धं समाचरेत् ॥
ततः क्षारबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥ ३१ ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते[5] गतिः ॥
भगन्दरेऽप्येष विधिः कार्यो वैद्येन जानता ॥ ३२ ॥

---

१ 'सुपिष्टान्सुराष्ट्रजान्' इति हाराण०। २ 'चास्य' इति हाराण०। ३ 'अस्य' इति हाराण०। ४ 'गाढबन्ध' इति हाराण०। ५ 'क्लिद्यते' इति पा०।

अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ॥
सूचिभिर्यववक्त्राभिराचितान्[1] वा समन्ततः ॥
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम् ॥ ३३ ॥
या द्विव्रणीयेऽभिहितास्तु वर्त्यस्ताः सर्वनाडीषु भिषग्विदध्यात् ॥
घोण्टाफलत्वग्लवणानि लाक्षापूगीफलं चालवणं च पत्रम् ॥ ३४ ॥
स्नुह्यर्कदुग्धेन तु कल्क एष वर्तीकृतो हन्त्यचिरेण नाडीः ॥
बिभीतकाम्रास्थिवटप्रवाला हरेणुकाशङ्खिनिबीजमस्य ॥ ३५ ॥
वाराहिकन्दश्च तथा प्रदेयो[2] नाडीषु तैलेन च मिश्रयित्वा ॥ ३६ ॥
धत्तूरजं मदनकोद्रवजं च बीजं
कोशातकी शुकनसा मृगभोजिनी च ॥
अङ्कोटबीजकुसुम गतिषु प्रयोज्यं
लाक्षोदकाहृतमलासु विकृत्य[3] चूर्णम् ॥ ३७ ॥
तथा च गोमांसमसीं हिताय कोष्ठाश्रितस्यादरतो दिशन्ति ॥
वर्तीकृतं माक्षिकसंप्रयुक्तं नाडीघ्नमुक्तं लवणोत्तमं वा ॥ ३८ ॥
दुष्टव्रणे यद्विहितं च तैलं तत् सर्वनाडीषु भिषग्विदध्यात् ॥
चूर्णीकृतैरथ विमिश्रितमेभिरेव तैलं प्रयुक्तमचिरेण गतिं निहन्ति ३९
एष्वेव मूत्रसहितेषु विधाय तैलं
तत् साधितं[4] गतिमपोहति सप्तरात्रात् ॥
पिण्डीतकस्य तु वराहविभावितस्य
मूलेषु कन्दशकलेषु च सौवहेषु ॥ ४० ॥
तैलं कृतं गतिमपोहति शीघ्रमेतत्
कन्देषु चामरवरायुधसाह्वयेषु ॥
भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ॥ ४१ ॥

---

१ 'आचित इति' हाराण० । २ 'प्रदेया' इति हाराण० । ३ 'चूर्णमिति क्रियाविशेषणात् चूर्णं विकृत्य चूर्णीकृत्वेत्यर्थः' इति हाराणचन्द्रः । ४ 'साधिता' इति हाराण० ।

स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥
स्तन्ये गते विकृतिमाशु भिषक् तु धात्रीं
पीतां घृतं परिणतेऽहनि वामयेत्तु ॥ ४२ ॥
निम्बोदकेन मधुमागधिकायुतेन
वान्तागतेऽहनि च मुद्गरसाशना स्यात् ॥
एवं त्र्यहं चतुरहं षडहं वमेद्वा
सर्पिः पिबेत्त्रिफलया सह संयुतं वा ॥ ४३ ॥
भार्गीं वचामतिविषां सुरदारु पाठां
मुस्तादिकं मधुरसां कटुरोहिणीं च ॥
धात्री पिबेत्तु पयसः परिशोधनार्थ-
मारग्वधादिषु वरं मधुना कषायम् ॥ ४४ ॥
सामान्यमेतदुपदिष्टमतो विशेषा-
द्दोषान् पयोनिपतितान् शमयेद्यथास्वम् ॥
रोगं स्तनोत्थितमवेक्ष्य भिषग्विदध्या-
द्यद्विद्रधावभिहितं बहुशो विधानम् ॥ ४५ ॥
संपच्यमानमपि तं तु विनोपनाहैः
संभोजनेन खलु पाचयितुं यतेत ॥
शीघ्रं स्तनो हि मृदुमांसतयोपनद्धः
सर्वं प्रकोथमुपयात्यवदीर्यते च ॥ ४६ ॥
पक्के तु दुग्धहरिणीः परिहृत्य नाडीः
कृष्णं च चूचुकयुगं विदधीत शस्त्रम् ॥
आमे विदाहिनि तथैव गते च पाकं
धात्र्याः स्तनौ सततमेव च निर्दुहीत ॥ ४७ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने विसर्पनाडीस्तनरोग-
चिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः ।

अथातो ग्रन्थपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

ग्रन्थिष्वथामेषु भिषग्विदध्याच्छोफक्रिया[1] विस्तरशो विधिज्ञः ॥
रक्षेद्बलं चापि नरस्य नित्यं तद्रक्षितं व्याधिबलं निहन्ति ॥ ३ ॥
तैलं पिबेत् सर्पिरथो द्वयं वा दत्त्वा वसां वा त्रिवृतं विदध्यात् ॥
अपेहिवातादशमूलसिद्धं वैद्यश्चतुःस्नेहमथो द्वय वा ॥ ४ ॥
हिंस्राऽथ रोहिण्यमृताऽथ भार्गी श्योनाकबिल्वागुरुकृष्णगन्धाः ॥
गोजी च पिष्टा सह तालपत्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ ५ ॥
स्वेदोपनाहान् विविधांश्च कुर्यात्तथा प्रसिद्धानपरांश्च लेपान् ॥
विदार्य वा पक्वमपोह्य पूयं प्रक्षाल्य बिल्वार्कनरेन्द्रतोयैः ॥ ६ ॥
तिलैः सपञ्चाङ्गुलपत्रमिश्रैः संशोधयेत् सैन्धवसंप्रयुक्तैः ॥
शुद्धं व्रणं वाऽप्युपरोपयेत्तु[2] तैलेन रास्नासरलान्वितेन ॥ ७ ॥
विडङ्गयष्टीमधुकामृताभिः सिद्धेन वा क्षीरसमन्वितेन ॥
जलौकसः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च ॥ ८ ॥
काकोलिवर्गस्य च शीतलानि पिबेत् कषायाणि सशर्कराणि ॥
द्राक्षारसेनेक्षुरसेन वाऽपि चूर्णं पिबेच्चापि हरीतकीनाम् ॥ ९ ॥
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेत ॥
सशर्करैर्वा तृणशून्यकन्दैर्दिह्यादभीक्ष्णं मुचुलुन्दजैर्वा[3] ॥ १० ॥
विदार्य वा पक्वमपोह्य पूयं धावेत् कषायेण वनस्पतीनाम् ॥
तिलैः सयष्टीमधुकैर्विशोध्य सर्पिः प्रयोज्यं मधुरैर्विपक्वम् ॥ ११ ॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु ॥
स्विन्नस्य विम्लापनमेव कुर्यादङ्गुष्ठलोहोपलवेणुदण्डैः ॥ १२ ॥

---

१ 'शोफक्रियायां विहित' इति हाराण० । २ 'उपरोपयेयुः' इति हा० ।
३ 'मुचुकुन्दजैः' इति हाराण० ।

विकङ्कतारग्वधकाकणन्तीकाकादनीतापसवृक्षमूलैः ॥
आलेपयेत् पिण्डफलार्कभार्गीकरञ्जकालामदनैश्च विद्वान् ॥ १३ ॥
अमर्मजातं शममप्रयान्तमपक्कमेवापहरेद्विदार्य ॥
दहेत् स्थिते चासृजि सिद्धकर्मा सद्यःक्षतोक्तं च विधिं विदध्यात् ॥ १४ ॥
या मांसकन्द्यः कठिना बृहत्यस्तास्वेष योज्यश्च विधिर्विधिज्ञैः ॥
शस्त्रेण वाऽऽपाट्य सुपक्कमाशु प्रक्षालयेत् पथ्यतमैः कषायैः ॥ १५ ॥
संशोधनैस्तं च विशोधयेत्तु क्षारोत्तरैः क्षौद्रगुडप्रगाढैः[1] ॥
शुद्धे च तैलं त्ववचारणीयं विडङ्गपाठारजनीविपक्कम् ॥ १६ ॥
मेदःसमुत्थे तिलकल्कदिग्धं दत्त्वोपरिष्टाद्द्विगुणं पटान्तम् ॥
हुताशतप्तेन मुहुः प्रमृज्याल्लोहेन धीमानदहन्[2] हिताय ॥ १७ ॥
प्रलिप्य दार्वीमथ लाक्षया वा प्रतप्तया स्वेदनमस्य कार्यम् ॥
निपात्य वा शस्त्रमपोह्य मेदो दहेत् सुपक्कं त्वथवा विदार्य ॥ १८ ॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः सुवर्चिकाद्यैर्हरितालमिश्रैः ॥
ससैन्धवैः क्षौद्रघृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य ॥ १९ ॥
तैलं विदध्याद्द्विकरञ्जगुञ्जावंशावलेखेङ्गुदमूत्रसिद्धम् ॥
जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृतासु चैव ॥ २० ॥
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां द्विधा प्रवृत्तं तदुदारवीर्यम् ॥
निर्गुण्डिजातीबरिहिष्टयुक्तं जीमूतकं माक्षिकसैन्धवाढ्यम् ॥ २१ ॥
अभिप्रतप्तं वमनं प्रगाढं दुष्टापचीषूत्तममादिशन्ति ॥
कैडर्यबिम्बीकरवीरसिद्धं तैलं हितं मूर्धविरेचनं च ॥ २२ ॥
शाखोटकस्य स्वरसेन सिद्धं तैलं हितं नस्यविरेचनेषु ॥
मधूकसारश्च हितोऽवपीडे फलानि शिग्रोः खरमञ्जरेर्वा ॥ २३ ॥
ग्रन्थीनमर्मप्रभवानपक्कानुद्धृत्य चाग्निं विदधीत पश्चात् ॥
क्षारेण वाऽपि प्रतिसारयेत्तु संलिख्य शस्त्रेण यथोपदेशम् ॥ २४ ॥

---

१ 'क्षौद्रघृतप्रगाढैः' इति हाराण० । २ 'दहनं' इति हाराण० ।

पार्ष्णिं प्रति द्वे दश चाङ्गुलानि मित्वेन्द्रबस्तिं परिवर्ज्य धीमान् ॥
विदार्य मत्स्याण्डनिभानि वैद्यो निष्कृष्य जालान्यनलं विदध्यात् २५
आ गुल्फकर्णात् सुमितस्य जन्तोस्तस्याष्टभागं खुडकाद्विभज्य ॥
घोणर्जुवेधः सुरराजबस्तेर्हित्वाक्षिमात्रं त्वपरे वदन्ति ॥ २६ ॥
मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक् ॥
अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥ २७ ॥
व्रणस्य काले प्रचलाककाकगोधाहिकूर्मप्रभवां मसीं तु ॥
दद्याच्च तैलेन सहेङ्गुदीनां यद्वक्ष्यते श्लीपदिनां च तैलम् ॥ २८ ॥
विरेचनं धूममुपाददीत भवेच्च नित्यं यवमुद्गभोजी ॥
कर्कारुकैर्वारुकनारिकेलप्रियालपञ्चाङ्गुलबीजचूर्णैः ॥ २९ ॥
वातार्बुदं क्षीरघृताम्बुसिद्धैरुष्णैः सतैलैरुपनाहयेत्तु ॥
कुर्याच्च मुख्यान्युपनाहनानि सिद्धैश्च मांसैरथ वेसवारैः ॥ ३० ॥
स्वेदं विदध्यात् कुशलस्तु नाड्या शृङ्गेण रक्तं बहुशो हरेच्च ॥
वातघ्ननिर्यूहपयोम्लभागैः सिद्धं शताख्यं त्रिवृतं पिबेद्वा ॥ ३१ ॥
स्वेदोपनाहा मृदवस्तु कार्याः पित्तार्बुदे कायविरेचनं च ॥
विघृष्य चोदुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥ ३२ ॥
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गुपत्तङ्गरोध्राञ्जनयष्टिकाह्वैः ॥
विस्राव्य चारग्वधगोजिसोमाः श्यामा च योज्याः कुशलेन लेपे ३३
श्यामागिरिह्वाञ्जनकीरसेषु द्राक्षारसे सप्तलिकारसे च ॥
घृतं पिबेत् क्लीतकसंप्रसिद्धं पित्तार्बुदी तज्जठरी च जन्तुः ॥ ३४ ॥
शुद्धस्य जन्तोः कफजेऽर्बुदे तु रक्तेऽवसिक्ते तु ततोऽर्बुदं तत् ॥
द्रव्याणि यान्यूर्ध्वमधश्च दोषान् हरन्ति तैः कल्ककृतैः प्रदिह्यात् ३५
कपोतपारावतविड्विमिश्रैः सकांस्यनीलैः शुकलाङ्गलाख्यैः ॥
मूत्रैस्तु काकादनिमूलमिश्रैः क्षारप्रदिग्धैरथ वा प्रदिह्यात् ॥ ३६ ॥

१ 'घोणार्जवेऽधः' इति हाराण० । २ 'पथ्याः' इति हाराण० । ३ 'कल्क-धृतैः' इति हाराण० ।

निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमस्तुयुक्तैः ॥
लेपं विदध्यात् कृमयो यथाऽत्र मूर्च्छन्ति[1] मुञ्चन्त्यथ मक्षिकाश्च ३७
अल्पावशिष्टे कृमिभिर्भक्षिते[2] च लिखेत्ततोऽग्निं विदधीत पश्चात् ॥
यदल्पमूलं त्रपुताम्रसीसपट्टैः समावेष्ट्य तदायसैर्वा ॥ ३८ ॥
क्षाराग्निशस्त्राण्यसकृद्विदध्यात् प्राणानहिंसन् भिषगप्रमत्तः ॥
आस्फोतजातीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थम् ॥ ३९ ॥
शुद्धे च तैलं विदधीत भार्गीविडङ्गपाठात्रिफलाविपक्वम् ॥
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः ॥ ४० ॥
मेदोर्बुदं स्विन्नमथो विदार्य विशोध्य सीव्येद्गतरक्तमाशु ॥
ततो हरिद्रागृहधूमरोध्रपत्तङ्गचूर्णैः समनःशिलालैः ॥ ४१ ॥
व्रणं प्रतिग्राह्य मधुप्रगाढैः करञ्जतैलं विदधीत शुद्धे ॥
सशेषदोषाणि हि योऽर्बुदानि करोति तस्याशु[3] पुनर्भवन्ति ॥ ४२ ॥
तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथा हि वह्निः ॥
संस्वेद्य गण्डं पवनोत्थमादौ नाड्याऽनिलघ्नौषधपत्रभङ्गैः ॥ ४३ ॥
अम्लैः समूत्रैर्विविधैः पयोभिरुष्णैः सतैलैः पिशितैश्च विद्वान् ॥
विस्रावयेत् स्विन्नमतन्द्रितश्च शुद्धं व्रणं चाप्युपनाहयेत्तु ॥ ४४ ॥
शणातसीमूलकशिग्रुकिण्वप्रियालमज्जानुयुतैस्तिलैस्तु ॥
कालामृताशिग्रुपुनर्नवार्कगजादिनामाकरहाटकुष्ठैः ॥ ४५ ॥
एकैषिकावृक्षकतिल्वकैश्च सुराम्लपिष्टैरसकृत् प्रदिह्यात्[4] ॥ ४६ ॥
तैलं पिबेच्चामृतवल्लिनिम्बहंसाह्वयावृक्षकपिप्पलीभिः ॥
सिद्धं बलाभ्यां च सदेवदारु हिताय नित्यं गलगण्डरोगे ॥ ४७ ॥
स्वेदोपनाहैः कफसंभवं तु संस्वेद्य विस्रावणमेव कुर्यात् ॥
ततोऽजगन्धातिविषाविशल्याविषाणिकाकुष्ठशुकाह्वयाभिः ॥ ४८ ॥

---

१ 'मूर्च्छन्ति' इति हाराण०। २ 'कृमिभिः कृते च' इति हाराण०। ३ 'तान्याशु' इति हाराण०। ४ 'विदिह्यात्' इति हाराण०।

पलाशभस्मोदकपेषिताभिर्दिह्यात् सुगुञ्जाभिरशीतलाभिः ॥
दशार्धसङ्ख्यैर्लवणैश्च युक्तं तैलं पिबेन्मागधिकादिसिद्धम् ॥ ४९ ॥
प्रच्छर्दनं मूर्धविरेचनं च धूमश्च वैरेचनिको हितस्तु ॥
पाकक्रमो वाऽपि सदा विधेयो वैद्येन पाकङ्गतयोः कथञ्चित् ॥५०॥
कटुत्रिकक्षौद्रयुताः समूत्रा भक्ष्या यवान्नानि रसाश्च मौद्गाः ॥
सशृङ्गवेराः सपटोलनिम्बा हिताय देया गलगण्डरोगे ॥ ५१ ॥
मेदःसमुत्थे तु यथोपदिष्टां विध्येत् सिरां स्निग्धतनोर्नरस्य ॥
श्यामासुधालोहपुरीषदन्तीरसाञ्जनैश्चापि हितः प्रदेहः ॥ ५२ ॥
मूत्रेण वाऽऽलोड्य हिताय सारं प्रातः पिबेत् सालमहीरुहाणाम् ॥
शस्त्रेण वाऽऽपाट्य विदार्य चैनं मेदः समुद्धृत्य हिताय सीव्येत् ॥५३॥
मज्जाज्यमेदोमधुभिर्दहेद्वा दग्धे च सर्पिर्मधु चावचार्यम् ॥
कासीसतुत्थे च ततोऽत्र देये चूर्णीकृते रोचनया समेते ॥ ५४ ॥
तैलेन चाभ्यज्य हिताय दद्यात् सारोद्भवं गोमयजं च भस्म ॥
हितं[1]श्च नित्यं त्रिफलाकषायो गाढश्च बन्धो यवभोजनं च ॥ ५५ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने ग्रन्थपच्यर्बुदगलगण्ड-
चिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ।

अथातो वृद्ध्युपदंशश्ली[2]पदचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अन्त्रवृद्ध्या विना षड्या वृद्धयस्तासु वर्जयेत् ॥
अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम् ॥ ३ ॥
अत्यासनं चङ्क्रमणमुपवासं गुरूणि च ॥
तत्रादितो वातवृद्धौ त्रैवृतस्निग्धमातुरम् ॥ ४ ॥

---

१ 'हित च' इति हाराण० । २ '°श्लीपदाना' इति हाराण० ।

स्विन्नं चैनं यथान्यायं पाययेत विरेचनम् ॥
कोशाम्रतिल्वकैरण्डफलतैलानि वा नरम् ॥ ५ ॥
सक्षीरं वा पिबेन्मासं तैलमेरण्डसंभवम् ॥
ततः कालेऽनिलघ्नानां क्वाथैः कल्कैश्च बुद्धिमान् ॥ ६ ॥
निरूहयेन्निरूढं च भुक्तवन्तं रसौदनम् ॥
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ॥ ७ ॥
स्नेहोपनाहौ कुर्याच्च प्रदेहांश्चानिलापहान् ॥
विदग्धां पाचयित्वा वा सेवनीं परिवर्जयेत् ॥ ८ ॥
भिन्द्यात्ततः प्रभिन्नायां यथोक्तं क्रममाचरेत् ॥
पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः ॥ ९ ॥
पक्वां वा भेदयेद्भिन्नां शोधयेत् क्षौद्रसर्पिषा ॥
शुद्धायां च भिषग्दद्यात्तैलं कल्कं च रोपणम् ॥ १० ॥
रक्तजायां जलौकोभिः [1]शोणितं निर्हरेद्भिषक् ॥
पिबेद्विरेचनं वाऽपि शर्कराक्षौद्रसंयुतम् ॥ ११ ॥
पित्तग्रन्थिक्रमं कुर्यादामे पक्के च सर्वदा ॥
वृद्धिं कफात्मिकामुष्णैर्मूत्रपिष्टैः प्रलेपयेत् ॥ १२ ॥
पीतदारुकषायं च पिबेन्मूत्रेण संयुतम् ॥
विम्लापनादृते वाऽपि श्लेष्मग्रन्थिक्रमो हितः ॥ १३ ॥
पक्वायां च विभिन्नायां तैलं शोधनमिष्यते ॥
सुमनारुष्कराङ्कोठसप्तपर्णेषु साधितम् ॥ १४ ॥
मेदःसमुत्थां संस्वेद्य लेपयेत् सुरसादिना ॥
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥ १५ ॥
स्विन्नां चावेष्ट्य पट्टेन समाश्वास्य तु मानवम् ॥
रक्षन् फले सेवनीं च वृद्धिपत्रेण दारयेत् ॥ १६ ॥

---

१ 'अभीक्ष्ण निर्हरेदसृक्' इति पा० ।

भेदस्ततः समुद्धृत्य दद्यात् कासीससैन्धवे ॥
बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलं च दापयेत् ॥ १७ ॥
मनःशिलालकवणैः सिद्धमारुष्करेषु च ॥
मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत् ॥ १८ ॥
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेन तु ॥
अथात्र द्विमुखां नाडीं दत्त्वा विस्रावयेद्भिषक् ॥ १९ ॥
मूत्रं, नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥
शुद्धायां रोपणं दद्याद्वर्जयेदन्त्रहैतुकीम् ॥ २० ॥
अप्राप्तफलकोषायां वातवृद्धिक्रमो हितः ॥
[1]तत्र या वङ्क्षणस्था तां दहेदर्धेन्दुवक्रया ॥ २१ ॥
सम्यङ्मार्गावरोधार्थं कोशप्राप्तां तु वर्जयेत् ॥
त्वचं भित्त्वाऽङ्गुष्ठमध्ये दहेच्चाङ्गविपर्ययात् ॥ २२ ॥
अनेनैव विधानेन वृद्धी वातकफात्मिके ॥
प्रदहेत् प्रयतः किंतु स्नायुच्छेदोऽधिकस्तयोः ॥ २३ ॥
शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम् ॥
व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ २४ ॥
उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः ॥
सिरां विध्येन्मेढ्रमध्ये पातयेद्वा जलौकसः ॥ २५ ॥
हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान् ॥
सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः ॥ २६ ॥
यदि वा दुर्बलो जन्तुर्न वा प्राप्तं विरेचनम् ॥
निरूहेण हरेत्तस्य दोषानत्यर्थमुच्छ्रितान् ॥ २७ ॥
प्रपौण्डरीकयष्ट्याह्ववर्षाभूकुष्ठदारुभिः ॥
सरलागुरुरास्नाभिर्वातजं संप्रलेपयेत् ॥ २८ ॥

---

१ 'तत्रया वङ्क्षणस्थान' इति पा० । 'तत्र या वक्षणस्था ता इति हाराण० ।

निचुलैरण्डबीजानि यवगोधूमसक्तवः ॥
एतैश्च वातजं स्निग्धैः सुखोष्णैः संप्रलेपयेत् ॥ २९ ॥
प्रपौण्डरीकपूर्वैश्च द्रव्यैः सेकः प्रशस्यते ॥
गैरिकाञ्जनयष्ट्याह्वसारिवोशीरपद्मकैः ॥ ३० ॥
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलेपयेत् ॥
पद्मोत्पलमृणालैश्च ससर्जार्जुनवेतसैः ॥ ३१ ॥
सर्पिःस्निग्धैः समधुकैः पैत्तिकं संप्रलेपयेत् ॥
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ॥ ३२ ॥
अथवाऽपि सुशीतेन कषायेण वटादिना ॥
सालाश्वकर्णाजकर्णधवत्वग्भिः कफोत्थितम् ॥ ३३ ॥
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥
रजन्यतिविषामुस्तासुरसासुरदारुभिः[1] ॥ ३४ ॥
सपत्रपाठापत्तूरैरथ वा संप्रलेपयेत् ॥
सुरसारग्वधाद्योश्च क्वाथाभ्यां परिषेचयेत् ॥ ३५ ॥
एवं संशोधनालेपसेकशोणितमोक्षणैः ॥
प्रतिकुर्यात् क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि ॥ ३६ ॥
न[2] याति च यथा पाकं प्रयतेत तथा भिषक् ॥
विदग्धैस्तु सिरास्नायुत्वङ्मांसैः क्षीयते ध्वजः ॥ ३७ ॥
शस्त्रेणोपचरेच्चापि पाकमागतमाशु वै ॥
तदाऽपोह्य तिलैः सर्पिःक्षौद्रयुक्तैः प्रलेपयेत् ॥ ३८ ॥
करवीरस्य पत्राणि जात्यारग्वधयोस्तथा ॥
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि ॥ ३९ ॥
सौराष्ट्रीं गैरिकं तुत्थं पुष्पकासीससैन्धवम् ॥
रोध्रं रसाञ्जनं दार्वीं हरितालं मनःशिलाम् ॥ ४० ॥

---

१ "सरला" इति हाराण०। २ 'नायाति' इति हाराण०।

हरेणुकैले च तथा सूक्ष्मचूर्णानि कारयेत् ॥
तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितम् ॥ ४१ ॥
जम्ब्वाम्रसुमनानिम्बश्वेतकाम्बोजिपल्लवाः ॥
शल्लकीबदरीबिल्वपलाशतिनिशत्वचः ॥ ४२ ॥
क्षीरिणां च त्वचो योज्याः क्वाथे त्रिफलया सह ॥
तेन क्वाथेन नियतं व्रणं प्रक्षालयेद्भिषक् ॥ ४३ ॥
अस्मिन्नेव कषाये तु तैलं धीरो विपाचयेत् ॥
गोजीविडङ्गयष्टीभिः सर्वगन्धैश्च संयुतम् ॥ ४४ ॥
एतत् सर्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥
स्वर्जिकातुत्थकासीसं शैलेयं च रसाञ्जनम् ॥ ४५ ॥
मनःशिलासमैश्चूर्णं व्रणवीसर्पनाशनम् ॥
गुन्द्रां दग्ध्वा कृतं भस्म हरितालं मनःशिला ॥ ४६ ॥
उपदंशविसर्पाणामेतच्छान्तिकरं परम् ॥
मार्कवस्त्रिफला दन्ती ताम्रचूर्णमयोरजः ॥ ४७ ॥
उपदंशं निहन्त्येष वृक्षमिन्द्राशनिर्यथा ॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम् ॥ ४८ ॥
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् ॥
उपदंशे विशेषेण शृणु भूयस्त्रिदोषजे ॥ ४९ ॥
दुष्टव्रणविधिं कुर्यात् कुथितं मेहनं त्यजेत् ॥
जम्ब्वोष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक् ॥ ५० ॥
सम्यग्दग्धं च विज्ञाय मधुसर्पिः प्रयोजयेत् ॥
शुद्धे च रोपणं दद्यात् कल्कं तैलं हितं च यत् ॥ ५१ ॥
स्नेहस्वेदोपपन्ने तु श्लीपदेऽनिलजे भिषक् ॥
कृत्वा गुल्फोपरि सिरां विध्येत्तु चतुरङ्गुले ॥ ५२ ॥

समाप्यायितदेहं च बस्तिभिः समुपाचरेत् ॥
मासमेरण्डजं तैलं पिबेन्मूत्रेण संयुतम् ॥ ५३ ॥
पयसौदनमश्नीयान्नागरक्कथितेन च ॥
त्रैवृतं चोपयुञ्जीत शस्तो दाहस्तथाऽग्निना ॥ ५४ ॥
गुल्फस्याधः सिरां विध्येच्छ्लीपदे पित्तसंभवे ॥
पित्तघ्नीं च क्रियां कुर्यात् पित्तार्बुदविसर्पवत् ॥ ५५ ॥
सिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक् ॥
मधुयुक्तानि[1] चाभीक्ष्णं कषायाणि पिबेन्नरः ॥ ५६ ॥
पिबेद्वाऽप्यभयाकल्कं मूत्रेणान्यतमेन च ॥
कटुकाममृतां शुण्ठीं विडङ्गं दारु चित्रकम् ॥ ५७ ॥
हितं वा लेपने नित्यं भद्रदारु सचित्रकम् ॥
विडङ्गमरिचार्केषु नागरे चित्रकेऽथवा ॥ ५८ ॥
भद्रदार्वेलुं[2]काख्ये च सर्वेषु लवणेषु च ॥
तैलं पक्कं पिबेद्वाऽपि यवान्नं च हितं सदा ॥ ५९ ॥
पिबेत् सर्षपतैलं वा श्लीपदानां निवृत्तये ॥
पूतीकरञ्जपत्राणां रसं वाऽपि यथाबलम्[3] ॥ ६० ॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ॥
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित् ॥ ६१ ॥
केवुकाकन्दनिर्यासं लवणं त्वथ पाकिमम् ॥
रसं दत्त्वाऽथ पूर्वोक्तं पेयमेतद्भिषग्जितम् ॥ ६२ ॥
काकादनीं काकजङ्घां बृहतीं कण्टकारिकाम् ॥
कदम्बपुष्पीं मन्दारीं लम्बां शुकनसां तथा ॥ ६३ ॥
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत् क्षारकल्पवत् ॥
तत्र दद्यात् प्रतीवापं काकोदुम्बरिकारसम् ॥ ६४ ॥

---

१ 'वा' इति हाराण०। २ 'एलकाख्ये' इति हाराण०। ३ अस्याग्रे-'दग्ध्वा मूत्रेण' इत्यादि ६४ तमः श्लोकोऽत्र पठति हाराण०।

मदनाच्च फलात् क्काथं शुकाख्यस्वरसं तथा ॥
एष क्षारस्तु पानीयः श्लीपदं हन्ति सेवितः ॥ ६५ ॥
अपचीं गलगण्डं च ग्रहणीदोषमेव च ॥
भक्तस्यानशनं चैव हन्यात् सर्वविषाणि च ॥ ६६ ॥
एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम् ॥
एतानेवामयान् हन्ति ये च दुष्टव्रणा नृणाम् ॥ ६७ ॥
द्रवन्तीं त्रिवृतां दन्तीं नीलीं श्यामां तथैव च ॥
सप्तलां शङ्खिनीं चैव दग्ध्वा मूत्रेण गालयेत् ॥ ६८ ॥
दद्याच्च त्रिफलाक्काथमेष क्षारस्तु साधितः ॥
अधो गच्छति पीतस्तु पूर्वैश्चाप्याशिषः समाः ॥ ६९ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने वृद्ध्युपदंशश्लीपद-
चिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशतितमोऽध्यायः ।

अथातः क्षुद्ररोगचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
तत्राजगल्लिकामामां जलौकोभिरुपाचरेत् ॥
शुक्तिशृङ्गीयवक्षारकल्कैश्चालेपयेद्भिषक् ॥ ३ ॥
श्यामालाङ्गलकीपाठाकल्कैर्वाऽपि विचक्षणः ॥
पक्कां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ ४ ॥
अन्धालजीं यवप्रख्यां पनसीं कच्छपीं तथा ॥
पाषाणगर्दभं चैव पूर्वं स्वेदेन योजयेत् ॥ ५ ॥
मनःशिलातालकुष्ठदारुकल्कैः प्रलेपयेत् ॥
परिपाकगतान् भित्त्वा व्रणवत् समुपाचरेत् ॥ ६ ॥

विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभम् ॥
[1]इरिवेल्लीं गन्धनाम्नीं कक्षां विस्फोटकांस्तथा ॥ ७ ॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक् ॥
रोपयेत् सर्पिषा पक्कान् सिद्धेन मधुरौषधैः ॥ ८ ॥
चिप्प्य(प्प)मुष्णाम्बुना सिक्तमुत्कृत्य स्रावयेद्भिषक् ॥
चक्रतैलेन चाभ्यज्य सर्जचूर्णेन चूर्णयेत् ॥ ९ ॥
बन्धेनोपचरेच्चैनमशक्यं चाग्निना दहेत् ॥
मधुरौषधसिद्धेन ततस्तैलेन रोपयेत् ॥ १० ॥
कुनखे विधिरप्येष कार्यो हि भिषजा भवेत् ॥
[2]उपाचरेदनुशयीं श्लेष्मविद्रधिवद्भिषक् ॥ ११ ॥
विदारिकां समभ्यज्य स्विन्नां विम्लाप्य लेपयेत् ॥
नगवृत्तिकवर्षाभूबिल्वमूलैः सुपेषितैः ॥ १२ ॥
व्रणभावगतायां वा कृत्वा संशोधनक्रियाम्[3] ॥
रोपणार्थं हितं तैलं कषायमधुरैः शृतम् ॥ १३ ॥
प्रच्छानैर्वा जलौकोभिः स्राव्याऽपक्का विदारिका ॥
अजकर्णैः सपालाशमूलकल्कैः प्रलेपयेत् ॥ १४ ॥
पक्कां विदार्य शस्त्रेण पटोलपिचुमर्दयोः ॥
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ॥ १५ ॥
बद्ध्वा च क्षीरवृक्षस्य कषायैः खदिरस्य च ॥
व्रणं प्रक्षालयेच्छुद्धां[4] ततस्तां रोपयेत् पुनः ॥ १६ ॥
मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ॥
कच्छूं विचर्चिकां पामां कुष्ठवत् समुपाचरेत् ॥ १७ ॥
लेपश्च शस्यते सिक्थशताह्वागौरसर्षपैः ॥
वचादार्वीसर्षपैर्वा तैलं वा नक्तमालजम् ॥ १८ ॥

---

१ 'इरिविल्लीं' इति हाराण०। २ 'उपाचरेत्' इत्यादिश्लोकार्धं हाराण० पुस्तके न दृश्यते। ३ 'संशोधनीं क्रियाम्' इति हाराण०। ४ 'शुद्धास्ततस्ताः' इति हाराण०।

सारतैलमथाभ्यङ्गे कुर्वीत कटुकैः शृतम् ॥[1]
पाददार्यां सिरां विद्ध्वा स्वेदाभ्यङ्गौ प्रयोजयेत् ॥ १९ ॥
मधूच्छिष्टवसामज्जसर्जचूर्णघृतैः कृतः ॥
यवाह्वगैरिकोन्मिश्रैः पादलेपः प्रशस्यते ॥ २० ॥
पादौ सिक्त्वाऽऽरनालेन लेपनं ह्यलसे हितम् ॥
कल्कीकृतैर्निम्बतिलकासीसालैः ससैन्धवैः ॥ २१ ॥
लाक्षारसोऽभया वाऽपि कार्यं स्याद्रक्तमोक्षणम् ॥
सिद्धं रसे कण्टकार्यास्तैलं वा सार्षपं हितम् ॥ २२ ॥
कासीसरोचनशिलाचूर्णैर्वा प्रतिसारणम् ॥
उत्कृत्य[2] दग्ध्वा स्नेहेन जयेत् कदरसंज्ञकम् ॥ २३ ॥
इन्द्रलुप्ते सिरां मूर्ध्नि स्निग्धस्विन्नस्य मोक्षयेत् ॥
कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुत्थकैः ॥ २४ ॥
कुटन्नटादारुकल्कैर्लेपनं वा प्रशस्यते ॥
प्रच्छयित्वाऽवगाढं वा गुञ्जाकल्कैर्मुहुर्मुहुः ॥ २५ ॥
लेपयेदुपशान्त्यर्थं कुर्याद्वाऽपि रसायनम् ॥[3]
मालतीकरवीराग्निनक्तमालविपाचितम् ॥ २६ ॥
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥
अरूंषिकां हृते रक्ते सेचयेन्निम्बवारिणा ॥ २७ ॥
दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु ॥
हरितालनिशानिम्बकल्कैर्वा सपटोलजैः ॥ २८ ॥
यष्टीनीलोत्पलैरण्डमार्कवैर्वा प्रलेपयेत् ॥
[4]इन्द्रलुप्तापहं तैलमभ्यङ्गे च प्रशस्यते ॥
सिरां दारुणके विद्ध्वा स्निग्धस्विन्नस्य मूर्धनि ॥ २९ ॥

---

१ अस्याग्रे–'पादस्यानुशयी श्लेष्मविद्रधिवदुपक्रमेत्' इत्यर्धमधिकं हाराण० पुस्तके । २ 'उद्धृत्य' इति हाराण० । ३ हस्तिदन्तिमसी कृत्वा मुख्य चैव रसाञ्जन। रोमाण्यनेन जायन्ते नृणा पाणितलेष्वपि' इत्यर्धमस्याग्रेऽधिकं हाराण० पुस्तके । ४ 'इन्द्रलुप्तापह' इत्याद्यर्धं हाराण० पुस्तके न दृश्यते ।

अवपीडं शिरोबस्तिमभ्यङ्गं च प्रयोजयेत् ॥
क्षालने कोद्रवतृणक्षारतोयं प्रशस्यते ॥ ३० ॥
उपरिष्टात् प्रवक्ष्यामि विधिं पलितनाशनम् ॥
मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता ॥ ३१ ॥
पित्तश्लेष्मविसर्पोक्ता क्रिया वा संप्रशस्यते ॥
[1]जतुमणिं समुत्कृत्य मषकं तिलकालकम् ॥ ३२ ॥
क्षारेण प्रदहेद्युक्त्या वह्निना वा शनैः शनैः ॥
न्यच्छे व्यङ्गे सिरामोक्षो नीलिकायां च शस्यते ॥ ३३ ॥
यथान्यायं यथाभ्यासं ललाटव्यादिसिराव्यधः ॥
घृष्ट्वा द्विह्यास्त्वचं पिष्ट्वा क्षीरिणां क्षीरसंयुताम् ॥ ३४ ॥
बलातिबलयष्ट्याह्वरजनीर्वा प्रलेपनम् ॥
पयस्यागुरुकालीयलेपनं वा सगैरिकम् ॥ ३५ ॥
क्षौद्राज्ययुक्तया लिम्पेद्दंष्ट्रया शूकरस्य च ॥
कपित्थराजादनयोः [2]कल्कं वा हितमुच्यते ॥ ३६ ॥
यौवने पिडकास्वेष विशेषाच्छर्दनं हितम् ॥
लेपनं च वचारोध्रसैन्धवैः सर्षपान्वितैः ॥ ३७ ॥
कुस्तुम्बुरुवचालोध्रकुष्ठैर्वा लेपनं हितम् ॥
पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा ॥ ३८ ॥
तेनैव सिद्धं सक्षौद्रं सर्पिःपानं प्रदापयेत् ॥
निम्बारग्वधयोः कल्को हित उत्सादने भवेत् ॥ ३९ ॥
[3]परिवृत्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् ॥
ततोऽभ्यज्य शनैश्चर्म चानयेत् पीडयेन्मणिम् ॥ ४० ॥
प्रविष्टे च मणौ चर्म स्वेदयेदुपनाहनैः ॥
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः साल्वणादिभिः ॥ ४१ ॥

---

१ 'चर्मकील जतुमणिं मशकं तिलकालकम् । उद्धृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥' इति हाराण० । २ 'कल्कः' इति हाराण० । ३ 'परिवृत्ति' इति हाराण० ।

दद्याद्वातहरान् बस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥
वपाटिकां जयेदेवं यथादोषं चिकित्सकः ॥ ४२ ॥
निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम् ॥
दारवीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत् ॥ ४३ ॥
परिषेके वसामज्जशिशुमारवराहयोः ॥
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ॥ ४४ ॥
त्र्यहात्त्र्यहात् स्थूलतरां सम्यङ्नाडीं प्रवेशयेत् ॥
स्रोतो विवर्धयेदेवं स्निग्धमन्नं च भोजयेत् ॥ ४५ ॥
भित्त्वा वा सेवनीं मुक्त्वा सद्यःक्षतवदाचरेत् ॥
सन्निरुद्धगुदं रोग वल्मीकं वह्निरोहिणीम् ॥ ४६ ॥
प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत् ॥
विसर्पोक्तेन विधिना साधयेदग्निरोहिणीम् ॥ ४७ ॥
सन्निरुद्धगुदे योज्या निरुद्धप्रकशक्रिया ॥
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ॥ ४८ ॥
विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ॥
वल्मीकं तु भवेद्यस्य नातिवृद्धममर्मजम् ॥ ४९ ॥
तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ॥
कुलत्थिकाया मूलैश्च गुडूच्या लवणेन च ॥ ५० ॥
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ॥
श्यामामूलैः सपललैः शक्तुमिश्रैः प्रलेपयेत् ॥ ५१ ॥
सुस्निग्धैश्च सुखोष्णैश्च भिषक् तमुपनाहयेत् ॥
पक्कं वा तद्विजानीयाद्गतीः सर्वा यथाक्रमम् ॥ ५२ ॥
अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान् भिषक् ॥
संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ॥ ५३ ॥

---

१ 'यदा विजानीयात्' इति पा० ।

व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान् भिषक् ॥
सुमना ग्रन्थयश्चैव भल्लातकमनःशिले ॥ ५४ ॥
कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा ॥
एतैः सिद्धं निम्बतैलं वल्मीके रोपणं हितम् ॥ ५५ ॥
पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिरावृतम् ॥
वल्मीकं यत् सशोफं स्याद्वर्ज्यं तत्तु विजानता ॥ ५६ ॥
धात्र्याः स्तन्यं शोधयित्वा बाले साध्याऽहिपूतना ॥
पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥ ५७ ॥
पीतं घृतं नाशयति कृच्छ्रामप्यहिपूतनाम् ॥
त्रिफलाकोलखदिरकषायं व्रणरोपणम् ॥ ५८ ॥
कासीसरोचनातुत्थहरितालरसाञ्जनैः ॥
लेपोऽम्लपिष्टो बदरीत्वग्वा सैन्धवसंयुता ॥ ५९ ॥
कपालतुत्थजं चूर्णं चूर्णकाले प्रयोजयेत् ॥
चिकित्सेन्मुष्ककच्छूं चाप्यहिपूतनपामवत् ॥ ६० ॥
गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ॥
कारयेद्गोफणाबन्धं मध्यच्छिद्रेण चर्मणा ॥ ६१ ॥
विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः ॥
क्षीरे महत्पञ्चमूलं मूषिकां चान्त्रवर्जिताम् ॥ ६२ ॥
पक्त्वा तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतम् ॥
गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत् ॥ ६३ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने क्षुद्ररोगचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

---

१ "°मनःशिलाः" इति हाराण° ।

# एकविंशतितमोऽध्यायः ।

अथातः शूकदोषचिकित्सितं[1] व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत् ॥
कषायेष्वेव तैलं च कुर्वीत व्रणरोपणम् ॥ ३ ॥
अष्ठीलिकां जलौकोभिर्ग्राहयेच्च[2] पुनः पुनः ॥
तथा चानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत् ॥ ४ ॥
स्वेदयेद्ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान् ॥
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ५ ॥
कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धां तु रोपयेत् ॥
तैलेन त्रिफलालोध्रतिन्दुकाम्रातकेन तु ॥ ६ ॥
ग्राहयित्वा जलौकोभिरलजीं सेचयेत्ततः ॥
कषायैस्तेषु[3] सिद्धं च तैलं रोपणमिष्यते ॥ ७ ॥
बलातैलेन कोष्णेन मृदितं परिषेचयेत् ॥
मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत् ॥ ८ ॥
संमूढपिडकां क्षिप्रं जलौकोभिरुपाचरेत् ॥
भित्वा पर्यागतां चापि लेपयेत् क्षौद्रसर्पिषा ॥ ९ ॥
अवमन्थे गते पाकं भिन्ने तैलं विधीयते ॥
धवाश्वकर्णपत्तङ्गसल्लकीतिन्दुकीकृतम् ॥ १० ॥
क्रियां पुष्करिकायां तु शीतां सर्वां प्रयोजयेत् ॥
जलौकोभिर्हरेच्चासृक् सर्पिषा चावसेचयेत् ॥ ११ ॥
स्पर्शहान्यां हरेद्रक्तं प्रदिह्यान्मधुरैरपि ॥
क्षीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥ १२ ॥

---

१ 'शूकरोगचिकित्सित' इति हाराण० । २ 'ग्राहयेत् कुशलो भिषक्' इति हाराण० । ३ 'तैस्तु' इति हाराण० ।

पिडकामुत्तमाख्यां च बडिशेनोद्धरेद्भिषक् ॥
उद्धृत्य मधुसंयुक्तैः कषायैरवचूर्णयेत् ॥ १३ ॥
रसक्रिया विधातव्या लिखिते शतपोनके ॥
पृथक्पर्ण्यादिसिद्धं च देयं तैलमनन्तरम् ॥ १४ ॥
क्रियां कुर्याद्भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत् ॥
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे ॥ १५ ॥
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम् ॥
शोधनं रोपणं चैव वीक्ष्य वीक्ष्यावचारयेत् ॥ १६ ॥
हितं च सर्पिषः पानं पथ्यं चापि विरेचनम् ॥
हितः शोणितमोक्षश्च यच्चापि लघु भोजनम् ॥ १७ ॥
अर्बुदं मांसपाकं च विद्रधिं तिलकालकम् ॥
प्रत्याख्याय प्रकुर्वीत भिषक् सम्यक् प्रतिक्रियाम् ॥ १८ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने शूकरोगचिकित्सितं नामैकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः ।

अथातो मुखरोगचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च ॥
वातजेऽभ्यञ्जनं कुर्यान्नाडीस्वेदं[1] च बुद्धिमान् ॥ ३ ॥
[2]विदध्यादोष्ठकोपे तु साल्वणं चोपनाहने ॥
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ॥ ४ ॥
श्रीवेष्टकं सर्जरसं सुरदारु सगुग्गुलु ॥
यष्टीमधुकचूर्णं तु विदध्यात् प्रतिसारणम् ॥ ५ ॥

---

१ 'कृत्वा नाडीस्वेद' इति पा० । २ 'मतिमानोष्ठ°' इति हाराण० ।

पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत् ॥
पित्तविद्रधिवच्चापि क्रियां कुर्यादशेषतः ॥ ६ ॥
शिरोविरेचनं धूमः स्वेदः कवल एव च ॥
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ ७ ॥
त्र्यूषणं स्वर्जिकाक्षारो यवक्षारो विडं तथा ॥
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ८ ॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ॥
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥ ९ ॥
एतदोष्ठप्रकोपानां साध्यानां[1] कर्म कीर्तितम् ॥
दन्तमूलगतानां तु रोगाणां कर्म वक्ष्यते ॥ १० ॥
शीतादे हृतरक्ते तु तोये नागरसर्षपान् ॥
निष्क्वाथ्य त्रिफलां मुस्तं गण्डूषः सरसाञ्जनः ॥ ११ ॥
प्रियङ्गवश्च मुस्तं च त्रिफला च प्रलेपनम् ॥
नस्यं च त्रिफलासिद्धं मधुकोत्पलपद्मकैः ॥ १२ ॥
दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् ॥
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम् ॥ १३ ॥
हितः शिरोविरेकश्च नस्यं स्निग्धं च भोजनम् ॥
विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत् ॥ १४ ॥
रोध्रपत्तङ्गयष्ट्याह्वलाक्षाचूर्णैर्मधूत्तरैः ॥
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥ १५ ॥
काकोल्यादौ दशक्षीरसिद्धं सर्पिश्च नस्यतः ॥
शौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः ॥ १६ ॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥
[2]सारिवोत्पलयष्ट्याह्वसावरागुरुचन्दनैः ॥ १७ ॥

---

१ 'साध्यानां' इति पा०। २ 'गैरिकोत्पलयष्ट्याह्वसारिवागुरुचन्दनैः' इति पा०।

क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ॥
क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः ॥ १८ ॥
संशोध्योभयतः कार्यं शिरश्चोपकुशे तथा ॥
काकोदुम्बरिकागोजीपत्रैर्विस्रावयेदसृक् ॥ १९ ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ॥
पिप्पलीः सर्षपान्[1] श्वेतान्नागरं नैचुलं फलम् ॥ २० ॥
सुखोदकेन संसृज्य[2] कवलं चापि धारयेत् ॥
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥ २१ ॥
शस्त्रेण[3] दन्तवैदर्भे दन्तमूलानि शोधयेत् ॥
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥ २२ ॥
उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत् ॥
कृमिदन्तकवच्चापि विधिः कार्यो विजानता ॥ २३ ॥
छित्त्वाऽधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् ॥
वचातेजोवतीपाठास्वर्जिकायावशूकजैः ॥ २४ ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्तितः ॥
पटोलत्रिफलानिम्बकषायश्चात्र धावने ॥
हितः शिरोविरेकश्च धूमो वैरेचनश्च यः ॥ २५ ॥
सामान्यं कर्म नाडीनां विशेषं चात्र मे शृणु ॥
नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ॥ २६ ॥
यं दन्तमभिजायेत[4] नाडी तं दन्तमुद्धरेत् ॥
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ॥ २७ ॥
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥
भिनत्त्युपेक्षिते दन्ते हनुकास्थि गतिर्ध्रुवम् ॥ २८ ॥

---

१ 'सर्षपाश्चैव' इति हाराण० । २ 'संसृष्ट' इति हाराण० । ३ 'वस्त्रेण' इति पा० । ४ 'दन्तमधिजायेत' इति पा० ।

समूलं दशनं तस्मादुद्धरेद्दन्तमस्थिरम् ॥
उद्धृते तूत्तरे दन्ते समूले[1] स्थिरबन्धने ॥ २९ ॥
रक्तातियोगात् पूर्वोक्ता रोगा घोरा भवन्ति हि ॥
काणः संजायते जन्तुरर्दितं चास्य जायते ॥ ३० ॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ॥
धावने जातिमदनस्वादुकण्टकखादिरम् ॥ ३१ ॥
कषायं जातिमदनकटुकस्वादुकण्टकैः ॥
यष्ट्याह्वरोध्रमञ्जिष्ठाखदिरैश्चापि यत् कृतम् ॥ ३२ ॥
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥
कीर्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते ॥ ३३ ॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा ॥
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥ ३४ ॥
स्नैहिकश्च हितो धूमो नस्यं स्निग्धं च भोजनम् ॥
रसो रसयवाग्वश्च क्षीरं सन्तानिका घृतम् ॥ ३५ ॥
शिरोबस्तिर्हितश्चापि क्रमो यश्चानिलापहः ॥
अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥ ३६ ॥
लाक्षाचूर्णैर्मधुयुतैस्ततस्ताः प्रतिसारयेत् ॥
दन्तहर्षक्रियां[2] चापि कुर्यान्निरवशेषतः ॥ ३७ ॥
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥
जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम् ॥ ३८ ॥
तथाऽवपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ॥ ३९ ॥
चलं[3] मुद्धृत्य च स्थानं विदहेत् सुषिरस्य च ॥
ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुकैः ॥ ४० ॥

---

१ 'सशूले' इति पा० । २ '°क्रिया वापि' इति हाराण० । ३ 'कृमिदन्तकमित्युन्नेयम्' इति पा० ।

तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥
हनुमोक्षे समुद्दिष्टां कुर्याच्चार्दितवत् क्रियाम् ॥ ४१ ॥
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥
तथाऽतिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ ४२ ॥
साध्यानां दन्तरोगाणां चिकित्सितमुदीरितम् ॥
जिह्वागतानां साध्यानां कर्म वक्ष्यामि सिद्धये ॥ ४३ ॥
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् ॥
कण्टकेष्वनिलोत्थेषु तत् कार्यं भिषजा भवेत् ॥ ४४ ॥
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते ॥
प्रतिसारणगण्डूषं नस्यं च मधुरं हितम् ॥ ४५ ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥
पिप्पल्यादिर्मधुयुतः कार्यस्तु प्रतिसारणे ॥ ४६ ॥
गृह्णीयात् कवलांश्चापि गौरसर्षपसैन्धवैः ॥
पटोलनिम्बवार्ताकुक्षारयूषैश्च भोजयेत् ॥ ४७ ॥
उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत् ॥
शिरोविरेकगण्डूषधूमैश्चैनमुपाचरेत् ॥ ४८ ॥
जिह्वागतानां कर्मोक्तं तालव्यानां प्रवक्ष्यते ॥
अङ्गुष्ठाङ्गुलिसंदंशेनाकृष्य गलशुण्डिकाम् ॥ ४९ ॥
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥
नोत्कृष्टं चैव हीनं च त्रिभागं छेदयेद्भिषक् ॥ ५० ॥
अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च ॥
हीनच्छेदाद्भवेच्छोफो लाला निद्रा भ्रमस्तमः ॥ ५१ ॥
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ॥
गलशुण्डीं तु सञ्छिद्य कुर्यात् प्राप्तमिमं क्रमम् ॥ ५२ ॥

मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ॥
क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ॥ ५३ ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ॥
[1]निष्क्काथ्य पिचुमन्दं च कवलं तत्र योजयेत् ॥ ५४ ॥
इङ्गुदीकिणिहीदन्तीसरलासुरदारुभिः ॥
पञ्चाङ्गीं कारयेत् पिष्टैर्वर्तिं गन्धोत्तरां शुभाम् ॥ ५५ ॥
ततो धूमं पिबेज्जन्तुर्द्विरह्नः कफनाशनम् ॥
क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ॥ ५६ ॥
[2]तुण्डिकेर्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे ॥
एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ॥ ५७ ॥
तालुपाके तु कर्तव्यं विधानं पित्तनाशनम् ॥
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ ५८ ॥
कीर्तितं तालुजानां तु कण्ठ्यानां कर्म वक्ष्यते ॥
साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम् ॥ ५९ ॥
छर्दनं धूमपानं च गण्डूषो नस्यकर्म च ॥
वातिकीं तु हृते रक्ते लवणैः प्रतिसारयेत् ॥ ६० ॥
सुखोष्णान् स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णशः ॥
पतङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत् ॥ ६१ ॥
द्राक्षापरूषकक्काथो हितश्च कवलग्रहे ॥
[3]अगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत् ॥ ६२ ॥
श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ॥
नस्यकर्मणि योक्तव्यं तथा कवलधारणे ॥ ६३ ॥
पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसंभवाम् ॥
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥ ६४ ॥

---

१ 'निःक्काथ्य पिचुमर्दं' इति हाराण० । २ 'तुण्डिकेर्यरुषे' इति हाराण० । ३ 'आगारधूम°' इति हाराण० ।

एककालं यवान्नं च भुञ्जीत स्निग्धमल्पशः ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ॥ ६५ ॥
एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत् ॥
गिलायुश्चापि यो व्याधिस्तं च शस्त्रेण साधयेत् ॥ ६६ ॥
अमर्मस्थं सुपक्वं च भेदयेद्गलविद्रधिम् ॥
वातात् सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ॥ ६७ ॥
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
ततोऽस्मै स्नैहिकं धूममिमं दद्याद्विचक्षणः ॥ ६८ ॥
शालराजादनैरण्डसारे[1]ङ्गुदमधूकजाः ॥
मज्जानो गुग्गुलुध्याममांसीकालानुसारिवाः ॥
श्रीसर्जरसशैलेयमधूच्छिष्टानि चा[2]हरेत् ॥ ६९ ॥
तत्सर्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः ॥
टिण्टुकवृन्तं सक्षौद्रं मतिमांस्तेन लेपयेत् ॥ ७० ॥
एष सर्वसरे धूमः प्रशस्तः स्नैहिको मतः ॥
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥ ७१ ॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ॥
सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ ७२ ॥
प्रतिसारणग[3]ण्डूषौ धूमः संशोधनानि च ॥
कफात्मके सर्वसरे विधिं कुर्यात् कफापहम् ॥ ७३ ॥
[4]पिबेदतिविषां पाठां मुस्तं च सुरदारु च ॥
रोहिणीं कटुकाख्यां च कुटजस्य फलानि च ॥ ७४ ॥
गवां मूत्रेण मनुजो भागैर्धरणसंमितैः ॥
एष सर्वान् कफकृतान् रोगान् योगोऽपकर्षति ॥ ७५ ॥
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः ॥
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ ७६ ॥

---

१ "°सारेङ्गुदि°" इति हाराण०। २ 'वाहरेत्' इति हाराण०। ३ "°गण्डूषधूमसंशोधनानि च' इति हाराण०। ४ 'पचेदतिविषां' इति हाराण०।

रोगाणां मुखजातानां साध्यानां कर्म कीर्तितम् ॥
असाध्या अपि वक्ष्यन्ते रोगा ये तत्र कीर्तिताः ॥ ७७ ॥
[१]ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ॥
दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिसौषिरौ ॥ ७८ ॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः ॥
जिह्वागतेष्वलासस्तु तालव्येष्वर्बुदं तथा ॥ ७९ ॥
स्वरघ्नो वलयो वृन्दो [२]विदार्यलस एव च ॥
गलौघो मांसतानश्च शतघ्नी रोहिणी [३]च या ॥ ८० ॥
असाध्याः कीर्तिता ह्येते रोगा नव दशैव च ॥
तेषां चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ ८१ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने मुखरोगचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशतितमोऽध्यायः ।

अथातः शोफानां चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

षड्विधोऽवयवसमुत्थः शोफोऽभिहितो लक्षणतः प्रतीकारतश्च; सर्वसरस्तु पञ्चविधः, तद्यथा—वातपित्तश्लेष्मसन्निपातविषनिमित्तः ३

[४]तत्रापतर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा पिष्टान्नहरितकशाकलवणानि क्षीणस्य वाऽतिमात्रमम्लमुपसेवमानस्य मृत्पक्कलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्मसेवनाद्विरुद्धाहारसे[५]वनात् वा हस्त्यश्वोष्ट्ररथपदातिसङ्क्षोभणादयो सितस्य दोषा धातून् प्रदूष्य श्वयथुमापादयन्त्यखिले शरीरे ॥ ४ ॥

---

१ 'ओष्ठप्रकोपाः' इति हाराण० । २ 'बलासश्च विदारिका । गलौघ-' इति हाराण० । ३ 'गले' इति हाराण० । ४ 'तत्रापि तर्पितस्य' इति हाराण० । ५ '°सेवनाद्धस्त्यश्वरथपदातिसक्षोभणाद्दोषाः' इति हाराण० ।

तत्र वातश्वयथुररुणः कृष्णो वा मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषाः; पित्तश्वयथुः [1]पीतः सरक्तो वा मृदुः शीघ्रानुसार्यूषा[2]दयश्चात्र वेदनाविशेषाः, श्लेष्मश्वयथुः पाण्डुः शुक्लो वा स्निग्धः कठिनः शीतो मन्दानुसारी, कण्ड्वादयश्चात्र वेदनाविशेषाः; सन्निपातश्वयथुः सर्ववर्णवेदनः; विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात् [3]प्रकुथितोदकावगाहनात् सविषसत्त्वदिग्धचूर्णेनावचूर्णनाद्वा सविषमूत्रपुरीषशुक्रस्पृष्टानां वा तृणकाष्ठादीनां संस्पर्शनात्, स तु मृदुः क्षिप्रोत्थानोऽवलम्बी चलोऽचलो वा [4]दाहपाकरागप्रायश्च भवति ॥ ५ ॥

भवन्ति चात्र—

दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥
पक्वाशयस्था मध्ये च वर्चःस्थानगतास्त्वधः ॥ ६ ॥
कृत्स्नं देहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥
श्वयथुर्मध्यदेशे यः स कष्टः सर्वगश्च यः ॥ ७ ॥
अर्धाङ्गेऽरिष्टभूतश्च यश्चोर्ध्वं परिसर्पति ॥
श्वासः पिपासा दौर्बल्यं ज्वरश्छर्दिररोचकः ॥ ८ ॥
हिक्कातीसारकासाश्च शूनं सङ्कर्षयन्ति हि ॥
सामान्यतो विशेषाच्च तेषां वक्ष्यामि भेषजम् ॥ ९ ॥

शोफिनः सर्व एव परिहरेयुरम्ललवणदधिगुडवसापयस्तैलघृतपिष्टमयगुरूणि ॥ १० ॥

तत्र वातश्वयथौ त्रैवृतमेरण्डतैलं वा मासमर्धमासं वा पाययेत्, न्यग्रोधादिककषायसिद्धं सर्पिः पित्तश्वयथौ, आरग्वधादिसिद्धं [5]सर्पिः श्लेष्मश्वयथौ, सन्निपातश्वयथौ स्नुहीक्षीरपात्रं द्वादशभिरम्लपात्रैः [6]प्रतिसंसृज्य दन्तीद्रवन्तीप्रतीवापं सर्पिः पाचयित्वा पाययेत्, विषनिमित्तेषु कल्पेषु प्रतीकारः ॥ ११ ॥

---

१ 'पीतो रक्तो वा' इति हाराण०। २ "°सारी ओषचोषादयः' इति हा०। ३ 'प्रकोथोदक°' इति हाराण०। ४ 'दाहपाकप्रायश्च' इति हाराण०। ५ "°सिद्ध श्लेष्म°" इति हा०। ६ 'प्रतिसंसृष्ट दन्तीप्रवाप' इति हाराण०।

अत ऊर्ध्वं[1] सामान्यचिकित्सितमुपदेक्ष्यामः—तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु ततोऽन्यतममुपयुज्यमानं श्वयथुमपहन्ति, मूत्रवर्तिक्रियां वा [2]सेवेत, नवायसं वाऽहरहर्मधुना, विडङ्गातिविषाकुटजफलभद्रदारुनागरमरिचचूर्णं वा भरणमुष्णाम्बुना, त्रिकटुक्षारायश्चूर्णानि वा त्रिफलाकषायेण, मूत्रं वा तुल्यक्षीरं, हरीतकीं वा तुल्यगुडामुपयुञ्जीत, देवदारुशुण्ठीं वा, गुग्गुलुं वा मूत्रेण वर्षाभूकषायानुपानं वा, तुल्यगुडं शृङ्गवेरं वा, वर्षाभूकषायं मूलकल्कं वा सशृङ्गवेरं पयोऽनुपानमहरहर्मासं, व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा [3]मुद्गोलुम्बान् भक्षयेत्, पिप्पलीपिप्पलीमूलचव्यचित्रक[4]मयूरकवर्षाभूसिद्धं वा क्षीरं पिबेत्, सहौषधसुरङ्गीमूलसिद्धं वा, त्रिकटुकैरण्डश्यामामूलसिद्धं वा, वर्षाभूशृङ्गवेरसहादेवदारुसिद्धं वा, तथाऽलाबूबिभीतकफलकल्कं वा तण्डुलाम्बुना; क्षारपिप्पलीमरिचशृङ्गवेरानुसिद्धेन च मुद्गयूषेणालवणेनाल्पस्नेहेन भोजयेद्यवान्नं गोधूमान्नं वा; वृक्षकार्कनक्तमालनिम्बवर्षाभूक्वाथैश्च परिषेकः; सर्षप[5]सुवर्चलासैन्धवशार्ङ्गेष्टाभिश्च प्रदेहः कार्यः; यथादोषं च वमनविरेचनास्थापनानि तीक्ष्णान्यजस्रमुपसेवेत, स्नेहस्वेदोपनाहांश्च; सिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति ॥

भवति चात्र—

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलं च ॥
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्जयेत्तु ॥ १३ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने शोथचिकित्सितं
नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

१ 'अथातः सामान्य°' इति हाराण०। २ 'सेवयेत्' इति हाराणचन्द्रः। ३ 'मुद्गालम्बान्' इति हाराण०। ४ '°मयूरवर्षाभू°' इति हाराण०। ५ '°सौवर्चल°' इति हाराण०।

# चतुर्विंशतितमोऽध्यायः।

अथातोऽनागताबाधाप्रतिषेधं व्याख्यास्यामः॥ १॥

यथोवाच भगवान् धन्वन्तरिः॥ २॥

उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता॥
धीमता यदनुष्ठेयं तत् सर्वं संप्रवक्ष्यते॥ ३॥
तत्रादौ दन्तपवनं[1] द्वादशाङ्गुलमायतम्॥
कनिष्ठिकापरीणाहमृज्वग्रन्थितमव्रणम्[2]॥ ४॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम्॥
अवेक्ष्यर्तुं च दोषं च रसं वीर्यं च योजयेत्॥ ५॥
कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः॥
निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा॥ ६॥
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा॥
क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च॥ ७॥
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्॥
एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च॥ ८॥
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन्॥
तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापकर्षति॥ ९॥
वैशद्यमन्नाभिरुचिं[3] सौमनस्य करोति च॥
न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे॥ १०॥
अथास्यपाके[4] श्वासे च कासहिक्कावमीषु च॥
दुर्बलोऽजीर्णभक्तश्च मूर्च्छार्तो मदपीडितः॥ ११॥

---

१ 'तत्रादितो दन्तकाष्ठ' इति पा०। २ '°ग्रन्थिमथाव्रणम्', इति पा०। 'ग्रथितमव्रणम्' इति हाराण०। ३ 'रुचिमन्नेपु वैशद्ये दन्तजिह्वौष्ठतालुषु। पाटव सौमनस्य च लाघव चोपपादयेत्। न च स्याद्गलताल्वोष्ठजिह्वारोगसमुद्भवः। सुगन्धि वदन च स्याह्लालास्तम्भनमेव च। मुखप्रसेकशमनं धर्मपुष्टिकर नृणाम्। लाघव चेन्द्रियाणां स्यान्नित्य खादेत्ततो नर·।' इति पा०। ४ 'मुखपाकश्वासकासशोषहिक्कावमीषु' च इति पा०।

शिरोरुजार्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥
अर्दिती कर्णशूली च दन्तरोगी च मानवः ॥ १२ ॥
जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ॥
तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम् ॥ १३ ॥
मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं सुखम् ॥
दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणम् ॥ १४ ॥
क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः ॥
भिल्लो[1]दककषायेण तथैवामलकस्य वा ॥ १५ ॥
प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा ॥
नीलिकां मुखशोषं च पिडकां व्यङ्गमेव च ॥ १६ ॥
रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत् ॥
मुखं लघु निरीक्षेत दृढं पश्यति चक्षुषा ॥ १७ ॥
मतं स्रोतोञ्जनं श्रेष्ठं विशुद्धं सिन्धुसंभवम् ॥
दाहकण्डूमलघ्नं च दृष्टिक्लेदरुजापहम् ॥ १८ ॥
तेजोरूपावहं चैव सहते मारुतातपौ ॥
न नेत्र[2]रोगा जायन्ते तस्मादञ्जनमाचरेत् ॥ १९ ॥
भुक्तवाञ्छिरसा स्नातः श्रान्तश्छर्दनवाहनैः ॥
रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च ॥ २० ॥
कर्पूरजातीकक्कोललवङ्गकटुकाह्वयैः ॥
सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभ[3]म् ॥ २१ ॥
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥
हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम् ॥ २२ ॥
प्रसेकशमनं हृद्यं गलामयविनाशनम् ॥
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥ २३ ॥

१ भिल्लो रोध्रः। 'भिल्लोदककषायेण' इति हाराण०। २ 'नेत्रदोषाः' इति हाराण०। ३ 'हितम्' इति पा०।

रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनाम् ॥
रूक्षदुर्बलमर्त्यानां न हितं चास्यशोषिणाम् ॥ २४ ॥
शिरोगतांस्तथा रोगाञ्छिरोभ्यङ्गोऽपकर्षति ॥
केशानां मार्दवं दैर्घ्यं बहुत्वं स्निग्धकृष्णताम् ॥ २५ ॥
करोति शिरसस्तृप्तिं सुत्वक्कमपि चाननम् ॥
सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणम् ॥ २६ ॥
मधुकं क्षीरशुक्ला च सरलं देवदारु च ॥
क्षुद्रकं पञ्चनामानं समभागानि संहरेत् ॥ २७ ॥
तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥
सदैव शीतलं जन्तोर्मूर्ध्नि तैलं प्रदापयेत् ॥ २८ ॥
केशप्रसाधनी केश्या रजोजन्तुमलापहा ॥
हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥ २९ ॥
अभ्यङ्गो मार्दवकरः कफवातनिरोधनः ॥
धातूनां पुष्टिजननो मृजावर्णबलप्रदः ॥ ३० ॥
सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः ॥
क्षताग्निदग्धाभिहतविघृष्टानां रुजापहः ॥ ३१ ॥
जलसिक्तस्य वर्धन्ते यथा मूलेऽङ्कुरास्तरोः ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते ॥ ३२ ॥
सिरामुखै रोमकूपैर्धमनीभिश्च तर्पयन् ॥
शरीरबलमाधत्ते युक्तः स्नेहोऽवगाहने ॥ ३३ ॥
तत्र प्रकृतिसात्म्यर्तुदेशदोषविकारवित् ॥
तैलं घृतं वा मतिमान् युञ्ज्यादभ्यङ्गसेकयोः ॥ ३४ ॥
केवलं सामदोषेषु न कथञ्चन योजयेत् ॥
तरुणज्वरयंजीर्णौ च नाभ्यक्तव्यौ कथञ्चन ॥ ३५ ॥

तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥
पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ॥ ३६ ॥
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो गदाः ॥
सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत् ॥ ३७ ॥
शरीरायासजननं कर्म व्यायामसंज्ञितम् ॥
तत् कृत्वा[1] तु सुखं देहं विमृद्नीयात् समन्ततः ॥ ३८ ॥
शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता ॥
दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥ ३९ ॥
श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥
आरोग्यं चापि परमं व्यायामादुपजायते ॥ ४० ॥
न चास्ति सदृशं तेन किञ्चित् स्थौल्यापकर्षणम् ॥
न च व्यायामिनं मर्त्यमर्दयन्त्यरयो बलात्[2] ॥ ४१ ॥
न चैनं सहसाऽऽक्रम्य जरा समधिरोहति ॥
स्थिरीभवति मांसं च व्यायामाभिरतस्य च ॥ ४२ ॥
व्यायामस्विन्नगात्रस्य[3] पद्भ्यामुद्वर्तितस्य च ॥
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ॥ ४३ ॥
वयोरूपगुणैर्हीनमपि कुर्यात् सुदर्शनम् ॥
व्यायामं कुर्वतो नित्यं विरुद्धमपि भोजनम् ॥ ४४ ॥
विदग्धमविदग्धं वा निर्दोषं परिपच्यते ॥
व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम् ॥ ४५ ॥
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥
सर्वेष्वृतुष्वहरहः पुम्भिरात्महितैषिभिः ॥ ४६ ॥

---

१ 'कृत्वाऽनु' इति पा० । २ 'भयात्' इति पा० । ३ 'व्यायामक्षुण्णगात्रस्य' इति ह्राराण० ।

बलस्यार्धेन कर्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते ॥ ४७ ॥
व्यायामं कुर्वतो जन्तोस्तद्बलार्धस्य लक्षणम् ॥
वयोबलशरीराणि देशकालाशनानि च ॥ ४८ ॥
समीक्ष्य कुर्याद्व्यायाममन्यथा रोगमाप्नुयात् ॥
क्षयतृष्णारुचिच्छर्दिरक्तपित्तभ्रमक्लमाः ॥ ४९ ॥
कासशोषज्वरश्वासा अतिव्यायामसंभवाः ॥
रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः ॥ ५० ॥
भुक्तवान् स्त्रीषु च क्षीणस्तृड्भ्रमार्तश्च[1] वर्जयेत् ॥
उद्वर्तनं वातहरं कफमेदोविलापनम् ॥ ५१ ॥
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥
सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् ॥ ५२ ॥
उद्धर्षणोत्सादनाभ्यां जायेयातामसंशयम् ॥
उत्सादनाद्भवेत् स्त्रीणां विशेषात् कान्तिमद्वपुः ॥ ५३ ॥
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम् ॥
उद्धर्षणं तु विज्ञेयं कण्डूकोठानिलापहम् ॥ ५४ ॥
ऊर्वोः संजनयत्याशु फेनकः स्थैर्यलाघवे ॥
कण्डूकोठानिलस्तम्भमलरोगापहश्च सः ॥ ५५ ॥
तेजनं त्वग्गतस्याग्नेः सिरामुखविवेचनम् ॥
उद्धर्षणं त्विष्टिकया कण्डूकोठविनाशनम् ॥ ५६ ॥
निद्रादाहश्रमहरं स्वेदकण्डूतृषापहम् ॥
हृद्यं मलहरं श्रेष्ठं सर्वेन्द्रियविबोधनम्[2] ॥ ५७ ॥
तन्द्रापाप्मोपशमनं[3] तुष्टिदं पुंस्त्ववर्धनम् ॥
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् ॥ ५८ ॥

---

१ 'क्षीणो भ्रमार्तश्च विवर्जयेत्' इति हाराण० । २ 'सर्वेन्द्रियविशोधनम्' इति पा० । ३ '°पापोपशमन' इति हाराण० ।

उष्णेन शिरसः स्नानमहितं चक्षुषः सदा ॥
शीतेन शिरसः स्नानं चक्षुष्यमिति निर्दिशेत् ॥ ५९ ॥
श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिबलाबलम् ॥
काममुष्णं शिरःस्नानं भैषज्यार्थं[1] समाचरेत् ॥ ६० ॥
अतिशीताम्बु शीते च श्लेष्ममारुतकोपनम् ॥
अत्युष्णमुष्णकाले च पित्तशोणितवर्धनम्[2] ॥ ६१ ॥
तच्चातिसारज्वरितकर्णशूलानिलार्तिषु ॥
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ॥ ६२ ॥
सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्धनम् ॥
स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनम् ॥ ६३ ॥
स्नानं येषां निषिद्धं तु तेषामप्यनुलेपनम् ॥
रक्षोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमम् ॥ ६४ ॥
सुमनोम्बररत्नानां धारणं प्रीतिवर्धनम् ॥
मुखालेपाद्दृढं चक्षुः पीनगण्डं तथाऽऽननम् ॥ ६५ ॥
अभ्यङ्गपिडकं कान्तं भवत्यम्बुजसन्निभम् ॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम् ॥ ६६ ॥
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥
यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्धनम् ॥ ६७ ॥
देवतातिथिविप्राणां पूजनं गोत्रवर्धनम् ॥
आहारः प्रीणनः सद्यो बलकृद्देहधारकः ॥ ६८ ॥
आयुस्तेजःसमुत्साहस्मृत्योजोग्निविवर्धनः ॥
पादप्रक्षालनं पादमलरोगश्रमापहम् ॥ ६९ ॥
चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्धनम् ॥
निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत् ॥ ७० ॥

---

१ 'भैषज्यमिति निर्दिशेत्' इति पा० । २ 'पित्तशोणितकोपनम्' इति ह्रा० ।

पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः ॥
पादरोगहरं [1]वृष्यं रक्षोघ्नं प्रीतिवर्धनम् ॥ ७१ ॥
सुखप्रचारमौजस्यं सदा पादत्रधारणम् ॥
अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत् ॥ ७२ ॥
पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् ॥
[2]पाप्मोपशमनं केशनखरोमापमार्जनम् ॥ ७३ ॥
हर्षलाघवसौभाग्यकरमुत्साहवर्धनम् ॥
[3]बाणवारं मृजावर्णतेजोबलविवर्धनम् ॥ ७४ ॥
पवित्रं केश्यमुष्णीषं वातातपरजोपहम् ॥
वर्षानिलरजोघर्महिमादीनां निवारणम् ॥ ७५ ॥
वर्ण्यं चक्षुष्यमौजस्यं शंकरं छत्रधारणम् ॥
शुनः सरीसृपव्यालविषाणिभ्यो भयापहम् ॥ ७६ ॥
श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥
सत्त्वोत्साहबलस्थैर्यधैर्यवीर्यविवर्धनम् ॥ ७७ ॥
अवष्टम्भकरं चापि [4]भयघ्नं दण्डधारणम् ॥
आस्या वर्णकफस्थौल्यसौकुमार्यकरी सुखा ॥ ७८ ॥
अध्वा वर्णकफस्थौल्यसौकुमार्यविनाशनः ॥
अत्यध्वा विपरीतोऽस्माज्जरादौर्बल्यकृच्च सः ॥ ७९ ॥
यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् ॥
तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ॥ ८० ॥
श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदम् ॥
सुखं शय्यासनं, दुःखं विपरीतगुणं मतम् ॥ ८१ ॥
बालव्यजनमौजस्यं मक्षिकादीनपोहति ॥
शोषदाहश्रमस्वेदमूर्च्छाघ्नो व्यजनानिलः ॥ ८२ ॥

---

१ 'वृष्यमायुष्य चक्षुषे हितम्' इति पा०। २ 'पापोपशमन' इति हाराण०। ३ 'वारबाण' इति पा०। ४ 'रक्षोघ्न' इति पा०।

प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् ॥
संवाहनं मांसरक्तत्वक्प्रसादकरं सुखम् ॥ ८३ ॥
अवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपक्तिनुत् ॥
स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा ॥ ८४ ॥
सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ॥
निवातं ह्यायुषे सेव्यमारोग्याय च सर्वदा ॥ ८५ ॥
आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ॥
दाहवैवर्ण्यकारी च छाया चैतानपोहति ॥ ८६ ॥
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ॥
आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः ॥ ८७ ॥
पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रिताम् ॥
करोति धातुसाम्यं च निद्रा काले निषेविता ॥ ८८ ॥

तत्रादित एव नीचनखरोम्णा शुचिना शुक्लवाससा लघूष्णीषच्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्वाभिभाषिणा बन्धुभूतेन भूतानां गुरुवृद्धानुमतेन सुसहायेनानन्यमनसा खलूपचरितव्यं, तदपि न रात्रौ, न केशास्थिकण्टकाश्मतुषभस्मोत्करकपालाङ्गारामेध्यस्नानबलिभूमिषु, न विषमेन्द्रकीलचतुष्पथश्वभ्राणामुपरिष्टात् ॥ ८९ ॥

न राजद्विष्टपरुषपैशुन्यानृतानि वदेत्, न देवब्राह्मणपितृपरिवादांश्च; न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचा[1]नुपासीत ॥ ९० ॥

वृक्षपर्वतप्रपातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोहणानि परिहरेत्, पूर्णनदीसमुद्राविदितपल्वलश्वभ्रकूपावतरणानि, भिन्नशून्यागारश्मशानविजनारण्यवासाग्निसंभ्रमव्यालभुजङ्गकीटसेवाश्च, ग्रामाघातकलहशस्त्रसन्निपातव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ॥ ९१ ॥

---

१ 'नीचाचारानुपासीत' इति हाराण० ।

नाग्निगोगुरुब्राह्मणप्रेङ्खादम्पत्यन्तरेण[1] यायात्। न शवमनुयायात्। देवगोब्राह्मणचैत्यध्वजरोगिपतितपापकारिणां च छायां नाक्रमेत। नास्तं गच्छन्तमुद्यन्तं वाऽऽदित्यं वीक्षेत। गां[2] धापयन्तीं धयन्तीं परशस्यं वा चरन्तीं न कस्मैचिदाचक्षीत, न चोल्का[3]पातोत्पातेन्द्रधनूंषि। नाग्निं मुखेनोपधमेत्। नापो भूमिं वा पाणिपादेनाभिहन्यात्॥ ९२॥

न वेगान् धा[4]रयेद् वातमूत्रपुरीषादीनाम्। न बहिर्वेगान् ग्रामनगरदेवतायतनश्मशानचतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजेन्न प्रकाशं न वाय्वग्निसलिलसोमार्कगोगुरुप्रतिमुखम्॥ ९३॥

न भूमिं विलिखेत्, नासंवृतमुखः सदसि जृम्भोद्गारकासश्वासक्षवथूनुत्सृजेत्, न पर्यङ्किकावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्यात्॥ ९४॥

न बालकर्णनासास्रोतो[5]दशनाक्षिविवराण्यभिकुष्णीयात्, न वीजयेत् केशमुखनखवस्त्रगात्राणि, न गात्रनखवक्त्रवादित्रं कुर्यात्, न काष्ठलोष्टतृणादीनभिहन्याच्छिन्द्याद्भिन्द्याद्वा॥ ९५॥

न प्रतिवातातपं सेवेत, न भुक्तमात्रोऽग्निमुपासीत, नोत्कट[6]काल्पकाष्ठासनमध्यासीत, न ग्रीवां विषमं धारयेत्, न विषमकायः क्रियां भजेत् भुञ्जीत वा, न प्रततमीक्षेत विशेषाज्ज्योतिर्भास्करसूक्ष्मचलभ्रान्तानि, न भारं शिरसा वहेत्, न स्वप्नजागरणशयनासनस्थानचङ्क्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरणहास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत॥ ९६॥

उचितादप्यहितात् क्रमशो विरमेत्, हितमनुचितमप्यासेवेत क्रमशः, न चैकान्ततः पादहीनात्॥ ९७॥

---

१ 'अन्तरेणाभियायात्' इति हाराण०। २ 'गां धयन्ती परशस्य वा चरन्तीं परस्मै न' इति हाराण०। ३ 'चोल्कापातेन्द्र°' इति हाराण०। ४ 'धारयेद्बहिर्वेगान्' इति हाराण०। ५ '°दशनविवराण्यभिकुष्णीयात्' इति हाराण०। ६ 'नोत्कटकस्तिष्ठेत्, नाल्पकष्टासन' इति हाराण०।

नावाक्शिराः शयीत, न भिन्नपात्रे भुञ्जीत, न विना पात्रेण, नाञ्जलिपुटेनापः पिबेत्, काले हितमितस्निग्धमधुरप्रायमाहारं वैद्यप्रत्यवेक्षितमश्नीयात्, ग्रामगणगणिकापणिकशत्रुसत्रशठपतितभोजनानि[1] परिहरेत्, शेषाण्यपि चानिष्टरूपरसगन्धस्पर्शशब्दमानसानि, अन्यान्येवंगुणान्यपि[2] संभ्रमदत्तानि, (तान्यपि) मक्षिकाबालोपहतानि[3], नाप्रक्षालितपाणिपादो भुञ्जीत, न मूत्रोच्चारपीडितः, न सन्ध्ययोर्नानुपाश्रितो[4] नातीतकालं हीनमतिमात्रं (नोद्धृतस्नेहं) चेति ॥ ९८ ॥

न भुञ्जीतोद्धृतस्नेहं नष्टं पर्युषितं पयः ॥
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ॥ ९९ ॥
नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥
अन्यथा[5] जनयेत् कुष्ठविसर्पादीन् गदान् बहून् ॥
नात्मानमुदके पश्येन्न नग्नः प्रविशेज्जलम् ॥ १०० ॥

द्यूतमद्यातिसेवाप्रतिभूत्वसाक्षित्वसमाह्वानगोष्ठीवादित्राणि न सेवेत, स्रजं छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत्, ब्राह्मणमग्निं गां च नोच्छिष्टः स्पृशेत् ॥ १०१ ॥

भवन्ति चात्र[6]—

यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ॥
तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥ १०२ ॥
वर्षासु न पिबेत्तोयं पिबेच्छरदि मात्रया ॥
वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत् ॥ १०३ ॥
उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम् ॥
हेमन्ते च वसन्ते च सीध्वरिष्टौ पिबेन्नरः ॥ १०४ ॥

---

१ "°शत्रुशठ°" इति हाराण० । २ 'अनेवगुणान्यपि संभूय दत्तानि तान्यपि इति हाराण० । ३ 'मक्षिकाव्यालोपहतानि' इति हाराण० । ४ 'नापाश्रित-' इति हाराण० । ५ 'अन्यथा कुष्ठवीसर्पादीन् जनयेत्' इति हाराण० । ६ अस्याग्रे-'सुखमात्र समासेन सद्वृत्तस्यैतदीरितम् । आरोग्यमायुरर्थो वा नासद्भिः प्राप्यते नृभिः' इति श्लोकोऽधिको हाराणचन्द्रधृतो दृश्यते ।

भवतश्चात्र—

कफप्रसेकं हृदयाविशुद्धिं कण्डूं च दुश्छर्दितलिङ्गमाहुः ॥
पित्तातियोगं च विसंज्ञतां च हृत्कण्ठपीडामपि चातिवान्ते ॥ ८ ॥
पित्ते कफस्यानु सुखं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि ॥
लघौ च देहे कफसंस्रवे च स्थिते सुवान्तं पुरुषं व्यवस्येत् ॥ ९ ॥

सम्यग्वान्तं चैनमभिसमीक्ष्य स्नेहनविरेचनशमनानां धूमानामन्यतमं सामर्थ्यतः पाययित्वाऽऽचारिकमादिशेत् ॥ १० ॥

भवन्ति चात्र—

ततोऽपराह्णे शुचिशुद्धदेहमुष्णाभिरद्भिः परिषिक्तगात्रम् ॥
कुलत्थमुद्गाढकिजाङ्गलानां यूषै रसैर्वाऽप्युपभोजयेत्तु ॥ ११ ॥
कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गाः ॥
कफप्रसेकग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित् ॥ १२ ॥
छिन्ने तरौ पुष्पफलप्ररोहा यथा विनाशं सहसा व्रजन्ति ॥
तथा हृते श्लेष्मणि शोधनेन तज्जा विकाराः प्रशमं प्रयान्ति ॥१३॥
न वामयेत्तैमिरिकोर्ध्ववातगुल्मोदरप्लीहकृमि[1]श्रमार्तान् ॥
स्थूलक्षतक्षीणकृशातिवृद्धमूत्रातुरान् केवलवातरोगान् ॥ १४ ॥
स्वरोपघाताध्ययनप्रसक्तदुश्छर्दिदुःकोष्ठतृडार्तबालान् ॥
ऊर्ध्वास्रपित्तिक्षुधितातिरूक्षगर्भिण्युदावर्तिनिरूहितांश्च ॥ १५ ॥

अवम्यवमनाद्रोगाः कृच्छ्रतां यान्ति देहिनाम् ॥
असाध्यतां वा गच्छन्ति नैते वाम्यास्ततः स्मृताः ॥ १६ ॥
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ॥
अतीव चोल्बणकफास्ते च स्युर्मधुकाम्बुना ॥ १७ ॥

वाम्यास्तु—विषशोषस्तन्य[2]दोषमन्दाग्न्युन्मादापस्मारश्लीपदार्बुदविदारिकामेदोमेहगरज्वरा[3]रुच्यपच्यामातीसारहृद्रोगचित्तविभ्रमवि-

१ "°वमिश्रमार्तान्" इति पा० । २ "°दोषविषममन्दा°" इति हाराण० ।
३ "°रुच्यामातीसार°" इति हाराण० ।

सर्पविद्रध्यजीर्णमुखप्रसेकहृल्लासश्वासकासपीनसपूतीनासकण्ठौष्ठ-वक्र-पाककर्णस्रावाधिजिह्वोपजिह्विकागलशुण्डिकाधःशोणितपित्तिनः कफस्थानजेषु विकारेष्वन्ये[1] च कफव्याधिपरीता इति ॥ १८ ॥

विरेचनमपि स्निग्धस्विन्नाय वान्ताय च देयम्; अवान्तस्य[2] हि सम्यग्विरिक्तस्यापि सतोऽधः स्रस्तः श्लेष्मा ग्रहणीं छादयति, गौरव-मापादयति, प्रवाहिकां वा जनयति ॥ १९ ॥

अथातुरं श्वो विरेचनं पाययिताऽस्मीति पूर्वाह्णे लघु भोजयेत्, फलाम्लमुष्णोदकं चैनमनुपाययेत् । अथापरेऽहनि विगत[3]श्लेष्मधातु-मातुरोपक्रमणीयादवेक्ष्यातुरमथास्मै औषधमात्रां पातुं प्रयच्छेत २०

तत्र मृदुः, क्रूरो, मध्यम इति त्रिविधः कोष्ठो भवति[4] । तत्र बहुपित्तो मृदुः, स दुग्धेनापि विरिच्यते; बहुवातश्लेष्मा क्रूरः, स दुर्विरेच्यः; समदोषो मध्यमः, स साधारण इति । तत्र मृदौ मात्रा मृद्वी, तीक्ष्णा क्रूरे, मध्ये मध्या कर्तव्येति । पीतौषधश्च तन्मनाः शय्याभ्याशे विरेच्यते ॥ २१ ॥

विरेचनं पीतवांस्तु न वेगान् धारयेद्बुधः ॥
निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत् ॥ २२ ॥

यथा च वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति, एवं विरेचने मूत्रपुरीषपित्तौषधकफा इति ॥ २३ ॥

भवन्ति चात्र—

(स्याद्दुर्विरिक्ते[5] कफपित्तकोपो दाहोऽरुचिर्गौरवमग्निसादः ।)
हृत्कुक्ष्यशुद्धिः परिदाहकण्डूविण्मूत्रसङ्गाश्च न सद्विरिक्ते ॥
मूर्च्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम् ॥ २४ ॥

---

१ 'कफव्याधिपरीतेष्विति । अन्येषु' इति हाराण० । २ 'अवान्तस्य' इत्यत आरभ्य 'प्रवाहिका जनयति' इति यावत् हाराणचन्द्रो न पठति । ३ 'विगत-श्लेष्माणमातुरोप'' इति हाराण० । ४ 'भवतीति ।' इति हाराण० । ५ कोष्टकगत श्लोकार्धं हाराण०पुस्तकेऽधिक लभ्यते ।

गतेषु दोषेषु कफान्वितेषु नाभ्यां[1] लघुत्वे मनसश्च तुष्टौ ॥
गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तं मनुजं व्यवस्येत् ॥२५॥
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेताहनि तत्र पेयाम् ॥
क्षीणं तृषार्तं सुविरेचितं च तन्वीं[2] सुखोष्णां लघु पाययेच्च[3] ॥ २६ ॥
बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं बलमग्निदीप्तिम् ॥
चिराच्च पाकं वयसः करोति विरेचनं सम्यगुपास्यमानम् ॥ २७ ॥
यथौदकानामुदकेऽपनीते चरस्थिराणां भवति प्रणाशः ॥
पित्ते हृते त्वेवमुपद्रवाणां पित्तात्मकानां भवति प्रणाशः ॥ २८ ॥
मन्दाग्न्यतिस्नेहितबालवृद्धस्थूलाः क्षतक्षीणभयोपतप्ताः ॥
श्रान्तस्तृषार्तोऽपरिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य चासृक् ॥
नवप्रतिश्यायमदात्ययी च नवज्वरी या च नवप्रसूता ॥
शल्यार्दिताश्चाप्यविरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च ॥ ३० ॥
अत्यर्थपित्ताभिपरीतदेहान् विरेचयेत्तानपि मन्दमन्दम्[4] ॥
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ॥ ३१ ॥

विरेच्यास्तु—ज्वरगरारुच्यार्शोऽर्बुदोदरग्रन्थिविद्रधिपाण्डुरोगापस्मारहृद्रोगवातरक्तभगन्दरच्छर्दियोनिरोगविसर्पगुल्मपक्वाशयरुग्विबन्धविसूचिकालसकमूत्राघातकुष्ठविस्फोटकप्रमेहानाहप्लीहशोफवृद्धिशस्त्रक्षतक्षाराग्निदग्धदुष्टव्रणाक्षिपाककाचतिमिराभिष्यन्दशिरःकर्णाक्षिनासास्यगुदमेढ्रदाहोर्ध्वरक्तपित्तकृमिकोष्ठिनः पित्तस्थानजे-[5]ष्वन्येषु च विकारेष्वन्ये च पैत्तिकव्याधिपरीता इति ॥ ३२ ॥

सरत्वसौक्ष्म्यतैक्ष्ण्यौष्ण्यविकाशित्वैर्विरेचनम् ॥
वमनं तु हरेद्दोषं प्रकृत्या गतमन्यथा ॥ ३३ ॥

---

१ 'ग्लान्या' इति पा० । २ 'तन्वीमशीता' इति हाराण० । ३ 'पाययेत' इति हाराण० । ४ 'मन्दवीर्यैः' इति हाराण० । ५ 'पित्तस्थानजेषु विकारेष्वन्येषु च' इति हाराण० ।

यात्यधो दोषमादाय पच्यमानं विरेचनम् ॥
गुणोत्कर्षाद्व्रजत्यूर्ध्वमपक्वं वमनं पुनः ॥ ३४ ॥
मृदुकोष्ठस्य दीप्ताग्नेरतितीक्ष्णं विरेचनम् ॥
न सम्यङ्निर्हरेद्दोषानतिवेगप्रधावितम्[1] ॥ ३५ ॥
पीतं यदौषधं प्रातर्भुक्तपाकसमे क्षणे ॥
पक्तिं गच्छति दोषांश्च निर्हरेत्तत् प्रशस्यते ॥ ३६ ॥
दुर्बलस्य चलान् दोषानल्पानल्पान् पुनः पुनः ॥
हरेत् प्रभूतानल्पांस्तु शमयेत् प्रच्युतानपि ॥ ३७ ॥
हरेद्दोषांश्चलान् पक्वान् बलिनो दुर्बलस्य वा[2] ॥
चला ह्युपेक्षिता दोषाः क्लेशयेयुश्चिरं नरम् ॥ ३८ ॥
मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥
सन्धुक्षिताग्निं स्निग्धं च स्विन्नं चैव विरेचयेत् ॥ ३९ ॥
स्निग्धस्विन्नस्य भैषज्यैर्दोषस्तूत्क्लेशितो बलात् ॥
निलीयते न मार्गेषु स्निग्धे भाण्ड इवोदकम् ॥ ४० ॥
न चातिस्नेहपीतस्तु पिबेत् स्नेहविरेचनम् ॥
दोषाः प्रचलिताः[3] स्थानाद्भूयः श्लिष्यन्ति वर्त्मसु ॥ ४१ ॥
विषाभिघातपिडकाशोफपाण्डुविसर्पिणः ॥
नातिस्निग्धा विशोध्याः स्युस्तथा कुष्ठिप्रमेहिणः ॥ ४२ ॥
विरूक्ष्य स्नेहसात्म्यं तु भूयः संस्नेह्य शोधयेत् ॥
तेन दोषा हृतास्तस्य भवन्ति बलवर्धनाः ॥ ४३ ॥
प्रागपीतं नरं शोध्यं पाययेतौषध मृदु ॥
ततो विज्ञातकोष्ठस्य कार्यं संशोधनं पुनः ॥ ४४ ॥
सुखं दृष्टफलं हृद्यमल्पमात्रं महागुणम् ॥
व्यापत्स्वल्पात्ययं चापि पिबेन्नृपतिरौषधम् ॥ ४५ ॥

---

१ 'अतिवेगप्रधावितान्' इति हाराण० । २ 'च' इति हाराण० ।
३ 'प्रच्याविताः' इति पा० ।

स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं पिबेत् ॥
दारु शुष्कमिवानामे देहस्तस्य विशीर्यते ॥ ४६ ॥
स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः ॥
दोषाः कोष्ठगता जन्तोः सुखा हर्तुं विशोधनैः ॥ ४७ ॥
इति सुश्रुतसंहितायां चिकित्सास्थाने वमनविरेचनसाध्योपद्रव-
चिकित्सितं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वैद्यातुरनिमित्तं वमनं विरेचनं च पञ्चदशधा व्यापद्यते । तत्र वमनस्याधोगतिरूर्ध्वं विरेचनस्येति पृथक्; सामान्यमुभयोः— सावशेषौषधत्वं, जीर्णौषधत्व, हीनदोषापहृतत्वं, वातशूलम्, [1]अयोगो, अतियोगो, जीवादानम्, आध्मानं, परिकर्तिका, परिस्रावः, प्रवाहिका, हृदयोपसरणं, विबन्ध, [2]अङ्गप्रग्रह इति ॥ ३ ॥

तत्र बुभुक्षापीडितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्य चावतिष्ठमानं दुर्बलस्य वा गुणसामान्यभावाद्वमनमधो गच्छति, तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च[3]; तमाशु स्नेहयित्वा भूयस्तीक्ष्णतरैर्वामयेत् ॥ ४ ॥

अपरिशुद्धामाशयस्योत्क्लिष्टश्लेष्मणः[4] सशेषान्नस्य वाऽहृद्यमतिप्रभूतं वा विरेचनं पीतमूर्ध्वं गच्छति, तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च; तत्राशुद्धामाशयमुल्बणश्लेष्माणमाशु वामयित्वा भूयस्तीक्ष्णतरैर्विरेचयेत्, आमान्वये त्वामवत् संविधानम्, अहृद्येऽतिप्रभूते च

---

१ 'अयोगातियोगौ' इति हाराण० । २ 'अङ्गप्रग्रह' इत्यंशो न पठति हाराणचन्द्रः । ३ 'दोषोत्कर्षश्च' इति हाराण० । ४ 'उत्क्लिष्टश्लेष्मणः' इति हाराण० ।

हृद्यं प्रमाणयुक्तं च; अत ऊर्ध्वमुत्तिष्ठत्यौषधे न तृतीयं पाययेत्, ततस्त्वेनं मधुघृतफाणितयुक्तैर्लेहैर्विरेचयेत् ॥ ५ ॥

दोषविग्रथितमल्पमौषधमवस्थितमूर्ध्वभागिकमधोभागिकं वा न स्रंसयति दोषान्, तत्र तृष्णा पार्श्वशूलं छर्दिर्मूर्च्छा पर्वभेदो [1]हृल्लासोऽरतिरुद्गाराविशुद्धिश्च भवति; तमुष्णाभिरद्भिराशु वामये[2]दूर्ध्वभागिके, अधोभागिकेऽपि च सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तलक्षणमप्येवं वामयेत् ॥ ६ ॥

क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमौषधमल्पगुणं वा भक्तवत् पाकमुपैति, तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा [3]व्याधिविभ्रमं बलविभ्रंशं चापादयन्ति, तमनल्पममन्दमौषधं च पाययेत् ॥ ७ ॥

अस्निग्धस्विन्नेनाल्पगुणं वा भेषजमुपयुक्तमल्पान् दोषान् हन्ति; तत्र वमने दोषशेषो गौरवमुत्क्लेशं हृदयाविशुद्धिं व्याधिवृद्धिं च करोति, [4]तत्र तं यथायोगं पाययित्वा वामयेद्दृढतरं; विरेचने तु गुदपरिकर्तनमाध्मानं शिरोगौरवमनिःसरणं वा वायोर्व्याधिवृद्धिं च करोति; तमुपपाद्य भूयः स्नेहस्वेदाभ्यां विरेचयेद्दृढतरं, दृढं बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुणं चेति ॥ ८ ॥

अस्निग्धस्विन्नेन [5]रूक्षौषधमुपयुक्तमब्रह्मचारिणा वा वायुं कोपयति, तत्र वायुः प्रकुपितः पार्श्वपृष्ठश्रोणिमन्यामर्मशूलं मूर्च्छां भ्रमं मदं संज्ञानाशं च करोति, [6]तं वातशूलमित्याचक्षते; तमभ्यज्य धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत् ॥९॥

---

१ 'हृल्लासारत्युद्गाराविशुद्धिश्च' इति हाराण०। २ 'ऊर्ध्वभागिके अधोभागिकेऽपि च' इत्यंशो हाराण०पुस्तके न दृश्यते। ३ 'व्याधि बलविभ्रमं च' इति हाराण०। ४ 'तत्र यथायोग' इति हाराण०। ५ 'रूक्षमौषध' इति हाराण०। ६ 'त वातशूलमित्याचक्षते' इत्यंशो हाराण०पुस्तके न लभ्यते।

स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्ध्वमधो वा नाभ्येति दोषांश्चोत्क्लेश्य[1] तैः सह बलक्षयमापादयति, तत्राध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति, तमयोगमित्याचक्षते; तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत्तीक्ष्णतरैः कषायैश्च। दुर्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिडकाज्वराङ्गमर्दनिस्तोदनानि कुर्वन्ति, ततस्ताञ्शेषान्[2] महौषधेनापहरेत्। अस्निग्धस्विन्नस्य दुर्विरिक्तस्या[3]धोनाभेः स्तब्धपूर्णोदरता शूलं वातपुरीषसङ्गः कण्डूमण्डलप्रादुर्भावो वा भवति, तमास्थाप्य पुनः संस्नेह्य विरेचयेत्तीक्ष्णेन। नातिप्रवर्तमाने तिष्ठति वा दुष्टसंशोधने तत्सन्तेजनार्थमुष्णोदकं पाययेत्, पाणितापैश्च पार्श्वोदरमुपस्वेदयेत्, ततः प्रवर्तन्ते दोषाः। अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलं चावेक्ष्य भूयो मात्रां विदध्यात्। अप्रवृत्तदोषं दशरात्रादूर्ध्वमुपसंस्कृतदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत्। दुर्विरेच्यमास्थाप्य पुनः संस्नेह्य विरेचयेत्। ह्रीभयलोभैर्वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति, तस्मादेते दुर्विरेच्याः, बहुवातत्वात्; अत एव तानतिस्निग्धान् स्वेदोपपन्नाञ् शोधयेत् ॥ १० ॥

स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वाऽतितीक्ष्णमधिकं[4] वा दत्तमौषधमतियोगं कुर्यात्। तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविस्रंसो वातकोपश्च बलवान् भवति, तं घृतेनाभ्यज्यावगाह्य शीताम्बुसु शर्करामधुमिश्रैर्लेहैरुपचरेद्यथास्वं; विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालं च सरक्तस्य, तत्रापि बलविस्रंसो वातकोपश्च बलवान् भवति, तमतिशीताम्बुभिः[5] परिषिच्यावगाह्य वा शीतै-

---

१ 'उत्क्लिश्य' इति हाराण०। २ 'अवशेषान्' इति हाराण०। ३ 'मृदुविरिक्तस्य' इति हाराण०। ४ 'वा तीक्ष्णाधिकदत्त' इति हाराण०। ५ 'तमभ्यज्यातिशीताम्बुभिः' इति पा०।

स्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्दयेत्, पिच्छाबस्तिं चास्मै दद्यात्, क्षीरसर्पिषा चैनमनुवासयेत्, प्रियङ्ग्वादिं चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत्, क्षीररसयोश्चान्यतरेण भोजयेत् ॥ ११ ॥

तस्मिन्नेव वमनातियोगे प्रवृद्धे शोणितं ष्ठीवति छर्दयति वा, तत्र जिह्वानिःसरणमपसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्का ज्वरो वैसंज्ञ्यमित्युपद्रवा भवन्ति; तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पाययेत्, फलरसैर्वा सघृतक्षौद्रशर्करैः शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां वर्चोग्राहिभिर्वा, पयसा जाङ्गलरसेन वा भोजयेत्, अतिस्रुतशोणितविधानेनोपचरेत्; जिह्वामतिसर्पितां कटुकलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वाऽन्तः पीडयेत्, अन्तःप्रविष्टायामम्लमन्ये तस्य पुरस्तात् स्वादयेयुः; व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीडयेत्, हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात्, तृष्णादिषु च यथास्वं प्रतिकुर्वीत, विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत् ॥ १२ ॥

विरेचनातियोगे च सचन्द्रकं सलिलमधः स्रवति, ततो मांसधावनप्रकाशमुत्तरकालं जीवशोणितं च, ततो गुदनिःसरणं वेपथुर्वमनातियोगोपद्रवाश्चास्य भवन्ति; तमपि निःस्रुतशोणितविधानेनोपचरेत्, निःसर्पितगुदस्य गुदमभ्यज्य परिस्वेद्यान्तः पीडयेत्, क्षुद्ररोगचिकित्सितं वा वीक्षेत, वेपथौ वातव्याधिविधानं कुर्वीत, जिह्वानिःसरणादिषूक्तः प्रतीकारः, अतिप्रवृत्ते वा जीवशोणिते काश्मरीफलबदरीदूर्वोशीरैः श्टतेन पयसा घृतमण्डाञ्जनयुक्तेन सुशीतेनास्थापयेत्, न्यग्रोधादिकषायेक्षुरसघृतशोणितसंसृष्टैश्चैनं बस्तिभिरुपाचरेत्, शोणितष्ठीवने रक्तपित्तरक्तातीसारक्रियाश्चास्य विदध्यात्, न्यग्रोधादिं चास्य विदध्यात् पानभोजनेषु ॥ १३ ॥

---

[1] जिह्वानिःसरणम्: १ "निःसरणमक्ष्णो°" इति हाराण०। २ 'वा पीडयेत्, प्रविष्टायां' इति हाराण०।

जीवशोणितरक्तपित्तयोश्च जिज्ञासार्थं तस्मिन् पिचुं प्लोतं वा क्षिपेत्, यद्युष्णोदकप्रक्षालितमपि वस्त्रं रञ्जयति तज्जीवशोणितमवगन्तव्यं; सभक्तं च शुने दद्याच्छक्तुसंमिश्रं वा, स यद्युपभुञ्जीत तज्जीवशोणितमवगन्तव्यम्; अन्यथा रक्तपित्तमिति ॥ १४ ॥

सशेषान्नेन बहुदोषेण रूक्षेणानिलप्रायकोष्ठेनानुष्णमस्निग्धं वा पीतमौषधमाध्मापयति, तत्रानिलमूत्रपुरीषसङ्गः समुन्नद्धोदरता[1] पार्श्वभङ्गो गुदबस्तिनिस्तोदनं भक्तारुचिश्च भवति, तं चाध्मानमित्याचक्षते; तमुपस्वेद्यानाहवर्तिदीपनबस्तिक्रियाभिरुपचरेत् ॥ १५ ॥

क्षामेणातिमृदुकोष्ठेन मन्दाग्निना रूक्षेण वाऽतितीक्ष्णोष्णातिलवणमतिरूक्षं वा पीतमौषधं पित्तानिलौ प्रदूष्य परिकर्तिकामापादयति, तत्र गुदनाभिमेढ्रबस्तिशिरःसु[2] सदाहं परिकर्तनमनिलसङ्गो वायुविष्टम्भो भक्तारुचिश्च भवति; तत्र पिच्छाबस्तिर्यष्टीमधुककृष्णतिलकल्कमधुघृतयुक्तः, शीताम्बुपरिषिक्तं चैनं पयसा भुक्तवन्तं घृतमण्डेन यष्टीमधुकसिद्धेन तैलेन वाऽनुवासयेत् ॥ १६ ॥

क्रूरकोष्ठस्यातिप्रभूतदोषस्य मृद्वौषधमवचारितं समुत्क्लिश्य दोषान्न निःशेषानपहरति, ततस्ते दोषाः परिस्रावमापादयन्ति, तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति, सवेदनौ चास्य पित्तश्लेष्माणौ परिस्रवतः, तं परिस्रावमित्याचक्षते; तमजकर्णधवतिनिशपैलाश[3]बलाकषायैर्मधुसंयुक्तैरास्थापयेत्, उपशान्तदोषं स्निग्धं च भूयः संशोधयेत् ॥ १७ ॥

अतिरूक्षेऽतिस्निग्धे वा भेषजमवचारितमप्राप्तं[4] वातवर्चं उदीरयति वेगाघातेन वा, तदा प्रवाहिका भवति; तत्र सवातं सदाहं

१ 'समुन्नतोदरता' इति हाराण०। २ '°शिर सु परिकर्तन' इति हाराण०। ३ '°पलाशकषायैः' इति हाराण०। ४ 'भेषजेनावचारितेनाप्राप्तयोर्वा वातवर्चसोरुदीरणेन वेगाघातेन वा प्रवाहिका भवति' इति हाराण०।

[1]सशूलं गुरु पिच्छिलं श्वेतं कृष्णं सरक्तं वा भृशं प्रवाहमाणः कफमुपविशति; [2]तां परिस्रावविधानेनोपचरेत् ॥ १८ ॥

यस्तूर्ध्वमधो वा भेषजवेगं प्रवृत्तमज्ञत्वाद्विनि[3]हन्ति तस्योपसरणं हृदि कुर्वन्ति दोषाः, तत्र प्रधानमर्मसन्तापाद्वेदनाभिरत्यर्थं पीड्यमानो दन्तान् किटकिटायते, [4]उद्धताक्षो जिह्वां खादति, प्रताम्यत्यचेताश्च भवति, त परिवर्जयन्ति मूर्खाः; तमभ्यज्य धान्यस्वेदेन स्वेदयेत्, यष्टिम[5]धुकसिद्धेन च तैलेनानुवासयेत्, शिरोविरेचनं चास्मै तीक्ष्णं विदध्यात्, ततो यष्टिमधुकमिश्रेण तण्डुलाम्बुना छर्दयेत्, यथादोषोच्छ्रायेण चैनं बस्तिभिरुपाचरेत् ॥ १९ ॥

यस्तूर्ध्वमधो वा प्रवृत्तदोषः शीतागारमुदकमनिलमन्यद्वा सेवेत, तस्य दोषाः स्रोतःस्ववलीयमाना [6]घनीभावमापन्ना वातमूत्रशकृद्ग्रहमापाद्य वि[7]बध्यन्ते, तस्याटोपो दाहो ज्वरो वेदनाश्च तीव्रा भवन्ति; तमाशु वामयित्वा प्राप्तकालां क्रियां कुर्वीत; अधोभागे [8]त्वधोभागदोषहरद्रव्यं सैन्धवाम्लमूत्रसंसृष्टं [9]विरेचनाय पाययेत्, आस्थापनमनुवासनं च यथादोषं विदध्यात्, यथादोषमाहारक्रमं च; उभयतोभागे तूपद्रवविशेषान् यथास्वं प्रतिकुर्वीत ॥ २० ॥

या तु विरेचने गुदपरिकर्तिका तद्वमने कण्ठक्षणनं, यदधः परिस्रवणं स ऊर्ध्वभागे श्लेष्मप्रसेकः, या त्वधः प्रवाहिका सा तूर्ध्वं शुष्कोद्गारा इति ॥ २१ ॥

---

१ 'सशूल सश्वेत सपिच्छिल कृष्ण रक्त' इति हाराण०। २ 'त' इति हाराण०। ३ 'विहन्ति' इति हाराण०। ४ 'उद्धतास्य०' इति पा०। ५ 'यष्टिमधुकसिद्धेन' इत्यादितः 'तीक्ष्ण विदध्यात्' इति यावत् हाराण०पुस्तके न दृश्यते। ६ 'घनतामापन्ना' इति पा०। ७ 'विबध्नन्ति' इति पा०। ८ 'त्वधोभागहरद्रव्यसैन्धवा०' इति हाराण०। ९ 'विरेचन' इति हाराण०।

भवति चात्र—

यास्त्वेता व्यापदः प्रोक्ता दश पञ्च च तत्त्वतः ॥
एता विरेकातियोगदुर्योगायोगजाः स्मृताः ॥ २२ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने वमनविरेचनव्यापच्चिकित्सितं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशत्तमोऽध्यायः ।

अथातो नेत्रबस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः ॥१॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

तत्र स्नेहादीनां कर्मणां बस्तिकर्म प्रधानतममाहुराचार्याः । कस्मात्? अनेककर्मकरत्वाद्बस्तेः; इह[1] खलु बस्तिर्नानाविधद्रव्यसंयोगाद्दोषाणां संशोधनसंशमनसंग्रहणानि करोति, क्षीणशुक्रं वाजीकरोति, कृशं बृंहयति, स्थूलं कर्शयति[2], चक्षुः प्रीणयति, वलीपलितमपहन्ति[3], वयः स्थापयति ॥ ३ ॥

शरीरोपचयं वर्णं[4] बलमारोग्यमायुषः ।
कुरुते परिवृद्धिं च बस्तिः सम्यगुपासितः ॥ ४ ॥

तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगाधिमन्थार्दिताक्षेपकपक्षाघातैकाङ्गसर्वाङ्गरोगाध्मानोदरयोनिशूलशर्कराशूलवृध्द्युपदंशानाहमूत्रकृच्छ्रगुल्मवातशोणितवातमूत्रपुरीषोदावर्तशुक्रार्तवस्तन्यनाशहृद्ग्रहमन्याग्रह[6]शर्कराश्मरीमूढगर्भप्रभृतिषु चात्यर्थमुपयुज्यते ॥ ५ ॥

---

१ 'इह बस्तिर्नाना°' इति हाराण० । २ 'कर्षयति' इति हाराण० । ३ 'उपहन्ति' इति हाराण० । ४ 'वर्णबलमायुषः परिवृद्धिं च करोति सम्यगुपासित.' इति हाराण० । ५ '°ध्मानोदरशर्करा°' इति हाराण० । ६ '°मन्याग्रहार्शोऽश्मरी°' इति पा० ।

भवति चात्र—

बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ॥
संसर्गे सन्निपाते च बस्तिरेव हितः सदा ॥ ६ ॥

तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहान्यग्रेऽध्यर्धाङ्गुलद्व्यङ्गुलार्धतृतीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येनबर्हिणपक्षनाडीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि विदध्यान्नेत्राणि। तेषु चास्थापनद्रव्यप्रमाणमातुरहस्तसंमितेन प्रसृतेन संमितौ प्रसृतौ द्वौ चत्वारोऽष्टौ च विधेयाः[3] ॥ ७ ॥

वर्षान्तरेषु[4] नेत्राणां बस्तिमानस्य चैव हि ॥
वयोबलशरीराणि समीक्ष्योत्कर्षयेद्विधिम्[5] ॥ ८ ॥

पञ्चविंशतेरूर्ध्वं द्वादशाङ्गुलं, मूलेऽङ्गुष्ठोदरपरीणाहम्, अग्रे कनिष्ठिकोदरपरीणाहम्, अग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं, गृध्रपक्षनाडीतुल्यप्रवेशं, कोलास्थिमात्रछिद्र, क्लिन्नकलायमात्रछिद्रमित्येके; सर्वाणि मूले बस्तिनिबन्धनार्थं द्विकर्णिकानि। आस्थापनद्रव्यप्रमाणं तु विहितं द्वादशप्रसृताः। सप्ततेस्तूर्ध्वं नेत्रप्रमाणमेतदेव, द्रव्यप्रमाणं तु द्विरष्टवर्षवत् ॥ ९ ॥

मृदुर्बस्तिः[7] प्रयोक्तव्यो विशेषाद्बालवृद्धयोः ॥
तयोस्तीक्ष्णः प्रयुक्तस्तु बस्तिर्हिंस्याद् बलायुषी ॥ १० ॥

( व्रणनेत्रमष्टाङ्गुलं मुद्गवाहिस्रोतः; व्रणमवेक्ष्य यथास्वं स्नेहकषाये विदधीत ॥ ११ ॥ )[8]

---

१ 'अग्रेऽर्धाङ्गुलाध्यर्धाङ्गुल°' इति हाराण०। २ '°पत्रनाडी°' इति हा०। ३ अस्याग्रे—'भवति चात्र' इत्यंशोऽधिको हाराण०पुस्तके। ४ 'वर्षोत्तरेषु' इति हाराण०। ५ 'समीक्ष्य वर्धयेद्विधिम्' इति हाराण०। ६ 'गृध्रपत्र°' इति हाराण०। ७ 'मृदुर्बस्तिः' इति श्लोकं 'आस्थापनं च' इति १७ तमश्लोकाग्रे हाराणचन्द्रः पठति। ८ हाराणचन्द्रस्तु अमुं पाठं न पठति।

तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयाणि श्लक्ष्णानि दृढानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि च[1] ॥ १२ ॥

बस्तयश्च वैन्ध्या[2] मृदवो नातिबहला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम् ॥ १३ ॥

नेत्रालाभे हिता नाडी नलवंशास्थिसंभवा ॥
बस्त्यलाभे हितं चर्म[3] सूक्ष्मं वा तान्तवं घनम् ॥ १४ ॥
बस्तिं निरुपदिग्धं तु शुद्धं सुपरिमार्जितम् ॥
मृद्वनुद्धतहीनं च मुहुः स्नेहविमर्दितम् ॥ १५ ॥
नेत्रमूले प्रतिष्ठाप्य न्युब्जं तु विवृताननम् ॥
बद्ध्वा लोहेन तप्तेन चर्म स्रोतसि निर्दहेत् ॥ १६ ॥
परिवर्त्य ततो बस्तिं बद्ध्वा गुप्तं निधापयेत् ॥
आस्थापनं च तैलं च यथावत्तेन दापयेत् ॥ १७ ॥

तत्र द्विविधो बस्तिः—नैरूहिकः, स्नैहिकश्च । आस्थापनं, निरूह इत्यनर्थान्तरं; तस्य विकल्पो माधुतैलिकः; तस्य पर्यायशब्दो यापनो युक्तरथः, सिद्धबस्तिरिति । स दोषनिर्हरणाच्छरीरनीरोहणाद्वा[4] निरूहः, वयःस्थापनादायुःस्थापनाद्वा आस्थापनम् । माधुतैलिकविधानं च [5]निरूहोपक्रमचिकित्सिते वक्ष्यामः । यथाप्रमाणगुणविहितः[6] स्नेहबस्तिविकल्पोऽनुवासनः पादाव(प)कृष्टः । अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः । तस्यापि विकल्पोऽर्धार्धमात्रावकृष्टो[7]ऽपरिहार्यो मात्राबस्तिरिति ॥ १८ ॥

---

१ 'च' इति हाराण०पुस्तके न दृश्यते । २ 'बस्तयश्चावृद्धाना' इति पा० । ३ 'चार्म' इति हाराण० । ४ 'शरीररोगहरणाद्वा' इति हाराण० । ५ 'निरूहक्रम°' इति हाराण० । ६ 'यथाप्रमाणविहितः' इति पाठ, 'तत्र यथाप्रमाणगुणविहितः' इति च हाराण० । ७ 'अर्धार्धमात्रावशिष्टः' इति पा० ।

निरूहः शोधनो लेखी [1]स्नैहिको बृंहणो मतः ॥
निरूहशोधितान्मार्गान् सम्यक् स्नेहोऽनुगच्छति ॥
अपेतसर्वदोषासु नाडीष्विव वहज्जलम् ॥ १९ ॥
सर्वदोषहरश्चासौ शरीरस्य च जीवनः ॥
तस्माद्विशुद्धदेहस्य स्नेहबस्तिर्विधीयते ॥ २० ॥

तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्शःपाण्डुरोगभ्रममद-मूर्च्छाच्छर्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षत-क्षीणचतुस्त्रिमासगर्भिणीदुर्बलाग्न्यसहा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः ॥ २१ ॥

उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः ॥
अवश्यं [2]स्थापनीयास्ते नानुवास्याः कथञ्चन ॥ २२ ॥
असाध्यता विकाराणां स्यादेषामनुवासनात् ॥
असाध्यत्वेऽपि भूयिष्ठं गात्राणां सदनं भवेत् ॥ २३ ॥
पक्वाशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्वतः ॥
सम्यक्प्रणिहितो बस्तिः स्थानेष्वेतेषु तिष्ठति ॥ २४ ॥
पक्वाशयाद्बस्तिवीर्यं खैर्देहम[3]नुसर्पति ॥
वृक्षमूले निषिक्तानामपां वीर्यमिव द्रुमम् ॥ २५ ॥
स चापि सहसा बस्तिः केवलः समलोऽपि वा ।
प्रत्येति वीर्यं त्वनिलैरपानाद्यैर्विनीयते ॥ २६ ॥
वीर्येण बस्तिरादत्ते दोषानापादमस्तकात्(न्) ॥
पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव ॥ २७ ॥
स कटीपृष्ठकोष्ठस्थान् वीर्येणालोड्य संचयान् ॥
उत्खातमूलान् हरति दोषाणां साधुयोजितः ॥ २८ ॥

---

१ 'स्नेहनो' इति हाराण०। २ 'स्थापनीयाश्च' इति हाराण०। ३ 'उपसर्पति' इति हाराण०।

दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वरः ॥
तस्मात्तस्यातिवृद्धस्य शरीरमभिनिघ्नतः ॥ २९ ॥
वायोर्विषहते वेगं नान्या बस्तेर्ऋते क्रिया ॥
पवनाविद्धतोयस्य वेला वेगमिवोदधेः ॥ ३० ॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः ॥
कुरुते परिवृद्धिं च बस्तिः सम्यगुपासितः ॥ ३१ ॥

अत ऊर्ध्वं व्यापदो वक्ष्यामः । तत्र नेत्रं [1]विचलितं, विवर्तितं, पार्श्वावपीडितम्, अत्युत्क्षिप्तम्, अवसन्नं, तिर्यक्प्रक्षिप्तमिति षट् प्रणिधानदोषाः; अतिस्थूलं, कर्कशम्, अवनतं, [2]अणुभिन्नं, सन्निकृष्टविप्रकृष्टकर्णिकं, सूक्ष्मातिच्छिद्रम्, अतिदीर्घम्, [3]अतिह्रस्वम्, अस्रिमदित्येकादश नेत्रदोषाः, [4]बहलता, अल्पता, [5]सच्छिद्रता, प्रस्तीर्णता, दुर्बद्धतेति पञ्च बस्तिदोषाः, अतिपीडितता, शिथिलपीडितता, भूयो भूयोऽवपीडनं, कालातिक्रम इति चत्वारः पीडनदोषाः, आमता, हीनता, अतिमात्रता, अतिशीतता, अत्युष्णता, अतितीक्ष्णता, अतिमृदुता, अतिस्निग्धता, अतिरूक्षता, अतिसान्द्रता, अतिद्रवता, इत्येकादश द्रव्यदोषाः; अवाक्शीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदे[6]हस्थितदक्षिणपार्श्वशायिनः प्रदानमिति सप्त शय्यादोषाः; एवमेताश्चतुश्चत्वारिंशद्व्यापदो वैद्यनिमित्ताः । आतुरनिमित्ताः पञ्चदश आतुरोपद्रवचिकित्सिते वक्ष्यन्ते । स्नेहस्त्वष्टभिः कारणैः प्रतिहतो न प्रत्यागच्छति त्रिभिर्दोषैः, अशनाभिभूतो, मलव्यामिश्रो, दूरानुप्रविष्टो, अस्विन्नस्य, अनुष्णो, [7]अल्पम्भुक्तवतो, अल्पश्चेति वैद्यातुरनिमित्ता भवन्ति । अयोगस्तूभयोः, आध्मान, परि-

---

१ 'चलित' इति हाराण० । २ 'अणु, भिन्न' इति पा० । ३ 'अतिह्रस्वमित्येकादश' इति हाराण० । ४ 'बहुलताल्पता' इति हाराण० । ५ 'भिन्नता' इति पा० । ६ 'देहास्थिरता'' इति हाराण० । ७ 'अल्पोऽभुक्तवतोऽल्पाशनस्य' इति हाराण० ।

कर्तिका, परिस्रावः, प्रवाहिका, हृदयोपसरणम्, अङ्गग्रहो, अतियोगो, जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति ॥ ३२ ॥

भवति चात्र—

षट्सप्ततिः समासेन व्यापदः परिकीर्तिताः ॥
तासां वक्ष्यामि विज्ञानं [१]सिद्धिं च तदनन्तरम् ॥ ३३ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने नेत्रबस्तिप्रमाणप्रविभागचिकित्सितं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

अथातो नेत्रबस्तिव्यापच्चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथ नेत्रे विचलिते तथा चैव विवर्तिते ॥
गुदे क्षतं रुजा वा स्यात्तत्र सद्यःक्षतक्रिया: ॥ ३ ॥
अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पायौ भवेद्रुजा ॥
विधिरत्रापि पित्तघ्नः कार्यः स्नेहैश्च सेचनम् ॥ ४ ॥
तिर्यक्प्रणिहिते नेत्रे तथा पार्श्वावपीडिते ॥
मुखस्यावरणाद्बस्तिर्न सम्यक् प्रतिपद्यते ॥
ऋजु नेत्रं विधेयं स्यात्तत्र सम्यग्विजानता ॥ ५ ॥
अतिस्थूले कर्कशे च नेत्रे[२]ऽस्मिमति घर्षणात् ॥
गुदे भवेत् क्षतं रुक् च [३]साधनं तस्य पूर्ववत् ॥ ६ ॥
[४]आसन्नकर्णिके नेत्रे भिन्नेऽणौ वाऽप्यपार्थकः ॥
अवसेको भवेद्बस्तेस्तस्माद्दोषान् विवर्जयेत् ॥ ७ ॥

---

१ 'सिद्धं चैतत्' इति हाराण० । २ 'चावनते तथा' इति हाराण० । ३ 'साधनं पूर्ववत्स्मृतम्' इति हाराण० । ४ 'निकृष्टकर्णिके' इति पा० ।

प्रकृष्टकर्णिके रक्तं गुदमर्मप्रपीडनात् ॥
क्षरत्यत्रापि पित्तघ्नो विधिर्बस्तिश्च पिच्छिलः ॥ ८ ॥
ह्रस्वे त्वणुस्रोतसि च क्लेशो बस्तिश्च पूर्ववत् ॥
प्रत्यागच्छंस्ततः कुर्याद्रोगान् बस्तिविघातजान् ॥ ९ ॥
दीर्घे महास्रोतसि च ज्ञेयमत्यवपीडवत् ॥
प्रस्तीर्णे बहले चापि बस्तौ दुर्बद्धदोषवत् ॥ १० ॥
बस्तावल्पेऽल्पता वाऽपि द्रव्यस्याल्पा[1] गुणा मताः ॥
दुर्बद्धे चाणुभिन्ने[2] च विज्ञेयं भिन्ननेत्रवत् ॥ ११ ॥
अतिप्रपीडितो बस्तिः प्रयात्यामाशयं[3] ततः ॥
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥ १२ ॥
तत्र तूर्णं गलापीडं कुर्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥ १३ ॥
शनैः प्रपीडितो बस्तिः पक्वाधानं न गच्छति ॥
न च संपादयत्यर्थं[4] तस्माद्युक्तं प्रपीडयेत् ॥ १४ ॥
भूयो भूयोऽवपीडेन वायुरन्तः प्रपीड्यते ॥
तेनाध्मानं रुजश्चोग्रा यथास्वं तत्र बस्तयः ॥ १५ ॥
कालातिक्रमणात् क्लेशो व्याधिश्चाभिप्रवर्धते ॥
तत्र व्याधिबलघ्नं तु भूयो बस्तिं निधापयेत् ॥ १६ ॥
गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि ॥
तत्र संशोधनो बस्तिर्हितं चापि विरेचनम् ॥ १७ ॥
हीनमात्रावुभौ बस्ती नातिकार्यकरौ मतौ ॥
अतिमात्रौ तथाऽऽनाहक्लमातीसारकारकौ ॥ १८ ॥

---

१ 'द्रव्यस्याल्पगुणा' इति हाराण० । २ 'चैव भिन्ने' इति पा० । ३ 'क्राम-त्यामाशय' इति पा० । ४ 'अर्थान्' इति हाराण० ।

मूर्च्छां दाहमतीसारं[1] पित्तं चात्युष्णतीक्ष्णकौ ॥
मृदुशीतावुभौ वातविबन्धाध्मानकारकौ ॥ १९ ॥
तत्र हीनादिषु हितः प्रत्यनीकः क्रियाविधिः ॥
गुदबस्त्युपदेहं[2] तु कुर्यात् सान्द्रो निरूहणः ॥ २० ॥
प्रवाहिकां वा जनयेत्तनुरल्पगुणावहः ।
तत्र सान्द्रे तनुं बस्तिं तनौ सान्द्रं च दापयेत् ॥ २१ ॥
स्निग्धोऽतिजाड्यकृद्रूक्षः स्तम्भाध्मानकृदुच्यते ॥
बस्तिं रूक्षमतिस्निग्धे स्निग्धं रूक्षे च दापयेत् ॥ २२ ॥
अतिपीडितवद्दोषान् विद्धि[3] चाप्यवशीर्षके ॥
उच्छीर्षके समुन्नाहं बस्तिः कुर्याच्च मेहनम् ॥ २३ ॥
तत्रोत्तरो हितो बस्तिः सुस्विन्नस्य[4] सुखावहः ॥
न्युब्जस्य बस्तिर्नाप्नोति पक्वाधानं विमार्गगः ॥ २४ ॥
हृद्गुदं बाधते चात्र वायुः कोष्ठमथापि च ॥
उत्तानस्यावृते मार्गे बस्तिर्नान्तः प्रपद्यते ॥ २५ ॥
नेत्रसंवेजनभ्रान्तो वायुश्चान्तः प्रकुप्यति ॥
देहे सङ्कुचिते दत्तः सक्थ्नोरप्युभयोस्तथा ॥ २६ ॥
न सम्यगनिलाविष्टो बस्तिः प्रत्येति देहिनः ॥
स्थितस्य बस्तिर्दत्तस्तु क्षिप्रमायात्यवाङ्मुखः ॥ २७ ॥
न चाशयं तर्पयति तस्मान्नार्थकरो हि सः ॥
नाप्नोति बस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुनः ॥ २८ ॥
दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो यतः[5] ॥
न्युब्जादीनां प्रदानं च बस्तेर्नैव प्रशस्यते ॥ २९ ॥

---

१ 'छर्दिमतीसार' इति पा०। २ 'गुदबस्त्युपदेह' इत्यत आरभ्य 'अल्पगुणावह०' इति यावत् हाराण०पुस्तके न लभ्यते। ३ 'विधि' इति हाराण०। ४ 'सुस्निग्धस्य' इति पा०। ५ 'हि सः' इति पाठ०, 'हितः' इति हाराण०।

[1]पश्चादनिलकोपोऽत्र यथास्वं तत्र कारयेत् ॥
व्यापदः स्नेहबस्तेस्तु वक्ष्यन्ते [2]तच्चिकित्सिते ॥ ३० ॥
अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिताः ॥
अनुष्णोऽल्पौषधो हीनो बस्तिर्नैति प्रयोजितः ॥ ३१ ॥
विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते ॥
तत्र तीक्ष्णो हितो बस्तिस्तीक्ष्णं चापि विरेचनम् ॥ ३२ ॥
सशेषान्नेऽ[3]थवा भुक्ते बहुदोषे च योजितः ॥
अत्याशितस्यातिबहुर्बस्तिर्मन्दोष्ण एव च ॥ ३३ ॥
अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः ॥
तथा बहुपुरीषं च क्षिप्रमाध्मापयेन्नरम् ॥ ३४ ॥
हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम् ॥
तत्र तीक्ष्णतरो बस्तिर्हितं चाप्यनुवासनम् ॥ ३५ ॥
[4]अतितीक्ष्णोऽतिलवणो रूक्षो बस्तिः प्रयोजितः ॥
सपित्तं कोपयेद्वायुं कुर्याच्च परिकर्तिकाम् ॥ ३६ ॥
नाभिबस्तिगुदं तत्र छिनत्तीवातिदेहिनः ॥
पिच्छाबस्तिर्हित[5]स्तस्य स्नेहश्च मधुरैः शृतः ॥ ३७ ॥
अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते ॥
दौर्बल्यमङ्गसादश्च जायते तत्र देहिनः ॥ ३८ ॥
परिस्रवेत्ततः पित्तं दाहं सञ्जनयेद्गुदे ॥
पिच्छाबस्तिर्हितस्तत्र [6]बस्तिः क्षीरघृतेन च ॥ ३९ ॥
प्रवाहिका भवेत्तीक्ष्णान्निरूहात् सानुवासनात् ॥
सदाहशूलं कृच्छ्रेण [7]कफासृगुपवेश्यते ॥ ४० ॥

१ 'यस्याप्यनिलकोपोऽत्र' इति पा० । २ '°ऽत्र चिकित्सिते' इति हाराण०; 'तच्चिकित्सितम्' इति पा० । ३ 'तथा भुक्ते' इति हाराण० । ४ 'अतितीक्ष्णोष्णलवणः' इति हाराण० । ५ '°स्तत्र' इति हाराण० । ६ 'क्षीरघृतस्य च' इति हाराण० । ७ 'वाऽसृक् तत्रोपवेश्यते' इति हाराण० ।

पिच्छाबस्तिर्हितस्तत्र पयसा चैव भोजनम् ॥
सर्पिर्मधुरकैः सिद्धं तैलं चाप्यनुवासनम् ॥ ४१ ॥
अतितीक्ष्णो निरूहो वा सवाते चानुवासनः ॥
हृदयस्योपसरणं कुरुते चाङ्गपीडनम् ॥ ४२ ॥
दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाऽङ्गगौरवम् ॥
सर्वदोषहरं बस्तिं शोधनं तत्र दापयेत् ॥ ४३ ॥
रूक्षस्य बहुवातस्य तथा दुःशायितस्य[1] च ॥
बस्तिरङ्गग्रहं कुर्याद्रूक्षो मृद्वल्पभेषजः ॥ ४४ ॥
तत्राङ्गसादः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः ॥
पर्वभेदश्च तत्रेष्टाः स्वेदाभ्यञ्जनबस्तयः ॥ ४५ ॥
अत्युष्णतीक्ष्णोऽतिबहुर्दत्तोऽतिस्विदितस्य च ॥
अल्पदोषस्य वा बस्तिरतियोगाय कल्पते ॥ ४६ ॥
विरेचनातियोगेन समानं तस्य[2] लक्षणम् ॥
पिच्छाबस्तिप्रयोगश्च तत्र शीतः सुखावहः ॥ ४७ ॥
अतियोगात् परं यत्र जीवादान विरिक्तवत् ॥
देयस्तत्र हितश्चाप्सु[3] पिच्छाबस्तिः सशोणितः ॥ ४८ ॥
नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृताः ॥
स्नेहबस्तिष्वपि हि ता विज्ञेयाः कुशलैरिह ॥ ४९ ॥
इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः ॥
भिषजा च तथा कार्यं यथैता न भवन्ति हि ॥ ५० ॥
पक्षाद्विरेको वान्तस्य ततश्चापि[4] निरूहणम् ॥
सद्यो निरूढोऽनुवास्यः सप्तरात्राद्विरेचितः ॥ ५१ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने नेत्रबस्तिव्यापच्चिकित्सितं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

१ 'दुशयितस्य च' इति हाराण० । २ 'तच्चिकित्सितम्' इति हाराण० । ३ '°श्चापि पिच्छाबस्तिः' इति हाराण० । ४ 'ततः पक्षान्निरूहणम्' इति पा० ।

# सप्तत्रिंशत्तमोऽध्यायः ।

अथातोऽनुवासनोत्तरबस्तिचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

विरेचनात् सप्तरात्रे गते जातबलाय [1]वै ॥
कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः ॥ ३ ॥
यथावयो निरूहाणां या मात्राः परिकीर्तिताः ॥
पादावकृष्टास्ताः कार्याः स्नेहबस्तिषु देहिनाम् ॥ ४ ॥
उत्सृष्टानिलविण्मूत्रे नरे बस्तिं विधापयेत् ॥
एतर्हि विहतः स्नेहो नैवान्तः प्रतिपद्यते ॥ ५ ॥
स्नेहबस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ॥
[2]स्नेहवीर्यं तथा दत्ते देहं चानुविसर्पति ॥ ६ ॥
अत ऊर्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम् ॥
पानान्वासननस्येषु यानि हन्युर्गदान् बहून् ॥ ७ ॥
शटीपुष्करकृष्णाह्वामदनामरदारुभिः ॥
शताह्वाकुष्ठयष्ट्याह्ववचाबिल्वहुताशनैः ॥ ८ ॥
सुपिष्टैर्द्विगुणक्षीरं तैलं तोयचतुर्गुणम् ॥
पक्त्वा बस्तौ विधातव्यं मूढवातानुलोमनम् ॥ ९ ॥
अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम् ॥
कट्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत् ॥ १० ॥
वचापुष्करकुष्ठैलामदनामरसिन्धुजैः ॥
काकोलीद्वययष्ट्याह्वमेदायुग्मनराधिपैः ॥ ११ ॥
पाठाजीवकजीवन्तीभार्गीचन्दनकट्फलैः ॥
सरलागुरुबिल्वाम्बुवाजिगन्धाग्निवृद्धिभिः ॥ १२ ॥

---

१ 'च' इति हाराण० । २ 'स्नेहो वीर्यं तथा धत्ते' इति हाराण० ।

विडङ्गारग्वधश्यामात्रिवृन्मागधिकार्धिभिः॥
पिष्टैस्तैलं पचेत् क्षीरपञ्चमूलरसान्वितम्॥ १३॥
गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिनाम्॥
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम्॥ १४॥
चित्रकातिविषापाठादन्तीबिल्ववचामिषैः॥
सरलांशुमतीरास्नानीलिनीचतुरङ्गुलैः॥ १५॥
चव्याजमोदकाकोलीमेदायुग्मसुरद्रुमैः॥
जीवकर्षभवर्षाभूवस्तगन्धाशताह्वयैः॥ १६॥
रेण्वश्वगन्धामञ्जिष्ठाशटीपुष्करतस्करैः॥
सक्षीरं विपचेत्तैलं मारुतामयनाशनम्॥ १७॥
गृध्रसीखञ्जकुब्जाढ्यमूत्रोदावर्तरोगिणाम्॥
शस्यतेऽल्पबलाग्नीनां बस्तावाशु नियोजितम्॥ १८॥
भूतिकैरण्डवर्षाभूरास्नावृषकरोहिषैः॥
दशमूलसहाभार्गीषड्ग्रन्थामरदारुभिः॥ १९॥
बलानागबलामूर्वावाजिगन्धामृताह्वयैः॥[1]
सहाचरवरीविश्वाकाकनासाविदारिभिः॥ २०॥
यवमाषातसीकोलकुलत्थैः क्वथितैः शृतम्॥
जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम्॥ २१॥
जङ्घोरुत्रिकपार्श्वांसबाहुमन्याशिरःस्थितान्॥
हन्याद्वातविकारांस्तु बस्तियोगैर्निषेवितम्॥ २२॥
जीवन्त्यतिबलामेदाकाकोलीद्वयजीवकैः॥
ऋषभातिविषाकृष्णाकाकनासावचामरैः॥ २३॥
रास्नामदनयष्ट्याह्वसरलाभीरुचन्दनैः॥
स्वयङ्गुप्ताशटीशृङ्गीकलसीसारिवाह्वयैः॥[2] २४॥

---

१ "°गन्धामृताह्वयैः" इति हाराण०। २ "°सारिवाह्वयैः" इति हाराण०।

पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु ॥
तच्चानुवासने देयं शुक्राग्निबलवर्धनम् ॥ २५ ॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम् ॥
नस्ये पाने च संयुक्तमूर्ध्वजत्रुगदापहम् ॥ २६ ॥
मधुकोशीरकाश्मर्यकटुकोत्पलचन्दनैः ॥
श्यामापद्मकजीमूतशक्राह्वातिविषाम्बुभिः ॥ २७ ॥
तैलपादं पचेत् सर्पिः पयसाऽष्टगुणेन च ॥
न्यग्रोधादिगणक्वाथयुक्तं बस्तिषु योजितम् ॥ २८ ॥
दाहासृग्दरवीसर्पवातशोणितविद्रधीन् ॥
पित्तरक्तज्वराद्यांश्च हन्यात् पित्तकृतान् गदान् ॥ २९ ॥
मृणालोत्पलशालूकसारिवाद्वयकेशरैः ॥
चन्दनद्वयभूनिम्बपद्मबीजकसेरुकैः ॥ ३० ॥
पटोलकटुकारक्तागुन्द्रापर्पटवासकैः ॥
पिष्टैस्तैलघृतं[१] पक्वं तृणमूलरसेन च ॥ ३१ ॥
क्षीरद्विगुणसंयुक्तं बस्तिकर्मणि योजितम् ॥
नस्येऽभ्यञ्जनपाने वा हन्यात् पित्तगदान् बहून् ॥ ३२ ॥
त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ॥
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥ ३३ ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ॥
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥ ३४ ॥
पानाभ्यञ्जनगण्डूषनस्यबस्तिषु योजितम् ॥
स्थूलतालस्यकण्ड्वादीन् जयेत्कफकृतान् गदान् ॥ ३५ ॥
पाठाजमोदाशार्ङ्गेष्टापिप्पलीद्वयनागरैः ॥
सरलागुरुकालीयभार्गीचव्यामरद्रुमैः ॥ ३६ ॥
मरिचैलाभयाकट्वीशटीग्रन्थिककट्फलैः ॥

१ 'तैलमिदं' इति हाराण०।

तैलमेरण्डतैलं वा पक्वमेभिः समायुतम्[1] ॥ ३७ ॥
वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च ॥
हन्यादन्वासनैर्दत्तं सर्वान् कफकृतान् गदान् ॥ ३८ ॥
विडङ्गोदीच्यसिन्धूत्थशटीपुष्करचित्रकैः ॥
कट्फलातिविषाभार्गीवचाकुष्ठसुराह्वयैः ॥ ३९ ॥
मेदामदनयष्ट्याह्वश्यामानिचुलनागरैः ॥
शताह्वानीलिनीरास्नार्कलसीवृषरेणुभिः[2] ॥ ४० ॥
बिल्वाजमोदकृष्णाह्वादन्तीचव्यनराधिपैः ॥
तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम् ॥ ४१ ॥
प्लीहोदावर्तवातासृग्गुल्मानाहकफामयान् ॥
प्रमेहशर्कराशांसि हन्यादाश्वनुवासनैः[3] ॥ ४२ ॥
अशुद्धमपि वातेन केवलेनातिपीडितम् ॥
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ ४३ ॥
रूक्षस्य बहुवातस्य द्वौ त्रीनप्यनुवासनान्[4] ॥
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥ ४४ ॥
अस्निग्धमपि वातेन केवलेनातिपीडितम् ॥
स्नेहप्रगाढैर्मतिमान्निरूहैः समुपाचरेत् ॥ ४५ ॥
अथ सम्यङ्निरूढं तु वातादिष्वनुवासयेत् ॥
बिल्वयष्ट्याह्वमदनफलतैलैर्यथाक्रमम् ॥ ४६ ॥
रात्रौ बस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिजः ॥
[5]स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम् ॥ ४७ ॥
अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते[6] ॥
स्फुटस्रोतोमुखे देहे स्नेहौजः परिसर्पति ॥ ४८ ॥

१ 'समैर्युतम्' इति पा०। २ '°कदलीवृषरेणुभिः' इति हाराण०। ३ 'आश्वनुवासनात्' इति हाराण०। ४ '°वासनम्' इति हाराणचन्द्रः पाठमादृत्य 'द्वौ' त्रीन्, वारानिति शेषः' इति व्याचख्यौ। ५ 'स्नेहो वीर्ययुतः' इति हाराण०। ६ 'वान्न°' इति हाराण०।

पित्तेऽधिके कफे क्षीणे रूक्षे वातरुगर्दिते ॥
नरे रात्रौ [1] तु दातव्यं काले चोष्णेऽनुवासनम् ॥ ४९ ॥
उष्णे पित्ताधिके वाऽपि दिवा दाहादयो गदाः ॥
संभवन्ति यतस्तस्मात् [2] प्रदोषे योजयेद्भिषक् ॥ ५० ॥
शीते वसन्ते च दिवा ग्रीष्मप्रावृड्घनात्यये ।
[3] स्नेह्यो दिनान्ते पानोक्तान् दोषान् परिजिहीर्षता ॥ ५१ ॥
[4] अहोरात्रस्य कालेषु सर्वेष्वेवानिलाधिकम् ॥
तीव्रायां रुजि जीर्णान्नं भोजयित्वाऽनुवासयेत् ॥ ५२ ॥
[5] न चाभुक्तवतः स्नेहः प्रणिधेयः कथञ्चन ॥
शुद्धत्वाच्छून्यकोष्ठस्य स्नेह [6] ऊर्ध्वं समुत्पतेत् ॥ ५३ ॥
सदाऽनुवासयेच्चापि भोजयित्वाऽऽर्द्रपाणिनम् ॥
ज्वरं विदग्धभुक्तस्य कुर्यात् स्नेहः प्रयोजितः ॥ ५४ ॥
न चातिस्निग्धमशनं भोजयित्वाऽनुवासयेत् ॥
मदं मूर्च्छां च जनयेद् द्विधा स्नेहः प्रयोजितः ॥ ५५ ॥
रूक्षं भुक्तवतो ह्यन्नं बलं वर्णं च हापयेत् ॥
युक्तस्नेहमतो जन्तुं भोजयित्वाऽनुवासयेत् ॥ ५६ ॥
यूषक्षीररसैस्तस्माद्यथा [7] व्याधि समीक्ष्य वा ॥
यथोचितात् पादहीनं भोजयित्वाऽनुवासयेत् ॥ ५७ ॥
अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः ॥
भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः ॥ ५८ ॥
[8] विसृज्य च शकृन्मूत्रं योजयेत् स्नेहबस्तिना ॥
प्रणिधानविधानं तु निरूहे [9] संप्रवक्ष्यते ॥ ५९ ॥

---

१ 'च' इति हाराण० । २ 'ततस्त्वेन' इति पा० । ३ 'स्नेहो' इति हाराण० । ४ 'अहोरात्रेषु' इति हाराण० । ५ 'न वा' इति हाराण० । ६ 'ऊर्ध्वमथोत्पतेत्' इति हाराण० । ७ '०व्याधिमवेक्ष्य' इति हाराण० । ८ 'विसर्ज्य' इति हाराण० । ९ 'च प्रवक्ष्यते' इति हाराण० ।

ततः प्रणिहितस्नेह[1] उत्तानो वाक्शतं भवेत् ॥
प्रसारितैः सर्वगात्रैस्तथा वीर्यं विसर्पति ॥ ६० ॥
ताडयेत्तलयोरेनं त्रींस्त्रीन् वाराञ्छनैः शनैः ॥
स्फिचोश्चैनं ततः शय्यां त्रीन् वारानुत्क्षिपेत्ततः ॥ ६१ ॥
एवं प्रणिहिते बस्तौ मन्दायासोऽथ मन्दवाक् ॥
स्वास्तीर्णे शयने काममासीताचारिके रतः ॥ ६२ ॥
स तु सैन्धवचूर्णेन शताह्वेन[2] च योजितः ॥
देयः सुखोष्णश्च तथा निरेति सहसा सुखम् ॥ ६३ ॥
यस्यानुवासनो दत्तः सक्रुदन्वक्षमाव्रजेत् ॥
अत्यौष्ण्याद्‌तितैक्ष्ण्याद्वा वायुना वा प्रपीडितः ॥ ६४ ॥
सवातोऽधिकमात्रो वा गुरुत्वाद्वा सभेषजः ॥
तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति ॥ ६५ ॥
विष्टब्धानिलविण्मूत्रः स्नेहहीनेऽनुवासने[3] ॥
दाहक्लमप्रवाहार्तिकरश्चात्यनुवासनः ॥ ६६ ॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ॥
ओषचोषौ विना शीघ्रं स सम्यगनुवासितः ॥ ६७ ॥
जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ॥
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ॥ ६८ ॥
प्रातरुष्णोदकं [4]देयं धान्यनागरसाधितम् ॥
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते ॥ ६९ ॥
स्नेहबस्तिक्रमेष्वेवं विधिमाहुर्मनीषिणः ॥
अनेन विधिना षड् वा सप्त वाऽष्टौ नवैव वा ॥ ७० ॥
विधेया बस्तयस्तेषामन्तरा तु निरूहणम् ॥
दत्तस्तु प्रथमो बस्तिः स्नेहयेद्बस्तिवङ्क्षणौ ॥ ७१ ॥

---

१ 'प्रणिहिते स्नेह' इति हाराण० । २ 'शतपुष्पासमन्वितः' इति पा० ।
३ 'स्नेहहीनोऽनुवासनः' इति हाराण० । ४ 'पेय' इति पा० ।

सम्यग्दत्तो द्वितीयस्तु मूर्धस्थमनिलं जयेत् ॥
जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ॥ ७२ ॥
रसं चतुर्थो रक्तं तु पञ्चमः स्नेहयेत्तथा ॥
षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ॥ ७३ ॥
अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम् ॥
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ॥ ७४ ॥
अष्टादशाष्टादशकान् बस्तीनां यो निषेवते ॥
यथोक्तेन विधानेन परिहारक्रमेण च ॥ ७५ ॥
स कुञ्जरबलोऽश्वस्य जवैस्तुल्योऽमरप्रभः ॥
वीतपाप्मा श्रुतधरः सहस्रायुर्नरो भवेत् ॥ ७६ ॥
स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥
स्नेहादग्निवधोत्क्लेशौ निरूहात् पवनाद्भयम् ॥ ७७ ॥
तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ॥
[1]नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥ ७८ ॥
रूक्षाय बहुवाताय स्नेहबस्तिं दिने दिने ॥
दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात्त्र्यहात् ॥ ७९ ॥
स्नेहोऽल्पमात्रो रूक्षाणां दीर्घकालमनत्ययः ॥
तथा निरूहः स्निग्धानामल्पमात्रः प्रशस्यते ॥ ८० ॥
अत ऊर्ध्वं प्रवक्ष्यामि व्यापदः स्नेहबस्तिजाः ॥
बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥ ८१ ॥
अल्पवीर्यं तदा स्नेहमभिभूय पृथग्विधान् ॥
कुर्वन्त्युपद्रवान् स्नेहः, स चापि न निवर्तते ॥ ८२ ॥
तत्र वाताभिभूते तु स्नेहे मुखकषायता ॥
जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥ ८३ ॥

---

१ 'नैव' इति हाराण० ।

पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ॥
[1]दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥ ८४ ॥
श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ॥
गौरव छर्दिरुच्छ्वासः [2]कृच्छ्राच्छीतज्वरोऽरुचिः ॥ ८५ ॥
तत्र दोषाभिभूते तु स्नेहे बस्ति निधापयेत् ॥
यथास्व दोषशमनान्युपयोज्यानि यानि च ॥ ८६ ॥
अत्याशितेऽन्नाभिभवात् स्नेहो नैति यदा तदा ॥
गुरुरामाशयः शूलं वायोश्चाप्रतिसंचरः ॥ ८७ ॥
हृत्पीडा मुखवैरस्य श्वासो मूर्च्छा भ्रमोऽरुचिः ॥
तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥ ८८ ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥
तदाऽङ्गसदनाध्माने श्वासः शूलं च जायते ॥ ८९ ॥
पक्काशयगुरुत्वं च तत्र दद्यान्निरूहणम् ॥
[3]तीक्ष्णं तीक्ष्णौषधैरेव सिद्धं चाप्यनुवासनम् ॥ ९० ॥
शुद्धस्य दूरानुसृते स्नेहे स्नेहस्य दर्शनम् ॥
गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनम् ॥ ९१ ॥
स्नेहगन्धि [4]मुख चापि कासश्वासावरोचकः ॥
अतिपीडितवत्तत्र [5]सिद्धिरास्थापन तथा ॥ ९२ ॥
अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः संप्रयोजितः ॥
शीतो मृदुश्च नाभ्येति ततो मन्द [6]प्रवाहते ॥ ९३ ॥
विबन्धगौरवाध्मानशूलाः पक्काशयं प्रति ॥
तत्रास्थापनमेवाशु प्रयोज्य सानुवासनम् ॥ ९४ ॥
अल्पं भुक्तवतोऽल्पो हि स्नेहो मन्दगुणस्तथा ॥
दत्तो नैति क्लमोत्क्लेशौ भृशं चारतिमावहेत् ॥ ९५ ॥

---

१ 'दाहः शोफो ज्वरः' इति पा०। २ 'कृच्छ्र शीत°' इति हाराण०। ३ 'अतितीक्ष्णौषधैरेव' इति हाराण०। ४ मुख तत्र' इति हाराण०। ५ 'विधिरास्थापन' इति हाराण०। ६ 'प्रवर्तते' इति पा०। 'प्रवाहयेत्' इति हा०।

तन्त्राप्यास्थापनं[1] कार्यं शोधनीयेन बस्तिना ॥
(अन्वासनं च स्नेहेन शोधनीयेन शस्यते[2]) ॥ ९६ ॥
अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ॥
कुर्याद्बस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ९७ ॥
यस्य नोपद्रवं कुर्यात् स्नेहबस्तिरनिःसृतः ॥
सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥
अनायान्तं त्वहोरात्रात् स्नेहं संशोधनैर्हरेत् ।
स्नेहबस्तावनायाते नान्यः स्नेहो विधीयते ॥ ९९ ॥
इत्युक्ता व्यापदः सर्वा सलक्षणचिकित्सिताः ॥
बस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतः परम् ॥ १०० ॥
चतुर्दशाङ्गुल नेत्रमातुराङ्गुलसंमितम् ॥
मालतीपुष्पवृन्ताग्र[3] छिद्रं सर्षपनिर्गमम् ॥ १०१ ॥
स्नेहप्रमाणं परमं प्रकुञ्चश्चात्र[4] कीर्तितः ॥
पञ्चविंशादधो मात्रां विदध्याद्बुद्धिकल्पिताम् ॥ १०२ ॥
निविष्टकर्णिकं मध्ये, नारीणां चतुरङ्गुले ॥
मूत्रस्रोतःपरीणाहं मुद्गवाहि दशाङ्गुलम् ॥ १०३ ॥
मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ॥ १०४ ॥
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानां त्वेकमङ्गुलम् ॥
विधेयं चाङ्गुलं तासां विधिवद्वक्ष्यते यथा ॥ १०५ ॥
स्नेहस्य प्रसृतं चात्र स्वाङ्गुलीमूलसंमितम् ॥
देय प्रमाणं परममर्वाग् बुद्धिविकल्पितम् ॥ १०६ ॥

---

१ 'तत्रैवास्थापन' इति हाराण०। २ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते, हाराण०पुस्तके तु लभ्यते। ३ 'मालतीपुष्पवृन्ताभं तच्छिद्र-च्छिद्रमेव च' इति पा०। ४ 'कुञ्चश्चात्र प्रकीर्तितः' इति हाराण०।

औरभ्रः शौकरो वाऽपि बस्तिराजश्च पूजितः ॥
तदलाभे प्रयुञ्जीत गलचर्म तु पक्षिणाम् ॥ १०७ ॥
(अस्यालाभे दृतेः पादो मृदुचर्म ततोऽपि वा) ॥[1]
अथातुरमुपस्निग्धं [2]स्विन्नं प्रशिथिलाशयम् ॥ १०८ ॥
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ॥
निषण्णमाजानुसमे पीठे [3]सोपाश्रये समम् ॥ १०९ ॥
स्वभ्यक्तबस्तिमूर्धानं तैलेनोष्णेन मानवम् ॥
ततः समं स्थापयित्वा नालमस्य प्रहर्षितम् ॥ ११० ॥
पूर्वं शलाकयाऽन्विष्य ततो नेत्रमनन्तरम् ॥
शनैः शनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट् ॥ १११ ॥
मेढ्र्[4]यामसमं केचिदिच्छन्ति प्रणिधानकम् ॥
ततोऽवपीडयेद्बस्तिं शनैर्नेत्रं च निर्हरेत् ॥ ११२ ॥
ततः प्रत्यागतस्नेहमपराह्णे विचक्षणः ॥
भोजयेत् पयसा मात्रां यूषेणाथ रसेन वा ॥ ११३ ॥
अनेन विधिना दद्याद्[5]बस्तींस्त्रींश्चतुरोऽपि वा ॥
ऊर्ध्वजान्वै स्त्रियै दद्यादुत्तानायै विचक्षणः ॥ ११४ ॥
[6]सम्यक् प्रपीडयेद्योनिं दद्यात् सुमृदुपीडितम् ॥
त्रिकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति ॥ ११५ ॥
गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ॥
[7]क्वाथप्रमाणं प्रसृतं, स्त्रिया द्विप्रसृतं भवेत् ॥ ११६ ॥
कन्येतरस्याः, कन्यायास्तद्वद्बस्तिप्रमाणकम् ॥
अप्रत्यागच्छति भिषग् बस्तावुत्तरसंज्ञिते ॥ ११७ ॥

---

१ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते, हाराण०पुस्तके तु लभ्यते। २ 'सुस्विन्न' प्रथिताशयम्' इति हाराण०। ३ 'स्थानाश्रये' इति हाराण०। ४ 'मेढ्रयाम–' इत्यर्धं हाराण०पुस्तके न दृश्यते। ५ '°बस्तिं' इति हाराण०। ६ 'कन्येतरस्यै कन्यायै दद्यात्' इति पा०। ७ 'क्वाथप्रमाण–' इत्यत आरभ्य 'तद्वद्बस्तिप्रमाणकम्' इति यावत् हाराणचन्द्रो न पठति।

भूयो बस्तिं निदध्यात्तु संयुक्तं शोधनैर्गणैः ॥
गुदे वर्तिं [1]निदध्याद्वा शोधनद्रव्यसंभृताम् ॥ ११८ ॥
प्रवेशयेद्वा मतिमान् बस्तिद्वारमथैषणीम् ॥
पीडयेद्वाऽप्यधो नाभेर्बलेनोत्तरमुष्टिना ॥ ११९ ॥
आरग्वधस्य [2]पत्रैस्तु निर्गुण्ड्याः स्वरसेन च ॥
कुर्याद्गोमूत्रपिष्टेषु वर्तीर्वाऽपि ससैन्धवाः ॥ १२० ॥
मुद्गैलासर्षपसमाः प्रविभज्य वयांसि तु ॥
बस्तेरागमनार्थाय ता निदध्याच्छलाकया ॥ १२१ ॥
आगारधूमबृहतीपिप्पलीफलसैन्धवैः ॥
कृता वा शुक्तगोमूत्रसुरापिष्टैः सनागरैः ॥ १२२ ॥
अनुवासनसिद्धिं च वीक्ष्य कर्म प्रयोजयेत् ॥
शर्करामधुमिश्रेण शीतेन मधुकाम्बुना ॥ १२३ ॥
दह्यमाने तदा बस्तौ दद्याद्वस्तिं विचक्षणः ॥
क्षीरवृक्षकषायेण पयसा शीतलेन च ॥ १२४ ॥
शुक्रं दुष्टं शोणितं चाङ्गनानां पुष्पोद्रेकं तस्य नाशं च कष्टम् ॥
मूत्राघातान्मूत्रदोषान् प्रवृद्धान् योनिव्याधिं संस्थितिं चापरायाः ॥
शुक्रोत्सेकं शर्करामश्मरीं च शूलं बस्तौ वङ्क्षणे मेहने च ॥
घोरानन्यान् बस्तिजांश्चापि रोगान् हित्वा मेहानुत्तरो हन्ति बस्तिः ॥
सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च ॥
बस्तेरुत्तरसंज्ञस्य समानं स्नेहबस्तिना ॥ १२७ ॥

इति श्रीसुश्रुतसंहितायां चिकित्सास्थानेऽनुवासनोत्तरबस्ति-
चिकित्सितं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

१ 'विदध्यात्तु' इति हाराण० । २ 'पत्रेषु निर्गुण्ड्याः स्वरसेषु च' इति हाराण० ।

# अष्टात्रिंशत्तमोऽध्यायः ।

अथातो निरूहक्रमचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथानुवासितमास्थापयेत्; स्वभ्यक्तस्विन्नशरीरमुत्सृष्टबहिर्वेगम्[1]वाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामधःसुपरिग्रहायां श्रोणिप्रदेशप्रतिव्यूढायामनुपधानायां वामपार्श्वशायिनमाकुञ्चितदक्षिणसक्थिमितरप्रसारितसक्थिं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा, ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुष्ठाङ्गुलिभ्यां कर्णिकामुपरि निष्पीड्य, सव्यपाणिकनिष्ठिकानामिकाभ्यां बस्तेर्मुखार्धं सङ्कोच्य, मध्यमाप्रदेशिन्यङ्गुष्ठैर[2]र्धं तु विवृतास्यं कृत्वा, बस्तावौषधं प्रक्षिप्य, दक्षिणह[3]स्ताङ्गुष्ठेन प्रदेशिनीमध्यमाभ्यां चानुसिक्तमनायतमबुद्बुदमसङ्कुचितमवातमौ[4]षधासन्नमुपसंगृह्य, पु[5]नरुपरि तदितरेण गृहीत्वा दक्षिणेनावसिञ्चेत्, ततः सूत्रेणैवौषधान्ते द्विस्त्रिर्वाऽऽवेष्ट्य बध्नीयात्, अथ दक्षिणेनोत्तानेन पाणिना बस्तिं गृहीत्वा वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय, घृताभ्यक्ताग्रनेत्रं घृताक्तमुपादाय प्रयच्छेदनुपृष्ठवंशं सममुन्मुखमाकर्णिकं नेत्रं प्रणिधत्स्वेति ब्रूयात् ॥ ३ ॥

बस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ॥
एकेनैवावपीडेन न द्रुत न विलम्बितम् ॥ ४ ॥

ततो नेत्रमपनीय त्रिंशन्मात्राः पीडनका[6]लादुपेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात् । अथातुरमुपवेशयेदुत्कु[7]टुकं बस्त्यागमनार्थम् । निरूहप्रत्यागमनकालस्तु मुहूर्तो भवति ॥ ५ ॥

---

१ '°मप्रवाते' इति हाराण० । २ 'अर्धास्य विवृत कृत्वा' इति पा० । ३ '°हस्ताङ्गुष्ठप्रदेशिनीभ्या चानुषिक्त°' इति हाराण० । ४ 'औषधान्तमुपसंगृह्य' इति पा० । ५ 'पुनरितरेण' इति हाराण० । ६ 'पीडनकालादुपेक्ष्यातुरमुपवेशयेत्' इति पा० । ७ 'उत्कटक' इति हाराण० । 'उत्कटिक' इति च पा० ।

अनेन विधिना बस्तिं दद्याद्बस्तिविशारदः ॥
द्वितीयं वा तृतीय वा चतुर्थं वा यथार्थतः ॥ ६ ॥
सम्यङ्निरूढलिङ्गे तु प्राप्ते बस्तिं निवारयेत् ॥
[1]विशेषात् सुकुमाराणां हीन एव क्रमो हितः ॥ ७ ॥
अपि हीनक्रम कुर्यान्न तु कुर्यादतिक्रमम् ॥
यस्य स्याद्बस्तिरल्पो[2]ऽल्पवेगो हीनमलानिल· ॥ ८ ॥
दुर्निरूढः स विज्ञेयो मूत्रार्त्यरुचिजाड्यवान् ॥
यान्येव प्राज्ञयोक्तानि लिङ्गान्यतिविरेचिते ॥ ९ ॥
तान्येवातिनिरूढेऽपि विज्ञेयानि विपश्चिता ॥
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः ॥ १० ॥
लाघवं चोपजायेत सुनिरूढं तमादिशेत् ॥
सुनिरूढं ततो जन्तुं स्नातवन्त तु भोजयेत्[3] ॥ ११ ॥
पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसैः क्रमात् ॥
सर्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः ॥ १२ ॥
त्रिभागहीनमर्धं वा हीनमात्रमथापि वा ॥
यथाग्निदोषं [4]मात्रेयं भोजनस्य विधीयते ॥ १३ ॥
अनन्तरं ततो युञ्ज्याद्यथास्वं स्नेहबस्तिना ॥
विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः ॥ १४ ॥
आस्थापनस्नेहबस्त्योः सम्यग्दाने तु लक्षणम् ॥
तदहस्तस्य पवनाद्भयं बलवदिष्यते ॥ १५ ॥
रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥
पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम् ॥ १६ ॥

---

१ हाराणचन्द्रस्तु—'विशेषात्—' इत्यर्धमग्रेतन च व्युत्क्रमेण पठति । २ '°रत्यल्पवेगो' इति हाराण० । ३ 'सुनिरूढ तत· स्नात यथास्व प्रतिभोजयेत्' इति पा० । ४ 'मात्रैव' इति हाराण० ।

अन्नोपस्तम्भिते कोष्ठे स्नेहबस्तिर्विधीयते ॥
अनायान्तं मुहूर्तात्तु निरूहं शोधनैर्हरेत् ॥ १७ ॥
तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसंयुतैः ॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम् ॥ १८ ॥
शूलारतिज्वरानाहान्मरणं[1] वा प्रवर्तयेत् ॥
न तु भुक्तवतो[2] देयमास्थापनमिति स्थितिः ॥ १९ ॥
विसूचिकां वा जनयेच्छर्दिं वाऽपि सुदारुणाम् ॥
कोपयेत् सर्वदोषान् वा तस्माद्द्याद्भोजिने[3] ॥ २० ॥
जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः ॥
निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः ॥ २१ ॥
नवाऽऽस्थापनविक्षिप्तमन्नमग्निः प्रधावति ॥
तस्मादास्थापनं देयं निराहाराय जानता ॥ २२ ॥
आवस्थिकं क्रमं चापि बुद्ध्वा कार्यं निरूहणम् ॥
मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥ २३ ॥
क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा ॥
लवणानि फलं क्षौद्रं शताह्वा सर्षपं वचा ॥ २४ ॥
एला त्रिकटुकं रास्ना सरलो देवदारु च ॥
रजनी मधुक हिङ्गु कुष्ठं संशोधनानि च ॥ २५ ॥
कटुका शर्करा मुस्तमुशीरं चन्दनं शटी ॥
मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ॥ २६ ॥
बिल्वमध्यं यवानी[4] च फलिनी शक्रजा यवाः ॥
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ॥ २७ ॥
तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका ॥
निरूहेषु यथालाभमेष वर्गो विधीयते ॥ २८ ॥

---

१ "°ज्वरानाह' इति हाराण० । २ 'भुक्तवते' इति हाराण० । ३ "°दभोजिते' इति हाराण० । ४ 'यमानी' इति हाराण० ।

स्वस्थे क्वाथस्य चत्वारो[1] भागाः स्नेहस्य पञ्चमः ॥
क्रुद्धेऽनिले चतुर्थस्तु षष्ठः पित्ते कफेऽष्टमः ॥ २९ ॥
सर्वेषु चाष्टमो भागः कल्कानां, लवणं पुनः ॥
क्षौद्रं मूत्रं फलं क्षीरमम्लं मांसरसं[2] तथा ॥ ३० ॥
युक्त्या प्रकल्पयेद्धीमान् निरूहे कल्पना त्वियम् ॥ ३१ ॥
कल्कस्नेहकषायाणामविवेकाद्भिषग्वरैः ॥
[3]बस्तेः सुकल्पना प्रोक्ता तस्य दानं यथार्थकृत् ॥ ३२ ॥
दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ।
पात्रे तलेन मथ्नीयात्तद्वत् [4]स्नेहं शनैः शनैः ॥ ३३ ॥
सम्यक् सुमथिते दद्यात् फलकल्कमतः परम् ॥
ततो यथोचितान् कल्कान् भागैः स्वैः श्लक्ष्णपेषितान् ॥३४॥
गम्भीरे भाजनेऽन्यस्मिन्मथ्नीयात्तं खजेन च[5] ॥
यथा वा साधु मन्येत न सान्द्रो न तनुः समः ॥ ३५ ॥
रसक्षीराम्लमूत्राणां दोषावस्थामवेक्ष्य तु ॥
कषायप्रसृतान् पञ्च सुपूतांस्तत्र दापयेत् ॥ ३६ ॥
अत ऊर्ध्वं द्वादशप्रसृतान्[6] वक्ष्यामः ॥—
दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम् ॥
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥ ३७ ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत् ॥
संमूर्च्छिते कषायं तु चतुःप्रसृतिसंमितम् ॥ ३८ ॥
वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम् ॥
एवं प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत् ॥ ३९ ॥

---

१ 'चत्वार॰ स्नेहभागस्तु पञ्चम॰' इति पा०। २ '°रसस्तथा' इति हाराण०। ३ 'बस्तिस्तु कल्पितः सम्यक् तस्यादान यथार्थकृत्' इति पाठमादृत्य 'आदानम् उपयोग॰', इति हाराणचन्द्रो व्याचख्यौ । ४ 'मथ्नीयादनुस्नेह' इति हा०। ५ 'अस्याग्रे हाराणचन्द्रधृतश्लोकक्रमस्तु 'कषायप्रसृतान्—' 'रसक्षीराम्ल—' 'यथा च साधु मन्येत' इत्येवविधो लभ्यते। ६ 'द्वादशप्रसृतिबस्ति' इति पा० ।

ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम् ॥
अपह्रासे भिषक्कुर्यात्तद्वत् प्रसृतिहापनम् ॥ ४० ॥
यथावयो निरूहाणां कल्पनेयमुदाहृता ॥
सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः ॥ ४१ ॥
अत ऊर्ध्वं प्रवक्ष्यन्ते बस्तयोऽत्र विभागशः ॥
यथादोषं प्रयुक्ता ये हन्युर्नानाविधान् गदान् ॥ ४२ ॥
शम्पाकोरुबुवर्षाभूवाजिगन्धानिशाच्छदैः ॥
पञ्चमूलीबलारास्नागुडूचीसुरदारुभिः ॥ ४३ ॥
क्वथितैः पालिकैरेभिर्मदनाष्टकसंयुतैः ॥
कल्कैर्मागधिकाम्भोदहपुषामिसिसैन्धवैः ॥ ४४ ॥
वत्साह्वयप्रियङ्ग्वायष्ट्याह्वयरसाञ्जनैः ॥
दद्यादास्थापनं कोष्णं क्षौद्राद्यैरभिसंस्कृतम् ॥ ४५ ॥
पृष्ठोरुत्रिकशूलाश्मविण्मूत्रानिलसङ्गिनाम् ॥
ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम् ॥ ४६ ॥
गुडूचीत्रिफलारास्नादशमूलबलापलैः ॥
क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्गुघनसैन्धवैः[1] ॥ ४७ ॥
शतपुष्पावचाकृष्णायवानी[2]कुष्ठबिल्वजैः ॥
सगुडैरक्षमात्रैस्तु मदनार्धपलान्वितैः ॥ ४८ ॥
क्षौद्रतैलघृतक्षीरशुक्तकाञ्जिकमस्तुभिः ॥
समालोड्य च मूत्रेण[3] दद्यादास्थापनं परम् ॥ ४९ ॥
तेजोवर्णबलोत्साहवीर्याग्निप्राणवर्धनम् ॥
सर्वमारुतरोगघ्नं वयःस्थापनमुत्तमम् ॥ ५० ॥
कुशादिपञ्चमूलाब्दत्रिफलोत्पलवासकैः ॥
सारिवोशीरमञ्जिष्ठारास्नारेणुपरूषकैः ॥ ५१ ॥

---

१ 'प्रियङ्ग्वञ्जनसैन्धवैः' इति हाराण०। २ "यमानी" इति हाराण०।
३ 'मूत्रैस्तु' इति हाराण०।

पालिकैः क्वथितैः सम्यग् द्रव्यैरेभिश्च पेषितैः ॥
शृङ्गाटकात्मगुप्तेभकेसरागुरुचन्दनैः ॥ ५२ ॥
विदारीमिसिमञ्जिष्ठाश्यामेन्द्रयवसिन्धुजैः ॥
फलपद्मकयष्ट्याह्वैः क्षौद्रक्षीरघृताप्लुतैः ॥ ५३ ॥
दत्तमास्थापनं शीतमम्लहीनैस्तथा द्रवैः ॥
दाहासृग्दरपित्तासृक्पित्तगुल्मज्वराञ्जयेत् ॥ ५४ ॥
रोध्रचन्दनमञ्जिष्ठारास्नानन्ताबलर्धिभिः ॥
सारिवावृषकाश्मर्यमेदामधुकपद्मकैः ॥ ५५ ॥
स्थिरादितृणमूलैश्च क्वाथः कर्षत्रयोन्मितैः ॥
पिष्टैर्जीवककाकोलीयुगर्धिमधुकोत्पलैः ॥ ५६ ॥
प्रपौण्डरीकजीवन्तीमेदारेणुपरूषकैः ॥
अभीरुमिसिसिन्धूत्थवत्सकोशीरपद्मकैः ॥ ५७ ॥
कसेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतैः ॥
द्रवैस्तीक्ष्णाम्लवर्ज्यैश्च दत्तो बस्तिः सुशीतलः ॥ ५८ ॥
गुल्मासृग्दरहृत्पाण्डुरोगान् सविषमज्वरान् ॥
असृक्पित्तातिसारौ च हन्यात्पित्तकृतान् गदान् ॥ ५९ ॥
भद्रानिम्बकुलत्थार्ककोशातक्यमृतामरैः ॥
सारिवाबृहतीपाठामूर्वारग्वधवत्सकैः ॥ ६० ॥
क्वाथः, कल्कस्तु कर्तव्यो वचामदनसर्षपैः[1] ॥
सैन्धवामरकुष्ठैलापिप्पलीबिल्वनागरैः ॥ ६१ ॥
कटुतैलमधुक्षारमूत्रतैलाम्लसंयुतैः[2] ॥
कार्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम् ॥ ६२ ॥
मेदस्विनामनग्नीनां कफरोगाशनद्विषाम् ॥
गलगण्डगरग्लानिश्लीपदोदररोगिणाम् ॥ ६३ ॥

---

१ 'बलामदनसर्षपैः' इति हाराण० । २ '°तैलाम्बुसयुतैः' इति हाराण०

दशमूलीनिशाबिल्वपटोलत्रिफलामरैः ॥
क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः ॥ ६४ ॥
पाठामागधिकेन्द्राह्वैस्तैलक्षारमधुप्लुतैः ॥
कुर्यादास्थापनं सम्यङ्मूत्राम्लफलयोजितैः[1] ॥ ६५ ॥
कफपाण्डुगदालस्यमूत्रमारुतसंगिनाम्[2] ॥
आमाटोपापचीश्लेष्मगुल्मक्रिमिविकारिणाम् ॥ ६६ ॥
वृषाश्मभेदवर्षाभूधान्यगन्धर्वहस्तकैः ॥
दशमूलबलामूर्वायवकोलनिशाच्छदैः ॥ ६७ ॥
कुलत्थबिल्वभूनिम्बैः क्वथितैः पलसंमितैः ॥
कल्कैर्मदनयष्ट्याह्वषड्ग्रन्थामरसर्षपैः ॥ ६८ ॥
पिप्पलीमूलसिन्धूत्थयवानीमिसिवत्सकैः ॥
क्षौद्रेक्षुक्षीरगोमूत्रसर्पिस्तैलरसाप्लुतैः ॥ ६९ ॥
तूर्णमास्थापनं कार्यं संसृष्टबहुरोगिणाम् ॥
गृध्रसीशर्कराष्ठीलातूनीगुल्मगदापहम् ॥ ७० ॥
रास्नारग्वधवर्षाभूकटुकोशीरवारिदैः ॥
त्रायमाणामृतारक्तापञ्चमूलीबिभीतकैः ॥ ७१ ॥
सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः ॥
यष्ट्याह्वमिसिसिन्धूत्थफलिनीन्द्रयवाह्वयैः ॥ ७२ ॥
रसाञ्जनरसक्षौद्रद्राक्षासौवीरसंयुतैः ॥
युक्तो बस्ति सुखोष्णोऽयं मांसशुक्रबलौजसाम् ॥ ७३ ॥
आयुषोऽग्नेश्च संस्कर्ता हन्ति चाशु गदानिमान् ॥
गुल्मासृग्दरवीसर्पमूत्रकृच्छ्रक्षतक्षयान् ॥ ७४ ॥
विषमज्वरमर्शांसि[3] ग्रहणीं वातकुण्डलीम् ॥
जानुजङ्घाशिरोबस्तिग्रहोदावर्तमारुतान् ॥ ७५ ॥

---

१ "°योजितम्' इति हाराण०। २ 'कफपाण्डुमदा°" इति हाराण०।
३ 'विषमज्वरशूलार्शोग्रहणीवातकुण्डलान्' इति पा०।

भवन्ति चात्र—

धात्वन्तरेषु याः सप्त कलाः संपरिकीर्तिताः।
तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् ॥ ४० ॥
येनान्तरेण तु[1] कलां कालकल्प भिनत्ति हि ॥
समीरणेनोह्यमानं तत्तु वेगान्तरं स्मृतम् ॥ ४१ ॥
शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः ॥
लालास्रावो द्वितीये तु कृष्णाङ्गः[2] पीड्यते हृदि ॥ ४२ ॥
तृतीये च शिरोदुःखं कण्ठग्रीवं च भज्यते ॥
चतुर्थे वेपते मूढः खादन् दन्तान् जहात्यसून् ॥ ४३ ॥
केचिद्वेगत्रयं प्राहुरन्तं[3] चैतेषु तद्विदः ॥
ध्यायति प्रथमे वेगे पक्षी[4] मुह्यत्यतः परम् ॥ ४४ ॥
द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति ॥
केचिदेकं विहङ्गेषु विषवेगमुशन्ति हि ॥
मार्जारनकुलादीनां विषं नातिप्रवर्तते[5] ॥ ४५ ॥

इति सुश्रुतसंहितायां कल्पस्थाने सर्पदष्टविषविज्ञानीयं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

अथातः सर्पदष्टविषचिकित्सितं[6] कल्पं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सर्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः ॥
दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥ ३ ॥

---

१ 'हि' इति हाराण०। २ 'हृष्टाङ्ग' इति पा०। ३ 'प्राहुरन्तश्चैतेषु' इति हाराण०। ४ 'पक्षी कूजन् मरणमृच्छति' इति पा०। ५ 'नातिप्रसर्पति' इति पा०। ६ '°दष्टकल्पचिकित्सित' इति हाराण०।

प्लोतचर्मान्तवल्कानां[1] मृदुनाऽन्यतमेन वै ॥
न गच्छति विषं देहमरिष्टाभिर्निवारितम् ॥ ४ ॥
दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते ॥
आचूषणच्छेददाहाः सर्वत्रैव तु पूजिताः ॥ ५ ॥
प्रतिपूर्य मुखं वस्त्रैर्हितमाचूषणं भवेत् ॥
स[2] दष्टव्योऽथवा सर्पो लोष्टो वाऽपि हि तत्क्षणम् ॥ ६ ॥
अथ मण्डलिना दष्टं न कथचन दाहयेत् ॥
स [3]पित्तबाहुल्यविषाद्दंशो दाहाद्विसर्पते ॥ ७ ॥
अरिष्टामपि मन्त्रैश्च बध्नीयान्मन्त्रकोविदः ॥
सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता ॥ ८ ॥
देवब्रह्मर्षिभिः प्रोक्ता मन्त्राः सत्यतपोमयाः ॥
भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम् ॥ ९ ॥
विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः ॥
यथा निवार्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः ॥ १० ॥
मन्त्राणां ग्रहणं कार्यं स्त्रीमांसमधुवर्जिना ॥
मिता[4]हारेण शुचिना कुशास्तरणशायिना ॥ ११ ॥
गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः ॥
पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नतः ॥ १२ ॥
मन्त्रा[5]स्त्वविधिना प्रोक्ता हीना वा स्वरवर्णतः ॥
यस्मान्न सिद्धिमायान्ति तस्माद्योज्योऽगदक्रमः ॥ १३ ॥
समन्ततः सिरा दंशाद्विध्येत्तु कुशलो भिषक् ॥
शाखाग्रे वा ललाटे वा व्य[6]ध्यास्ता विसृते विषे ॥ १४ ॥
रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम् ॥
तस्माद्विस्रावयेद्रक्तं सा ह्यस्य परमा क्रिया ॥ १५ ॥

---

१ '°चर्मान्तर्वल्काना' इति हाराण०। २ 'सदष्टव्यो°' इति पा०।
३ 'पित्तविषबाहुल्याद्' इति हाराण०। ४ 'जिताहारेण' इति हाराण०।
५ 'मन्त्रास्तु विधिना' इति हाराण०। ६ 'वेध्या°' इति हाराण०।

समन्तादगदैर्दंशं प्रच्छयित्वा प्रलेपयेत् ॥
चन्दनोशीरयुक्तेन वारिणा परिषेचयेत् ॥ १६ ॥
पाययेतागदांस्तांस्तान् क्षीरक्षौद्रघृतादिभिः ॥
तदलाभे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका ॥ १७ ॥
कोविदारशिरीषार्ककटभीर्वाऽपि भक्षयेत् ॥
न पिबेत्तैलकौलत्थमद्यसौवीरकाणि च ॥ १८ ॥
द्रवमन्यत्तु यत्किञ्चित् पीत्वा पीत्वा तदुद्वमेत् ।
प्रायो हि वमनेनैव सुखं निर्ह्रियते विषम् ॥ १९ ॥
फणिनां विषवेगे तु प्रथमे शोणितं हरेत् ॥
द्वितीये मधुसर्पिर्भ्यां पाययेतागदं भिषक् ॥ २० ॥
नस्यकर्माञ्जने युञ्ज्यात्तृतीये विषनाशने ॥
वान्तं चतुर्थे पूर्वोक्तां[1] यवागूमथ दापयेत् ॥ २१ ॥
शीतोपचारं कृत्वाऽऽदौ भिषक् पञ्चमषष्ठयोः ॥
[2]पाययेच्छोधनं तीक्ष्णं यवागूं चापि कीर्तिताम् ॥ २२ ॥
सप्तमे त्ववपीडेन शिरस्तीक्ष्णेन शोधयेत् ॥
तीक्ष्णमेवाञ्जनं दद्यात्, तीक्ष्णशस्त्रेण मूर्ध्नि च ॥ २३ ॥
[3]कृत्वा काकपदं चर्म सासृग्वा [4]पिशितं क्षिपेत् ॥
पूर्वे मण्डलिनां वेगे दर्वीकरवदाचरेत् ॥ २४ ॥
अगदं मधुसर्पिर्भ्यां द्वितीये पाययेत च ॥
वामयित्वा यवागूं च पूर्वोक्तामथ दापयेत् ॥ २५ ॥
तृतीये शोधितं तीक्ष्णैर्यवागूं पाययेद्धि[5]ताम् ॥
चतुर्थे पञ्चमे चापि दर्वीकरवदाचरेत् ॥ २६ ॥
काकोल्यादिर्हितः षष्ठे पेयश्च मधुरो[6]ऽगदः ॥
हितोऽवपीडे त्वगदः सप्तमे विषनाशनः ॥ २७ ॥

---

१ 'पूर्वोक्त' इति हाराण० । २ 'दापयेत्' इति पा० । ३ 'कुर्यात्' इति हाराण० । ४ 'मासक' इति पा० । ५ '°द्धिता' इति हाराण० । ६ 'मधुरो गण॰' इति पा० ।

पूर्वे राजिमतां वेगेऽलाबुभिः शोणितं हरेत्[1] ॥
अगदं मधुसर्पिर्भ्यां संयुक्तं पाययेत च ॥ २८ ॥
वान्तं द्वितीये त्वगदं पाययेद्विषनाशनम् ॥
तृतीयादिषु त्रिष्वेवं विधिर्दार्वीकरो हितः ॥ २९ ॥
षष्ठेऽञ्जनं तीक्ष्णतममवपीडश्च सप्तमे ॥
गर्भिणीबालवृद्धानां सिराव्यधनवर्जितम्[2] ॥ ३० ॥
विषार्तानां यथोद्दिष्टं विधानं शस्यते मृदु ॥
रक्तावसेकाञ्जनानि नरतुल्यान्यजाविके ॥ ३१ ॥
त्रिगुणं महिषे सोष्ट्रे गवाश्वे द्विगुणं तु तत्[3] ॥
चतुर्गुणं तु नागानां, केवलं सर्वपक्षिणाम् ॥ ३२ ॥
परिषेकान् प्रदेहांश्च सुशीतानवचारयेत् ॥
माषकं त्वञ्जनस्येष्टं द्विगुणं नस्यतो हितम् ॥
पाने चतुर्गुणं पथ्यं वमनेऽष्टगुणं पुनः ॥ ३३ ॥
देशप्रकृतिसात्म्यर्तुविषवेगबलाबलम् ॥
प्रधार्य निपुणं बुद्ध्या ततः कर्म समाचरेत् ॥ ३४ ॥
वेगानुपूर्व्या कर्मोक्तमिदं विषविनाशनम्[4] ॥
कर्मावस्थाविशेषेण विषयोरुभयोः शृणु ॥ ३५ ॥
विवर्णे कठिने शूने सरुजेऽङ्गे विषान्विते[5] ॥
तूर्णं विस्रावणं कार्यमुक्तेन विधिना ततः ॥ ३६ ॥
क्षुधार्तमनिलप्रायं तद्विषार्तं[6] समाहितः ॥
पाययेत रसं सर्पिः शुक्तं[7] क्षौद्रं तथा दधि ॥ ३७ ॥

---

१ 'अथ राजिमता वेगे प्रथमे शोणित हरेत्' इति हाराण०। २ "°व्यधविव°" इति हाराण०। ३ 'गवाश्वयोश्च द्विगुण त्रिगुण महिषोष्ट्रयोः' इति हाराण०। ४ 'वेगानुपूर्वमित्येतत् कर्मोक्त विषनाशनम्' इति हाराण०। ५ 'विषार्दिते' इति हाराण०। ६ 'तद्विषार्तिसमन्वितम्' इति हाराण०। ७ 'तक्र' इति पा०। 'पाययेद्दधि तक्र वा सर्पिः क्षौद्र तथा रसम्' इति हा०।

तृड्दाहघर्मसंमोहे पैत्तं पैत्तविषातुरम्[1] ॥
शीतैः संवाहनस्नानप्रदेहैः समुपाचरेत् ॥ ३८ ॥
शीते शीतप्रसेकार्तं श्लैष्मिकं कफकृद्विषम् ॥
वामयेद्वमनैस्तीक्ष्णैस्तथा मूर्च्छामदान्वितम् ॥ ३९ ॥
कोष्ठदाहरुजाध्मानमूत्रसङ्गरुगन्वितम् ॥
विरेचयेच्छकृद्वायुसङ्गपित्तातुरं नरम् ॥ ४० ॥
शूनाक्षिकूटं निद्रार्तं विवर्णाविललोचनम् ॥
विवर्णं चापि पश्यन्तमञ्जनैः समुपाचरेत् ॥ ४१ ॥
शिरोरुग्गौरवालस्यहनुस्तम्भगलग्रहे ॥
शिरो विरेचयेत् क्षिप्रं मन्यास्तम्भे च दारुणे ॥ ४२ ॥
नष्टसंज्ञं विवृत्ताक्षं भग्नग्रीवं विरेचनैः ॥
चूर्णैः प्रधमनैस्तीक्ष्णैर्विषार्तं समुपाचरेत् ॥ ४३ ॥
ताडयेच्च सिराः क्षिप्रं तस्य शाखाललाटजाः ॥
तास्वप्रसिच्यमानासु मूर्ध्नि शस्त्रेण शस्त्रवित् ॥ ४४ ॥
कुर्यात् काकपदाकारं व्रणमेवं स्रवन्ति ताः ॥
सरक्तं चर्म मांसं वा निक्षिपेच्चास्य मूर्धनि[2] ॥ ४५ ॥
चर्मवृक्षकषायं वा कल्कं[3] वा कुशलो भिषक् ॥
वादयेच्चागदैर्लिप्त्वा[4] दुन्दुभींस्तस्य पार्श्वयोः ॥ ४६ ॥
लब्धसंज्ञं पुनश्चैनमूर्ध्वं चाधश्च शोधयेत् ॥
निःशेषं निर्हरेच्चैव विषं परमदुर्जयम् ॥ ४७ ॥
अल्पमप्यवशिष्टं हि भूयो वेगाय कल्पते ॥
कुर्याद्वा सादवैवर्ण्यज्वरकासशिरोरुजः ॥ ४८ ॥

---

१ 'पैत्ते विषातुरम्' इति हाराण० । २ 'मूर्ध्नि च' इति हाराण० । ३ 'चूर्णं' इति पा० । ४ 'लिप्ता दुन्दुभीस्तस्य' इति हाराण० ।

शोफशोषप्रतिश्यायतिमिरारुचिपीनसान् ॥
तेषु चापि यथादोषं प्रतिकर्म प्रयोजयेत् ॥ ४९ ॥
विषार्तोपद्रवांश्चापि यथास्वं समुपाचरेत् ॥
अथारिष्टां विमुच्याशु[1] प्रच्छयित्वाऽङ्कितं तथा[2] ॥ ५० ॥
दह्यात्तत्र विषं स्कन्नं भूयो वेगाय कल्पते ॥
[3]एवमौषधिभिर्मन्त्रैः क्रियायोगैश्च यत्नतः ॥ ५१ ॥
विषे हृतगुणे देहाद्यदा दोष प्रकुप्यति ॥
तदा पवनमुद्भूतं स्नेहाद्यैः समुपाचरेत् ॥ ५२ ॥
तैलमत्स्यकुलत्थाम्लवर्ज्यैर्विष[4]हरायुतैः ॥
पित्तज्वरहरैः पित्तं कषायस्नेहबस्तिभिः ॥ ५३ ॥
कफमारग्वधाद्येन सक्षौद्रेण गणेन तु ॥
श्लेष्मघ्नैरगदैश्चैव[5] तिक्तै रूक्षैश्च भोजनैः ॥ ५४ ॥
वृक्षप्रपातविषमपतितं मृतमम्भसि ॥
[6]उद्बद्धं च मृतं सद्यश्चिकित्सेन्नष्टसंज्ञवत् ॥ ५५ ॥

गाढं बद्धेऽरिष्टया प्रच्छिते वा तीक्ष्णैर्लेपैस्तद्विधैर्वाऽवशि[7]ष्टैः ॥
शूने गात्रे क्लिन्नमत्यर्थपूति ज्ञेयं मांसं तद्विषात् पूति कष्टम् ॥५६॥
सद्यो विद्धं निस्रवेत् कृष्णरक्तं पाकं यायाद्दह्यते चाप्यभीक्ष्णम् ॥
कृष्णीभूत क्लिन्नमत्यर्थपूति शीर्णं मांसं यात्यजस्रं क्षताच्च ॥ ५७ ॥
तृष्णा मूर्च्छा भ्रान्तिदाहौ ज्वरश्च यस्य स्युस्तं दिग्धविद्धं व्यवस्येत् ॥
पूर्वोद्दिष्टं लक्षणं सर्वमेतज्जुष्टं यस्यालं विषेण व्रणाः स्युः ॥ ५८ ॥
लूतादष्टा दिग्धविद्धा विषैर्वा जुष्टाः प्रायस्ते व्रणाः पूतिमांसाः[8] ॥
तेषां युक्त्या पूतिमांसान्यपोह्य वार्योकोभिः शोणितं चापहृत्य ५९

१ 'विमुच्याप्सु' इति पा० । 'विमोच्याशु' इति हाराण० । २ 'तथा' इति हाराण० । ३ 'एव क्रियाक्रमैर्मन्त्रैरौषधीभिश्च' इति हाराण० । ४ 'मारुतनाशनैः' इति हाराण० । ५ '°श्चापि' इति हाराण० । ६ 'उद्धृत्त च' इति हाराण० । ७ 'विशेषैः' इति हाराण० । ८ 'जुष्टा ये स्युर्ये व्रणाः पूतिमासा.' इति पा० ।

हृत्वा दोषान् क्षिप्रमूर्ध्वं त्वधश्च सम्यक् सिञ्चेत् क्षीरिणां त्वक्कषायैः ॥
अन्तर्वेश्मं दापयेच्च प्रदेहान् शीतैर्द्रव्यैराज्ययुक्तैर्विषघ्नैः ॥ ६० ॥
[१]भिन्ने त्वस्त्रा दुष्टजातेन कार्यः पूर्वो मार्गः पैत्तिके यो विषे च ॥
त्रिवृद्विशल्ये मधुकं हरिद्रे रक्ता नरेन्द्रो लवणश्च वर्गः ॥ ६१ ॥
कटुत्रिकं चैव सुचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि ॥
एषोऽगदो हन्ति विषं प्रयुक्तः पानाञ्जनाभ्यञ्जननस्ययोगैः ॥ ६२ ॥
अवार्यवीर्यो विषवेगहन्ता[२] महागदो नाम महाप्रभावः ॥
विडङ्गपाठात्रिफलाजमोदाहिङ्गूनि वक्रं त्रिकटूनि चैव ॥ ६३ ॥
सर्वश्च वर्गो लवणः[३] सुसूक्ष्मः सचित्रकः क्षौद्रयुतो निधेयः ॥
शृङ्गे गवां शृङ्गमयेन चैव प्रच्छादितः पक्षमुपेक्षितश्च ॥ ६४ ॥
एषोऽगदः स्थावरजङ्गमानां जेता[४] विषाणामजितो हि नाम्ना ॥
प्रपौण्डरीकं सुरदारु मुस्ता कालानुसार्या कटुरोहिणी च ॥ ६५ ॥
स्थौणेयकध्यामकगुग्गुलूनि[५] पुन्नागतालीशसुवर्चिकाश्च ॥
कुटन्नटैलासितसिन्धुवाराः शैलेयकुष्ठे तगर प्रियङ्गुः ॥ ६६ ॥
रोध्रं जलं काञ्चनगैरिकं च समागधं चन्दनसैन्धवं च ॥
सूक्ष्माणि चूर्णानि समानि कृत्वा शृङ्गे निदध्यान्मधुसंयुतानि ॥ ६७
एषोऽगदस्तार्क्ष्य इति प्रदिष्टो विषं विहन्यादपि तक्षकस्य ॥
मांसीहरेणुत्रिफलासुरङ्गी[६]रक्तालतायष्टिकपद्मकानि ॥ ६८ ॥
विडङ्गतालीशसुगन्धिकैलात्वक्कुष्ठपत्राणि सचन्दनानि ॥
भार्गी पटोलं किणिही सपाठा मृगादनी कर्कटिका पुरश्च ॥ ६९ ॥
पालिन्द्यशोकौ क्रमुकं सुरस्याः प्रसूनमारुष्करजं च पुष्पम् ॥
सूक्ष्माणि चूर्णानि[७] समानि शृङ्गे न्यसेत् सपित्तानि समाक्षिकाणि ७०

१ 'भिन्नेऽस्त्रा वै' इति हाराण० । २ 'विषवेगहारी' इति पा० । ३ 'लवणश्च सूक्ष्मः' इति हाराण० । ४ 'हन्ता' इति पा० । ५ 'स्थौणेयकध्यामकपद्मकानि' इति पा० । ६ "सुरङ्गी" इति हाराण० । ७ 'चूर्णान्यथैषां निहितानि शृङ्गे न्यसेच्च पित्तानि समाक्षिकाणि' इति हाराण० ।

वराहगोधाशिखिशल्लकीनां[1] मार्जारजं पार्षतनाकुले च ॥
यस्यागदोऽयं सुकृतो गृहे स्यान्नाम्नर्षभो नाम नरर्षभस्य ॥ ७१ ॥
न तत्र सर्पाः कुत एव कीटास्त्यजन्ति वीर्याणि विषाणि चैव ॥
एतेन भेर्यः पटहाश्च दिग्धा नानद्यमाना विषमाशु हन्युः ॥ ७२ ॥
दिग्धाः पताकाश्च निरीक्ष्य सद्यो विषाभिभूता ह्यविषा भवन्ति ॥
लाक्षा हरेणुर्नलदं प्रियङ्गुः शिग्रुद्वयं यष्टिकपृथ्विकाश्च ॥ ७३ ॥
चूर्णीकृतोऽयं रजनीविमिश्रो सर्पिर्मधुभ्यां[2] सहितो निधेयः ।
शृङ्गे गवां पूर्ववदापिधानस्ततः प्रयोज्योऽञ्जननस्यपानैः ॥ ७४ ॥
संजीवनो नाम गतासुकल्पानेषोऽगदो[3] जीवयतीह मर्त्यान् ॥
श्लेष्मातकीकट्फलमातुलुङ्ग्यः श्वेता गिरिह्वा किणिही सिता च ॥७५॥
सतण्डुलीयोऽगद एष मुख्यो विषेषु दर्वीकरराजिलानाम् ॥
द्राक्षा सुगन्धा नगवृत्तिका च श्वेता समङ्गा[4] समभागयुक्ता ॥७६॥
देयो द्विभागः सुरसाच्छदस्य कपित्थबिल्वादपि दाडिमाच्च ॥
तथाऽर्धभागः[5] सितसिन्धुवारादङ्कोठमूलादपि गैरिकाच्च ॥ ७७ ॥
एषोऽगदः क्षौद्रयुतो निहन्ति विशेषतो मण्डलिनां विषाणि ॥
वंशत्वगार्द्राऽऽमलकं कपित्थं कटुत्रिकं हैमवती सकुष्ठा ॥ ७८ ॥
करञ्जबीजं तगरं शिरीषपुष्पं च गोपित्तयुतं निहन्ति ॥
विषाणि लूतोन्दुरपन्नगानां कैटं च लेपाञ्जननस्यपानैः ॥ ७९ ॥
पुरीषमूत्रानिलगर्भसङ्गान्निहन्ति वर्त्यञ्जननाभिलेपैः ॥
काचार्मकोथान् पटलांश्च घोरान् पुष्पं च हन्त्यञ्जननस्ययोगैः ॥८०॥
समूलपुष्पाङ्कुरवल्कबीजात् क्वाथः शिरीषात् त्रिकटुप्रगाढः ॥
सलावणः क्षौद्रयुतोऽथ पीतो विशेषतः कीटविषं निहन्ति ॥८१॥

---

१ 'वराहगोधाशिखिशल्यकाना' इति पा० । २ 'वर्गो विधेयो मधुसर्पिषाऽऽक्तः' इति हाराण० । ३ 'गतासुकल्पमेषो' इति हाराण० । ४ 'श्वेता च पिष्टा पलिकैश्च भागे' इति पा० । 'च पिष्टा समङ्गा' इति हाराण० । ५ 'तथाऽर्धभागोऽसितसिन्धुवाराद्' इति हाराण० ।

कुष्ठं त्रिकटुकं दार्वी मधुकं लवणद्वयम्।
मालती नागपुष्पं च सर्वाणि मधुराणि च ॥ ८२ ॥
कपित्थरसपिष्टोऽयं शर्कराक्षौद्रसंयुतः ॥
विषं हन्त्यगदः सर्वं मूषिकाणां विशेषतः ॥ ८३ ॥
सोमराजीफलं[1] पुष्पं कटभी सिन्धुवारकः ॥
चोरको वरुणः कुष्ठं सर्पगन्धा ससप्तला ॥ ८४ ॥
पुनर्नवा शिरीषस्य पुष्पमारग्वधार्कजम् ॥
श्यामाऽम्बष्ठाविडङ्गानि तथाऽऽम्राश्मन्तकानि च ॥ ८५ ॥
भूमी कुरबकश्चैव गण एकसरः स्मृतः ॥
एकशो द्वित्रिशो वाऽपि प्रयोक्तव्यो विषापहः ॥ ८६ ॥

इति सुश्रुतसंहितायां कल्पस्थाने सर्पदष्टविषचिकित्सितं
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

अथातो दुन्दुभिस्वनीयं कल्पं[2] व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

धवाश्वकर्णशिरीषतिनिशपलाशपिचुमर्दपाटलिपारिभद्रकाम्रोदुम्बरकरहाटकार्जुनककुभसर्जकपीतनश्लेष्मातकाङ्कोठामलकप्रग्रहकुटजशमीकपित्थाश्मन्तकार्कचिरबिल्वमहावृक्षारुष्करारलुमधुकमधुशिग्रुशाकगोजीमूर्वा[3]भूर्जतिल्वकेक्षुरकगोपघोण्टारिमेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेत्, दद्याच्चात्र पिप्पलीमूलतण्डुलीयकवराङ्गचोच[4]मञ्जिष्ठाकरञ्जिकाहस्तिपिप्पलीमरिच-

---

१ 'सोमराजीफलं मुख्यं कदली सिन्धुवारकः' इति पा०। २ 'अध्याय' इति पा०। ३ "°मूर्वाबिल्वकेक्षुरक°" इति हाराण०। ४ "°चोरकमञ्जिष्ठा......मरीचोत्पलसारिवाविडङ्ग°" इति हाराण०।

विडङ्गगृहधूमानन्तासोमसरलाबाह्लीकगुहाकोशाम्रश्वेतसर्षपवरुण-लवणप्लक्षनिचुलकवञ्जुलवक्रालवर्धमानपुत्रश्रेणीसप्तपर्णटुण्टुकैलवा-लुकनागदन्त्यतिविषाभयाभद्रदारुकुष्ठहरिद्रावचाचूर्णानि लोहानां च समभागानि, ततः क्षारवदागतपाकमवतार्य लोहकुम्भे निदध्यात् ॥ ३ ॥

अनेन दुन्दुभिं लिम्पेत् पताकां तोरणानि च ॥
श्रवणाद्दर्शनात् स्पर्शात् विषात् संप्रतिमुच्यते ॥ ४ ॥
एष क्षारागदो नाम शर्करास्वश्मरीषु च ॥
अर्शःसु वातगुल्मेषु कासशूलोदरेषु च ॥ ५ ॥
अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे ॥
शोफे सर्वसरे चापि देयः श्वासे च दारुणे ॥ ६ ॥
सदा सर्वविषार्तानां सर्वथैवोपयुज्यते ॥
एष तक्षकमुख्यानामपि दर्पाङ्कुशोऽगदः ॥ ७ ॥
विडङ्गत्रिफलादन्तीभद्रदारुहरेणवः ॥
तालीशपत्रमञ्जिष्ठाकेशरोत्पलपद्मकम् ॥ ८ ॥
दाडिमं मालतीपुष्पं रजन्यौ सारिवे स्थिरे ॥
प्रियङ्गुस्तगरं कुष्ठं बृहत्यौ चैलवालुकम् ॥ ९ ॥
सचन्दनगवाक्षीभिरेतैः सिद्धं विषापहम् ॥
सर्पिः कल्याणकं ह्येतद्ग्रहापस्मारनाशनम् ॥ १० ॥
पाण्ड्वामयगरश्वासमन्दाग्निज्वरकासनुत् ॥
शोषिणामल्पशुक्राणां वन्ध्यानां च प्रशस्यते ॥ ११ ॥

---

१ 'निचुलकवर्धमानवञ्जुलपुत्रश्रेणीसप्तपर्णदण्डकैलवालुक' इति हाराण०। २ 'विषं तेषां प्रशाम्यति' इति पा०। ३ 'अर्शःसु वातशूले च शूलगुल्मोदरेषु च' इति पा०। ४ 'शोफे सर्वसरे तथा' इति पा०। ५ 'अरुचिश्वासकासेषु हिक्कापाण्डुगदेषु च' इति पा०। ६ 'एष' इति हाराण०। ७ 'तथा तक्षकमुख्यानामयं' इति हाराण०। ८ 'शोषिणां स्वल्प' इति हाराण०।

अपामार्गस्य बीजानि शिरीषस्य [1]च माषकान् ॥
श्वेते द्वे काकमाचीं च गवां मूत्रेण पेषयेत् ॥ १२ ॥
सर्पिरेतैस्तु संसिद्धं विषसंशमनं परम् ॥
अमृतं नाम विख्यातमपि संजीवयेन्मृतम् ॥ १३ ॥
चन्दनागुरुणी कुष्ठं तगरं तिलपर्णिकम् ॥
[2]प्रपौण्डरीकं नलदं सरलं देवदारु च ॥ १४ ॥
भद्रश्रियं यवफलां भार्गीं नीलीं सुगन्धिकाम् ॥
कालेयकं पद्मकं च मधुकं [3]नागरं जटाम् ॥ १५ ॥
पुन्नागैलैलवालूनि गैरिकं ध्यामकं बलाम् ॥
तोयं सर्जरसं मांसीं [4]शतपुष्पां हरेणुकाम् ॥ १६ ॥
तालीशपत्रं क्षुद्रैलां प्रियङ्गुं सकुटन्नटाम् ॥
शिलापुष्पं सशैलेयं पत्रं कालानुसारिवाम् ॥ १७ ॥
[5]कटुत्रिकं शीतशिवं काश्मर्यं कटुरोहिणीम् ॥
सोमराजीमतिविषां पृथ्विकामिन्द्र[6]वारुणीम् ॥ १८ ॥
उशीरं वरुणं मुस्तं कुस्तुम्बुरु नखं तथा ॥
श्वेते हरिद्रे स्थौणेय लाक्षां च लवणानि च ॥ १९ ॥
कुमुदोत्पलपद्मानि पुष्पं चापि तथाऽर्कजम् ॥
चम्पकाशोकसुमनस्तिल्वकप्रसवानि च ॥ २० ॥
पाटलीशाल्मलीशैलुशिरीषाणां तथैव च ॥
कुसुमं तृणमूल्याश्च सुरभीसिन्धुवार[7]जम् ॥ २१ ॥
धवाश्वकर्णपार्थानां पुष्पाणि तिनिशस्य च ॥
गुग्गुलं कुङ्कुमं बिम्बीं सर्पाक्षीं गन्धनाकुलीम् ॥ २२ ॥

१ 'तथैव च' इति हाराण०। २ 'प्रपौण्डरीक यष्ट्याह्व नलद देवदारु च' इति पा०। ३ 'सरल' इति पा०। ४ 'सितपुष्पा' इति हाराण०। ५ 'श्रीपर्णिकां शीतशिवं त्रिकटु कटुरोहिणीम्' इति पा०। ६ 'इन्द्रजान् यवान्' इति पा०। ७ 'सुरस्यास्तृणशून्याश्च सिन्धुवारस्य यानि च। धवाश्वकर्णयोश्चापि' इति हाराण०।

एतत् संभृत्य संभारं सूक्ष्मचूर्णानि कारयेत् ॥
गोपित्तमधुसर्पिर्भिर्युक्तं शृङ्गे निधापयेत् ॥ २३ ॥
भग्नस्कन्धं विवृत्ताक्षं मृत्योर्दंष्ट्रान्तरं गतम् ॥
अनेनागदमुख्येन मनुष्यं पुनराहरेत् ॥ २४ ॥
एषोऽग्निकल्पं दुर्वारं क्रुद्धस्यामिततेजसः ॥
विषं नागपतेर्हन्यात् प्रसभं वासुकेरपि ॥ २५ ॥
महासुगन्धिनामाऽयं पञ्चाशीत्यङ्गसंयुतः ॥
राजाऽगदानां सर्वेषां राज्ञो हस्ते भवेत् सदा ॥ २६ ॥
स्नातानुलिप्तस्तु नृपो भवेत् सर्वजनप्रियः ॥
भ्राजिष्णुतां च लभते शत्रुमध्यगतोऽपि सन् ॥ २७ ॥
उष्णवर्ज्यो विधिः कार्यो विषार्तानां विजानता ॥
मुक्त्वा कीटविषं तद्धि शीतेनाभिप्रवर्धते ॥ २८ ॥
अन्नपानविधावुक्तमुपधार्य शुभाशुभम् ॥
शुभं देयं विषार्तेभ्यो विरुद्धेभ्यश्च वारयेत् ॥ २९ ॥
फाणितं शिग्रुसौवीरमजीर्णाध्यशनं तथा ॥
वर्जयेच्च समासेन नवधान्यादिकं गणम् ॥ ३० ॥
दिवास्वप्नं व्यवायं च व्यायामं क्रोधमातपम् ॥
सुरातिलकुलत्थांश्च वर्जयेद्धि विषातुरः ॥ ३१ ॥
प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकाङ्क्षं सममूत्रजिह्मम् ॥
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ३२ ॥

इति सुश्रुतसंहितायां कल्पस्थाने दुन्दुभिस्वनीयकल्पो
नाम षष्ठोऽध्यायः ॥ ६ ॥

---

१ 'विधिवत्सूक्ष्मचूर्णितम्' इति पा० । २ 'चिकित्सेद्धि विषातुरम्' इति पा० । ३ '°योजित' इति हाराण० । ४ 'तेनानुलिप्तस्तु' इति हाराण० । ५ 'तेजस्वितां समाप्नोति' इति पा० । ६ 'अन्नाभिकाम' इति पा० । ७ 'प्रसन्नकायेन्द्रियवर्णचेष्टं वैद्यस्तु विद्यादविषं मनुष्यम्' इति पा० । ८ 'दुन्दुभिस्वनीयो नाम' इति हाराण० ।

# सप्तमोऽध्यायः ।

अथातो मूषिककल्पं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पूर्वं[1] शुक्रविषा उक्ता मूषिका ये समासतः ॥
नामलक्षणभैषज्यैरष्टादश निबोध मे[2] ॥ ३ ॥

कालनः पुत्रकः कृष्णो हंसिरश्चिक्कि(क्कि)रस्तथा ॥
छुच्छुन्दरोऽलसश्चैव कषायदशनोऽपि च ॥ ४ ॥

कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा ॥
कोकिलोऽरुणसंज्ञश्च महाकृष्णस्तथोन्दुरः ॥ ५ ॥

श्वेतेन महता सार्धं कपिलेनाखुना तथा ॥
मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः ॥ ६ ॥

शुक्रं पतति यत्रैषां शुक्रस्पृष्टैः[3] स्पृशन्ति वा ॥
नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदुष्यति ॥ ७ ॥

जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च ॥
पीडकोपचयश्चोग्रो विसर्पाः किटिभानि च ॥ ८ ॥

पर्वभेदो रुजस्तीव्रा मूर्च्छा[4]ऽङ्गसदनं ज्वरः ॥
दौर्बल्यमरुचिः श्वासो वमथुर्लोमहर्षणम् ॥ ९ ॥

दष्टरूपं समासोक्तमेतद्[5]व्यासमतः शृणु ॥
लालास्रावो लालनेन हिक्का छर्दिश्च जायते ॥ १० ॥

तण्डुलीयककल्कं तु लिह्यात्तत्र समाक्षिकम् ॥
पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च जायते ॥ ११ ॥

---

१ 'पूर्वमुक्ताः शुक्रविषाः' इति हाराण०। २ 'तान्' इति हाराण०। ३ 'शुक्रघृष्टैः' इति हाराण०। ४ 'ज्वरो मूर्च्छा च दारुणा' इति हाराण०। ५ '°मेतच्च व्यासतः शृणु' इति हाराण०।

चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः ॥
शिरीषेङ्गुदकल्कं तु लिह्यात्तत्र समाक्षिकम् ॥ १२ ॥
[1]कृष्णेन दंशे शोफोऽसृक्छर्दिः प्रायश्च दुर्दिने ॥
शिरीषफलकुष्ठं तु पिबेत् किंशुकभस्मना ॥ १३ ॥
हंसिरेणान्नविद्वेषो जृम्भा रोम्णां च हर्षणम् ॥
पिबेदारग्वधादिं तु सुवान्तस्तत्र मानवः ॥ १४ ॥
[2]चिक्कि(क्कि)रेण शिरोदुःखं शोफो हिक्का वमिस्तथा ॥
जालिनीमदनाङ्कोठकषायैर्वामयेत्तु तम् ॥ १५ ॥
यवनालर्षभीक्षारं बृहत्योश्चात्र दापयेत् ॥
छुच्छुन्दरेण तृट् छर्दिज्वरो दौर्बल्यमेव च ॥ १६ ॥
ग्रीवास्तम्भः पृष्ठशोफो गन्धाज्ञानं विसूचिका ॥
[3]चव्यं हरीतकी शुण्ठी विडङ्गं पिप्पली मधु ॥ १७ ॥
अङ्कोठबीजं च तथा पिबेदत्र विषापहम् ॥
ग्रीवास्तम्भोऽलसेनोर्ध्ववायुर्दंशे रुजा ज्वरः ॥ १८ ॥
महागदं ससर्पिष्कं लिह्यात्तत्र समाक्षिकम् ॥
निद्रा कषायदन्तेन हृच्छोषः कार्श्यमेव च ॥ १९ ॥
क्षौद्रोपेताः शिरीषस्य लिह्यात् सारफलत्वचः ॥
कुलिङ्गेन रुजः[4] शोफो राज्यश्च दंशमण्डले ॥ २० ॥
सहे ससिन्धुवारे च लिह्यात्तत्र समाक्षिके ॥
[5]अजितेनाङ्गकृष्णत्वं छर्दिर्मूर्च्छा च हृद्ग्रहः ॥ २१ ॥

१ 'कृष्णेनासृक् द(छ)र्दयति दुर्दिनेषु विशेषत.' इति हाराण० । २ अस्याग्रे— 'छुच्छुन्दरेण विड्भङ्गो ग्रीवास्तम्भो विजृम्भणम् । यवनालर्षभक्षारं बृहत्योश्चात्र दापयेत्' इति विपर्यस्तः पाठो हाराण०संमतः । ३ 'चव्यं हरीतकी—' इत्यत आरभ्य 'पिबेदत्र विषापहम्' इति यावत् हाराणचन्द्रो न पठति । ४ 'रुजा स्रावो' इति पा० । ५ 'अजितेन वमिर्मूर्च्छा हृद्ग्रहः कृष्णनेत्रता' इति पा० ।

[1]स्नुक्क्षीरपिष्टां पालिन्दीं मञ्जिष्ठां मधुना लिहेत् ॥
चपलेन भवेच्छर्दिर्मूर्च्छा च सह तृष्णया[2] ॥ २२ ॥
क्षौद्रेण त्रिफलां लिह्याद्भद्रकाष्ठजटान्विताम् ॥
कपिलेन व्रणे कोथो ज्वरो[3] ग्रन्थ्युद्गमः सतृट् ॥ २३ ॥
लिह्यान्मधुयुतां श्वेतां श्वेतां चापि पुनर्नवाम् ॥
ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः ॥ २४ ॥
वर्षाभूनीलिनीक्वाथ[5]कल्कसिद्धं घृतं पिबेत् ॥
अरुणेनानिलः क्रुद्धो वातजान् कुरुते गदान् ॥ २५ ॥
महाकृष्णेन पित्तं च श्वेतेन कफ एव च ॥
महता कपिलेनासृक् [6]कपोतेन चतुष्टयम् ॥ २६ ॥
भवन्ति चैषां दंशेषु ग्रन्थिमण्डलकर्णिकाः ॥
पिडकोपचयश्चोग्रः शोफश्च भृशदारुणः ॥ २७ ॥
दधिक्षीरघृतप्रस्थास्त्रयः प्रत्येकशो मताः ॥
करञ्जारग्वधव्योषबृहत्यंशुमतीस्थिराः ॥ २८ ॥
निष्क्वाथ्य चैषां क्वाथस्य चतुर्थोऽशः पुनर्भवेत् ॥
त्रिवृ[7]द्रोजयमृतावक्रसर्पगन्धाः समृत्तिकाः ॥ २९ ॥
कपित्थदाडिमत्वक् च [8]श्लक्ष्णपिष्टाः प्रदापयेत् ॥
तत् सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ॥ ३० ॥

---

१ 'तत्र स्नुहीक्षीरपिष्टा पालिन्दी मधुना लिहेत्' इति हाराण०। २ अस्याग्रे- 'सभद्रकाष्ठ सजटां क्षौद्रेण त्रिफला लिहेत्'। इति हाराण०पाठः। ३ 'ग्रन्थ्युद्गमस्तथा । क्षौद्रेण लिह्यात्त्रिफला श्वेता' इति हाराण०। ४ 'जायते' इति पा०। ५ '°क्वाथसिद्ध तत्र घृत' इति हाराण०। ६ 'कपोतेनैव तु त्रयम्' इति पा०। ७ 'त्रिवृत्तिक्ताऽमृता°' इति पा०। 'तृवृत्तिलामृताचक्र- सर्पगन्धा-' इति हाराण०। ८ 'सुपिष्टानि प्रयोजयेत्' इति पा०। 'सुपिष्टानि तु दापयेत्' इति हाराण०।

पञ्चानामरुणादीनां विषमेतद्व्यपोहति ॥
काकादनीकाकमाच्योः स्वरसेष्वथवा कृतम् ॥ ३१ ॥
सिराश्च [1]स्रावयेत् प्राज्ञः कुर्यात् संशोधनानि च ॥
सर्वेषां च विधिः कार्यो मूषिकाणां विषेष्वयम् ॥ ३२ ॥
दग्ध्वा विस्रावयेद्दंशं प्रच्छितं च प्रलेपयेत् ॥
शिरीषरजनीकुष्ठकुङ्कुमैरमृतायुतैः ॥ ३३ ॥
छर्दनं जालिनीक्काथैः शुकाख्याङ्कोठयोरपि ॥
शुकाख्याकोषवत्योश्च मूलं मदन एव च ॥ ३४ ॥
[2]देवदालीफलं चैव दध्ना पीत्वा विषं वमेत् ॥
सर्वमूषिकदष्टानामेष योगः सुखावहः ॥ ३५ ॥
फलं वचा देवदाली कुष्ठं गोमूत्रपेषितम् ॥
पूर्वकल्पेन यो[3]ज्याः स्युः सर्वोन्दुरुविषच्छिदः ॥ ३६ ॥
विरेचने त्रिवृद्दन्तीत्रिफलाकल्क इष्यते ॥
शिरोविरेचने सारः [4]शिरीषस्य फलानि च ॥ ३७ ॥
हितस्त्रिकटुकाढ्यश्च गोमयस्वरसोऽञ्जने ॥
[5]कपित्थगोमयरसौ लिह्यान्माक्षिकसंयुतौ ॥ ३८ ॥
रसाञ्जनहरिद्रेन्द्रयवकट्वीषु वा कृतम् ॥
प्रातः सातिविषं कल्कं लिह्यान्माक्षिकसंयुतम् ॥ ३९ ॥
तण्डुलीयकमूलेषु सर्पिः सिद्धं पिबेन्नरः ॥
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ॥ ४० ॥
मूषिकाणां विषं प्रायः कुप्यत्यभ्रे[6]ष्वनिर्हृतम् ॥
तत्राप्येष विधिः कार्यो यश्च दूषीविषापह. ॥ ४१ ॥

---

१ 'मोक्षयेत्' इति पा० । २ 'फल वचा देवदाली' इति हाराण० । ३ 'योज्य स्यात्सर्वो·दुरविषच्छिदि' इति पा० । ४ 'शिरीषफलमेव च । हितो कटुत्रिकाद्यश्च' इति हाराण० । ५ 'कपित्थगोमयरसः सक्षौद्रो लेह इष्यते' इति हाराण० । ६ '°त्यभ्रेषु निर्हृतम्' इति हाराण० ।

स्थिराणां रुजतां वाऽपि व्रणानां कर्णिकां भिषक् ॥
पाटयित्वा यथादोषं व्रणवच्चापि शोधयेत् ॥ ४२ ॥
श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदाऽनिलः ॥
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥ ४३ ॥
तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान् ॥
अत्यर्थबधिरोऽन्धश्च[1] सोऽन्योन्यमभिधावति ॥ ४४ ॥
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ॥
सुप्तता जायते दंशे कृष्णं चातिस्रवत्यसृक् ॥ ४५ ॥
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥
येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः ॥ ४६ ॥
बहुशः प्रतिकुर्वाणः क्रियाहीनो विनश्यति ॥
दंष्ट्रिणा येन दष्टश्च तद्रूपं यस्तु पश्यति ॥ ४७ ॥
[2]अप्सु वा यदि वाऽऽदर्शेऽरिष्टं तस्य विनिर्दिशेत् ॥
त्रस्यत्यकस्माद्योऽभीक्ष्णं दृष्ट्वा[3] स्पृष्ट्वाऽपि वा जलम् ॥ ४८ ॥
जलत्रासं तु विद्यात्तं रिष्टं तदपि[4] कीर्तितम् ॥
अदष्टो वा जलत्रासी न कथञ्चन सिध्यति ॥ ४९ ॥
प्रसुप्तोऽथोत्थितो वाऽपि स्वस्थस्त्रस्तो न सिध्यति ॥
दंशं विस्राव्य तैर्दष्टे सर्पिषा परिदाहितम् ॥ ५० ॥
प्रदिह्यादगदैः सर्पिः पुराणं[5] पाययेत च ॥
अर्कक्षीरयुतं ह्यस्य[6] दद्याच्चापि विशोधनम् ॥ ५१ ॥

---

१ 'अव्यक्तबधिरान्धश्च' इति पा०। २ 'अप्सु वाऽऽदर्शबिम्बे वा तस्य तद्रिष्टमादिशेत्' इति पा०। 'वाऽऽदर्शे रिष्ट' इति हाराण०। ३ 'श्रुत्वा दृष्ट्वाऽपि' इति हाराण०। ४ 'तमपि कीर्तयेत्' इति हाराण०। ५ 'पुराण वापि पाययेत्' इति हाराण०। ६ 'वाऽपि दद्यादाशु' इति पा०। 'अर्कक्षीर-युत चास्य दद्याच्छीर्षविरेचनम्' इति हाराण०।

श्वेतां पुनर्नवां चास्य दद्याद्धत्तूरकायुताम् ॥
पललं तिलतैलं च रूपिकायाः पयो गुडः ॥ ५२ ॥
निहन्ति विषमालर्कं मेघवृन्दमिवानिलः ॥
मूलस्य शरपुङ्खायाः कर्षं धत्तूरकार्धिकम् ॥ ५३ ॥
तण्डुलोदकमादाय पेषयेत्तण्डुलैः सह ॥
उन्मत्तकस्य पत्रैस्तु संवेष्ट्यापूपकं पचेत् ॥ ५४ ॥
खादेदौषधकाले [1]तमलर्कविषदूषितः ॥
करोति श्वविकारांस्तु तस्मिञ्जीर्यति चौषधे ॥ ५५ ॥
विकाराः शिशिरे याप्या गृहे वारिविवर्जिते ॥
ततः शान्तविकारस्तु स्नात्वा चैवापरेऽहनि ॥ ५६ ॥
शालिषष्टिकयोर्भक्तं क्षीरेणोष्णेन भोजयेत् ॥
दिनत्रये पञ्चमे वा विधिरेषोऽर्धमात्रया ॥ ५७ ॥
कर्तव्यो भिषजाऽवश्यमलर्कविषनाशनः ॥
कुप्येत् स्वयं विषं यस्य न स जीवति मानवः ॥ ५८ ॥
तस्मात् प्रकोपयेदाशु स्वयं याव[2]त् प्रकुप्यति ॥
[3]बीजरत्नौषधीगर्भैः कुम्भैः शीताम्बुपूरितैः ॥ ५९ ॥
स्नापयेत्तं नदीतीरे समत्रैर्वा चतुष्पथे ॥
बलिं निवेद्य तत्रापि पिण्याकं पललं दधि ॥ ६० ॥
माल्यानि च विचित्राणि मांसं पक्वामकं तथा ॥
अलकाधिपते यक्ष सारमेयगणाधिप ! ॥ ६१ ॥
अलर्कजुष्टमेतन्मे निर्विषं कुरु माचिरात् ॥
दद्यात् संशोधनं [4]तीक्ष्णमेवं स्नातस्य देहिनः ॥ ६२ ॥

---

१ 'तदलर्कविषदूषित०। करोत्यन्यान् विकारास्तु' इति हाराण०। २ 'यावन्न कुप्यति' इति हाराण०। ३ 'क्षिप्तरत्नौषधीबीजैः' इति पा०। ४ 'तीक्ष्णमजस्रं तस्य देहिनः' इति पा०।

अशुद्धस्य सुरूढेऽपि व्रणे कुप्यति तद्विषम् ॥
श्वादयोऽभिहिता व्याला येऽत्र[1] दंष्ट्राविषा मया ॥ ६३ ॥
अतः करोति दष्टस्तु तेषां चेष्टां रुतं नरः ॥
बहुशः प्रतिकुर्वाणो नचिरान्म्रियते च सः ॥ ६४ ॥
नखदन्तक्षतं व्यालैर्यत्कृतं तद्विमर्दयेत् ॥
सिञ्चेत्तैलेन कोष्णेन [2]ते हि वातप्रकोपकाः ॥ ६५ ॥

इति सुश्रुतसंहितायां कल्पस्थाने मूषिककल्पो
नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातः कीटकल्पं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसंभवाः ॥
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः[3] स्मृताः ॥ ३ ॥
सर्वदोषप्रकृतिभिर्युक्तास्ते परिणामतः ॥
कीटत्वेऽपि [4]सुघोराः स्युः सर्वे एव चतुर्विधाः ॥ ४ ॥
कुम्भीनसस्तुण्डिकेरी श्रृङ्गी शतकुलीरकः ॥
उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका ॥ ५ ॥
आवर्तकस्तथोरभ्रः सारिकामुखवैदलौ ॥
शरावकुर्दो[5]ऽभीराजिः परुषश्चित्रशीर्षकः[6] ॥ ६ ॥
शतबाहुश्च यश्चापि रक्तराजिश्च कीर्तितः ॥
अष्टादशेति वायव्याः[7] कीटाः पवनकोपनाः ॥ ७ ॥

---

१ 'वातपित्तप्रकोपणाः' इति हाराण० । २ 'वातपित्तप्रकोपजाः' इति हाराण० । ३ 'त्रिविधाः' इति पा० । ४ 'सुघोरास्ते' इति हाराण० । ५ '°ऽभीराजी' इति हाराण० । ६ 'चित्रमूर्धकः' इति पा० । ७ 'अष्टादशैव ज्ञातव्याः' इति पा० ।

तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः ॥
[1]कौण्डिन्यकः कणभको वरटी पत्रवृश्चिकः ॥ ८ ॥
विनासिका ब्राह्मणिका बिन्दुलो भ्रमरस्तथा ॥
बाह्यकी पिच्चिटः कुम्भी वर्चःकीटोऽरिमेदकः ॥ ९ ॥
पद्मकीटो दुन्दुभिको मकरः शतपादकः ॥
पञ्चालकः पाकमत्स्यः कृष्ण[2]तुण्डोऽथ गर्दभी ॥ १० ॥
क्लीतः कृमिसरारी च यश्चाप्युत्क्लेशकस्तथा ॥
एते ह्यग्निप्रकृतयश्च[3]तुर्विंशतिरेव च ॥ ११ ॥
तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः ॥
विश्वम्भरः पञ्चशुक्लः पञ्च[4]कृष्णोऽथ कोकिलः ॥ १२ ॥
सैरेयकः प्रचलको वलभः किटिभस्तथा ॥
सूचीमुखः कृष्णगोधा यश्च काषायवासिकः ॥ १३ ॥
कीटो गर्दभक[5]श्चैव तथा त्रोटक एव च ॥
त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः ॥ १४ ॥
तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः ॥
तुङ्गीनासो विच्चिलकस्तालको वाहकस्तथा ॥ १५ ॥
कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः ॥
तुण्ड(ङ्ग)नाभः [6]सर्षपिको वल्गुलिः शम्बुकस्तथा ॥ १६ ॥
अग्निकीटश्च विज्ञेया द्वादश प्राणनाशनाः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ॥ १७ ॥
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः ॥
क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ॥ १८ ॥

---

१ 'कौण्डिल्यक·' इति हाराण० । २ 'सूक्ष्मतुण्डोऽथ' इति पा० । ३ '°श्चतुर्विंशाः प्रकीर्तिताः' इति हाराण० । ४ 'वलभी कपिलस्तथा । सैरीयकः पञ्चकृष्णः प्रचलाकोऽथ कोटिक·' इति पा० । ५ 'कोटीगर्दभकश्चैव' इति पा० । 'कीटगर्दभकश्चैव' इति हाराण० । ६ 'सर्षपिकोऽवल्गुली शम्बुकस्तथा । अग्निकीटाश्च घोराः स्युर्द्वादश' इति हाराण० ।

ज्वराङ्गमर्दरोमाञ्चवेदनाभिः समन्वितः ॥
छर्द्यतीसारतृष्णाश्च दाहो मूर्च्छा[1] विजृम्भिका ॥ १९ ॥
वेपथुश्वासहिक्काश्च दाहः शीतं च दारुणम् ॥
पिडकोपचयः शोफो ग्रन्थयो मण्डलानि च ॥ २० ॥
दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च ॥
तैर्भवन्तीह दष्टानां यथास्वं चाप्युपद्रवाः ॥ २१ ॥
येऽन्ये तेषां विशेषास्तु तूर्णं तेषां समादिशेत् ॥
दूषीविषप्रकोपाच्च तथैव विषलेपनात् ॥ २२ ॥
लिङ्गं तीक्ष्णविषेष्वेतच्छृणु मन्दविषेष्वतः ॥
प्रसेकारोचकच्छर्दिशिरोगौरवशीतकाः ॥ २३ ॥
पिडकाकोठकण्डूनां जन्म[2] दोषविभागतः ॥
योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत् ॥ २४ ॥
[3]दूषीविषप्रकाराणां तथा चाप्यनुलेपनात् ॥
एकजातीनतस्तूर्ध्वं कीटान् वक्ष्यामि भेदतः ॥ २५ ॥
सामान्यतो दृष्टलिङ्गैः साध्यासाध्यक्रमेण च ॥
त्रिकण्टः[4] करिणी चापि हस्तिकक्षोऽपराजितः ॥
चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः ॥ २६ ॥
तैर्दष्टस्य श्वयथुरङ्गमर्दो गुरुता गात्राणां दंशः कृष्णश्च भवति॥२७॥

---

१ 'मोहविजृम्भिका' इति हाराण०। २ 'कोठारुपिडकाकण्डूजन्म' इति पा०। ३ 'दूषीविषप्रकोपाच्च' इति पा०। 'दूषीविषप्रकाराणां तथैवाप्यनुलेपनात्' इति च हाराण०। अस्याग्रे हाराणचन्द्रस्तु 'तेन पाण्डु कृशोऽल्पाग्निः कासश्वासज्वरार्दितः। जठरग्रहणीरोगयक्ष्मगुल्मक्षयैश्च स॰॥ निपीडितो मर्मसु च शूनपादकरोऽलस॰। स्वप्ने मार्जारगोमायुव्यालान् सनकुलान् कपीन्॥ प्रायः पश्यति नद्यादीन् शुष्कांश्च स वनस्पतीन्॥' इत्यधिक पाठ पठति। ४ 'त्रिकण्टकः कुणी चापि' इति हाराण०।

प्रतिसूर्यकः, पिङ्गाभासो, बहुवर्णो, निरूपमो गोधेरक इति पञ्च गोधेरकाः; तैर्दष्टस्य शोफो दाहरुजौ च भवतः, गोधेरकेणैतदेव ग्रन्थिप्रादुर्भावो ज्वरश्च ॥ २८ ॥

गलगोकालि—श्वेता, कृष्णा, रक्तराजी, रक्तमण्डला, सर्वश्वेता, सर्षपिकेत्येवं षट्; ताभिर्दष्टे सर्षपिकावर्जं दाहशोफक्लेदा भवन्ति, सर्षपिकया हृदयपीडाऽतिसारश्च, तासु मध्ये सर्षपिका प्राणहरी ॥ २९ ॥

शतपद्यस्तु—परुषा, कृष्णा, चित्रा, कपिला, पीतिका, रक्ता, श्वेता, अग्निप्रभा, इत्यष्टौ, ताभिर्दष्टे शोफो वेदना दाहश्च हृदये, श्वेताग्निप्रभाभ्यामेतदेव, दाहो मूर्च्छा चातिमात्रं श्वेतपिडकोत्पत्तिश्च ॥ ३० ॥

मण्डूकाः—कृष्णः, सारः, कुहको, हरितो, रक्तो, यववर्णाभो, भृकुटी, कोटिकश्चेत्यष्टौ; तैर्दष्टस्य दंशे कण्डूर्भवति पीतफेनागमश्च वक्त्रात्, भृकुटीकोटिकाभ्यामेतदेव दाहश्छर्दिर्मूर्च्छा चातिमात्रम् ॥ ३१ ॥

विश्वम्भराभिर्दष्टे दंशः सर्षपाकाराभिः पिडकाभिः सरुजाभिश्चीयते, शीतज्वरार्तश्च पुरुषो भवति ॥ ३२ ॥

अहिण्डुकाभिर्दष्टे तोददाहकण्डूश्वयथवो भवन्ति मोहश्च; कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्यतीसारज्वरादिभिरभिहन्यते; शूकवृन्ताभिर्दष्टे कण्डूकोठाः प्रवर्धन्ते शूकं चात्र लक्ष्यते ॥ ३३ ॥

---

१ एतद्ग्रन्थस्थले 'प्रतिसूर्यं पिङ्गभासो बहुवर्णो महाशिराः। तथा निरुपमश्चापि पञ्च गौधेरकाः स्मृताः ॥ तैर्भवन्तीह दष्टाना वेगज्ञानानि सर्पवत्। रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः' इति श्लोका हाराणचन्द्रः पठति । 'चतुष्पदाः कीटाः प्रतिसूर्यक॰' इति च पा० । २ 'विरूपकः' इति पा० । ३ 'इति पञ्च' इति पा० । ४ 'गोगति॰' इति, 'गलगोली' (इति हाराण॰), 'श्वेतकृष्णा' इति च पा० । ५ 'तासु प्राणहरी' इत्यंशो हाराणचन्द्रासमतः। ६ 'कपिलिका' इति हाराण० । ७ 'दंशकण्डू॰' इति हाराण० । ८ 'पिडकाभिश्चीयते' इति हाराण० ।

पिपीलिकाः—स्थूलशीर्षा, संवाहिका, ब्राह्मणिका, अङ्गुलिका; कपिलिका, चित्रवर्णेति षट्; ताभिर्दष्टे[1] दंशे श्वयथुरग्निस्पर्शवद्दाह-शोफौ भवतः ॥ ३४ ॥

मक्षिकाः—कान्तारिका, कृष्णा, पिङ्गला, मधूलिका, काषायी, [2]स्थालिकेत्येवं षट्; ताभिर्दष्टस्य कण्डुशोफदाहरुजो भवन्ति, स्थालिकाकाषायीभ्यामेत[3]देव श्यावपिडकोत्पत्तिरुपद्रवाश्च ज्वरादयो भवन्ति, काषायी स्थालिका च प्राणहरे[4] ॥ ३५ ॥

मशकाः—सामुद्रः, परिमण्डलो, हस्तिमशकः, कृष्णः, पार्वतीय इति पञ्च; तैर्दष्टस्य तीव्रा कण्डूर्दंशशोफश्च, पार्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः ॥ ३६ ॥

नखावकृष्टेऽत्यर्थं पिडकादाहपाका भवन्ति ॥
जलौकसां दष्टलक्षणमुक्तं चिकित्सितं च ॥ ३७ ॥

भवन्ति चात्र—

गोधेरकः स्थालिका च ये च श्वेताग्निसप्रभे ॥
भ्रूकुटी कोटिकश्चैव न सिध्यन्त्येकजातिषु ॥ ३८ ॥
शवमूत्रपुरीषैस्तु सविषैरवमर्शनात् ॥
स्युः कण्डूदाहकोठारु.पिडकातोदवेदनाः ॥ ३९ ॥
प्रक्लेदवांस्तथा स्रावो भृशं संपाचयेत्त्वचम् ॥
दिग्धविद्धक्रियास्तत्र यथावदवचारयेत् ॥ ४० ॥
नावसन्नं न चोत्सन्नमतिसंरम्भवेदनम् ॥
दंशादौ विपरीतार्त्तिं कीटदष्टं सुबाधकम् ॥ ४१ ॥

---

१ 'दष्टस्य कोठ स्पर्शोऽग्निदग्धवच्च, सर्वा एव साध्याः' इति पा०। २ 'दाहशोफौ भवत, स्थालिका°' इति हाराण०। ३ 'पिडकाश्च सोपद्रवा भवन्ति। मशका.' इति हा०। ४ अस्याग्रे-'ताभिर्दष्टस्य दाहशोफौ भवतः, स्थालिकाकापायीभ्यामेतदेव पिडकाश्च सोपद्रवा भवन्ति' इति हाराण०।

दष्टानुग्रविषैः कीटैः सर्पवत् समुपाचरेत् ॥
विविधानां तु पूर्वेषां[1] त्रैविध्येन क्रिया हिताः ॥ ४२ ॥
स्वेदमालेपनं सेकं चोष्णमत्रावचारयेत् ॥
अन्यत्र मूर्च्छितादृशात् पाककोथप्रपीडितात् ॥ ४३ ॥
विषघ्नं च विधिं सर्वं बहुशः[2] शोधनानि च ॥
शिरीषकटुकाकुष्ठवचा[3]रजनिसैन्धवैः ॥ ४४ ॥
क्षीरमज्जवसासर्पि शुण्ठीपिप्पलिदारुपु ॥
उत्कारिका स्थिरादौ वा सुकृता स्वेदने हिता ॥ ४५ ॥
न [4]स्वेदयेत चादशं धूमं वक्ष्यामि वृश्चिके ॥
अगदानेकजातीपु प्रवक्ष्यामि पृथक् पृथक् ॥ ४६ ॥
कुष्ठ वक्रं वचा पाठा बिल्वमूलं सुवर्चिका ॥
गृहधूमं हरिद्रे द्वे त्रिकण्टकविषे हिताः ॥ ४७ ॥
[5]रजन्यागारधूमश्च वक्रं कुष्ठं पलाशजम् ॥
गलगोलिकदष्टानामगदो विषनाशनः ॥ ४८ ॥
कुङ्कुमं तगरं शिग्रु पद्मकं रजनीद्वयम् ॥
अगदो जलपिष्टोऽयं शतपद्विषनाशनः ॥ ४९ ॥
मेषशृङ्गी वचा पाठा निचुलो रोहणी जलम् ॥
सर्वमण्डूकदष्टानामगदोऽयं विषापहः ॥ ५० ॥
[6]ध्वाश्वगन्धातिबलाबलासातिगुहागुहाः ॥
विश्वम्भराभिदष्टानामगदोऽयं विषापहः ॥ ५१ ॥

---

१ 'पिडका· सदाहपाका·' इति हाराण० । २ 'सर्पाणा' इति पा० । 'त्रिविधाना तु सर्पाणां त्रिविधा' इति हाराण० । 'कुर्यात् सशोधनानि च' इति हाराण० । ३ '°निशोग्रासिन्धुसभवै·' इति पा० । ४ 'स्वेदयेत्तथा दशं' इति हाराण० । ५ 'रजन्यागारधूमश्च' इति श्लोकार्धस्थले—'प्रतिसूर्यकदष्टाना सर्पदष्टवदाचरेत् । आगारधूमरजनीचक्र कुष्ठ पलाशजम्' ॥ इति पाठो हाराण०समतः । ६ 'वचाश्वगन्धा' इति पा० ।

शिरीषं तगरं कुष्ठं शालिपर्णी सहा निशे ॥
अहिण्डुकाभिर्दष्टानामगदो विषनाशनः ॥ ५२ ॥
कण्डूमकाभिर्दष्टानां रात्रौ शीताः क्रिया हिताः ॥
दिवा ते नैव सिध्यन्ति सूर्यरश्मिबलार्दिताः ॥ ५३ ॥
चक्रं कुष्ठमपामार्गः शूकवृन्तविषेऽगदः ॥
भृङ्गस्वरसपिष्टा वा कृष्णवल्मीकमृत्तिका ॥ ५४ ॥
पिपीलिकाभिर्दष्टानां मक्षिकामशकैस्तथा ॥
गोमूत्रेण युतो लेपः कृष्णवल्मीकमृत्तिका ॥ ५५ ॥
नखावघृष्टसंजाते शोफे भृङ्गरसो हितः[1] ॥
प्रतिसूर्यकदष्टानां सर्पदष्टवदाचरेत् ॥
त्रिविधा वृश्चिकाः प्रोक्ता मन्दमध्यमहाविषाः ॥ ५६ ॥
गोशकृत्कोथजा मन्दा मध्याः काष्ठेष्टिकोद्भवाः ॥
सर्पकोथोद्भवास्तीक्ष्णा ये चान्ये विषसंभवाः ॥ ५७ ॥
मन्दा द्वादश मध्यास्तु त्रयः पञ्चदशोत्तमाः ॥
दश विंशतिरित्येते संख्यया परिकीर्तिताः ॥ ५८ ॥

कृष्णः श्यावः कर्बुरः पाण्डुवर्णो[2] गोमूत्राभः कर्कशो[3] मेचकश्च ॥
पीतो[4] धूम्रो रोमशः शाड्वलाभो रक्तः श्वेतेनोदरेणेति मन्दाः[5]॥५९॥
युक्ताश्चैते वृश्चिकाः पुच्छदेशे स्युर्भूयोभिः पर्वभिश्चेतरेभ्यः ॥
एभिर्दष्टे वेदना वेपथुश्च गात्रस्तम्भः कृष्णरक्तागमश्च ॥ ६० ॥
शाखादष्टे वेदना चोर्ध्वमेति दाहस्वेदौ दंशशोफो ज्वरश्च ॥
रक्तः पीतः कापिलेनोदरेण सर्वे धूम्राः पर्वभिश्च त्रिभिः स्युः॥६१॥

---

१ 'नखावकृष्टे स्याल्लेपे मार्कवस्वरसो हितः' इति पा०। 'नखावघृष्ट...... सर्पदष्टवदाचरेत्' इति श्लोकौ हाराणचन्द्रासंमत। २ 'काण्डवर्णो' इति पा०। ३ 'मेचको रूक्षवर्णे' इति पा०। ४ 'श्वेतो रक्तो' इति हाराण०। ५ 'रक्ताश्चैते मन्दवीर्या मतास्तु' इति हाराण०।

एते मूत्रोच्चारपूत्यण्डजाता मध्या ज्ञेयास्त्रिप्रकारोरगाणाम् ॥
यस्यैतेषामन्वयाद्यः प्रसूतो दोषोत्पत्तिं तत्स्वरूपां स कुर्यात् ॥६२॥
जिह्वाशोफो भोजनस्यावरोधो[1] मूर्च्छा चोग्रा मध्यवीर्याभिर्दष्टे[2] ॥
श्वेतश्चित्रः श्यामलो लोहिताभो[3] रक्तः श्वेतो रक्तनीलोदरौ च ॥६३॥
[4]पीतोऽरक्तो नीलपीतोऽपरस्तु रक्तो नीलो नीलशुक्लस्तथा च ॥
रक्तो बभ्रुः पूर्ववच्चैकपर्वा यश्चापर्वा पर्वणी द्वे च यस्य ॥ ६४ ॥
नानारूपा वर्णतश्चापि घोरा ज्ञेयाश्चैते वृश्चिकाः प्राणचौराः[5] ॥
जन्मैतेषां सर्पकोथात् प्रदिष्टं देहेभ्यो वा घातितानां विषेण ॥६५॥
एभिर्दष्टे सर्पवेगप्रवृत्तिः स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च ॥
खेभ्यः कृष्णं [6]शोणितं याति तीव्रं तस्मात्[7] प्राणैस्त्यज्यते शीघ्रमेव ॥

उग्रमध्यविषैर्दष्टं चिकित्सेत् सर्पदष्टवत्[8] ॥
आदंशं स्वेदितं चूर्णैः प्रच्छितं प्रतिसारयेत् ॥ ६७ ॥
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ॥
मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ ६८ ॥
लेपे, स्वेदे सुखोष्णं च गोमयं हितमिष्यते ॥
पाने क्षौद्रयुतं सर्पिः[9] क्षीरं वा बहुशर्करम् ॥ ६९ ॥
दंशं मन्दविषाणां तु चक्रतैलेन सेचयेत् ॥
[10]विदारीगणसिद्धेन सुखोष्णेनाथवा पुनः ॥ ७० ॥

---

१ 'रसनस्योपघातो' इति पा० । २ 'वृश्चिकैर्मध्यमैस्तु' इति पा० । ३ 'लोहितश्च कृष्ण' पीतः शुक्लनीलोदरौ च' इति पा० । ४ 'अभ्याभासः कापिलो रक्तकोष्ठो यो वा युक्त॰ कापिलेनोदरेण' इति, 'कृष्णः श्वेतः श्वेतकृष्णौ पवित्रौ रक्ताभ्याभश्चाप्यथान्योन्यचित्रौ' इति च पा० । ५ 'मृत्युरूपाः' इति पा० । ६ 'शोणित चापि' इति हाराण० । ७ 'पश्चात् प्राणान् मुञ्चति क्षिप्रमेव' इति पा० । ८ अस्याग्रे–'दश मन्दविषाणा' इति ७०तमोऽत्र श्लोकः पठ्यते, 'आदश स्वेदित' इत्यत आरभ्य 'क्षीर वा बहुशर्करम्' इति ६९तमश्लोकपर्यन्तो ग्रन्थ' 'विषघ्नैरुपनाहयेत्' इति च ७१तमश्लोकपूर्वार्धाग्रे पठ्यते हाराणचन्द्रेण । ९ 'सर्पिश्च सक्षौद्र' इति पा० । १० 'विदार्यादिसुसिद्धेन' इति हाराण० ।

कुर्याच्चोत्कारिकास्वेदं विषघ्नैरुपनाहयेत्[1] ॥
गुडोदकं वा सुहिमं चातुर्जातकसंयुतम्[2] ॥ ७१ ॥
पानमस्मै प्रदातव्यं क्षीरं वा सगुडं हिमम् ॥
शिखिकुक्कुटबर्हाणि सैन्धवं तैलसर्पिषी ॥ ७२ ॥
[3]धूमो हन्ति प्रयुक्तस्तु शीघ्रं वृश्चिकजं विषम् ॥
कुसुम्भपुष्पं रजनी निशा वा कोद्रवं तृणम् ॥ ७३ ॥
एभिर्घृताक्तैर्धूपस्तु पायुदेशे प्रयोजितः ॥
नाशयेदाशु कीटोत्थं वृश्चिकस्य च यद्विषम् ॥ ७४ ॥
लूताविष घोरतमं दुर्विज्ञेयतमं च तत् ॥
[4]दुश्चिकित्स्यतमं चापि भिषग्भिर्मन्दबुद्धिभिः ॥ ७५ ॥
सविषं निर्विषं चैतदित्येवं परिशङ्किते ॥
विषघ्नमेव कर्तव्यमविरोधि यदौषधम् ॥ ७६ ॥
अगदानां हि संयोगो विषजुष्टस्य युज्यते ॥
निर्विषे मानवे युक्तोऽगदः संपद्यतेऽसुखम् ॥ ७७ ॥
तस्मात् सर्वप्रयत्नेन[5] ज्ञातव्यो विषनिश्चयः ॥
अज्ञात्वा विषसद्भावं भिषग्व्यापादयेन्नरम् ॥ ७८ ॥

प्रोद्भिद्यमानस्तु यथाङ्कुरेण न व्यक्तजातिः प्रविभाति वृक्षः ॥
तद्वद्दुरालक्ष्यतमं हि तासां विषं शरीरे प्रविकीर्णमात्रम् ॥ ७९ ॥
[6]ईषत्सकण्डु प्रचलं सकोठमव्यक्तवर्णं प्रथमेऽहनि स्यात् ॥
अन्तेषु शूनं परिनिम्नमध्यं प्रव्यक्तरूप च दिने द्वितीये ॥ ८० ॥
त्र्यहेण तद्दर्शयतीह रूप विषं चतुर्थेऽहनि कोपमेति ॥
अतोऽधिकेऽह्नि प्रकरोति जन्तोर्विषप्रकोपप्रभवान् विकारान्॥८१॥

---

१ 'विषघ्नैरुपनाहनै' इति पा० । २ 'चातुर्जातकवासितम्' इति हाराण० । ३ 'धूपो हन्ति' इति हाराण० । ४ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ५ 'तस्माद्यत्नेन भिषजा' इति पा० । ६ 'ईषच्च कण्डूः' इति हाराण० ।

षष्ठे दिने विप्रसृतं तु सर्वान् मर्मप्रदेशान् भृशमावृणोति ॥
तत् सप्तमेऽत्यर्थपरीतगात्रं व्यापादयेन्मर्त्यमतिप्रवृद्धम् ॥ ८२ ॥
यास्तीक्ष्णचण्डोग्रविषा हि लूतास्ताः सप्तरात्रेण[1] नरं निहन्युः ॥
अतोऽधिकेनापि निहन्युरन्या यासां विषं मध्यमवीर्यमुक्तम् ॥८३॥
यासां कनीयो विषवीर्यमुक्तं ताः पक्षमात्रेण विनाशयन्ति ॥
तस्मात् प्रयत्नं भिषगत्र कुर्यादादंशपाताद्विषघातियोगैः ॥ ८४ ॥
विषं तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण ॥
सप्तप्रकारं विसृजन्ति लूतास्तदुग्रमध्यावरवीर्ययुक्तम् ॥ ८५ ॥
सकण्डुकोठं स्थिरमल्पमूलं लालाकृतं मन्दरुजं वदन्ति ॥
शोफश्च कण्डूश्च पुलालिका[2] च धूमायनं चैव नखाग्रदंशे ॥ ८६ ॥
दंशं तु मूत्रेण सकृष्णमध्यं सरक्तपर्यन्तमवेहि दीर्णम् ॥
दंष्ट्राभिरुग्रं कठिनं विवर्णं जानीहि दंशं स्थिरमण्डलं च ॥ ८७ ॥
रजःपुरीषेन्द्रियजं हि विद्धि स्फोटं विपक्वामलपीलुपाण्डुम् ॥
एतावदेतत् समुदाहृतं तु वक्ष्यामि लूताप्रभवं पुराणम् ॥ ८८ ॥
सामान्यतो दृष्टमसाध्यसाध्यं चिकित्सितं चापि यथाविशेषम् ॥८९॥

विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् ॥
वशिष्ठं कोपयामास गत्वाऽऽश्रमपदं किल ॥ ९० ॥
कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः ॥
अपतन् दर्शनादेव[3] रवेस्तत्समतेजसः ॥ ९१ ॥
[4]तृणे महर्षिणा लूने धेन्वर्थं संभृतेऽपि च ॥
ततो जातास्त्विमा घोरा नानारूपा महाविषाः ॥
अपकाराय वर्तन्ते नृपसाधनवाहने ॥ ९२ ॥

---

१ "°रात्रेण विनाशयन्ति' इति हाराण० । २ 'पुलानिका' इति हाराण० । ३ "°मधस्तात्तीक्ष्णवर्चस·' इति हाराण० । 'दर्शनादेव ह्यधस्तात्तीक्ष्ण°' इति पा० । ४ 'लूने तृणे महर्षीणां' इति हाराण० ।

यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ॥
तस्माल्लूतेति भाष्यन्ते सङ्ख्यया ताश्च षोडश ॥ ९३ ॥
कृच्छ्रसाध्यास्तथाऽसाध्या लूतास्तु द्विविधाः स्मृताः ॥
तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु ॥ ९४ ॥
त्रिमण्डला तथा श्वेता कपिला पीतिका तथा ॥
आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता ॥ ९५ ॥
ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना ॥
भवन्ति च विशेषेण गदा श्लैष्मिकवातिकाः ॥ ९६ ॥
सौवर्णिका लाजवर्णा जालिन्येणीपदी तथा ॥
कृष्णाऽग्निवर्णा काकाण्डा मालागुणाऽष्टमी तथा[1] ॥ ९७ ॥
ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ॥
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ९८ ॥
पिडका विविधाकारा मण्डलानि महान्ति च ॥
[2]महान्तो मृदवः शोफा रक्ताः श्यावाश्चलास्तथा ॥ ९९ ॥
सामान्यं सर्वलूतानामेतदादंशलक्षणम् ॥
विशेषलक्षणं तासां वक्ष्यामि सचिकित्सितम् ॥ १०० ॥
त्रिमण्डलाया दशेऽसृक् कृष्णं स्रवति दीर्यते ॥
बाधिर्यं कलुषा दृष्टिस्तथा दाहश्च नेत्रयोः ॥ १०१ ॥
तत्रार्कमूलं रजनी नाकुली पृश्निपर्णिका ॥
[3]पानकर्मणि शस्यन्ते [4]नस्यालेपाञ्जनेषु च ॥ १०२ ॥
श्वेतायाः पिडका दंशे श्वेता कण्डूमती भवेत् ॥
दाहमूर्च्छाज्वरवती विसर्पक्लेदरुक्करी ॥ १०३ ॥

---

१ 'स्मृता' इति हाराण०। २ 'शोफा महान्तो मृदवो रक्ताः' इति हाराण०। ३ 'नस्तकर्मणि' इति हाराण०। ४ 'पानाभ्यङ्गाञ्जनेषु च' इति हाराण०।

तत्र चन्दनरास्नैलाहरेणुनलवञ्जुलाः ॥
कुष्ठं लामज्जकं वक्रं नलदं चागदो हितः ॥ १०४ ॥
आदंशे पिडका ताम्रा कपिलायाः स्थिरा भवेत् ॥
शिरसो गौरवं दाहस्तिमिरं भ्रम एव च ॥ १०५ ॥
तत्र पद्मककुष्ठैलाकरञ्जककुभत्वचः ॥
स्थिरार्कपर्ण्यपामार्गदूर्वाब्राह्म्यो विषापहाः ॥ १०६ ॥
आदंशे पीतिकायास्तु [1]पिडका पीतिका स्थिरा ॥
भवेच्छर्दिर्ज्वरः शूलं मूर्ध्नि रक्ते [2]तथाऽक्षिणी ॥ १०७ ॥
तत्रेष्टाः कुटजोशीरतुङ्गपद्मकवञ्जुलाः ॥
शिरीषकिणिहीशेलुकदम्बककुभत्वचः ॥ १०८ ॥
रक्तमण्डनिभे दंशे पिडकाः सर्षपा इव ॥
जायन्ते तालुशोषश्च दाहश्चार्[3]कविषार्दिते ॥ १०९ ॥
तत्र प्रियङ्गुह्रीबेरकुष्ठलामज्जवञ्जुलाः ॥
अगदः शतपुष्पा च सपिप्पलवटाङ्कुराः ॥ ११० ॥
पूतिर्मूत्रविषादंशो विसर्पी कृष्णशोणितः ॥
कासश्वासवमीमूर्च्छाज्वरदाहसमन्वितः ॥ १११ ॥
मनःशिलालमधुककुष्ठचन्दनपद्मकैः ॥
मधुमिश्रैः सलामज्जैरगदस्तत्र कीर्तितः ॥ ११२ ॥
[4]आपाण्डुपिडको दंशो दाहक्लेदसमन्वितः ॥
रक्ताया रक्तपर्यन्तो विज्ञेयो रक्तसंयुतः ॥ ११३ ॥
कार्यस्तत्रागदस्तोयचन्दनोशीरपद्मकैः ॥
तथैवार्जुनशेलुभ्यां त्वग्भिराम्रातकस्य च ॥ ११४ ॥

---

१ 'पिडका जायते स्थिरा । तथा छर्दि°' इति हाराण० । २ 'स्याता च लोचने' इति हाराण० । ३ '°विषान्विते' इति हाराण० । ४ 'दशश्च पाण्डुपिडको दाह°' इति हाराण० ।

पिच्छिलं कसनादंशाद्रुधिरं शीतलं स्रवेत् ॥
कासश्वासौ च तत्रोक्तं रक्तलूताचिकित्सितम् ॥ ११५ ॥
पुरीषगन्धिरल्पासृक् कृष्णाया दंश एव तु ॥
ज्वरमूर्च्छावमीदाहकासश्वाससमन्वितः ॥ ११६ ॥
तत्रैलावक्रसर्पाक्षीगन्धनाकुलिचन्दनैः ॥
महासुगन्धिसहितैः प्रत्याख्यायागदः स्मृतः ॥ ११७ ॥
दंशे [1]दाहोऽग्निवक्त्रायाः स्रावोऽत्यर्थं ज्वरस्तथा ॥
[2]चोषकण्डूरोमहर्षा दाहविस्फोटसंयुतः ॥ ११८ ॥
कृष्णाप्रशमनं चात्र प्रत्याख्याय प्रयोजयेत् ॥
सारिवोशीरयष्ट्याह्वचन्दनोत्पलपद्मकम् ॥ ११९ ॥
सर्वासामेव युञ्जीत विषे श्लेष्मातकत्वचम् ॥
भिषक् सर्वप्रकारेण तथा [3]चाक्षीवपिप्पलम् ॥ १२० ॥
कृच्छ्रसाध्यविषा ह्यष्टौ प्रोक्ता द्वे च यदृच्छया ॥
अवार्यविषवीर्याणां लक्षणानि निबोध मे ॥ १२१ ॥
[4]ध्यामः सौवर्णिकादंशः सफेनो मत्स्यगन्धकः ॥
श्वासः कासो ज्वरस्तृष्णा मूर्च्छा चात्र सुदारुणा ॥ १२२ ॥
आदंशे लाजवर्णाया [5]ध्यामं पूति स्रवेदसृक् ॥
दाहो मूर्च्छाऽतिसारश्च [6]शिरोदुःखं च जायते ॥ १२३ ॥
[7]घोरो दंशस्तु जालिन्या राजिमानवदीर्यते ॥
स्तम्भः श्वासस्तमोवृद्धिस्तालुशोषश्च जायते ॥ १२४ ॥

---

१ 'दाहोऽग्निवर्णायाः' इति हाराण०। २ 'चोषकण्डूरोमहर्षा विदाहः स्फोटजन्म च' इति पा०। 'चोषकण्डूरोमहर्षो दाहश्च स्फोटजन्म च' इति हाराण०। ३ 'च क्षीरपिप्पलम्' इति हाराण०। ४ 'ध्मातः' इति हाराण०। ५ 'आम' इति हाराण०। ६ 'मूर्ध्नि चात्यर्थवेदना' इति पा०। ७ 'घोरदंशस्तु' इति हाराण०।

एणीपद्यास्तथा दंशो भवेत् कृष्णतिलाकृतिः ॥
तृष्णामूर्च्छाज्वरच्छर्दिकासश्वाससमन्वितः ॥ १२५ ॥[1]
[2]दशः काकाण्डिकादष्टे पाण्डुरक्तोऽतिवेदनः ॥
तृण्मूर्च्छाश्वासहृद्रोगहिक्काकासाः स्युरुच्छ्रिताः ॥ १२६ ॥
रक्तो मालागुनादंशो धूमगन्धोऽतिवेदनः ॥
बहुधा च विशीर्येत दाहमूर्च्छाज्वरान्वितः ॥ १२७ ॥
असाध्यास्त्वप्यभिहितं प्रत्याख्यायाशु योजयेत् ॥
दोषोच्छ्रायविशेषेण दाहच्छेदविवर्जितम् ॥ १२८ ॥
साध्याभिराभिर्लूताभिर्[3]दष्टमात्रस्य देहिनः ॥
वृद्धिपत्रेण मतिमान् सम्यगादंशमुद्धरेत् ॥ १२९ ॥
अमर्मणि विधानज्ञो वर्जितस्य ज्वरादिभिः ॥
दंशस्योत्कर्तनं कुर्यादल्पश्वयथुकस्य च ॥ १३० ॥
मधुसैन्धवसंयुक्तैरगदैर्लेपयेत्ततः ॥
प्रियङ्गुरजनीकुष्ठसमङ्गामधुकैस्तथा ॥ १३१ ॥
सारिवां मधुकं द्राक्षां पयस्यां क्षीरमोरटम् ॥
विदारीगोक्षुरक्षौद्रमधुकं पाययेत वा ॥ १३२ ॥
क्षीरिणां त्वक्कषायेण सुशीतेन च सेचयेत् ॥
उपद्रवान् यथादोषं विषघ्नैरेव साधयेत् ॥ १३३ ॥
नस्याञ्जनाभ्यञ्जनपानधूम तथाऽवपीडं कवलग्रहं च ॥
संशोधनं चोभयत प्रगाढं कुर्यात्सिरामोक्षणमेव चात्र १३४
कीटदष्टव्रणान् सर्वानहिदष्टव्रणानपि ॥
आ[4]दाहपाकात्तान् सर्वाञ्चिकित्सेद्दुष्टवद्भिषग् ॥ १३५ ॥

१ 'तृष्णामूर्च्छाज्वरश्वासदाहकृत् प्राणनाशनः' इति पा०। 'कृष्णाप्रशमनश्चात्र' इति हाराण०। २ 'तृण्मूर्च्छाश्वास°' इति 'दशः काकाण्डिका°' इति चैव विपर्यासेन पठति हाराण०। ३ 'साध्याभिरपि लूताभिः' इति पा०। ४ 'आदशपाक यत्नेन चिकित्सेत् सर्पदष्टवत्' इति पा०।

विनिवृत्ते ततः शोफे कर्णिकापातनं हितम् ॥
निम्बपत्रं त्रिवृद्दन्ती कुसुम्भं[1] कुसुमं मधु ॥ १३६ ॥
गुग्गुलुः सैन्धव किण्व वर्चः पारावतस्य च ॥
विषवृद्धिकरं चान्नं हित्वा संभोजनं हितम् ॥ १३७ ॥
विषेभ्यः खलु सर्वेभ्यः कर्णिकामरुजां स्थिराम् ॥
प्रच्छयित्वा मधूनिमश्रैः[2] शोधनीयैरुपाचरेत् ॥ १३८ ॥
सप्तषष्ठस्य कीटानां शतस्यैतद्विभागशः ॥
दृष्टलक्षणमाख्यातं चिकित्सा चाप्यनन्तरम् ॥ १३९ ॥
सविंशमध्यायशतमेतदुक्तं विभागशः ॥
इहोद्दिष्टाननिर्दिष्टानर्थान्[3] वक्ष्याम्यथोत्तरे ॥ १४० ॥
सनातनत्वाद्वेदानामक्षरत्वात्तथैव च ॥
तथा दृष्टफलत्वाच्च हितत्वादपि देहिनाम् ॥ १४१ ॥
वाक्समूहार्थविस्तारात् पूजितत्वाच्च देहिभिः ॥
चिकित्सितात् पुण्यतमं न किंचिदपि शुश्रुमः ॥ १४२ ॥
ऋषेरिन्द्रप्रभावस्यामृतयोनेर्भिषग्गुरोः ॥
धारयित्वा तु विमलं मतं परमसंमतम् ॥
उक्ताहारसमाचार इह प्रेत्य च मोदते ॥ १४३ ॥

इति सुश्रुतसहितायां कल्पस्थाने कीटकल्पो नामाष्टमोऽध्याय. ॥ ८ ॥

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण
महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां
पञ्चमं कल्पस्थानं समाप्तम् ॥ ५ ॥



१ 'कुसुम्भ रजनी मधु' इति हाराण० । २ 'मधुयुतैः' इति हाराण० ।
३ '"ननिर्दिष्टान् सर्वान् वक्ष्याम्य"' इति हाराण० ।

# अथ उत्तरतन्त्रम् ।

## प्रथमोऽध्यायः ।

अथात औपद्रविकमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अध्यायानां शते विंशे यदुक्तमसकृन्मया ॥
वक्ष्यामि बहुधा सम्यगुत्तरेऽर्थानिमानिति ॥ ३ ॥
इदानीं तत् प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम् ॥
निखिलेनोपदिश्यन्ते यत्र रोगाः पृथग्विधाः ॥ ४ ॥
[1]शालाक्यतन्त्राभिहिता विदेहाधिपकीर्तिताः ॥
ये च विस्तरतो दृष्टाः कुमाराबाधहेतवः ॥ ५ ॥
षट्सु कायचिकित्सासु ये चोक्ताः परमर्षिभिः ॥
उपसर्गादयो रोगा ये चाप्यागन्तवः स्मृताः ॥ ६ ॥
त्रिषष्टी रससंसर्गाः स्वस्थवृत्तं तथैव च ॥
युक्तार्था युक्तयश्चैव दोषभेदास्तथैव च ॥ ७ ॥
यत्रोक्ता विविधा अर्था रोगसाधनहेतवः ॥
महतस्तस्य तन्त्रस्य दुर्गाधस्याम्बुधेरिव ॥ ८ ॥
आदावेवोत्तमाङ्गस्थान् रोगानभिदधाम्यहम् ॥
सङ्ख्यया लक्षणैश्चापि साध्यासाध्यक्रमेण च ॥ ९ ॥
विद्याद् द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसंमितम् ॥
द्व्यङ्गुलं सर्वतः सार्धं भिषङ्नयनबुद्बुदम् ॥ १० ॥
सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम् ॥
पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात् ॥ ११ ॥
आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे ॥
दृष्टिं चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारदः ॥ १२ ॥

---

१ 'शालाक्यशास्त्राभिहिताः' इति हाराण० ।

नेत्रायामत्रिभागं तु कृष्णमण्डलमुच्यते ॥
कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥ १३ ॥
मण्डलानि च सन्धींश्च पटलानि च लोचने ॥
यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥ १४ ॥
पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु ॥
अनुपूर्वं[1] तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥ १५ ॥
पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः ॥
शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः ॥
ततः कनीनकगतः षष्ठश्चापाङ्गग. स्मृतः ॥ १६ ॥
द्वे वर्त्मपटले विद्याच्चत्वार्यन्यानि चाक्षिणि ॥
जायते तिमिरं येषु व्याधिः परमदारुणः ॥ १७ ॥
तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् ॥
मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ॥ १८ ॥
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते[2] ॥
सिराणां कण्डराणां च मेदसः कालकस्य च ॥ १९ ॥
गुणाः कालात् परः श्लेष्मा बन्धनेऽक्ष्णोः सिरायुतः ॥
सिरानुसारिभिर्दोषैर्विगुणैरूर्ध्वमागतैः ॥ २० ॥
जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥
तत्राविलंससंरम्भमश्रु[3]कण्डूपदेहवत् ॥ २१ ॥
गुरूषातोदरागाद्यै[4]र्जुष्टं चाव्यक्तलक्षणैः ॥
सशूलं वर्त्मकोषेषु शूकपूर्णाभमेव च ॥ २२ ॥
विहन्यमानं रूपे वा क्रियास्वक्षि यथा पुरा ॥
दृष्ट्वैव धीमान् बुध्येत दोषेणाधिष्ठितं तु तत् ॥ २३ ॥

---

१ 'अनुपूर्वं' इत्येतच्छ्लोकार्धं 'षष्ठश्चापाङ्गग स्मृत' इति १६तमश्लोकात्परतः पठति हाराणचन्द्रः। २ 'बाहल्यमिष्यते' [ बाहल्य=सान्द्रता, घनता ]। ३ "°मश्रुपूर्णोपदेहवत्' इति हाराण०। ४ 'गुरूषाचोषरागाद्यैः' इति पा०।

तत्र संभवमासाद्य यथादोषं भिषग्जितम् ॥
विदध्यान्नेत्रजा रोगा बलवन्तः स्युरन्यथा ॥ २४ ॥
सङ्क्षेपतः क्रियायोगो निदानपरिवर्जनम् ॥
वातादीनां प्रतीघातः प्रोक्तो विस्तरतः पुनः ॥ २५ ॥
उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्ययाच्च ॥
प्रसक्तसंरोदनकोपशोकक्लेशाभिघातादतिमैथुनाच्च ॥ २६ ॥
शुक्तारनालाम्लकुलत्थमाष[1]निषेवणाद्वेगविनिग्रहाच्च ॥
[2]स्वेदादथो धूमनिषेवणाच्च छर्देर्विघाताद्वमनातियोगात् ॥
बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः ॥२७॥
वाताद्दश तथा पित्तात् कफाच्चैव त्रयोदश ॥
रक्तात् षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः ॥ २८ ॥
तथा बाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः ॥
हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या ॥ २९ ॥
यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः ॥
याप्योऽथ तन्मयः काचः साध्याः स्युः [3]सान्यमारुताः ॥३०॥
शुष्काक्षिपाकाधीमन्थस्यन्दमारुतपर्ययाः ॥
असाध्यो ह्रस्वजाड्यो यो जलस्रावश्च पैत्तिकः ॥ ३१ ॥
परिम्लायी च नीलश्च याप्यः काचोऽथ तन्मयः ॥
अभिष्यन्दोऽधिमन्थोऽम्लाध्युषितं [4]शुक्तिका च या ॥ ३२ ॥
दृष्टिः पित्तविदग्धा च धूमदर्शी च सिध्यति ॥
असाध्यः कफजः स्रावो याप्यः [5]काचश्च तन्मयः ॥ ३३ ॥
अभिष्यन्दोऽधिमन्थश्च बलासग्रथितं च यत् ॥
दृष्टिः श्लेष्मविदग्धा च पोथक्यो लगणश्च यः ॥ ३४ ॥

---

१ '°निषेवणा' इति हाराण० । २ 'स्वेदाद्रजोधूम°' इति हाराण० । ३ 'स्यन्दमारुताः' इति हाराण० । ४ 'शुक्तिकाह्वया' इति हाराण० । ५ 'काचोऽथ तन्मयः' इति हाराण० ।

[1]क्रिमिग्रन्थिपरिक्लिन्नवर्त्मशुक्लार्मपिष्टकाः ॥
श्लेष्मोपनाहः साध्यास्तु कथिताः श्लेष्मजेषु तु ॥ ३५ ॥
रक्तस्रावोऽजकाजातं शोणितार्शोव्रणान्वितम्[2] ॥
शुक्रं न साध्यं काचश्च याप्यस्तज्जः प्रकीर्तितः ॥ ३६ ॥
मन्थस्यन्दौ क्लिष्टवर्त्म[3] हर्षोत्पातौ तथैव च ॥
[4]सिराजाताऽञ्जनाख्या च सिराजालं च यत् स्मृतम् ॥३७॥
पर्वण्यथाव्रणं शुक्रं शोणितार्माऽर्जुनश्च यः ॥
एते साध्या विकारेषु रक्तजेषु भवन्ति हि ॥ ३८ ॥
पूयास्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी ॥
असाध्याः सर्वजा याप्याः काचः कोपश्च पक्ष्मणः ॥ ३९ ॥
वर्त्मावबन्धो यो व्याधिः सिरासु पिडका च या ॥
प्रस्तार्यर्माधिमांसार्म स्नाय्वर्मोत्सङ्गिनी च या ॥ ४० ॥
पूयालसश्चार्बुदं च श्यावकर्दमवर्त्मनी ॥
तथाऽर्शोवर्त्म शुष्कार्शः शर्करावर्त्म यच्च वै ॥ ४१ ॥
सशोफश्चाप्यशोफश्च पाको बहलवर्त्म च ॥
अक्लिन्नवर्त्म कुम्भीका बिसवर्त्म च सिध्यति ॥ ४२ ॥
सनिमित्तोऽनिमित्तश्च द्वावसाध्यौ तु बाह्यजौ ॥
षट्सप्ततिर्विकाराणामेषा संग्रहकीर्तिता[5] ॥ ४३ ॥
नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः ॥
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ ४४ ॥
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ॥

---

१ 'क्रिमिग्रन्थिः परिक्लिन्नवर्त्म शुक्लार्म पिष्टकः' इति पा०। २ 'रक्तास्रावोऽजकाजात शोणितार्शोऽवलम्बितम्' इति पा०। ३ 'क्लिन्नवर्त्म' इति पा०। ४ 'शिराजावञ्जनाख्या च' इति हाराण०। ५ 'संग्रहकीर्तना' इति पा०।

बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ ॥
भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितैः ॥ ४५ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[1] शालाक्यतन्त्रे औपद्रविको नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पूयालसः सोपनाहः स्रावाः पर्वणिकाऽलजी ॥
क्रिमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव ॥ ३ ॥

पक्कः शोफः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसः सः ॥
ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकः कण्डूप्रायो नीरुजस्तूपनाहः ॥ ४ ॥
गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावान् रुग्विहीनान् कनीनात्[2] ॥
तान् वै स्रावान् नेत्रनाडीमथैके तस्या लिङ्गं कीर्तयिष्ये चतुर्धा ॥५॥
पाकः सन्धौ संस्रवेद्यश्च पूयं पूयास्रावो नैकरूपः प्रदिष्टः ॥
श्वेतं सान्द्रं पिच्छिलं [3]संस्रवेद्यः श्लेष्मास्रावो नीरुजः स प्रदिष्टः ॥६॥
रक्तास्रावः शोणितोत्थः [4]सरक्तमुष्णं नाल्पं संस्रवेन्नातिसान्द्रम् ॥
पीताभासं नीलमुष्णं जलाभं पित्तास्रावः[5] संस्रवेत् सन्धिमध्यात् ॥७॥
ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्वणी वृत्तशोफा ॥
जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेव ख्यापिता पूर्वलिङ्गैः ॥८॥
क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युः क्रिमयः सन्धिजाताः ॥
नानारूपा [6]वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्ति ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे सन्धिगतरोगविज्ञानीयो नाम द्वितीयोऽध्याय ॥ २ ॥

---

१ '°तन्त्रे औपद्रविको' इति हाराण० । २ 'स्वलिङ्गात्' इति हाराण० । ३ 'यः स्रवेच्च' इति हाराण० । ४ 'सरक्त कोष्णं' इति हाराण० । ५ 'पित्तस्रावः' इति हाराण० । ६ 'वर्त्मशुक्लान्तसन्धौ' इति पा० ।

# तृतीयोऽध्यायः।

अथातो वर्त्मगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पृथग्दोषाः समस्ता[1] वा यदा वर्त्मव्यपाश्रयाः ॥
सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः ॥ ३ ॥
विवर्ध्य[2] मांसं रक्तं च तदा वर्त्मव्यपाश्रयान् ॥
विकाराञ्जनयन्त्याशु नामतस्तान्निबोधत ॥ ४ ॥
उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा ॥
तथाऽर्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका ॥ ५ ॥
बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः ॥
क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च ॥ ६ ॥
प्रक्लिन्नमपरिक्लिन्नं वर्त्म वातहतं तु यत् ॥
अर्बुदं निमिषश्चापि शोणितार्शश्च यत् स्मृतम् ॥ ७ ॥
लगणो बिशनामा च पक्ष्मकोपस्तथैव च ॥
एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः ॥ ८ ॥
नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रचक्ष्महे ॥
अभ्यन्तरमुखी बाह्योत्सङ्गेऽधो वर्त्मनश्च या ॥ ९ ॥
विज्ञेयोत्सङ्गिनी नाम तद्रूपपिडका[3]चिता ॥
कुम्भीकबीजप्रतिमाः पिडका[4] यास्तु वर्त्मजाः ॥ १० ॥
आध्मापयन्ति[5] भिन्ना याः कुम्भीकपिडकास्तु ताः ॥
स्राविण्यः[6] कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ॥
पिडकाश्च रुजावत्यः पोथक्य इति संज्ञिताः ॥ ११ ॥

---

१ 'समस्ताश्च' इति हाराण०। २ 'विबध्य' इति पा०। ३ 'पिडकाऽभ्यन्तरमुखी बाह्याऽवोवर्त्मसश्रया' इति हाराण०। 'पिडकान्विता' इति हाराण०। ४ 'पिडकाः पक्ष्मवर्त्मनोः' इति पा०। ५ 'आध्मायन्ते तु भिन्नायाः' इति हाराण०। 'आध्मायन्ते तु भिन्नाश्च' इति पा०। ६ 'कण्डूस्रावान्विता गुर्व्यो' इति हाराण०।

पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता ॥
पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ॥ १२ ॥
एर्वारुबीजप्रतिमाः[1] पिडका मन्दवेदनाः ॥
सूक्ष्माः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥ १३ ॥
दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसंभवः ॥
व्याधिरेष समाख्यातः शुष्कार्श इति संज्ञितः ॥ १४ ॥
दाहतोदवती ताम्रा पिडका वर्त्मसंभवा ॥
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥ १५ ॥
वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः ॥
सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म तत् ॥ १६ ॥
कण्डूमताऽल्पतोदेन वर्त्मशोफेन यो नरः ॥
न समं छादयेदक्षि भवेद्बन्धः स वर्त्मनः ॥ १७ ॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च ॥
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म तदादिशेत् ॥ १८ ॥
क्लिष्टं पुनः पित्तयुतं विदहेच्छोणितं यदा ॥
तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमः[2] ॥ १९ ॥
यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम् ॥
दाहकण्डूपरिक्लेदि[3] श्याववर्त्मेति तन्मतम् ॥ २० ॥
अरुजं बाह्यतः शूनमन्तः क्लिन्नं स्रवत्यपि ॥
कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते ॥ २१ ॥
यस्य धौतानि धौतानि संबध्यन्ते पुनः पुनः ॥
वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥ २२ ॥

---

१ 'एर्वारुबीजप्रतिमा पिडका मन्दवेदना । सूक्ष्मा खरा च वर्त्मस्था तदर्शोवर्त्म कीर्त्यते' इति पा० । २ '°कर्दमम्' इति हाराण० । ३ 'सकण्डूषापरिक्लेद' इति पा० ।

विमुक्तसन्धि निश्चेष्टं वर्त्म [1]यस्य न मीलयते ॥
एतद्वातहतं विद्यात् सरुजं यदि वाऽरुजम् ॥ २३ ॥
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ॥
विज्ञेयमर्बुदं पुसां सरक्तमवलम्बितम् ॥ २४ ॥
निमेषिणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः ॥
[2]चालयत्यति वर्त्मानि निमेषः स गदो मतः ॥ २५ ॥
छिन्नाश्छिन्ना विवर्धन्ते वर्त्मस्था मृदवोऽङ्कुराः ॥
दाहकण्डूरुजोपेतास्तेऽर्शःशोणित[3]संभवाः ॥ २६ ॥
अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः ॥
सकण्डूः पिच्छिलः कोलप्रमाणो लगणस्तु सः ॥ २७ ॥
शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् ॥
बिसमन्तर्जल इव बिसवर्त्मेति तन्मतम् ॥ २८ ॥
दोषाः पक्ष्माशयगतास्तीक्ष्णाग्राणि खराणि च ॥
निर्वर्तयन्ति पक्ष्माणि [4]तैर्घृष्टं चाक्षि दूयते ॥ २९ ॥
उद्धृतै[5]रुद्धृतैः शान्तिः पक्ष्मभिश्चोपजायते ॥
वातातपानलद्वेषी पक्ष्मकोपः स उच्यते ॥ ३० ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रे वर्त्मगतरोगविज्ञानीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

१ 'यस्य निमील्यते' [= एकान्तत उन्मीलनशक्त्या परिहीयते] इति हाराण०। २ 'चालयेदक्षिवर्त्मानि' इति, 'चालयेदतिवर्त्मानि' इति च पा०। ३ 'शोणितमभवम्' इति पा०। ४ 'तैर्जुष्ट' इति हाराण०। ५ 'उत्पाटितैः पुनः शान्ति-' इति हाराण०।

# चतुर्थोऽध्यायः ।

अथातः शुक्लगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

प्रस्तारिशुक्लक्षतजाधिमांसस्नाय्वर्मसंज्ञाः खलु पञ्च रोगाः ॥
स्युः शुक्तिका चार्जुनपिष्टकौ च जालं सिराणां पिडकाश्च याः स्युः ३
रोगा बलासग्रथितेन सार्धमेकादशाक्ष्णोः खलु शुक्लभागे ॥
प्रस्तारि प्रथितमिहार्म शुक्लभागे विस्तीर्णं तनु रुधिरप्रभं सनीलम् ४
शुक्लाख्यं मृदु कथयन्ति शुक्लभागे सश्वेतं सममिह[1] वर्धते चिरेण ॥
यन्मांसं प्रचयमुपैति शुक्लभागे पद्माभं तदुपदिशन्ति लोहितार्म ५

विस्तीर्णं मृदु बहलं यकृत्प्रकाशं
श्यावं वा तदधिकमांसजार्म विद्यात् ॥
शुक्ले यत् पिशितमुपैति वृद्धिमेतत्
स्नाय्वर्मेत्यभिपठितं खरं प्रपाण्डु ॥ ६ ॥
श्यावाः स्युः पिशितनिभाश्च[2] बिन्दवो ये
शुक्त्याभाः सितनयने स शुक्तिसंज्ञः ॥
एको यः शशरुधिरोपमस्तु[3] बिन्दुः
शुक्लस्थो भवति तमर्जुनं वदन्ति ॥ ७ ॥
उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो
[4]बिन्दुर्यो भवति स पिष्टकः सुवृत्तः ॥
जालाभः कठिनसिरो महान् सरक्तः
सन्तानः स्मृत इह जालसंज्ञितस्तु ॥ ८ ॥

---

१ 'सममभिवर्धते' इति पा० । २ "°निभास्तु बिन्दवो ये शुक्तिर्वासित°" इति हाराण० । ३ "°पमः सुबिन्दु." इति हाराण० । ४ 'बिन्दुर्यः समवति पिष्टकः' इति हाराण० ।

शुक्लस्थाः सितपिडकाः सिरावृता या-
स्ता विद्यादसितसमीपजाः सिराजाः ॥
कांस्याभो[1] भवति सितेऽम्बुबिन्दुतुल्यः
स ज्ञेयोऽमृदुररुजो बलासकाख्यः ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे शुक्लगतरोगविज्ञानीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातः कृष्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

यत् सव्रणं शुक्र(क्र)मथाव्रणं वा पाकात्ययश्चाप्यजका तथैव ॥
चत्वार एतेऽभिहिता विकाराः कृष्णाश्रयाः संग्रहतः पुरस्तात् ॥ ३ ॥
निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै[2] ॥
स्रावं स्रवेदुष्णमतीव रुक् च तत् सव्रणं शुक्र(क्र)मुदाहरन्ति ॥ ४ ॥
दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि ॥
अवेदनावन्न च युग्मशुक्रं तत्सिद्धिमाप्नोति कदाचिदेव[3] ॥ ५ ॥
विच्छिन्नमध्यं पिशितावृतं वा चलं सिरासक्तमदृष्टिकृच्च[4] ॥
द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितं चापि विवर्जनीयम् ॥ ६ ॥
उष्णाश्रुपातः पिडका च कृष्णे यस्मिन् भवेन्मुद्गनिभं च शुक्रम् ॥
तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरिपक्षतुल्यम् ॥ ७ ॥
सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रुयुक्तम् ॥
विहायसीवाच्छघनानुकारि[5] तदव्रणं साध्यतमं वदन्ति ॥ ८ ॥

---

१ 'कास्याभो भवति शिरावृत० सिते यो बिन्दुर्वा स तु निरुजो बलासकाख्य' इति हाराण० । २ 'यच्च' इति पा० । ३ अस्याग्रे—'सित यदाग्रे' (श्लो० ८) इत्यत आरभ्य 'चिरोत्थित चापि वदन्ति कृच्छ्र' इति यावत् पठति हाराणचन्द्रः, तदग्रेऽपि च 'विच्छिन्नमध्य' इति सार्धश्लोकश्च । ४ 'शिरासूक्ष्म' इति पा० । ५ 'अभ्रदलाभुकारि' इति पा० ।

गम्भीरजातं बहलं च शुक्रं चिरोत्थितं चापि वदन्ति कृच्छ्रम् ॥
संच्छाद्यते[1] श्वेतनिभेन सर्वं दोषेण यस्यासितमण्डलं तु ॥ ९ ॥
तमक्षिपाकात्ययमक्षिकोपसंमुत्थितं[2] तीव्ररुजं वदन्ति ॥
अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रुः[3] ॥
विदार्य कृष्णं प्रचयोऽभ्युपैति तं चाजकाजातमिति व्यवस्येत्॥१०॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे कृष्णगतरोगविज्ञानीयो
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः सर्वगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

स्यन्दास्तु चत्वार इहोपदिष्टास्तावन्त एवेह तथाऽधिमन्थाः ॥
शोफान्वितोऽशोफयुतश्च पाकावित्येवमेते दश संप्रदिष्टाः ॥ ३ ॥
हताधिमन्थोऽनिलपर्ययश्च शुष्काक्षिपाकोऽन्यत एव वातः ॥
दृष्टिस्तथाऽम्लाध्युषिता सिराणामुत्पातहर्षावपि सर्वभागाः ॥ ४ ॥
प्रायेण सर्वे नयनामयास्तु भवन्त्यभिष्यन्दनिमित्तमूलाः ॥
तस्मादभिष्यन्दमुदीर्यमाणमुपाचरेदाशु हिताय धीमान् ॥ ५ ॥
निस्तोदनं स्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोभितापाः ॥
विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥ ६ ॥
दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च ॥
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ ७ ॥
उष्णाभिनन्दा गुरुताऽक्षिशोफः कण्डूपदेहौ सितताऽतिशैत्यम् ॥
स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥ ८॥

---

१ 'श्वेतः समाक्रामति सर्वतो हि' इति पा० । 'सछाद्यते श्वेतनिभेन सर्वदोषेग' इति हाराण० । २ '°मक्षिरोग सर्वात्मक वर्जयितव्यमाहुः' इति पा० । ३ '°पिच्छिलास्र.' इति हाराण० ।

ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च ॥
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥ ९ ॥

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ॥
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ १० ॥
उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ॥
शिरसोऽर्धं च[1] तं विद्यादधिमन्थं स्वलक्षणैः ॥ ११ ॥
नेत्रमुत्पाट्यत इव मथ्यतेऽरणिवच्च यत् ॥
सङ्घर्षतोदनिर्भेदमांससंरब्धमाविलम् ॥ १२ ॥
कुञ्चनास्फोटनाध्मानवेपथुव्यथनैर्युतम् ॥
शिरसोऽर्धं च येन स्यादधिमन्थः स मारुतात् ॥ १३ ॥
रक्तराजिचितं स्रावि वह्निनेवावदह्यते ॥
यकृत्पिण्डोपमं दाहि क्षारेणाक्तमिव क्षतम् ॥ १४ ॥
प्रपक्वोच्छूनवर्त्मान्तं सस्वेदं पीतदर्शनम् ॥
मूर्च्छाशिरोदाहयुतं पित्तेनाक्ष्यधिमन्थितम् ॥ १५ ॥
शोफवन्नातिसंरब्धं स्रावकण्डूसमन्वितम् ॥
शैत्यगौरवपैच्छिल्यदूषिकाहर्षणान्वितम् ॥ १६ ॥
रूपं पश्यति दुःखेन पांशुपूर्णमिवाविलम् ॥
नासाध्मानशिरोदुःखयुतं श्लेष्माधिमन्थितम् ॥ १७ ॥
बन्धुजीवप्रतीकाश ताम्यति स्पर्शनाक्षमम् ॥
रक्तास्रावं सनिस्तोदं पश्यत्यग्निनिभा दिशः ॥ १८ ॥
रक्तमग्नारिष्टवच्च कृष्णभागश्च लक्ष्यते ॥
यद्दीप्तं रक्तपर्यन्तं तद्रक्तेनाधिमन्थितम् ॥ १९ ॥

हन्याद्दृष्टिं सप्तरात्रात् कफोत्थोऽधीमन्थोऽसृक्संभवः पञ्चरात्रात् ॥
[2]षड्रात्राद्वै मारुतोत्थो निहन्यान्मिथ्याचारात् पैत्तिकः सद्य एव २०

1 'तु' इति हाराण०। 2 'पञ्चरात्राद्वा' इति हाराण०।

कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः ॥
दाहसंहर्षताम्रत्वशोफनिस्तोदगौरवैः ॥ २१ ॥
जुष्टो मुहुः स्रवेच्चास्रमुष्णशीताम्बु पिच्छिलम् ॥
संरम्भी पच्यते यश्च नेत्रपाकः स शोफजः ॥ २२ ॥
शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे[१] ॥
उपेक्षणादक्षि यदाऽधिमन्थो वातात्मकः सादयति प्रसह्य ॥
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः ॥ २३ ॥
अन्तःसिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् ॥
हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः ॥ २४ ॥
पक्ष्मद्वयाक्षिभ्रुवमाश्रितस्तु यत्रानिलः संचरति प्रदुष्टः ॥
पर्यायशश्चापि रुजः करोति त वातपर्यायमुदाहरन्ति ॥ २५ ॥
यत् कूणितं दारुणरूक्षवर्त्म विलोकने चाविलदर्शनं[२] यत् ॥
सुदारुणं यत् प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि ॥ २६ ॥
यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाऽप्यनिलोऽन्यतो वा ॥
कुर्याद्रुजोऽति भ्रुवि लोचने वा तमन्यतोवातमुदाहरन्ति ॥ २७ ॥
अम्लेन भुक्तेन विदाहिना च संछाद्यते सर्वत एव नेत्रम् ॥
शोफान्वितं लोहितकैः सनीलैरेतादृगम्लाध्युषितं वदन्ति ॥२८॥
अवेदना वाऽपि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः ॥
मुहुर्विरज्यन्ति च ताः समन्ताद् व्याधिः सिरोत्पात इति प्रदिष्टः २९
[३]मोहात् सिरोत्पात उपेक्षितस्तु जायेत रोगस्तु सिराप्रहर्षः ॥
ताम्राच्छम[४]स्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुं च ॥३० ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे सर्वगतरोगविज्ञानीयो नाम षष्ठोऽध्याय. ॥ ६ ॥

---

१ अस्याग्रे—'अन्तःसिराणा' इति २४ तम. श्लोक. हाराणचन्द्रः पठति । 'उपेक्षणादक्षि' इति श्लोकश्च न पठति । २ 'वाविल°' इति हाराण° । ३ 'महाञ्छिरोत्पात' इति हाराण° । ४ 'ताम्राभमस्र' इति पा० ।

# सप्तमोऽध्यायः ।

अथातो दृष्टिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मसूरदलमात्रां तु पञ्चभूतप्रसादजाम् ॥
खद्योतविस्फुलिङ्गाभामिद्धां[1] तेजोभिरव्ययैः ॥ ३ ॥
आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम् ॥
शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥ ४ ॥
रोगांस्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे ॥
पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम् ॥ ५ ॥
सिराभिरभिसंप्राप्य विगुणोऽभ्यन्तरे भृशम् ॥
प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः ॥ ६ ॥
अव्यक्तानि स रूपाणि सर्वाण्येव प्रपश्यति ॥
दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥ ७ ॥
[2]मक्षिका मशकान् केशाञ्जालकानि च पश्यति ॥
मण्डलानि पताकाश्च मरीचीः कुण्डलानि च ॥ ८ ॥
[3]परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि च ॥
दूरस्थान्यपि रूपाणि मन्यते च समीपतः ॥ ९ ॥
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥ १० ॥
ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते ॥
महान्त्यपि च रूपाणि च्छादितानीव वाससा ॥ ११ ॥
कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते[4] ॥
यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि ॥ १२ ॥

---

१ 'सिद्धा' इति हाराण० । २ 'मक्षिकान्मशकान्' इति हाराण० । ३ 'परिपूर्वांश्च' इति पा० । ४ 'चेक्षते' इति पा० ।

अधःस्थिते समीपस्थं दूरस्थं चोपरिस्थिते ॥
पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति ॥ १३ ॥
समन्ततः स्थिते दोषे सङ्कुलानीव[1] पश्यति ।
दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा ॥ १४ ॥
द्विधास्थिते त्रिधा पश्येद्बहुधा चानवस्थिते ॥
तिमिराख्यः स वै दोषः चतुर्थं[2] पटलं गतः ॥ १५ ॥
रुणद्धि सर्वतो दृष्टिं लिङ्गनाशः स उच्यते ॥
तस्मिन्नपि तमोभूते नातिरूढे महागदे ॥ १६ ॥
चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः ॥
निर्मलानि च तेजांसि भ्राजिष्णूनि[3] च पश्यति ॥ १७ ॥
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ॥
तत्र वातेन रूपाणि भ्रमन्तीव स पश्यति ॥ १८ ॥
आविलान्यरुणाभानि व्याविद्धानि च मानवः ॥
पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ॥ १९ ॥
शिखिबर्हविचित्राणि नीलकृष्णानि पश्यति ॥
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ॥ २० ॥
गौरचामरगौराणि श्वेताभ्रप्रतिमानि च ॥
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम् ॥ २१ ॥
सलिलप्लावितानीव परिजाड्यानि मानवः ॥
तथा रक्तेन रक्तानि तमांसि विविधानि च ॥ २२ ॥
हरितश्यावकृष्णानि धूमधूम्राणि चेक्षते ॥
सन्निपातेन चित्राणि [4]विप्लुतानि च पश्यति ॥ २३ ॥

---

१ 'सङ्कुलानि च' इति हाराण० । २ 'चतुर्थपटल' इति हाराण० ।
३ 'भ्राजिष्णूनीव पश्यति' इति पा० । ४ 'विप्लुतानीव' इति हाराण० ।

बहुधा वा द्विधा वाऽपि सर्वाण्येव समन्ततः ॥
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च पश्यति[1] ॥ २४ ॥
पित्तं कुर्यात् परिम्लायि मूर्च्छितं रक्ततेजसा ॥
पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति ॥ २५ ॥
विकीर्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च ॥
वक्ष्यामि षड्विधं[2] रागैर्लिङ्गनाशमतः परम् ॥ २६ ॥
रागोऽरुणो मारुतजः प्रदिष्टः पित्तात् परिम्लाय्यथवाऽपि नीलः ।
कफात् सितः शोणितजस्तु रक्तः समस्तदोषोऽथ विचित्ररूपः[3]॥२७॥
रक्तजं मण्डलं दृष्टौ स्थूलकाचानलप्रभम्[4] ॥
परिम्लायिनि रोगे स्यान्म्लाय्यानीलं च मण्डलम् ॥ २८ ॥
दोषक्षयात् कदाचित् स्यात्स्वय तत्र च दर्शनम् ॥
अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ॥ २९ ॥
पित्तान्मण्डलमानीलं कांस्याभं पीतमेव वा ॥
श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम् ॥ ३० ॥
चलत्पद्मपलाशस्थः शुक्लो[5] बिन्दुरिवाम्भसः ॥
[6]संकुचत्यातपेऽत्यर्थं छायायां विस्तृतो भवेत् ॥ ३१ ॥
मृद्यमाने च नयने मण्डलं तद्विसर्पति ॥
प्रवालपद्मपत्राभं[7] मण्डलं शोणितात्मकम् ॥ ३२ ॥
दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ॥
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥ ३३ ॥

---

१ 'मानवः' ति पा० । २ 'षड्विधैः' इति हाराण० । ३ 'समस्तदोषेऽथ विचित्रवर्णः' इति पा० । ४ 'स्थूलकाचारुणप्रभम्' इति हाराण० । ५ 'शुक्लबिन्दु°' इति हाराण० । ६ श्लोकार्धमिदं हाराणचन्द्रो न पठति । ७ 'प्रवालपद्म°' इति, 'दृष्टिरागो' इति श्लोकार्धे वैपरीत्येन, तदग्रे च 'परिम्लायिनि रोगे स्यान्म्लाय्यानील च मण्डलम् । दोपक्षयात् कदाचित् स्यात्स्वय तत्र च दर्शनम्' । इति श्लोकौ हाराणचन्द्रः पठति ।

षड् लिङ्गनाशाः षडिमे च [1]रोगा दृष्ट्याश्रयाः षट् च षडेव च स्युः ॥
तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्वथ धूमदर्शी ॥ ३४ ॥
यो ह्रस्वजाड्यो[2](त्यो) नकुलान्धता च गम्भीरसंज्ञा च तथैव दृष्टिः ॥
पित्तेन दुष्टेन गतेन दृष्टि पीता भवेद्यस्य नरस्य दृष्टिः ॥ ३५ ॥
पीतानि रूपाणि च मन्यते यः स मानवः पित्तविदग्धदृष्टिः ॥
प्राप्ते तृतीय पटलं तु दोषे दिवा न पश्येन्निशि वीक्षते च ॥ ३६ ॥
([3]रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत्) ॥
तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि हि मन्यते तु ॥ ३७ ॥
त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य ॥
दिवा स सू[4]र्यानुगृहीतचक्षुरीक्षेत रूपाणि कफाल्पभावात् ॥ ३८ ॥
शोकज्वरायासशिरोभितापैरभ्याहता यस्य नरस्य दृष्टिः ॥
सधूमकान् पश्यति सर्वभावांस्तं धूमदर्शीति वदन्ति रोगम् ॥ ३९ ॥
स [5]ह्रस्वजाड्यो दिवसेषु कृच्छ्राद्ध्रस्वानि रूपाणि च [6]येन पश्येत्[7] ॥
विद्योतते येन नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् ॥ ४० ॥
चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः ॥
दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरतश्च याति ॥ ४१ ॥
रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ॥
बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च ॥ ४२ ॥
निमित्ततस्तत्र शिरोभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च[8] ॥
सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भा[9]स्वराणाम् ॥ ४३ ॥

---

१ 'रागा' इति हाराण० । २ 'यो ह्रस्वजात्यो' इति हाराण० । ३ अयमर्धश्लोको हस्तलिखितपुस्तके हाराणचन्द्रेण चात्र न पठ्यते । ४ 'सूर्यानुगृहीतदृष्टिर्वीक्षेत' इति हाराण० । ५ 'ह्रस्वजात्यो' इति हाराण० । ६ 'यो न पश्येत्' इति हाराण० । ७ अस्याग्रे–'रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत्' इति श्लोकार्धं हाराणचन्द्रेणात्र पठ्यते । ८ '°स्त्वभिष्यन्दनिदर्शनश्च' इति हाराण० । ९ 'भासुराणाम्' इति हाराण० ।

हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥
तत्राक्षि विस्पष्टमिवावभाति वैदूर्यवर्णा विमला[1] च दृष्टिः ॥ ४४ ॥
विदीर्यते सीदति हीयते वा नृणामभीघातहता तु दृष्टिः ॥ ४५ ॥

इत्येते नयनगता मया[2] विकाराः
संख्याताः पृथगिह षट् च सप्ततिश्च ॥
एतेषां पृथगिह विस्तरेण सर्वं
वक्ष्येऽहं तदनु चिकित्सितं[3] यथावत् ॥ ४६ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे दृष्टिगत-
रोगविज्ञानीयो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातश्चिकित्सित[4]प्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥

षट्सप्ततिर्येऽभिहिता व्याधयो नामलक्षणैः ॥
चिकित्सितमिदं तेषां समासव्यासतः[5] शृणु ॥ ३ ॥
छेद्यास्तेषु दशैकश्च नव लेख्याः प्रकीर्तिताः ॥
भेद्याः पञ्च विकाराः स्युर्व्यध्याः पञ्चदशैव तु ॥ ४ ॥
द्वादशाऽशस्त्रकृत्याश्च याप्याः सप्त भवन्ति हि ॥
रोगा वर्जयितव्याः[6] स्युर्दश पञ्च च जानता ॥
असाध्यौ वा भवेतां तु याप्यौ चागन्तुसंज्ञितौ[7] ॥ ५ ॥

---

१ 'स दृष्टि॰' इति हाराण॰ । २ 'महाविकारा॰' इति हाराण॰ । ३ 'चिकित्सित च तावत्' इति हाराण॰ । ४ '॰श्चिकित्सितप्रविभागीय' इति पा॰ । ५ 'समासाद्व्यासत॰' इति हाराण॰ । ६ '॰तव्याश्च दश' इति हाराण॰ । ७ 'वागन्तु॰' इति हाराण॰ ।

अर्शोऽन्वितं भवति वर्त्म तु यत्तथाऽर्शः
शुष्कं तथाऽर्बुदमथो पिडकाः सिराजाः ॥
जालं सिराजमपि पञ्चविधं तथाऽर्म
छेद्या भवन्ति सह पर्वणिकामयेन ॥ ६ ॥

उत्सङ्गिनी बहलकर्दमवर्त्मनी च
श्यावं च यच्च पठितं त्विह बद्धवर्त्म ॥
क्लिष्टं च पोथकियुतं खलु यच्च वर्त्म
कुम्भीकिनी च सह शर्करया च लेख्याः ॥ ७ ॥

श्लेष्मोपनाहलगणौ च बिसं च भेद्या
ग्रन्थिश्च यः कृमिकृतोऽञ्जननामिका च ॥
आदौ सिरा निगदितास्तु[1] ययोः प्रयोगे
पाकौ च यौ नयनयोः पवनोऽन्यतश्च ॥ ८ ॥

पूयालसानिलविपर्ययमन्थसंज्ञाः
स्यन्दास्तु यान्त्युपशम हि सिराव्यधेन ॥
शुष्काक्षिपाककफपित्तविदग्धदृष्टि-
ष्वम्लाख्यशुक्रसहितार्जुनपिष्टकेषु ॥ ९ ॥

अक्लिन्नवर्त्महुतभुग्ध्वजदर्शिशुक्ति-
प्रक्लिन्नवर्त्मसु तथैव बलाससंज्ञे ॥
आगन्तुनाऽऽमययुगेन च दूषितायां
दृष्टौ न शस्त्रपतनं प्रवदन्ति तज्ज्ञाः ॥ १० ॥

संपश्यतः षडपि येऽभिहितास्तु काचा-
स्ते पक्ष्मकोपसहितास्तु भवन्ति याप्याः ॥

---

१ 'निगदिताश्च' इति हाराण० ।

चत्वार एव पवनप्रभवास्त्वसाध्या
द्वौ पित्तजौ कफनिमित्तज एक एव ॥
अर्धाष्टका[1] रुधिरजाश्च गदास्त्रिदोषा-
स्तावन्त एव गदितावपि बाह्यजौ द्वौ ॥ ११ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे चिकित्सित-प्रविभागविज्ञानीयो नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः।

अथातो वाताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पुराणसर्पिषा स्निग्धौ स्यन्दाधीमन्थपीडितौ ॥
स्वेदयित्वा यथान्यायं सिरामोक्षेण योजयेत् ॥ ३ ॥
संपादयेद्बस्तिभिस्तु[2] सम्यक् स्नेहविरेचितौ ॥
तर्पणैः पुटपाकैश्च धूमैराश्च्योतनैस्तथा ॥ ४ ॥
नस्यस्नेहपरीषेकैः शिरोबस्तिभिरेव च ॥
वातघ्नानूपजलजमांसाम्लक्वाथसेचनैः ॥ ५ ॥
स्नेहैश्चतुर्भिरुष्णैश्च तत्पीताम्बरधारणैः ॥
पयोभिर्वेसवारैश्च साल्वणैः पायसैस्तथा ॥ ६ ॥
भिषक् संपादयेदेतावुपनाहैश्च पूजितैः ॥
ग्राम्यानूपौदकरसैः[3] स्निग्धैः फलरसान्वितैः ॥ ७ ॥
सुसंस्कृतैः पयोभिश्च तयोराहार इष्यते ॥
तथा चोपरि भक्तस्य सर्पिःपानं(ने) प्रशस्यते[4] ॥ ८ ॥

---

१ 'अष्टार्वका' इति हाराण०। २ '°द्बस्तिभिश्च' इति हाराण०। ३ 'ग्राम्यानूपौदकरसैः' इत्यत आरभ्य 'तयोराहार इष्यते' इति यावत् हाराणचन्द्रो न पठति। ४ 'भक्तस्योपरि सर्पिस्ता पिबेतां चापि मानवा' इति पा०।

त्रिफलाक्वाथसंसिद्ध केवल जीर्णमेव वा ॥
सिद्धं वातहरैः क्षीरं प्रथमेन गणेन वा ॥ ९ ॥
स्नेहास्तैलाद्विना सिद्धा वातघ्नैस्तर्पणे हिताः ॥
स्नैहिकः पुटपाकश्च धूमो नस्यं च तद्विधम् ॥ १० ॥
नस्यादिषु स्थिराक्षीरमधुरैस्तैलमिष्यते ॥
एरण्डपल्लवे मूले त्वचि वाऽऽज पयः श्रुतम् ॥ ११ ॥
कण्टकार्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥
सैन्धवोदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः ॥ १२ ॥
हितमर्धोदकं सेके तथाऽऽश्च्योतनमेव च ॥
[1]ह्रीबेरवक्रमञ्जिष्ठोदुम्बरत्वक्षु साधितम् ॥ १३ ॥
साम्भश्छाग पयो वाऽपि शूलाश्च्योतनमुत्तमम् ॥
मधुकं रजनीं पथ्यां देवदारु च पेषयेत् ॥ १४ ॥
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥
गैरिकं सैन्धवं कृष्णां नागरं च यथोत्तरम् ॥ १५ ॥
द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते ॥
स्नेहाञ्जनं हितं चात्र वक्ष्यते तद्यथाविधि ॥ १६ ॥
रोगो यश्चान्यतोवातो यश्च मारुतपर्ययः ॥
अनेनैव विधानेन भिषक् तावपि साधयेत् ॥ १७ ॥
पूर्वभक्तं हितं सर्पिः क्षीरं वाऽप्यथ भोजने ॥
वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि ॥ १८ ॥
सक्षीर कर्कटरसे सिद्धं चात्र घृतं पिबेत् ॥
सिद्धं वा हितमत्राहुः पत्तूरातंगलाम्निकैः ॥ १९ ॥
सक्षीर मेषशृङ्ग्या वा सर्पिर्वीरतरेण वा ॥
सैन्धवं दारु शुण्ठी च [2]मातुलुङ्गरसो घृतम् ॥ २० ॥

---

१ 'ह्रीबेरचक्र°' इति हाराण०। २ 'मातुलुङ्गरसे' इति हाराण०।

स्तन्योदकाभ्यां कर्तव्यं शुष्कपाके तदञ्जनम् ॥
पूजितं सर्पिषश्चात्र पानमक्ष्णोश्च तर्पणम् ॥ २१ ॥
घृतेन जीवनीयेन नस्यं तैलेन चाणुना ॥
परिषेके हितं चात्र पयः शीतं ससैन्धवम् ॥ २२ ॥
रजनीदारुसिद्धं वा सैन्धवेन समायुतम् ॥
सर्पिर्युतं स्तन्यघृष्टमञ्जनं[1] वा महौषधम् ॥ २३ ॥
वसा वाऽऽनूपजलजा सैन्धवेन समायुता ॥
नागरोन्मिश्रिता किञ्चिच्छुष्कपाके तदञ्जनम् ॥ २४ ॥
पवनप्रभवा रोगा ये केचिद्दृष्टिनाशनाः ॥
बीजेनानेन मतिमान्[2] तेषु कर्म प्रयोजयेत् ॥ २५ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे वाताभिष्यन्दप्रतिषेधो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

अथातः पित्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पित्तस्यन्दे पैत्तिके चाधिमन्थे रक्तास्रावः स्रंसनं चापि कार्यम् ॥
अक्ष्णोः सेकालेपनस्याञ्जनानि पैत्ते च स्याद्यद्विसर्पे विधानम् ॥ ३ ॥
गुन्द्रां शालिं शैवलं शैलभेदं दार्वीमेलामुत्पलं रोध्रमभ्रम् ॥
पद्मात्पत्रं शर्करा दर्भमिक्षुं तालं रोध्रं वेतसं पद्मकं च ॥ ४ ॥
द्राक्षां क्षौद्रं चन्दनं यष्टिकाह्वं योषित्क्षीरं रात्र्यनन्ते च पिष्ट्वा ॥
सर्पिःसिद्धं तर्पणे सेकनस्ये[3] शस्तं क्षीरं सिद्धमेतेषु चाजम्[4] ॥ ५ ॥

---

१ '°मञ्जनञ्च' इति हाराण०। २ 'मेधावी तेषु' इति हाराण०। ३ 'नावने च' इति पा०। ४ 'वाजम्' इति हाराण०।

योज्यो वर्गो व्यस्त एषोऽन्यथा वा सम्यङ्कस्येऽष्टार्धसंख्येऽपि नित्यम् ॥
क्रियाः सर्वाः पित्तहर्यः प्रशस्तास्त्र्यहाच्चोर्ध्वं क्षीरसर्पिश्च नस्यम्[1] ॥ ६॥
पालाशं स्याच्छोणितं चाञ्जनार्थे शल्लक्या वा शर्कराक्षौद्रयुक्तम् ॥
रसक्रियां शर्कराक्षौद्रयुक्तां पालिन्द्यां वा मधुके वाऽपि कुर्यात् ॥७॥
मुस्ता फेनः सागरस्योत्पलं च कृमिघ्नैलाधात्रिबीजाद्रसश्च ॥
तालीशैलागैरिकोशीरशङ्खैरेवं युञ्ज्यादञ्जनं स्तन्यपिष्टैः ॥ ८ ॥
चूर्णं कुर्यादञ्जनार्थे रसो वा स्तन्योपेतो धातकीस्यन्दनाभ्याम् ॥
योषित्स्तन्यं शातकुम्भं विघृष्टं क्षौद्रोपेतं कैंशुकं चापि पुष्पम् ॥९॥
रोध्रं द्राक्षां शर्करामुत्पलं च नार्याः क्षीरे यष्टिकाह्वं वचां च ॥
पिष्ट्वा क्षीरे वर्णकस्य त्वचं च[2] तोयोन्मिश्रे चन्दनोदुम्बरे च ॥१०॥
कार्यः फेनः सागरस्याञ्जनार्थे नारीस्तन्ये माक्षिके चापि घृष्टः ॥
योषित्स्तन्ये स्थापितं यष्टिकाह्वं रोध्रं द्राक्षां शर्करामुत्पलं च ॥११॥
क्षौमाबद्धं पथ्यमाश्च्योतने वा सर्पिर्घृष्टं[3] यष्टिकाह्वं सरोध्रम् ॥
तोयोन्मिश्राः काश्मरीधात्रिपथ्यास्तद्वच्चाहुः कट्फलं चाम्बुनैव ॥१२॥
एषोऽम्लाख्येऽनुक्रमश्चापि शुक्तौ कार्यः सर्वः स्यात्सिरामोक्षवर्ज्यः[4] ॥
सर्पिः पेयं त्रैफलं तैल्वकं वा पेयं वा स्यात् केवलं यत् पुराणम् ॥
दोषेऽधस्ताच्छुक्तिकायामपास्ते शीतैर्द्रव्यैरञ्जनं कार्यमाशु ॥ १४ ॥
वैदूर्यं यत् स्फाटिकं वैद्रुमं च मौक्तं शाङ्खं राजतं शातकुम्भम् ॥
चूर्णं सूक्ष्मं शर्कराक्षौद्रयुक्तं शुक्तिं हन्यादञ्जनं चैतदाशु ॥ १५ ॥
युञ्ज्यात् सर्पिर्धूमदर्शी नरस्तु शेषं कुर्याद्रक्तपित्ते विधानम् ॥
यच्चैवान्यत् पित्तहृच्चापि सर्वं यद्वीसर्पे पैत्तिके वै विधानम् ॥ १६ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[5] शालाक्यतन्त्रे पित्ताभिष्यन्द-प्रतिषेधो नाम दशमोऽध्यायः ॥ १० ॥

---

१ 'शस्ताऽशेषा पित्तहन्त्री क्रिया च त्र्यहादूर्ध्वं क्षीरसर्पिश्च नस्यम्' इति पा०। २ 'वा' इति हाराण०। ३ 'सर्पिर्भृष्टं' इति पा०। ४ '°वर्जः' इति हाराण०। ५ '°मुत्तरतन्त्रे पित्ताभि°' इति हाराण०।

# एकादशोऽध्यायः ।

अथातः श्लेष्माभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

स्यन्दाधिमन्थौ कफजौ प्रवृद्धौ जयेत् सिराणामथ मोक्षणेन ॥
स्वेदावपीडाञ्जनधूमसेकप्रलेपयोगैः कवलग्रहैश्च ॥ ३ ॥
रूक्षैस्तथाऽऽश्च्योतनसंविधानैस्तथैव रूक्षैः पुटपाकयोगैः ॥
त्र्यहात्त्र्यहाच्चाप्यपतर्पणान्ते प्रातस्तयोस्तिक्तघृतं प्रशस्तम् ॥ ४ ॥
तदन्नपानं च समाचरेद्धि यच्छ्लेष्मणो नैव करोति वृद्धिम् ॥
[1]कुटन्नटास्फोटफणिज्झबिल्वपत्तूरपिल्वर्ककपित्थभङ्गैः ॥ ५ ॥
स्वेदं विदध्यात् अथवाऽनुलेपं बर्हिष्ठशुण्ठीसुरकाष्ठकुष्ठैः ॥
सिन्धूत्थहिङ्गुत्रिफलामधूकप्रपौण्डरीकाञ्जनतुत्थताम्रैः ॥ ६ ॥
पिष्टैर्जलेनाञ्जनवर्तयः स्युः पथ्याहरिद्रामधुकाञ्जनैर्वा ॥
त्रीण्यूषणानि त्रिफला हरिद्रा विडङ्गसारश्च समानि च स्युः ॥ ७ ॥
बर्हिष्ठकुष्ठामरकाष्ठशङ्ख[2]पाठानलव्योषमनःशिलाश्च ॥
पिष्ट्वाऽम्बुना वा कुसुमानि जातिकरञ्जशोभाञ्जनजानि युञ्ज्यात् ॥ ८ ॥
फलं प्रकीर्यादथवाऽपि शिग्रोः पुष्पं च [3]तुल्यं बृहतीद्वयस्य ॥
रसाञ्जनं सैन्धवचन्दनं च मनःशिलाले लशुनं च तुल्यम् ॥ ९ ॥
[4]पिष्ट्वाऽञ्जनार्थे कफजेषु धीमान् वर्तीर्विदध्यान्नयनामयेषु ॥
रोगे बलासग्रथितेऽ[5]ञ्जनं स्यैः कर्तव्यमेतत् सुविशुद्धकाये ॥ १० ॥
नीलान् यवान् गव्यपयोऽनुपीतान् शलाकिनः शुष्कतनून् विदह्य ॥
तथाऽर्जकास्फोतकपित्थबिल्वनिर्गुण्डिजातीकुसुमानि चैव ॥ ११ ॥

---

१ 'कुटन्नटास्फोतफणिज्झ°' इति हाराण० । २ 'पाठानखव्योषमनःशिलाश्च' इति पा० । ३ 'तुल्यं' इति पा० । ४ 'पिष्ट्वाञ्जनार्थं' इति हा० । ५ '°ञ्जनशैः' इति हाराण० ।

तत्क्षारवत्सैन्धववतुत्थरोचनं पक्कं विदध्यादथ [1]लोहनाड्याम् ॥
एतद्वलासग्रथितेऽञ्जनं स्यादेषोऽनुकल्पस्तु फणिज्झकादौ ॥ १२ ॥
महौषधं मागधिकां च मुस्तां [2] ससैन्धवं यन्मरिचं च शुक्लम् ॥
तन्मातुलुङ्गस्वरसेन पिष्टं नेत्राञ्जनं पिष्टकमाशु हन्यात् ॥ १३ ॥
[3]फले बृहत्या मगधोद्भवानां निधाय कल्कं फलपाककाले ॥
[4]स्रोतोजयुक्तं च तदुद्धृतं स्यात्तद्धन्तु पिष्टे विधिरेष चापि ॥ १४ ॥
[5]वार्ताकशिग्रिवन्द्रसुरापटोलकिराततिक्तामलकीफलेषु ॥
कासीससामुद्ररसाञ्जनानि जात्यास्तथा क्षा(को)रकमेव चापि॥१५॥
प्रक्लिन्नवर्त्मन्युपदिश्यते तु योगाञ्जनं तन्मधुनाऽवघृष्टम् ॥
नादेयमग्र्यं मरिच च शुक्लं नेपालजाता च समप्रमाणा ॥ १६ ॥
समातुलुङ्गद्रव एष योगः कण्डूं निहन्यात् सकृदञ्जनेन ॥
सशृङ्गवेर सुरदारु मुस्तं सिन्धुप्रभू(सू)तं मुकुलानि जात्याः ॥१७॥
[6]सुराप्रपिष्टं त्विदमञ्जनं हि कण्ड्वां च शोफे च हितं वदन्ति ॥
स्यन्दाधिमन्थक्रममाचरेच्च सर्वेषु चैतेषु सदाऽप्रमत्तः ॥ १८ ॥
( विशेषतो नावनमेव कार्यं संसर्जनं चापि यथोपदिष्टम्[7] ॥)

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे [8]कफा-
भिष्यन्दप्रतिषेधो नामैकादशोऽध्यायः ॥ ११ ॥

---

१ 'लोहनाड्या' इति हाराण०। २ 'मुख्या' इति पा०। ३ 'फल बृहत्या मगधोद्भवानामादाय' इति हाराण०। ४ 'स्रोतोजयुक्त खलु सप्तरात्रात्तदुद्धृत स्यात्तु तथैव पथ्यम्' इति हाराण०। ५ 'वार्ताकुशिग्रिवन्द्र°' इति हाराण०। ६ 'सुरासुपिष्ट' इति हाराण०। ७ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते, हाराणचन्द्राभिमतश्च। ८ 'श्लेष्माभिष्यन्द°' इति हाराण०।

# द्वादशोऽध्यायः।

अथातो रक्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मन्थं स्यन्दं सिरोत्पातं सिराहर्षं च रक्तजम् ॥
एकेनैव विधानेन चिकित्सेच्चतुरो गदान् ॥ ३ ॥

व्याध्यार्तांश्चतुरोऽप्येतान् स्निग्धान्कौम्भेन सर्पिषा ॥
रसैरुदारैरथवा सिरामोक्षेण योजयेत् ॥ ४ ॥

विरिक्तानां प्रकामं च शिरांस्येषां विशोधयेत् ॥
वैरेचनिकसिद्धेन सितायुक्तेन सर्पिषा ॥ ५ ॥

(मज्ज्ञा[1] वा तद्विमिश्रेण मेदसा तच्छृतेन वा ॥)

ततः प्रदेहाः परिषेचनानि नस्यानि धूमाश्च यथास्वमेव ॥
आश्च्योतनाभ्यञ्जनतर्पणानि स्निग्धाश्च कार्याः पुटपाकयोगाः ॥६॥

नीलोत्पलोशीरकटङ्कटेरीकालीययष्टीमधुमुस्तरोध्रैः ॥
सपद्मकैर्धौतघृतप्रदिग्धैरक्ष्णोः प्रलेप परितः प्रकुर्यात् ॥७॥

रुजायां चाप्यतिभृशं स्वेदाश्च मृदवो हिताः ॥
अक्ष्णोः समन्ततः कार्यं पातनं च जलौकसाम् ॥ ८ ॥

घृतस्य महती मात्रा पीता चार्तिं नियच्छति ॥
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ ९ ॥

कशेरुमधुकाभ्यां वा चूर्णमम्बरसंवृतम् ॥
न्यस्तमप्स्वान्तरिक्षासु हितमाश्च्योतनं भवेत् ॥ १० ॥

पाटल्यर्जुनश्रीपर्णीधातकीधात्रिबिल्वतः ॥
पुष्पाण्यथ बृहत्योश्च बिम्बीलोटाच्च तुल्यशः ॥ ११ ॥

---

१ श्लोकार्धमेतत् हाराणचन्द्रासमतम्।

समञ्जिष्ठानि मधुना पिष्टानीक्षुरसेन वा ॥
रक्ताभिष्यन्दशान्त्यर्थमेतदञ्जनमिष्यते ॥ १२ ॥
चन्दनं कुमुदं पत्रं शिलाजतु सकुङ्कुमम् ॥
अयस्ताम्ररजस्तुत्थं निम्बनिर्यासमञ्जनम् ॥ १३ ॥
त्रपुकांस्यमलं चापि पिष्ट्वा पुष्परसेन तु ॥
विपुला याः कृता वर्त्यः पूजिताश्चाञ्जने सदा ॥ १४ ॥
स्यादञ्जनं घृतं क्षौद्रं सिरोत्पातस्य भेषजम् ॥
तद्वत्सैन्धवकासीसं स्तन्यघृष्टं च पूजितम् ॥ १५ ॥
मधुना शङ्खनैपालीतुत्थदार्व्यः ससैन्धवाः ॥
रसः शिरीषपुष्पाच्च सुरामरिचमाक्षिकैः ॥ १६ ॥
युक्तं तु मधुना वाऽपि गैरिकं हितमञ्जने[१] ॥
सिराहर्षेऽञ्जनं कुर्यात् फाणितं मधुसंयुतम् ॥ १७ ॥
मधुना तार्क्ष्यजं वाऽपि कासीसं वा ससैन्धवम् ॥
[२]वेत्राम्लस्तन्यसंयुक्तं फाणितं च[३] ससैन्धवम् ॥ १८ ॥
पैत्तं विधिमशेषेण कुर्यादर्जुनशान्तये ॥
इक्षुक्षौद्रसितास्तन्यदार्वीमधुकसैन्धवैः ॥ १९ ॥
सेकाञ्जनं चात्र हितमम्लैराश्च्योतनं तथा ॥
सितामधुककट्वङ्गमस्तुक्षौद्राम्लसैन्धवै. ॥ २० ॥
बीजपूरककोलाम्लदाडिमाम्लैश्च युक्तितः ॥
एकशो वा द्विशो वाऽपि योजितं वा त्रिभिस्त्रिभिः ॥ २१ ॥
स्फटिकं विद्रुमं शङ्खो मधुकं मधु चैव हि ॥
शङ्खक्षौद्रसितायुक्तः सामुद्रः फेन एव वा[४] ॥ २२ ॥

---

१ 'हितमञ्जनम्' इति हाराण० । २ 'वेत्राम्ल स्तन्य°' इति हाराण० । ३ 'तु' इति हाराण० । ४ 'च' इति हाराण० ।

द्वाविमौ विहितौ योगावञ्जनेऽर्जुननाशनौ ॥
सैन्धवक्षौद्रकतकाः सक्षौद्रं वा रसाञ्जनम् ॥ २३ ॥
कासीसं मधुना वाऽपि योज्यमत्राञ्जने सदा ॥
लोहचूर्णानि सर्वाणि धातवो लवणानि च ॥ २४ ॥
रत्नानि दन्ताः शृङ्गाणि गणश्चाप्यवसादनः ॥
कुक्कुटाण्डकपालानि लशुनं कटुकत्रयम् ॥ २५ ॥
करञ्जबीजमेला[1] च लेख्याञ्जनमिदं स्मृतम् ॥
पुटपाकावसानेन रक्तविस्रावणादिना ॥ २६ ॥
संपादितस्य विधिना कृत्स्नेन स्यन्दघातिना ॥
अनेनापहरेच्छुक्रमव्रण कुशलो भिषक् ॥ २७ ॥
उत्तानमवगाढं वा कर्कश वाऽपि सव्रणम् ॥
शिरीषबीजमरिचपिप्पलीसैन्धवैरपि ॥ २८ ॥
शुक्रस्य घर्षणं कार्यमथवा सैन्धवेन तु ॥
कुर्यात्ताम्ररजःशङ्खशिलामरिचसैन्धवैः २९ ॥
अन्त्याद्विगुणितैरेभिरञ्जन शुक्रनाशनम् ॥
कुर्यादञ्जनयोगौ वा सम्यक् [2]श्लोकार्धिकाविमौ ॥ ३० ॥
शङ्खकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ॥
क्षौद्रदन्तार्णवमलशिरीषकुसुमैरपि ॥ ३१ ॥
क्षाराञ्जनं वा वितरेद्बलासग्रथितापहम् ॥
मुद्गान् वा निस्तुषान् भृष्टान् शङ्खक्षौद्रसितायुतान् ॥ ३२ ॥
मधूकसारं मधुना योजयेच्चाञ्जने सदा ॥
बिभीतकास्थिमज्जा वा सक्षौद्र. शुक्रनाशनः ॥ ३३ ॥
शङ्खशुक्तिमधुद्राक्षा[3]मधुकं कतकानि च ॥
द्विस्त्वग्गते सशूले वा वातघ्नं तर्पणं हितम् ॥ ३४ ॥

---

१ 'करञ्जबीजमेलाश्च' इति हाराण०। २ 'श्लोकार्धकाविमौ' इति हाराण०।
३ '°मधूककतकानि च' इति हाराण०। •

वंशजारुष्करौ तालं नारिकेलं च दाहयेत् ॥
विस्राव्य क्षारवच्चूर्णं भावयेत्करभास्थिजम् ॥ ३५ ॥
बहुशोऽञ्जनमेतत्स्याच्छुक्रवैवर्ण्यनाशनम् ॥
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ॥ ३६ ॥
व्रणं गोमांसचूर्णेन पूरयेत् सर्पिषा सह ॥
बहुशोऽवलिखेच्चापि वर्त्मास्योपगतं यदि ॥ ३७ ॥
सशोफश्चाप्यशोफश्च द्वौ पाकौ यौ प्रकीर्तितौ ॥
स्नेहस्वेदोपपन्नस्य तत्र विद्ध्वा सिरां भिषक् ॥ ३८ ॥
सेकाश्च्योतननस्यानि पुटपाकांश्च कारयेत् ॥
सर्वतश्चापि शुद्धस्य कर्तव्यमिदमञ्जनम् ॥ ३९ ॥
ताम्रपात्रस्थितं मांसं[1] सर्पिः सैन्धवसंयुतम् ॥
मैरेयं वाऽपि दध्येवं दध्युत्तरकमेव वा[2] ॥ ४० ॥
घृतं कांस्यमलोपेतं स्तन्यं वाऽपि ससैन्धवम् ॥
मधूकसार मधुना तुल्यांशं गैरिकेण वा ॥ ४१ ॥
सर्पिः सैन्धवताम्राणि योषित्स्तन्ययुतानि वा ॥
दाडिमारेवताश्मन्तकोलाम्लैश्च ससैन्धवाम्[3] ॥
रसक्रियां वा वितरेत्सम्यक्पाकजिघांसया ॥ ४२ ॥
मांसं[4] सैन्धवसंयुक्तं स्थितं सर्पिषि नागरम् ॥
आश्च्योतनाञ्जने योज्यमबलाक्षीरसंयुतम् ॥ ४३ ॥

जात्याः पुष्पं सैन्धवं शृङ्गवेरं कृष्णाबीजं कीटशत्रोश्च सारम् ॥
एतत् पिष्टं नेत्रपाकेऽञ्जनार्थं क्षौद्रोपेतं निर्विशङ्कं[5] प्रयोज्यम् ॥ ४४ ॥
पूयालसे शोणितमोक्षणं च हितं तथैवाप्युपनाहनं च ॥
कृत्स्नो विधिश्चेक्षणपाकघाती यथाविधानं भिषजा प्रयोज्यः ॥ ४५ ॥

---

१ 'मासं सर्पिःसैन्धवसंयुतम्' इति पा०। २ 'च' इति हाराण०। ३ 'ससैन्धवम्' इति हाराण०। ४ 'मासं' इति हाराण०। ५ 'निर्विशङ्कैः' इति पा०।

कासीससिन्धुप्रभवार्द्रकैस्तु हितं भवेदञ्जनमेव चात्र ॥
क्षौद्रान्वितैरेभिरथोपयुञ्ज्यादन्यत्तु ताम्रायसचूर्णयुक्तैः ॥ ४६ ॥
[1]स्नेहादिभिः सम्यगपास्य [2]दोषांस्तृप्तिं विधायाथ यथास्वमेव ॥
प्रक्लिन्नवर्त्मानमुपक्रमेत सेकाञ्जनाश्च्योतननस्यधूमैः ॥ ४७ ॥
मुस्ताहरिद्रामधुकप्रियङ्गुसिद्धार्थरोध्रोत्पलसारिवाभिः ॥
क्षुण्णाभिराश्च्योतनमेव कार्यमत्राञ्जनं चाञ्जनमाक्षिकं स्यात् ॥४८॥
पत्रं फलं चामलकस्य पक्त्वा क्रियां विदध्यादथवाऽञ्जनार्थे ॥
वंशस्य मूलेन रसक्रियां वा वर्तीकृतां ताम्रकपालपक्वाम् ॥ ४९ ॥
रसक्रियां वा त्रिफलाविपक्वां पलाशपुष्पैः खरमञ्जरेर्वा ॥
पिष्ट्वा छगल्याः पयसा मलं वा कांस्यस्य दग्ध्वा सह तान्तवेन ॥५०॥
[3]प्रत्यञ्जनं तन्मरिचैरुपेतं चूर्णेन ताम्रस्य सहोपयोज्यम् ॥
समुद्रफेनं लवणोत्तमं च शङ्खोऽथ मुद्गो मरिचं च शुक्लम् ॥ ५१ ॥
चूर्णाञ्जनं [4]जाड्यमथापि कण्डूमक्लिन्नवर्त्मान्युपहन्ति शीघ्रम् ॥
प्रक्लिन्नवर्त्मन्यपि चैत एव योगाः प्रयोज्याश्च समीक्ष्य [5]दोषम् ॥५२॥
सकज्जलं ताम्रघटे च घृष्टं सर्पिर्युतं तुत्थकमञ्जनं च ॥ ५३ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे[6] रक्ताभिष्यन्द-
प्रतिषेधो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथातो लेख्यरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'स्नेहादिना' इति हाराण० । २ 'दोषांस्तृप्त' इति हाराण० । ३ 'प्रत्यञ्जने' इति हाराण० । ४ 'योज्यमथापि' इति हाराण० । ५ 'दोषान्' इति हाराण० । ६ "तन्त्रे रक्ताभिष्यन्द°" इति हाराण० ।

नव येऽभिहिता लेख्याः सामान्यस्तेष्वयं विधिः ॥
स्निग्धवान्तविरिक्तस्य निवातातपसद्मनि ॥ ३ ॥
( आसैर्दृढं[1] गृहीतस्य वेश्मन्युत्तानशायिनः ॥ )
सुखोदकप्रतप्तेन वाससा सुसमाहितः ॥
स्वेदयेद्वर्त्म निर्भुज्य वामाङ्गुष्ठाङ्गुलिस्थितम् ॥ ४ ॥
अङ्गुल्यङ्गुष्ठकाभ्यां तु निर्भुग्नं वर्त्म यत्नतः ॥
प्लोतान्तराभ्यां[2] न यथा चलति स्रंसतेऽपि वा ॥ ५ ॥
ततः प्रमृज्य प्लोतेन वर्त्म शस्त्रपदाङ्कितम् ॥
लिखेच्छस्त्रेण पत्रैर्वा, ततो रक्ते स्थिते पुनः ॥ ६ ॥
स्विन्नं मनोह्वाकासीसव्योषाद्राञ्जनसैन्धवैः[3] ॥
श्लक्ष्णपिष्टैः समाक्षीकैः प्रतिसार्योष्णवारिणा ॥ ७ ॥
प्रक्षाल्य हविषा सिक्तं व्रणवत् समुपाचरेत् ॥
स्वेदावपीडप्रभृतीस्त्र्यहादूर्ध्वं प्रयोजयेत् ॥ ८ ॥
व्यासतस्ते समुद्दिष्टं विधानं लेख्यकर्मणि ॥
असृगास्रावरहितं कण्डूशोफविवर्जितम् ॥ ९ ॥
समं नखनिभं वर्त्म लिखितं सम्यगिष्यते ॥
रक्तमक्षि स्रवेत् स्कन्नं क्षताच्छस्त्रकृताद्भ्रुवम् ॥ १० ॥
रागशोफपरिस्रावास्तिमिरं व्याध्यनिर्जयः ॥
वर्त्म श्यावं गुरु स्तब्धं कण्डूहर्षोपदेहवत् ॥ ११ ॥
नेत्रपाकमुदीर्णं वा कुर्वीताप्रतिकारिणः ॥
एतद्दुर्लिखितं ज्ञेयं स्नेहयित्वा पुनर्लिखेत् ॥ १२ ॥

---

१ हाराणचन्द्रासंमतमिदं श्लोकार्धम् । २ 'प्लोतान्तरीकृत नैव चलति' इति हाराण० । ३ 'मनोज्ञाकासीसव्योषाञ्जनकसैन्धवैः' इति हाराण०-संमतः पाठः ।

व्यावर्तते यदा वर्त्म पक्ष्म चापि विमुह्यति[1] ॥
स्यात् सरुक् स्रावबहुलं[2] तदतिस्रावितं विदुः ॥ १३ ॥
स्नेहस्वेदादिरिष्टः स्यात् क्रमस्तत्रानिलापहः ॥
वर्त्मावबन्ध क्लिष्टं च बहलं यच्च कीर्तितम् ॥ १४ ॥
पोथकीश्चाप्यवलिखेत् प्रच्छयित्वाऽग्रतः शनैः ॥
समं लिखेत्तु मेधावी श्यावकर्दमवर्त्मनी ॥ १५ ॥
कुम्भीकिनी शर्करां च तथैवोत्सङ्गिनीमपि ॥
कल्पयित्वा[3] तु शस्त्रेण लिखेत् पश्चादतन्द्रितः ॥ १६ ॥
भवेयुर्वर्त्मसु च याः पिडकाः कठिना भृशम् ॥
ह्रस्वास्ताम्राश्च ताः पक्का भिन्द्याच्छित्त्वा लिखेदपि ॥ १७ ॥
तरुणीश्चाल्पसंरम्भाः पिडका बाह्यवर्त्मजाः ॥
विदित्वैताः प्रशमयेत् स्वेदालेपनशोधनैः ॥ १८ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे लेख्य-[4]
रोगप्रतिषेधो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
स्वेदयित्वा बिसग्रन्थिं छिद्राण्यस्य निराशयम्[5] ॥
पक्कं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥ ३ ॥
कासीसमागधीपुष्पनेपाल्येलायुतेन[6] तु ॥
ततः क्षौद्रघृतं दत्त्वा सम्यग्बन्धमथाचरेत् ॥ ४ ॥

---

१ 'विमुञ्चति' इति हाराण०। २ 'स्रावभूयिष्ठ' इति हाराण०। ३ 'कर्त-यित्वा' इति हाराण०। ४ "°तन्त्रे लेख्य°" इति हाराण०। ५ 'निराश्रय' इति हाराण०। ६ "°नैपाल्येला°" इति हाराण०।

रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ॥
प्रतिसारणमेकैकं भिन्ने लगण इष्यते ॥ ५ ॥
महत्यपि च युञ्जीत क्षाराग्नी विधिकोविदः ॥[1]
स्विन्नां भिन्नां विनिष्पीड्य भिषगञ्जननामिकाम् ॥ ६ ॥
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥
रसाञ्जनमधुभ्यां तु भित्त्वा[2] वा शस्त्रकर्मवित् ॥ ७ ॥
प्रतिसार्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥
सम्यक्स्विन्ने कृमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥ ८ ॥
त्रिफलातुत्थकासीससैन्धवैश्च रसक्रिया[3] ॥
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ॥ ९ ॥
लेखयेन्मण्डलाग्रेण समन्तात् प्रच्छयेदपि ॥
संस्नेह्य पत्रभङ्गैश्च स्वेदयित्वा यथासुखम् ॥ १० ॥
आपाकाद्विधिनोक्तेन पञ्चभेद्यानुपाचरेत् ॥
सर्वेष्वेतेषु विहितं विधानं स्नेहपूर्वकम् ॥
संपक्के प्रयतो भूत्वा कुर्वीत व्रणरोपणम् ॥ ११ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[4] शालाक्यतन्त्रे भेद्यरोगप्रतिषेधो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'क्षाराग्निविधिकोविद' इति हा० । २ 'भिन्ना वा' इति हाराण० ।
३ 'सैन्धवैस्तु रसक्रियाम्' इति हाराण० । ४ '°तन्त्रे भेद्य°' इति हाराण० ।

स्निग्धं भुक्तवतो ह्यन्नमुपविष्टस्य यत्नतः ॥
संरोषयेत्तु नयनं भिषक् चूर्णैस्तु लावणैः ॥ ३ ॥
ततः संरोषितं तूर्णं सुस्विन्नं परिघट्टितम् ॥
अर्म यत्र वलीजातं तत्रैतल्लगयेद्भिषक् ॥ ४ ॥
अपाङ्गं प्रेक्षमाणस्य बडिशेन समाहितः ॥
[1]मुचुण्ड्याऽऽदाय मेधावी सूचीसूत्रेण वा पुनः ॥ ५ ॥
न चोत्थापयता क्षिप्रं कार्यमभ्यु[2]न्नतं तु तत् ॥
[3]शस्त्राबाधभयाच्चास्य वर्त्मनी ग्राहयेद्दृढम् ॥ ६ ॥
ततः प्रशिथिलीभूतं त्रिभिरेव विलम्बितम् ॥
उल्लिखन्मण्डलाग्रेण तीक्ष्णेन परिशोधयेत् ॥ ७ ॥
विमुक्तं सर्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात् ॥
नीत्वा कनीनकोपान्तं छिन्द्यान्नाति कनीनकम् ॥ ८ ॥
चतुर्भागस्थिते मांसे नाक्षि [4]व्यापत्तिमृच्छति ॥
कनीनकवधादस्रं नाडी [5]वाऽप्युपजायते ॥ ९ ॥
हीनच्छेदात् पुनर्वृद्धिं शीघ्रमेवाधिगच्छति ॥
अर्म [6]यज्जालवच्चापि तदप्यु[7]न्मार्ज्यं लम्बितम् ॥ १० ॥
छिन्द्याद्वक्रेण शस्त्रेण वर्त्म शुक्लान्तमाश्रितम् ॥
प्रतिसारणमक्ष्णोस्तु ततः कार्यमनन्तरम् ॥ ११ ॥
यावनालस्य चूर्णेन त्रिकटोर्लवणस्य च ॥
स्वेदयित्वा ततः पश्चाद्बध्नीयात् कुशलो भिषक् ॥ १२ ॥
दोषर्तुबलकालज्ञः स्नेहं दत्त्वा यथाहितम् ॥
व्रणवत् संविधानं तु तस्य कुर्यादतः परम् ॥ १३ ॥

---

१ 'मुचुण्ड्याऽऽगृह्य मेधावी' इति हाराण० । २ 'कार्यमत्युन्नत' इति पा० । ३ 'शस्त्रपातभयाच्चास्य' इति हाराण० । ४ 'व्यापत्तिमर्हति' इति हाराण० । ५ 'चाप्युपजायते' इति हाराण० । ६ 'यज्जालवद्वापि' इति हाराण० । ७ 'तदेप्योन्मार्ज्यं' इति पा० ।

ऽयहान्मुक्त्वा करस्वेदं दत्त्वा शोधनमाचरेत् ॥
करञ्जबीजामलकमधुकैः साधितं पयः ॥ १४ ॥
हितमाश्च्योतनं शूले द्विरह्नः क्षौद्रसंयुतम् ॥
मधुकोत्पलकिञ्जल्कदूर्वाकल्कैश्च मूर्धनि ॥ १५ ॥
प्रलेपः सघृतः शीतः क्षीरपिष्टः प्रशस्यते ॥
लेख्याञ्जनैरपहरेदर्मशेषं भवेद्यदि ॥ १६ ॥
अर्म चाल्पं दधिनिभं नीलं रक्तमथापि वा ॥
धूसरं तनु यच्चापि शुक्रवत्तदुपाचरेत् ॥ १७ ॥
चर्माभं बहलं यत्तु स्नायुमांसघनावृतम् ॥
छेद्यमेव तदर्म स्यात् कृष्णमण्डलगं च यत् ॥ १८ ॥
विशुद्धवर्णमक्लिष्टं क्रियास्वक्षि गतक्लमम् ॥
छिन्नेऽर्मणि भवेत् सम्यग्यथास्वमनुपद्रवम् ॥ १९ ॥
सिराजाले सिरा यास्तु कठिनास्ताश्च बुद्धिमान् ॥
उल्लिखेन्मण्डलाग्रेण बडिशेनावलम्बिताः ॥ २० ॥
सिरासु पिडका जाता या न सिध्यन्ति भेषजैः ॥
अर्मवन्मण्डलाग्रेण तासां छेदनमिष्यते ॥ २१ ॥
रोगयोश्चैतयोः कार्यमर्मोक्तं प्रतिसारणम् ॥
विधिश्चापि यथादोषं लेखनद्रव्यसंभृतः ॥ २२ ॥
सन्धौ संस्वेद्य शस्त्रेण पर्वणीकां विचक्षणः ॥
उत्तरे च त्रिभागे च बडिशेनावलम्बिताम् ॥ २३ ॥
छिन्द्यात्ततोऽर्धमग्रे, स्यादश्रुनाडी ह्यतोऽन्यथा ॥
प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते ॥ २४ ॥
लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम् ॥
शङ्खं समुद्रफेनं च मण्डूकीं च समुद्रजाम् ॥ २५ ॥

स्फटिकं कुरुविन्दं च प्रवालाश्मन्तकं तथा ॥
वैदूर्यं पुलकं मुक्तामयस्ताम्ररजांसि च ॥ २६ ॥
समभागानि संपिष्य सार्धं स्रोतोञ्जनेन तु ॥
चूर्णाञ्जनं कारयित्वा भाजने मेषशृङ्गजे ॥ २७ ॥
संस्थाप्योभयतः कालमञ्जयेत् सततं बुधः ॥
अर्माणि पिडकां हन्यात् सिराजालानि तेन वै ॥ २८ ॥
अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्बुदमेव च ॥
अभ्यन्तरं वर्त्मशया विधानं तेषु वक्ष्यते ॥ २९ ॥
वर्त्मोपस्वेद्य निर्भुज्य सूच्योत्क्षिप्य प्रयत्नतः ॥
मण्डलाग्रेण तीक्ष्णेन मूले भिन्द्याद्भिषग्वरः ॥ ३० ॥
ततः सैन्धवकासीसकृष्णाभिः प्रतिसारयेत् ॥
स्थिते च रुधिरे वर्त्म दहेत् सम्यक् शलाकया ॥ ३१ ॥
क्षारेणावलिखेच्चापि व्याधिशेषो भवेद्यदि ॥
तीक्ष्णैरुभयतोभागैस्ततो दोषमधिक्षिपेत् ॥ ३२ ॥
वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम् ॥
शस्त्रकर्मण्युपरते मासं च स्यात् सुयन्त्रितः ॥ ३३ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे छेद्यरोगप्रतिषेधो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

अथातः पक्ष्मकोपप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'वैदूर्योपलक' इति हाराण० । २ 'च्छिन्द्याद्भिष°' इति हाराण० । ३ '°मुत्तरतन्त्रे छेद्य°' इति हाराण० । ४ 'पक्ष्मगतरोगप्रतिषेध' इति पा० ।

याप्यस्तु यो वर्त्मभवो विकारः पक्ष्मप्रकोपोऽभिहितः पुरस्तात् ॥
तत्रोपविष्टस्य नरस्य चर्म वर्त्मोपरिष्टादनुतिर्यगेव ॥ ३ ॥
भ्रुवोरधस्तात् परिमुच्य भागौ पक्ष्माश्रितं चैकमतोऽवकृन्तेत् ॥
कनीनकापाङ्गसमं समन्ताद्यवाकृति स्निग्धतनोर्नरस्य ॥ ४ ॥
उत्कृत्य शस्त्रेण यवप्रमाणं बालेन सीव्येद्भिषगप्रमत्त ॥
दत्त्वा च सर्पिर्मधुनाऽवशेषं कुर्याद्विधानं[1] विहितं व्रणे यत् ॥ ५ ॥
ललाटदेशे च निबद्ध[2]पट्टं प्राक्स्यूतमत्राप्यपर च बद्ध्वा ॥
स्थैर्यं गते चाप्यथ शस्त्रमार्गे बालान् विमुञ्चेत् कुशलोऽभिवीक्ष्य॥ ६॥
एवं न चेच्छाम्यति तस्य वर्त्म निर्भुज्य दोषोपहतां वलिं च ॥
[3]ततोऽग्निना वा प्रतिसारयेत्तां क्षारेण वा सम्यगवेक्ष्य धीरः ॥ ७ ॥
छित्त्वा समं वाऽप्युपप[4]क्ष्ममालां सम्यग्गृहीत्वा बडिशैस्त्रि[5]भिस्तु ॥
पथ्याफलेन प्रतिसारयेत्तु [6]घृष्टेन वा तौवरकेण सम्यक् ॥ ८ ॥
चत्वार एते विधयो विहन्तुं पक्ष्मोपरोधं पृथगेव शस्ताः ॥
विरेचनाश्च्योतनधूमनस्यलेपाञ्जनस्नेहरसक्रियाश्च ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे[7] पक्ष्मगतरोग-
प्रतिषेधो नाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

अथातो दृष्टिगतरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'कुर्याद्विधिं योऽभिहितो व्रणे तम्' इति पा० । २ 'निबध्य पट्टं' इति हाराण० । ३ 'अतोऽग्निना' इति हाराण० । ४ '°पक्ष्ममालं' इति हाराण० । ५ '°स्त्रिभिश्च' इति हाराण० । ६ 'पिष्टेन' इति हाराण० । ७ '°तन्त्रे पक्ष्मकोपप्रतिषेधो नाम°' इति हाराण० ।

त्रयः साध्यास्त्रयोऽसाध्या याप्याः षट् च भवन्ति हि ॥
तत्रैकस्य प्रतीकारः कीर्तितो धूमदर्शिनः ॥ ३ ॥
दृष्टौ पित्तविदग्धायां विदग्धायां कफेन च ॥
पित्तश्लेष्महरं कुर्याद्विधिं शस्त्रक्षतादृते ॥ ४ ॥
नस्यसेकाञ्जनालेपपुटपाकैः सतर्पणैः ॥
आद्ये तु त्रैफलं पेयं सर्पिस्त्रैवृतमुत्तरे ॥ ५ ॥
तैल्वकं चोभयोः पथ्यं केवलं जीर्णमेव वा ॥
गैरिकं सैन्धवं कृष्णा गोदन्तस्य मषी[1] तथा ॥ ६ ॥
गोमांसं मरिचं बीजं शिरीषस्य मनःशिला ॥
वृन्तं कपित्थान्मधुना स्वयङ्गुप्ताफलानि च ॥ ७ ॥
चत्वार एते योगाः स्युरुभयोरञ्जने हिताः ॥
कुब्जकाशोकशालाम्रप्रियङ्गुनलिनोत्पलैः ॥ ८ ॥
पुष्पैर्हरेणुकृष्णाह्वापथ्यामलकसंयुतैः ॥
सर्पिर्मधुयुतैश्चूर्णैर्वेणुनाड्यामवस्थितैः ॥ ९ ॥
अञ्जयेद् द्वावपि भिषक् पित्तश्लेष्मविभावितौ ॥
आम्रजम्बूद्भवं पुष्पं तद्रसेन हरेणुकाम् ॥ १० ॥
पिष्ट्वा क्षौद्राज्यसंयुक्तं[2] प्रयोज्यमथवाऽञ्जनम् ॥
नलिनोत्पलकिञ्जल्कगैरिकैर्गोशकृद्रसैः ॥ ११ ॥
गुडिकाञ्जनमेतद्वा दिनरात्र्यन्धयोर्हितम् ॥
रसाञ्जनरसक्षौद्रतालीशस्वर्णगैरिकम् ॥ १२ ॥
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥
शीतं सौवीरकं वाऽपि पिष्ट्वाऽथ रसभावितम् ॥ १३ ॥
कूर्मपित्तेन मतिमान् भावयेद्रौहितेन वा ॥
चूर्णाञ्जनमिदं नित्यं प्रयोज्यं पित्तशान्तये ॥ १४ ॥

१ 'मसी' इति हाराण० । २ 'क्षौद्राज्यसंयुक्तां' इति हाराण० ।

काश्मरीपुष्पमधुकदार्वीरोध्ररसाञ्जनैः ॥
सक्षौद्रमञ्जनं [1]तद्धितमस्रामये सदा ॥ १५ ॥
[2]स्रोतोजं सैन्धवं कृष्णां रेणुकां चापि पेषयेत् ॥
[3]अजामूत्रेण ता वर्त्यः क्षण[4]दान्ध्याञ्जने हिताः ॥ १६ ॥
कालानुसारिवां कृष्णां नागरं मधुकं तथा ॥
तालीशपत्रं क्षणदे गाङ्गेयं च [5]यकृद्रसे ॥ १७ ॥
कृतास्ता वर्तयः पिष्टाश्छायाशुष्काः सुखावहाः ॥
मनःशिलाभयाव्योषबलाकालानुसारिवाः ॥ १८ ॥
सफेना वर्तयः पिष्टाश्छागक्षीरसमन्विताः ॥
गोमूत्रपित्तमदिरा[6]यकृद्धात्रीरसे पचेत् ॥ १९ ॥
क्षुद्राञ्जनं [7]रसेनान्यद्यकृतस्त्रैफलेऽपि वा ॥
गोमूत्राज्यार्णवमलपिप्पलीक्षौद्र[8]कट्फलैः ॥ २० ॥
सैन्धवोपहितं युञ्ज्यान्निहितं वेणुगह्वरे ॥
मेदो यकृद्धृतं चाजं पिप्पल्यः सैन्धवं मधु ॥ २१ ॥
[9]रसमामलकाच्चापि पक्वं सम्यग्विधापयेत् ॥
कोशे खदिरनिर्माणे तद्वत् क्षुद्राञ्जनं हितम् ॥ २२ ॥
हरेणुमगधाजास्थिमज्जैलायकृदन्वितम् ॥
[10]यकृद्रसेनाञ्जनं वा श्लेष्मोपहतदृष्टये ॥ २३ ॥

विपाच्य गोधायकृदर्धपाटितं सुपूरितं मागधिकाभिरग्निना ॥
निषेवितं [11]तद्यकृदञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु ॥ २४ ॥

---

१ 'तद्धित नेत्रामये' इति हाराण०। २ 'स्रोतज' इति हाराण०। ३ 'अजमूत्रेण' इति हाराण०। ४ '°दान्धाञ्जने' इति हाराण०। ५ 'शकृद्रसे' इति हाराण०। ६ '°शकृद्धात्रीरसे' इति हाराण०। ७ 'रसे चान्यद्' इति हा०। ८ '°कट्फलम्' इति हाराण०। ९ 'रसमामलक चापि' इति हाराण०। १० 'शकृद्रसेनाञ्जन' इति हाराण०। ११ 'तत् सकृदञ्जनेन' इति हाराण०।

तथा यकृच्छागभवं हुताशने विपाच्य सम्यङ्मागधासमन्वितम् ॥
प्रयोजितं पूर्ववदाश्वसंशयं जयेत् क्षपान्ध्यं सकृदञ्जनान्नृणाम्॥२५॥
प्लीहा यकृच्चाप्युपभक्षिते[1] उभे प्रकल्प्य शूल्ये घृततैलसंयुते ॥
ते सार्षपस्नेहसमायुतेऽञ्जनं नक्तान्ध्यमाश्वेव हतः प्रयोजिते ॥२६॥
नदीजशिम्बी[2]त्रिकटून्यथाञ्जनं मनःशिला द्वे च निशे य[3](श)कृद्रवाम्॥
सचन्दनेयं गुटिकाऽथवाऽञ्जनं प्रशस्यते वै दिवसेष्वपश्यताम्॥२७॥
भवन्ति याप्याः खलु ये षडामया हरेदसृक्तेषु सिराविमोक्षणैः ॥
विरेचयेच्चापि पुराणसर्पिषा विरेचनाङ्गोपहितेन सर्वदा ॥ २८ ॥
पयोविमिश्रं पवनोद्भवे हितं वदन्ति पञ्चाङ्गुलतैलमेव तु ॥
भवेद्घृतं त्रैफलमेव शोधनं विशेषतः शोणितपित्तरोगयोः ॥ २९ ॥
त्रिवृद्विरेकः कफजे प्रशस्यते त्रिदोषजे तैलमुशन्ति तत्कृतम् ॥
पुराणसर्पिस्तिमिरेषु सर्वशो[4] हितं भवेदायसभाजनस्थितम् ॥ ३० ॥
हितं च विद्यात्त्रिफलाघृतं सदा कृतं च यन्मेषविषाणनामभिः ॥
सदाऽवलिह्यात्त्रिफलां सुचूर्णितां घृतप्रगाढां तिमिरेऽथ पित्तजे॥३१॥
समीरजे तैलयुतां कफात्मके मधुप्रगाढां विदधीत युक्तितः ॥
गवां शकृत्क्वाथविपक्वमुत्तमं हितं तु तैलं तिमिरेषु नावनम् ॥३२॥
हितं घृतं केवल[5] एव पैत्तिके ह्यजाविकं यन्मधुरैर्विपाचितम् ॥
तैलं स्थिरादौ मधुरे च यद्गणे तथाऽणुतैलं पवनासृगुत्थयोः॥३३॥
सहाश्वगन्धातिबलावरीश्रृतं हितं च नस्ये त्रिवृतं यदीरितम् ॥
अलोद्भवानूपजमांससंस्कृताद्घृतं विधेयं पयसो यदुत्थितम् ॥ ३४ ॥
ससैन्धवः क्रव्यभुगेणमांसयोर्हितः ससर्पिः समधुः पुटाह्वयः ॥
वसाऽथ गृध्रोरगताम्रचूडजा सदा प्रशस्ता मधुकान्विताऽञ्जने ॥३५॥

---

१ 'उपलक्षिते' इति पा०। २ '°शिम्बीकटुकान्यथाञ्जन' इति हाराण०। ३ 'यकृद्रसे' इति हाराण०। ४ 'सर्वतो' इति हाराण०। ५ 'केवलमेव' इति हाराण०।

प्रत्यञ्जनं स्रोतसि यत्समुत्थितं क्रमाद्रसक्षीरघृतेषु भावितम् ॥
स्थितं दशाहत्रयमेतदञ्जनं कृष्णोरगास्ये कुशसंप्रवेष्टिते ॥ ३६ ॥
तन्मालतीकोरक[1]सैन्धवायुतं सदाऽञ्जनं स्यात्तिमिरेऽथ रागिणि ॥
सुभावितं वा पयसा दिनत्रयं काचापहं शास्त्रविदः प्रचक्षते ॥३७॥
हविर्हितं क्षीरभवं तु पैत्तिके वदन्ति नस्ये[2] मधुरौषधैः कृतम् ॥
तत्तर्पणे चैव हितं प्रयोजितं सजाङ्गलस्तेषु च यः पुटाह्वयः ॥३८॥
रसाञ्जनक्षौद्रसितामनःशिलाः क्षुद्राञ्जन तन्मधुकेन संयुतम् ॥
समाञ्जनं वा कनकाकरोद्भवं सुचूर्णितं श्रेष्ठमुशन्ति तद्विदः ॥३९॥
भिल्लोटगन्धोदकसेक[3]सेचितं प्रत्यञ्जने चात्र हितं तु तुत्थकम् ॥
समेषशृङ्गाञ्जनभागसंमितं जलोद्भवं काचमलं व्यपोहति ॥ ४० ॥
पलाशरोहीतमधूकजा रसाः क्षौद्रेण युक्ता मदिराग्रमिश्रिताः[4] ॥
उशीरलोध्रत्रिफलाप्रियङ्गुभिः पचेत्तु नस्यं कफरोगशान्तये ॥ ४१ ॥
विडङ्गपाठाकिणिहीङ्गुदीत्वचः प्रयोजयेद्धूममु[5]शीरसंयुताः ॥
वनस्पतिक्काथविपाचितं घृतं हितं हरिद्रान[6]लदे च तर्पणम् ॥ ४२ ॥
समागधो माक्षिकसैन्धवाढ्य सजाङ्गलः स्यात् पुटपाक एव च ॥
मनःशिलात्र्यूषणशङ्खमाक्षिकैः ससिन्धुकासीसरसाञ्जनैः क्रियाः ४३
हिते च कासीसरसाञ्जने तथा वदन्ति पथ्ये गुडनागरैर्युते ॥
यदञ्जनं वा बहुशो निषेचितं स[7]मूत्रवर्गे त्रिफलोदके शृते ॥ ४४ ॥
निशाचरास्थिस्थितमेतदञ्जनं क्षिपेच्च मासं सलिलेऽस्थिरे पुनः ॥
मेषस्य पुष्पैर्मधुकेन संयुत तदञ्जनं सर्वकृते प्रयोजयेत् ॥ ४५ ॥
क्रियाश्च सर्वाः, क्षतजोद्भवे हितः क्रमः परिम्लायिनि चापि पित्तहृत्॥
क्रमो हितः स्यन्दहरः प्रयोजितः समीक्ष्य दोषेर्षु[8] यथास्वमेव च ४६

१ "°क्षारक" इति हाराण० । २ 'नस्य' इति हाराण० । ३ "सेकसेवितं प्रत्यञ्जन' इति हाराण० । ४ 'मदिराग्रपेषिता" इति पा० । ५ "°मुशीर-सयुतम्' इति हाराण० । ६ "°नलदेऽथ तर्पणे' इति हाराण० । ७ 'सुमूत्रवर्गे' इति हाराण० । ८ 'रोगे च', इति पा० ।

[1]दोषोदये नैव च विप्लुतिं गते द्रव्याणि नस्यादिषु योजयेद्बुधः ॥
पुनश्च कल्पेऽञ्जनविस्तरः शुभः प्रवक्ष्यतेऽन्यस्तमपीह योजयेत्॥४७॥
घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकं यवानपि ॥
निषेवमाणस्य नरस्य यत्नतो भयं सुघोरात्तिमिरान्न विद्यते ॥ ४८ ॥
शतावरीपायस एव केवलस्तथा कृतो वाऽऽमलकेषु पायसः ॥
प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनो वा तिमिरं व्यपोहति ॥ ४९॥
जीवन्तिशाकं सुनिषण्णकं च सतण्डुलीयं वरवास्तुकं च ॥
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलं च ॥ ५० ॥
पटोलकर्कोटककारवेल्लवार्ताकुतर्कारिकरीरजानि ॥
शाकानि शिग्र्वार्तगलानि चैव हितानि दृष्टेर्घृतसाधितानि ॥ ५१ ॥

विवर्जयेत्सिरामोक्षं तिमिरे रागमागते ॥
यन्त्रेणोत्पीडितो दोषो निहन्यादाशु दर्शनम् ॥ ५२ ॥
अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम् ॥
कृच्छ्रं द्वितीये रागि स्यात्तृतीये याप्यमुच्यते ॥ ५३ ॥
रागप्राप्तेष्वपि हितास्तिमिरेषु तथा क्रियाः ॥
यापनार्थं यथोद्दिष्टाः सेव्याश्चापि जलौकसः ॥ ५४ ॥
श्लैष्मिके लिङ्गनाशे तु कर्म वक्ष्यामि सिद्धये ॥
न चेदर्धेन्दुघर्माम्बुबिन्दुमुक्ताकृतिः स्थिरः ॥ ५५ ॥
विषमो वा तनुर्मध्ये राजिमान् वा बहुप्रभः ॥
दृष्टिस्थो लक्ष्यते दोषः सरुजो वा स[2]लोहितः ॥ ५६ ॥
स्निग्धस्विन्नस्य तस्याथ काले नात्युष्णशीतले ॥
यन्त्रितस्योपविष्टस्य स्वां नासां पश्यतः समम् ॥ ५७ ॥
मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा ह्यपाङ्गतः ॥
उन्मीलय नयने सम्यक् सिराजालविवर्जिते ॥ ५८ ॥

---

१ 'दोषोदयेनैव [=दोषाभिवृद्ध्या]' इति हाराण० । २ 'सुलोहितः' इति हाराण० ।

नाधो नोर्ध्वं न[1] पार्श्वाभ्यां छिद्रे दैवकृते ततः ॥
शलाकया प्रयत्नेन विश्वस्तं यववक्रया[2] ॥ ५९ ॥
मध्यप्रदेशिन्यङ्गुष्ठस्थिरहस्तगृहीतया ॥
दक्षिणेन भिषक् सव्यं विध्येत् सव्येन चेतरत् ॥ ६० ॥
वारिबिन्द्वागमः सम्यग् भवेच्छब्दस्तथा व्यधे ॥
संसिच्य विद्धमात्रं तु योषित्स्तन्येन कोविदः ॥ ६१ ॥
स्थिरे दोषे चले वाऽपि स्वेदयेदक्षि बाह्यतः ॥
सम्यक् शलाकां संस्थाप्य भङ्गैरनिलनाशनैः ॥ ६२ ॥
शलाकाग्रेण तु ततो निर्लिखेद्दृष्टिमण्डलम् ॥
विध्यतो[3] योऽन्यपार्श्वेऽक्ष्णस्तं रुद्ध्वा नासिकापुटम् ॥ ६३ ॥
उच्छिङ्घनेन हर्तव्यो दृष्टिमण्डलगः[4] कफः ॥
निरभ्र इव घर्मांशुर्यदा दृष्टिः प्रकाशते ॥ ६४ ॥
तदाऽसौ लिखिता सम्यग् ज्ञेया या चापि निर्व्यथा ॥
([5]एवं त्वशक्ये निर्हर्तुं दोषे प्रत्यागतेऽपि वा ॥ ६५ ॥
स्नेहाद्यैरुपपन्नस्य व्यधो भूयो विधीयते ॥)
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ ६६ ॥
घृतेनाभ्यज्य नयनं वस्त्रपट्टेन वेष्टयेत् ॥
ततो गृहे निराबाधे शयीतोत्तान एव च ॥ ६७ ॥
उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि[6] च ॥
तत्कालं नाचरेदूर्ध्वं[7] यन्त्रणा स्नेहपीतवत् ॥ ६८ ॥
त्र्यहात् त्र्यहाच्च धावेत कषायैरनिलापहैः ॥
वायोर्भयात् त्र्यहादूर्ध्वं स्वेदयेदक्षि पूर्ववत् ॥ ६९ ॥

---

१ 'च पार्श्वाभ्या' इति हाराण० । २ 'यववक्रया' इति हाराण० । ३ 'विद्धतो' [=कृतवेधनस्याक्ष्णः] इति हाराण० । ४ '°मण्डलजः' इति हाराण० । ५ श्लोकोऽय हाराणचन्द्रस्याप्यसंमतः । ६ '°ष्ठीवनोज्जृम्भणानि' इति हाराण० । ७ '°दूर्ध्वं विधिश्च स्नेह°' इति हाराण० ।

दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् ॥
पश्चात्कर्म च सेवेत लध्वन्नं चापि मात्रया ॥ ७० ॥
सिराव्यधविधौ पूर्वं नरा ये[१] च विवर्जिताः ॥
न तेषां नीलिकां विध्येदन्यत्राभिहिताद्भिषक् ॥ ७१ ॥
पूर्यते शोणितेनाक्षि सिरावेधाद्विसर्पता ॥
तत्र स्त्रीस्तन्ययष्ट्याह्वपक्क सेके हितं घृतम् ॥ ७२ ॥
अपाङ्गासन्नविद्धे तु शोफशूलाश्रुरक्तताः ॥
तत्रोपनाह भ्रूमध्ये कुर्याच्चोष्णाज्यसेचनम् ॥ ७३ ॥
व्यधेनासन्नकृष्णेन रागः[२] कृष्ण च पीड्यते ॥
तत्राध शोधन सेकः सर्पिषा रक्तमोक्षणम् ॥ ७४ ॥
अथाप्युपरि विद्धे तु कष्टा रुक् संप्रवर्तते ॥
तत्र कोष्णेन हविषा परिषेकः प्रशस्यते ॥ ७५ ॥
शूलाश्रुरागास्त्वत्यर्थमधोवेधेन[३] पिच्छिलः ॥
शलाकामनु चास्रावः[४]स्तत्र पूर्वञ्चिकित्सितम् ॥ ७६ ॥
रागाश्रुवेदनास्तम्भहर्षाश्चातिविघट्टिते ॥
स्नेहस्वेदौ हितौ तत्र हित चा[५]प्यनुवासनम् ॥ ७७ ॥
दोषः[६]स्त्वधोऽपकृष्टोऽपि तरुणः पुनरूर्ध्वगः ॥
कुर्याच्छुँ[७]क्कारुण नेत्र तीव्ररुङ्नष्टदर्शनम् ॥ ७८ ॥
मधुरैस्तत्र सिद्धेन घृतेनाक्ष्ण. प्रसेचनम् ॥
शिरोबस्तिं च तेनैव दद्यान्मांसैश्च भोजनम् ॥ ७९ ॥
दोषस्तु संजातबलो घनः संपूर्णमण्डलः ॥
प्राप्य नश्येच्छलाकाग्र तन्वभ्रमिव मारुतम् ॥ ८० ॥

---

१ 'येऽत्र विवर्जिता.' इति हाराण० । २ 'भाग कृष्णश्च' इति हाराण० । ३ '°मधोविद्धे भवन्ति हि' इति हाराण० । ४ 'विदधीत भिषक् तत्र' इति पा० । 'विदधीत भिषग्धीमान्' इति हाराण० । ५ 'वाप्यनु°' इति हाराण० । ६ 'दोषस्त्वथोपकृष्टो' इति हाराण० । ७ '°च्छक्कारुण' इति हाराण० ।

मूर्धाभिघातव्यायामव्यवायवमिमूर्च्छनैः ॥
दोषः प्रत्येति कोपाच्च [1]विद्धोऽतितरुणश्च यः ॥ ८१ ॥
शलाका कर्कशा शूलं, खरा दोषपरिस्रुतिम् ॥
व्रणं विशालं स्थूलाग्रा, तीक्ष्णा हिंस्यादनेकधा ॥ ८२ ॥
जलास्रावं तु विषमा, क्रियासङ्गमथास्थिरा ॥
करोति वर्जिता दोषैस्तस्मादेभिर्हिता भवेत् ॥ ८३ ॥
अष्टाङ्गुलायता मध्ये सूत्रेण परिवेष्टिता ॥
अङ्गुष्ठपर्वसमिता वक्त्रयोर्मुकुलाकृतिः ॥ ८४ ॥
ताम्रायसी [2]शातकुम्भी शलाका स्यादनिन्दिता ॥
रागः शोफोऽर्बुदं चोषो बुद्बुदं शूकराक्षिता ॥ ८५ ॥
अधिमन्थादयश्चान्ये रोगाः स्युर्व्यधदोषजाः ॥
अहिताचारतो वाऽपि यथास्वं तानुपाचरेत् ॥ ८६ ॥
रुजायामक्षिरागे वा योगान् भूयो निबोध मे ॥
गैरिकं सारिवा दूर्वा यवपिष्ट घृत पयः ॥ ८७ ॥
[3]सुखालेपः प्रयोज्योऽयं वेदनारागशान्तये ॥
मृदुभृष्टैस्तिलैर्वाऽपि सिद्धार्थकसमायुतैः ॥ ८८ ॥
मातुलुङ्गरसोपेतैः [4]सुखालेपस्तदर्थकृत् ॥
पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि ॥ ८९ ॥
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ॥
दारुपद्मकशुण्ठीभिरेवमेव कृतोऽपि वा ॥ ९० ॥
द्राक्षामधुककुष्ठैर्वा तद्वत् सैन्धवसंयुतैः ॥
[5]रोध्रसैन्धवमृद्वीकामधुकैर्वाऽप्यजापयः ॥ ९१ ॥

---

१ 'वृद्धः' इति पा० ।　२ 'शातकौम्भी' इति हाराण० ।　३–४ 'मुखालेपः' इति पा० ।　५ 'रोध्रसैन्धव–' इत्यत आरभ्य '°लाक्षासितायुतैः' इति यावत् हाराणचन्द्रो न पठति ।

श्रुतं सेके प्रयोक्तव्यं रुजारागनिवारणम् ॥
मधुकोत्पलकुष्ठैर्वा द्राक्षालाक्षासितायुतैः ॥
ससैन्धवैः श्रुतं क्षीरं रुजारागनिबर्हणम् ॥ ९२ ॥
शतावरीपृथक्पर्णीमुस्तामलकपद्मकैः[1] ॥
साजक्षीरैः शृतं सर्पिर्दाहशूलनिबर्हणम् ॥ ९३ ॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ॥
काकोल्यादिप्रतीवापं तद्युञ्ज्यात् सर्वकर्मसु ॥ ९४ ॥
शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत् ॥
ततः सिरां दहेद्वाऽपि मतिमान् कीर्तितं यथा ॥ ९५ ॥
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे ॥
मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥ ९६ ॥
सुमनायाश्च पुष्पाणि[2] मुक्ता वैदूर्यमेव च ॥
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत् ॥ ९७ ॥
प्रविधाय च तद्वर्तीर्योजयेच्चाञ्जने भिषक् ॥
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिलाम् ॥ ९८ ॥
मरिचानि च तद्वर्तीः कारयेच्चापि पूर्ववत् ॥
दृष्टिस्थैर्यार्थमेतत्तु विदध्यादञ्जने हितम् ॥ ९९ ॥
भूयो वक्ष्यामि मुख्यानि विस्तरेणाञ्जनानि च ॥
कल्पे नानाप्रकाराणि तान्यपीह प्रयोजयेत् ॥ १०० ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[3] शालाक्यतन्त्रे दृष्टिगत-
रोगविज्ञानीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

१ '°मधुकपद्मकैः' इति पा० । २ 'तुल्यानि' इति पा० । ३ '°तन्त्रे दृष्टिगतरोगप्रतिषेधीयो' इति हाराण० ।

## अष्टादशोऽध्यायः ।

अथातः क्रियाकल्पं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
सर्वशास्त्रार्थतत्त्वज्ञस्तपोदृष्टिरुदारधीः[1] ॥
वैश्वामित्रं शशासाथ शिष्यं काशिपतिर्मुनिः ॥ ३ ॥
तर्पणं पुटपाकश्च सेक आश्च्योतनाञ्जने ॥
तत्र तत्रोपदिष्टानि तेषां व्यासं निबोध मे ॥ ४ ॥
संशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने ॥
पूर्वाह्ले वाऽपराह्ले[2] वा कार्यमक्ष्णोस्तु तर्पणम् ॥ ५ ॥
वातातपरजोहीने वेश्मन्युत्तानशायिनः ॥
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥ ६ ॥
समौ दृढावसंबाधौ कर्तव्यौ नेत्रकोशयोः ॥
पूरयेद्घृतमण्डस्य विलीनस्य सुखोदके[3] ॥ ७ ॥
आपक्ष्माग्रात्ततः स्थाप्यं पञ्च तद्वाक्शतानि तु ॥
स्वस्थे, कफे षट्, पित्तेऽष्टौ, दश वाते तदुत्तमम् ॥ ८ ॥
रोगस्थानविशेषेण केचित् कालं प्रचक्षते ॥
यथाक्रमोपदिष्टेषु त्रीण्येकं पञ्च सप्त च ॥ ९ ॥
दश दृष्ट्यामथाष्टौ च वाक्शतानि विभावयेत् ॥
ततश्चापाङ्गतः स्नेहं स्रावयित्वाऽक्षि शोधयेत् ॥ १० ॥
स्विन्नेन यवपिष्टेन, स्नेहवीर्यैरितं ततः ॥
यथास्वं धूमपानेन कफमस्य विशोधयेत् ॥ ११ ॥
एकाहं वा त्र्यहं वाऽपि पञ्चाहं चेष्यते परम् ॥
तर्पणे तृप्तिलिङ्गानि नेत्रस्येमानि लक्षयेत् ॥ १२ ॥

---

१ 'तपोनिधि.' इति पा० । २ 'चापराह्ले वा' इति हाराण० । ३ 'सुखोदकैः' इति हाराण० ।

सुखस्वप्नावबोधत्व वैशद्यं वर्णपाटवम् ॥
निर्वृतिर्व्याधिविध्वंसः क्रियालाघवमेव च ॥ १३ ॥
गुर्वाविलमतिस्निग्धमश्रुकण्डूपदेहवत् ॥
ज्ञेयं दोषसमुत्क्लिष्टं नेत्रमत्यर्थतर्पितम् ॥ १४ ॥
रूक्षमाविलमस्राढ्यमसहं रूपदर्शने ॥
व्याधिवृद्धिश्च तज्ज्ञेय हीनतर्पितमक्षि च ॥ १५ ॥
अनयोर्दोषबाहुल्यात् प्रयतेत चिकित्सिते ॥
धूमनस्याञ्जनैः सेकै रुक्षैः स्निग्धैश्च योगवित् ॥ १६ ॥
ताम्यत्यतिविशुष्कं[1] यद्रूक्षं यच्चातिदारुणम् ॥
शीर्णपक्ष्माविलं जिह्मं रोगक्लिष्टं च यत्कृशम् ॥ १७ ॥
तदक्षि तर्पणादेव लभेतोर्जामसंशयम् ॥
दुर्दिनात्युष्णशीतेषु चिन्तायासभ्रमेषु[2] च ॥ १८ ॥
अशान्तोपद्रवे चाक्षिण तर्पण न प्रशस्यते ॥
पुटपाकस्तथतेषु, नस्यं येषु च गर्हितम् ॥ १९ ॥
तर्पणार्हा न ये प्रोक्ताः स्नेहपानाक्षमाश्च ये ॥
ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च ॥ २० ॥
पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् ॥
स्नेहनो लेखनीयश्च रोपणीयश्च स त्रिधा ॥ २१ ॥
हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि च लेखनः ॥
दृष्टेर्बलार्थमपरः[3] पित्तासृग्व्रणवातनुत् ॥ २२ ॥
स्नेहमांसवसामज्जमेद.स्वाद्वौषधैः कृतः ॥
स्नेहनः पुटपाकस्तु धार्यो द्वे वाक्शते तु सः ॥ २३ ॥

---

१ 'विशुष्क च यद्रूक्ष चाति°' इति हाराण०। २ 'चिन्ताया सम्भ्रमेषु च' इति हाराण०। ३ '°भितर' इति हाराण०।

जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंभृतैः ॥
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥ २४ ॥
समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः ॥
लेखनो वाक्शत तस्य परं धारणमुच्यते ॥ २५ ॥
स्तन्यजाङ्गलमध्वाज्यतिक्तद्रव्यविपाचितः ॥
लेखनात्रिगुणं धार्यः पुटपाकस्तु रोपणः ॥ २६ ॥
वितरेत्तर्पणोक्तं तु धूम हित्वा तु रोपणम् ॥
स्नेहस्वेदौ द्वयोः कार्यौ, [1]कार्यौ नैव च रोपणे ॥ २७ ॥
एकाहं वा द्व्यहं वाऽपि त्र्यहं वाऽप्यवचारणम् ॥
यन्त्रणा तु क्रियाकालाद्द्विगुणं कालमिष्यते ॥ २८ ॥
तेजांस्यनिलमाकाशमादर्शं भास्वराणि च ॥
नेक्षेत तर्पिते नेत्रे पुटपाककृते तथा ॥ २९ ॥
मिथ्योपचारादनयोर्यो व्याधिरुपजायते ॥
अञ्जनाश्च्योतनस्वेदैर्यथास्व तमुपाचरेत् ॥ ३० ॥
प्रसन्नवर्णं विशदं वातातपसह लघु ॥
सुखस्वप्नावबोध्यक्षि पुटपाकगुणान्वितम् ॥ ३१ ॥
अतियोगाद्रुजः शोफः पिडकास्तिमिरोद्गमः ॥
पाकोऽश्रु हर्षणं चापि हीने दोषोद्गमस्तथा ॥ ३२ ॥
अत ऊर्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम् ॥
द्वौ विल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य पेषितौ ॥ ३३ ॥
द्रव्याणां बिल्वमात्रं तु द्रवाणां कुडवो मतः ॥
[2]तदेकध्यं समालोड्य पत्रैः सुपरिवेष्टितम् ॥ ३४ ॥
([3]काश्मरीकुमुदैरण्डपद्मिनीकदलीभवैः ॥)
मृदावलिप्तमङ्गारैः खादिरैरवकूलयेत् ॥ ३५ ॥

---

१ 'कार्यौ' इति हाराण० । २ 'तदैकत्र समालोड्य' इति हाराण० ।
३ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते, परं हाराणचन्द्रस्तु तं पठति ।

कतकाश्मन्तकैरण्डपाटलावृषबादरैः ॥
सक्षीरद्रुमकाष्ठैर्वा गोमयैर्वाऽपि युक्तितः ॥ ३६ ॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं नृणाम् ॥
तर्पणोक्तेन विधिना यथावदवचारयेत् ॥ ३७ ॥
कनीनके निषेच्यः स्यान्नित्यमुत्तानशायिनः ॥
रक्ते पित्ते च तौ शीतौ कोष्णौ वातकफापहौ ॥ ३८ ॥
अत्युष्णतीक्ष्णौ सततं दाहपाककरौ स्मृतौ ॥
अल्पतौ शीतलौ चाश्रुस्तम्भरुग्घर्षकारकौ ॥ ३९ ॥
अतिमात्रौ कषायत्वसङ्कोचस्फुरणावहौ ॥
हीनप्रमाणौ दोषाणामुत्क्लेशजननौ भृशम् ॥ ४० ॥
युक्तौ कृतौ दाहशोफरुग्घर्षस्रावनाशनौ ॥
कण्डूपदेहदूषीकारक्तराजिविनाशनौ ॥ ४१ ॥
तस्मात् परिहरन् दोषान् विदध्यात्तौ सुखावहौ ॥
व्यापदश्च यथादोष नस्यधूमाञ्जनैर्जयेत् ॥ ४२ ॥
आद्यन्तयोश्चाप्यनयोः स्वेद उष्णाम्बुचैलिकः ॥
तथा हितोऽवसाने च धूमः श्लेष्मसमुच्छ्रितौ ॥ ४३ ॥
यथादोषोपयुक्तं तु नातिप्रबलमोजसा ॥
[१]रोगमाश्च्योतनं हन्ति सेकस्तु बलवत्तरम् ॥ ४४ ॥
तौ त्रिधैवोपयुज्येते रोगेषु पुटपाकवत् ॥
लेखने सप्त चाष्टौ वा बिन्दवः स्नेहिके दश ॥ ४५ ॥
आश्च्योतने प्रयोक्तव्या द्वादशैव तु रोपणे ॥
सेकस्य द्विगुणः कालः पुटपाकात् परो मतः ॥ ४६ ॥
अथवा कार्यनिर्वृत्तेरुपयोगो यथाक्रमम् ॥
पूर्वापराह्णे मध्याह्ने रुजाकालेषु चोभयोः ॥ ४७ ॥

१ 'रागमाश्च्योतन' इति हाराण०।

योगायोगान् स्नेहसेके तर्पणोक्तान् प्रचक्षते ॥
रोगाञ्छिरसि संभूतान् हत्वाऽतिप्रबलान् गुणान् ॥ ४८ ॥
करोति शिरसो बस्तिरुक्ता ये मूर्धतैलिकाः ॥
शुद्धदेहस्य सायाह्ने यथाव्याध्यशितस्य तु ॥ ४९ ॥
ऋज्वासीनस्य बध्नीयाद्बस्तिकोशं ततो दृढम् ॥
यथाव्याधिशृतस्नेहपूर्णं संयम्य धारयेत् ॥ ५० ॥
तर्पणोक्तं दशगुणं यथादोषं विधानवित् ॥
व्यक्तरूपेषु दोषेषु शुद्धकायस्य केवले ॥ ५१ ॥
नेत्र एव स्थिते दोषे प्राप्तमञ्जनमाचरेत् ॥
लेखनं रोपणं चापि प्रसादनमथापि वा ॥ ५२ ॥
तत्र पञ्च रसान् व्यस्तानाद्यैकरसवर्जितान् ॥
पञ्चधा लेखनं युञ्ज्याद्यथादोषमतन्द्रितः ॥ ५३ ॥
नेत्रवर्त्मसिराकोशस्रोतःशृङ्गाटकाश्रितम् ॥
मुखनासाक्षिभिर्दोषमोजसा स्रावयेत्तु तत् ॥ ५४ ॥
[1]कषायं तिक्तकं वाऽपि सस्नेहं रोपणं मतम् ॥
[2]तत्स्नेहशैत्याद्वर्ण्यं स्याद्दृष्टेश्च बलवर्धनम् ॥ ५५ ॥
मधुरं स्नेहसंपन्नमञ्जनं तु प्रसादनम् ॥
दृष्टिदोषप्रसादार्थं स्नेहनार्थं च तद्धितम् ॥ ५६ ॥
यथादोषं प्रयोज्यानि तानि [3]रोगविशारदैः ॥
अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु ॥ ५७ ॥
गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि तु ॥
यथापूर्वं बल तेषां श्रेष्ठमाहुर्मनीषिणः ॥ ५८ ॥
हरेणुमात्रा वर्तिः स्याल्लेखनस्य प्रमाणतः ॥
प्रसादनस्य चाध्यर्धा द्विगुणा रोपणस्य च ॥ ५९ ॥

१ 'कषायतिक्तक चापि' इति हाराण० । २ 'तत्स्नेहशैत्याद्वर्ण्य' इति पा० । ३ 'दोषविशारदैः' इति हाराण० ।

रसाञ्जनस्य मात्रा तु यथा[1]वर्तिमिता मता ॥
द्वित्रिचतुःशलाकाश्च चूर्णस्याप्यनुपूर्वशः ॥ ६० ॥
तेषां तुल्यगुणान्येव विदध्याद्भाजनान्यपि ॥
सौवर्णं राजतं शार्ङ्गं ताम्रं वैदूर्यकांस्यजम् ॥ ६१ ॥
आयसानि च योज्यानि शलाकाश्च यथाक्रमम् ॥
वक्त्रयोर्मुकुलाकारा कलायपरिमण्डला ॥ ६२ ॥
अष्टाङ्गुला तनुर्मध्ये सुकृता साधुनिग्रहा ॥
[2]औदुम्बर्यश्मजा वाऽपि शारीरी वा हिता भवेत् ॥ ६३ ॥
वामेनाक्षि विनिर्भुज्य हस्तेन सुसमाहितः ॥
शलाकया दक्षिणेन क्षिपेत् कानीनमञ्जनम् ॥ ६४ ॥
आपाङ्ग्यं वा यथायोगं कुर्याच्चापि गतागतम् ॥
वर्त्मोपलेपि वा यत्तदङ्गुल्यैव प्रयोजयेत् ॥ ६५ ॥
अक्षि नात्यन्तयोरञ्ज्याद्बाधमानोऽपि वा भिषक् ॥
[3]न चानिर्वान्तदोषेऽक्षिण धावनं संप्रयोजयेत् ॥ ६६ ॥
दोषः प्रतिनिवृत्तः सन् हन्याद् दृष्टेर्बलं तथा ॥
गतदोषमपेताश्रु [4]पश्येद्यत् सम्यगम्भसा ॥ ६७ ॥
प्रक्षाल्याक्षि यथादोषं कार्यं प्रत्यञ्जनं ततः ॥
श्रमोदावर्तरुदितमद्यक्रोधभयज्वरैः ॥ ६८ ॥
वेगाघातशिरोदोषैश्चार्तानां नेष्यतेऽञ्जनम् ॥
रागरुक्तिमिरास्रावशूलसंरम्भसं[5]भवात् ॥ ६९ ॥
निद्राक्षये क्रियाऽशक्ति, प्रवाते दृग्बलक्षयम् ॥
रजोधूमहते रागस्रावाधीमन्थसंभवम् ॥ ७० ॥

---

१ 'पिष्टा वर्तिमिता' इति पा० । २ 'औडुम्बर्यश्मजातापि' इति हाराण० । ३ 'न वा निर्वान्त°' इति हाराण० । ४ 'पश्चाद्यत्' इति हाराण० । ५ '°सम्भ्रमान्' इति हाराण० ।

संरम्भशूलौ नस्यान्ते, शिरोरुजि शिरोरुजम् ॥
शिरःस्नातेऽतिशीते च रवावनुदितेऽपि च ॥ ७१ ॥
दोषस्थैर्यादपार्थं स्याद्दोषोत्क्लेशं करोति च ॥
अजीर्णेऽप्येवमेव स्यात् स्रोतोमार्गावरोधनात् ॥ ७२ ॥
दोषवेगोदये दत्तं कुर्यात्तांस्तानुपद्रवान् ॥
तस्मात् परिहरन् दोषानञ्जनं साधु योजयेत् ॥ ७३ ॥
लेखनस्य विशेषेण काल एष प्रकीर्तितः ॥
व्यापदश्च जयेदेता· सेकाश्च्योतनलेपनैः ॥ ७४ ॥
यथास्वं धूमकवलैर्नस्यैश्चापि समुत्थिताः ॥
विशदं [1]लघ्वनास्रावि क्रियापटु सुनिर्मलम् ॥ ७५ ॥
संशान्तोपद्रवं नेत्रं विरिक्तं सम्यगादिशेत् ॥
जिह्मं दारुणदुर्वर्णं स्रस्तं रूक्षमतीव च ॥ ७६ ॥
नेत्रं विरेकातियोगे स्यन्दते चातिमात्रशः ॥
तत्र संतर्पणं कार्यं विधानं चानिलापहम् ॥ ७७ ॥
अक्षि मन्दविरिक्तं स्यादुदग्रतरदोषवत् ॥
धूमनस्याञ्जनैस्तत्र हितं दोषावसेचनम् ॥ ७८ ॥
स्नेहवर्णबलोपेतं प्रसन्नं दोषवर्जितम् ॥
ज्ञेयं प्रसादने सम्यगुपयुक्तेऽक्षि निर्वृतम् ॥ ७९ ॥
किञ्चिद्धीनविकारं स्या[2]त्तर्पणाद्धि कृतादति ॥
तत्र दोषहरं रूक्षं भेषजं शस्यते मृदु ॥ ८० ॥
साधारणमपि ज्ञेयमेवं रोपणलक्षणम् ॥
प्रसादनवदाचष्टे तस्मिन् युक्तेऽतिभेषजम् ॥ ८१ ॥

---

१ 'लघु नास्रावि' इति हाराण० । २ '°त्तर्पणाद्धिकृतादति' [अति तर्पणाद् विकृतात् ] इति हाराण० ।

स्नेहनं रोपणं वाऽपि हीनयुक्तमपार्थकम् ॥
कर्तव्यं मात्रया तस्मादञ्जनं सिद्धिमिच्छता ॥ ८२ ॥
पुटपाकक्रियाद्यासु क्रियास्वेषै(कै)व[1] कल्पना ॥
सहस्रशश्चाञ्जनेषु बीजेनोक्तेन पूजिताः ॥ ८३ ॥
दृष्टेर्बलविवृद्ध्यर्थं याप्यरोगक्षयाय च ॥
राजार्हाण्यञ्जनाग्र्याणि [2]निबोधेमान्यतः परम् ॥ ८४ ॥
अष्टौ भागानञ्जनस्य नीलोत्पलसमत्विषः ॥
औदुम्बरं शातकुम्भं राजतं च समासतः ॥ ८५ ॥
एकादशैतान् भागांस्तु योजयेत् कुशलो भिषक् ॥
मूषाक्षिप्तं तदाध्मातमावृतं जातवेदसि ॥ ८६ ॥
खदिराश्मन्तकाङ्गारैर्गोशकृद्भिरथापि वा ॥
गवां शकृद्रसे मूत्रे दध्नि सर्पिषि माक्षिके ॥ ८७ ॥
तैलमद्यवसामज्जसर्वगन्धोदकेषु च ॥
द्राक्षारसेक्षुत्रिफलारसेषु सुहिमेषु च ॥ ८८ ॥
सारिवादिकषाये च कषाये चोत्पलादिके ॥
निषेचयेत् पृथक् चैनं ध्मातं ध्मातं पुनः पुनः ॥ ८९ ॥
ततोऽन्तरीक्षे सप्ताहं प्लोतबद्धं स्थितं जले ॥
विशोष्य चूर्णयेन्मुक्तां स्फटिकं विद्रुमं तथा ॥ ९० ॥
कालानुसारिवां [3]चापि शुचिरावाप्य योगतः ॥
एतच्चूर्णाञ्जनं श्रेष्ठं निहित भाजने शुभे ॥ ९१ ॥
दन्तस्फटिकवैदूर्यशङ्खशैलासनोद्भवे ॥
शातकुम्भेऽथ शार्ङ्गे वा राजते वा सुसंस्कृते ॥
[4]सहस्रपाकवत् पूजां कृत्वा राज्ञः प्रयोजयेत् ॥ ९२ ॥

---

१ '°स्वेकैव' इति हाराण० । २ 'निबोधैतान्यतः' इति हाराण० । ३ 'चैव' इति हाराण० । ४ 'सहस्रपादवत्' [ सहस्रपादो विष्णुस्तमर्हतीति सहस्रपादवत् ] इति हाराण० ।

तेनाञ्जिताक्षो नृपतिर्भवेत् सर्वजनप्रियः ॥
अधृष्यः सर्वभूतानां दृष्टिरोगविवर्जितः ॥ ९३ ॥
कुष्ठं चन्दनमेलाश्च पत्रं मधुकमञ्जनम् ॥
मेषशृङ्गस्य पुष्पाणि वक्रं[1] रत्नानि सप्त च ॥ ९४ ॥
उत्पलस्य बृहत्योश्च पद्मस्यापि च केशरम् ॥
नागपुष्पमुशीराणि पिप्पली तुत्थमुत्तमम् ॥ ९५ ॥
कुक्कुटाण्डकपालानि दार्वीं पथ्यां सरोचनाम् ॥
मरिचान्यक्षमज्जानं तुल्यां च गृहगोपिकाम्[2] ॥ ९६ ॥
कृत्वा सूक्ष्मं ततश्चूर्णं न्यसेदभ्यर्च्य पूर्ववत् ॥
एतद्भद्रोदयं नाम सदैवार्हति भूमिपः ॥ ९७ ॥
[3]वक्रं समरिचं चैव मांसीं शैलेयमेव च ॥
तुल्यांशानि समानैस्तैः समग्रैश्च मनःशिला ॥ ९८ ॥
पत्रस्य भागाश्चत्वारो द्विगुणं सर्वतोऽञ्जनम् ॥
तावच्च यष्टीमधुकं पूर्ववच्चैतदञ्जनम् ॥ ९९ ॥
मनःशिलां देवकाष्ठं रजन्यौ त्रिफलोषणम् ॥
लाक्षालशुनमञ्जिष्ठासैन्धवैलाः समाक्षिकाः ॥ १०० ॥
रोध्रं सावरकं चूर्णमायसं ताम्रमेव च ॥
कालानुसारिवां चैव कुक्कुटाण्डदलानि च ॥ १०१ ॥
तुल्यानि पयसा पिष्ट्वा गुटिकां कारयेद्बुधः ॥
कण्डूतिमिरशुक्लार्मरक्तराज्युपशान्तये ॥ १०२ ॥
कांस्यापमार्जनमसी मधुकं [4]सैन्धवं तथा ॥
एरण्डमूलं च समं बृहत्यंशद्वयान्वितम् ॥ १०३ ॥
आजेन पयसा पिष्ट्वा ताम्रपात्रं प्रलेपयेत् ॥
सप्तकृत्वस्तु ता वर्त्यश्छायाशुष्का रुजापहाः ॥ १०४ ॥

---

१ 'चक्र' इति हाराण० । २ 'गृहगोधिकाम । कृत्वा सूक्ष्म शुचिश्चूर्ण' इति हाराण० । ३ 'चक्र' इति हाराण० । ४ 'सैन्धव नतम्' इति हाराण० ।

पथ्यातुत्थकयष्ट्याह्वैस्तुल्यैर्मरिचषोडशा[1] ॥
पथ्या सर्वविकारेषु वर्तिः शीताम्बुपेषिता ॥ १०५ ॥
रसक्रियाविधानेन यथोक्तविधिकोविदः ॥
पिण्डाञ्जनानि कुर्वीत यथायोगमतन्द्रितः ॥ १०६ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[2] शालाक्यतन्त्रे
क्रियाकल्पो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशतितमोऽध्यायः ।

अथातो नयनाभिघातप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अभ्याहते तु नयने बहुधा नराणां
संरम्भरागतुमुलासु रुजासु धीमान् ॥
[3]नस्यास्यलेपपरिषेचनतर्पणाद्य-
मुक्तं पुनः क्षतजपित्तजशूलपथ्यम् ॥ ३ ॥
दृष्टिप्रसादजननं विधिमाशु कुर्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ॥
स्वेदाग्निधूमभयशोकरुजाभिघातै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥ ४ ॥
सद्योहते नयन एष विधिस्तदूर्ध्वं
स्यन्देरितो भवति दोषमवेक्ष्य कार्यः ॥
अभ्याहतं नयनमीषदथास्यबाष्प-
संस्वेदितं भवति तन्निरुजं क्षणेन ॥ ५ ॥

---

१ "°स्तैल्यैर्मरिच°" इति हाराण° । २ "°त्तरतन्त्रे क्रिया°" इति हाराण° ।
३ 'नस्यप्रलेप°" इति हाराण° ।

साध्यं क्षतं पटलमेकमुभे तु कृच्छ्रे
त्रीणि क्षतानि पटलानि विवर्जयेत्तु ॥
स्यात् पिच्चितं च नयनं ह्यति चावसन्नं
स्रस्तं च्युतं च हतदृक् च भवेत्तु याप्यम् ॥ ६ ॥
विस्तीर्णदृष्टि तनुरागमसत्प्रदर्शि,
साध्यं यथास्थितमनाविलदर्शनं च ॥
प्राणोपरोधवमनक्षुतकण्ठरोधै-[1]
रुन्नम्यमाशु नयनं यदतिप्रविष्टम् ॥ ७ ॥
नेत्रे विलम्बिनि विधिर्विहितः पुरस्ता-
दुच्छिङ्घनं शिरसि वार्यवसेचनं च ॥
षट्सप्ततिर्नयनजा य इमे प्रदिष्टा
रोगा भवन्त्यमहतां महतां च तेभ्यः ॥ ८ ॥
स्तन्यप्रकोपकफमारुतपित्तरक्तै-
र्बालाक्षिवर्त्मभव एव कुकूणकोऽन्यः ॥
मृद्नाति नेत्रमतिकण्डुमथाक्षिकूटं
नासाललाटमपि तेन शिशुः स नित्यम् ॥ ९ ॥
सूर्यप्रभां न सहते स्रवति प्रबद्धं[2]
तस्याहरेद्रुधिरमाशु विनिर्लिखेच्च ॥
क्षौद्रायुतैश्च कटुभिः प्रतिसारयेत्तु
मातुः शिशोरभिहितं च विधिं विदध्यात् ॥ १० ॥
तं वामयेत्तु मधुसैन्धवसंप्रयुक्तैः
पीतं पयः खलु फलैः खरमञ्जरीणाम् ॥ ११ ॥
स्यात्पिप्पलीलवणमाक्षिकसंयुतैर्वा
नैनं वमन्तमपि वामयितुं यतेत ॥

---

१ "°वमनक्षवकण्ठ°" इति हाराण° । २ 'प्रवृद्ध' इति हाराण° ।

दत्त्वा वचामशनदुग्धभुजे प्रयोज्य-
मूर्ध्वं ततः फलयुतं वमनं विधिज्ञैः ॥ १२ ॥
जम्ब्वाम्रधात्र्यणुदलैः परिधावनार्थं
कार्यं कषायमवसेचनमेव चापि ॥
आश्च्योतने च हितमत्र घृतं गुडूची-
सिद्धं तथाऽऽहुरपि च त्रिफलाविपक्कम् ॥ १३ ॥
नेपालजामरिचशङ्खरसाञ्जनानि
सिन्धुप्रसूतगुडमाक्षिकसंयुतानि ॥
स्यादञ्जनं मधुरसामधुकाम्रकैर्वा[1]
कृष्णायसं घृतपयोमधु वाऽपि दग्धम् ॥ १४ ॥
व्योषं पलाण्डु मधुकं लवणोत्तमं च
लाक्षां च गैरिकयुतां गुटिकाञ्जनं वा ॥
निम्बच्छदं मधुकदार्वि सताम्रलोध्र-
मिच्छन्ति चात्र भिषजोऽञ्जनमंशतुल्यम् ॥ १५ ॥
स्रोतोजशङ्खदधिसैन्धवमर्धपक्षं
शुक्रं शिशोर्नुदति भावितमञ्जनेन ॥
स्यन्दे कफादभिहितं क्रममाचरेच्च
बालस्य रोगकुशलोऽक्षिगदं जिघांसु ॥ १६ ॥
समुद्र इव गम्भीरं नैव शक्यं चिकित्सितुम् ॥
वक्तुं निरवशेषेण श्लोकानामयुतैरपि ॥ १७ ॥
सहस्रैरपि वा [2]प्रोक्तमर्थमल्पमतिर्नरः ॥
तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डितः ॥ १८ ॥
तदिदं बहुगूढार्थं चिकित्साबीजमीरितम् ॥
कुशलेनाभिपन्नं तद्बहुधाऽभिप्ररोहति ॥ १९ ॥

---

१ "°मधुताम्रकैर्वा' इति हाराण० । २ 'च प्रोक्त°' इति हाराण० ।

तस्मान्मतिमता नित्यं नानाशास्त्रार्थदर्शिना ॥
सर्वमूह्यमगाधार्थं शास्त्रमागमबुद्धिना ॥ २० ॥

इति सुश्रुतसंहितायामुत्तर[1]तन्त्रान्तर्गते शालाक्यतन्त्रे नयनाभिघातचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशतितमोऽध्यायः ।

अथातः कर्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

कर्णशूलं प्रणादश्च बाधिर्यं क्ष्वेड एव च ॥
कर्णस्रावः कर्णकण्डूः [2]कर्णवर्चस्तथैव च ॥ ३ ॥
कृमिकर्णप्रतीनाहौ विद्रधिर्द्विविधस्तथा ॥
कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्विधम् ॥ ४ ॥
[3]कर्णार्बुदं सप्तविधं शोफश्चापि चतुर्विधः ॥
एते कर्णगता रोगा अष्टाविंशतिरीरिताः ॥ ५ ॥

समीरणः श्रोत्रगतोऽन्यथाचरः समन्ततः शूलमतीव कर्णयोः ॥
करोति दोषैश्च यथास्वमावृतः स कर्णशूलः कथितो दुराचरः ॥ ६ ॥
यदा तु नाडीषु विमार्गमागतः स एव शब्दाभिवहासु तिष्ठति ॥
शृणोति शब्दान् विविधांस्तदा नरः प्रणादमेनं कथयन्ति चामयम् ७
स एव [4]शब्दानुवहा यदा सिराः कफानुयातो व्यनुसृत्य तिष्ठति ॥
तदा नरस्याप्रतिकारसेविनो भवेत्तु बाधिर्यमसंशयं खलु ॥ ८ ॥

---

१ '॰त्तरतन्त्रे नयनाभिघातप्रतिषेधो नाम' इति हा॰ । २ 'कर्णगूथस्तथैव च' इति हाराण॰ । ३ 'तथार्बुद' इति हाराण॰ । ४ 'शब्दाभिवहा' इति हाराण॰ ।

श्रमात् क्षयाद्रूक्षकषायभोजनात् समीरणः शब्दपथे [1]प्रतिष्ठितः ॥
विरिक्तशीर्षस्य च शीतसेविनः करोति हि क्ष्वेडमतीव कर्णयोः ॥९॥
शिरोभिघातादथवा निमज्जतो जले प्रपाकादथवाऽपि विद्रधेः ॥
स्रवेत्तु पूयं श्रवणोऽनिलावृतः स कर्णसंस्राव इति प्रकीर्तितः ॥१०॥
कफेन कण्डूः प्रचितेन कर्णयोर्भृशं भवेत् स्रोतसि कर्णसंज्ञिते ॥
विशोषिते श्लेष्मणि पित्ततेजसा नृणां भवेत् स्रोतसि कर्णगूथकः ११
स [2]कर्णविट्को द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते ॥
तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽभितापनः ॥१२॥
यदा तु मूर्च्छन्त्यथवाऽपि जन्तवः सृजन्त्यपत्यान्यथवाऽपि मक्षिकाः॥
तदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः [3]कृमिकर्णको गदः॥१३॥
क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तथा दोषकृतोऽपरः पुनः ॥
सरक्तपीतारुणमस्रमास्रवेत् प्रतोदधूमायनदाहचोषवान् ॥ १४ ॥
भवेत् प्रपाकः खलु पित्तकोपतो विकोथविक्लेदकरश्च कर्णयोः ॥
स्थिते कफे स्रोतसि पित्ततेजसा [4]विलाय्यमाने भृशसंप्रतापवान् १५
अवेदनो वाऽप्यथवा सवेदनो घनं स्रवेत् पूति [5]च पूतिकर्णकः ॥
[6]प्रदिष्टलिङ्गान्यरशांसि तत्त्वतस्तथैव शोफार्बुदलिङ्गमीरितम् ॥
मया पुरस्तात् प्रसमीक्ष्य योजयेदिहैव तावत् प्रयतो भिषग्वरः १६

इति सुश्रुतसंहितायामु[7]त्तरतन्त्रान्तर्गते शालाक्यतन्त्रे कर्णगत-
रोगविज्ञानीयो नाम विंशतितमोऽध्यायः ॥ २० ॥

---

१ 'व्यवस्थितः' इति हाराण०। २ 'कर्णगूथो द्रवता गतो यदा' इति हाराण०। ३ 'कृमिकर्णकस्तु सः' इति हाराण०। ४ 'विलाप्यमाने भृशसंप्रतापनात्' इति हाराण०। ५ 'स पूतिकर्णक-' इति हाराण०। ६ 'प्रदिष्टलिङ्गान्यर्शांसि' इति हाराण०। ७ '°त्तरतन्त्रे कर्ण°' इति हाराण०।

# एकविंशतितमोऽध्यायः ।

अथातः कर्णगतरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सामान्यं कर्णरोधेषु[1] घृतपानं रसायनम् ॥
अव्यायामोऽशिर स्नानं ब्रह्मचर्यमकत्थनम् ॥ ३ ॥
कर्णशूले प्रणादे च बाधिर्यक्ष्वेडयोरपि ॥
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥ ४ ॥
स्निग्धं वातहरैः स्वेदैर्नरं स्नेहविरेचितम् ॥
नाडीस्वेदैरुपचरेत्पिण्डस्वेदैस्तथैव च ॥ ५ ॥
बिल्वैरण्डार्कवर्षाभूदधित्थोन्मत्तशिग्रुभिः ॥
बस्तगन्धाश्वगन्धाभ्यां तर्कारीयववेणुभिः ॥ ६ ॥
आरनालशृतैरेभिर्नाडीस्वेदः[2] प्रयोजितः ॥
कफवातसमुत्थानं कर्णशूलं निरस्यति ॥ ७ ॥
मीनकुक्कुटलावानां मांसजैः पयसाऽपि वा ॥
पिण्डैः स्वेदं च कुर्वीत कर्णशूलनिवारणम् ॥ ८ ॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ॥
तदङ्गारैः[3] सुसंपूर्णं निदध्याच्छ्रवणोपरि ॥ ९ ॥
यत्तैलं च्यवते तस्मात् खल्लादङ्गारतापितात् ॥
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥ १० ॥
क्षौमगुग्गुल्वगुरुभिः सघृतैर्धूपयेच्च तम् ॥
भक्तोपरि हितं सर्पिर्बस्तिकर्म च पूजितम् ॥ ११ ॥
निरन्नो निशि तत्सर्पिः पीत्वोपरि पिबेत् पयः ॥
मूर्धबस्तिषु नस्ये च मस्तिष्के परिषेचने ॥ १२ ॥

---

१ 'कर्णरोगेषु घृतपान रसाशनम्' इति हाराण० । २ 'आरणालैः शृतै°' इति हाराण० । ३ 'तैलाक्तमग्निसपूर्णं निदध्या°' इति हाराण० ।

शतपाकं बलातैलं प्रशस्तं चापि भोजने ॥
कण्टकारीमजाक्षीरे पक्त्वा क्षीरेण तेन च ॥ १३ ॥
विपचेत् कुक्कुटवसां कर्णयोस्तत्प्रपूरणम् ॥
तण्डुलीयकमूलानि फलमङ्कोलजं[1] तथा ॥ १४ ॥
[2]अहिंस्राकेन्दुकान्मूलं सरलं देवदारु च ॥
लशुनं शृङ्गवेरं च तथा वंशावलेखनम् ॥ १५ ॥
कल्कैरेषां तथाऽम्लैश्च पचेत् स्नेहं चतुर्विधम् ॥
वेदनायाः प्रशान्त्यर्थं हितं तत्कर्णपूरणम् ॥ १६ ॥
लशुनार्द्रकशिग्रूणां मुरङ्ग्या[3] मूलकस्य च ॥
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ १७ ॥
शृङ्गवेररसः क्षौद्रं सैन्धवं तैलमेव च ॥
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ १८ ॥
[4]वंशावलेखनायुक्ते मूत्रे चाजाविके भिषक् ॥
सर्पिः पचेत्तेन कर्णं पूरयेत् कर्णशूलिनः ॥ १९ ॥
महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलम्[5] ॥
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ २० ॥
यत्तैलं च्यवते तेभ्यो[6] घृतेभ्यो भाजनोपरि ॥
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥ २१ ॥
कुर्यादेवं भद्रकाष्ठे कुष्ठे काष्ठे च सारले ॥
मतिमान् दीपिकातैलं कर्णशूलनिबर्हणम् ॥ २२ ॥

---

१ '°मङ्कोठज' इति हाराण०। २ 'अहिंस्राकेन्दुकीमूलं' इति हाराण०। ३ 'सुरङ्ग्या' इति हाराण०। ४ 'वंशावलेखसंयुक्ते' इति हाराण०। ५ 'काष्ठान्यष्टाङ्गुलानि च' इति हाराण०। ६ 'तेभ्यो ग्राह्यं तद्भाजनोपरि' इति हाराण०।

अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान् ॥
सन्निदध्यात् स्नुहीकाण्डे [1]कोरिते तच्छदावृते ॥ २३ ॥
पुटपाकक्रमस्विन्नान् पीडयेदारसागमात् ॥
सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये ॥ २४ ॥
कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः ॥
सुखोष्णैः पूरयेत् कर्णं तच्छूलविनिवृत्तये ॥ २५ ॥
कर्णं कोष्णेन चुक्रेण पूरयेत् कर्णशूलिनः ॥
समुद्रफेनचूर्णेन युक्त्या [2]चाप्यवचूर्णयेत् ॥ २६ ॥
अष्टानामिह मूत्राणां मूत्रेणान्यतमेन तु ॥
कोष्णेन पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ २७ ॥
मूत्रेष्वम्लेषु वातघ्ने गणे च क्वथिते भिषक् ॥
पचेच्चतुर्विधं स्नेहं पूरणं तच्च कर्णयोः ॥ २८ ॥
एता एव क्रियाः कुर्यात् पित्तघ्नैः पित्तसंयुते ॥
काकोल्यादौ दशक्षीरं तिक्तं चात्र हितं हविः ॥ २९ ॥
क्षीरवृक्षप्रवालेषु मधुके चन्दने तथा ॥
कल्कक्वाथे परं पक्वं शर्करामधुकैः सरैः ॥ ३० ॥
इङ्गुदीसर्षपस्नेहौ सकफे पूरणे हितौ ॥
तिक्तौषधानां यूषाश्च स्वेदाश्च कफनाशनाः ॥ ३१ ॥
सुरसादौ कृतं तैलं पञ्चमूले महत्यपि ॥
मातुलुङ्गरसः शुक्तं लशुनार्द्रकयो रसः ॥ ३२ ॥
एकैकः पूरणे पथ्यस्तैलं [3]तेष्वपि वा कृतम् ॥
तीक्ष्णा मूर्धविरेकाश्च कवलाश्चात्र पूजिताः ॥ ३३ ॥

१ 'क्रोडिते' इति हाराण० । २ 'युक्त्या वाप्यवचूर्णयेत्' इति हाराण० ।
३ 'तेष्वथवा कृतम्' इति हाराण० ।

कर्णशूलविधिः कृत्स्नः पित्तघ्नः शोणितावृते ॥
शूलप्रणादबाधिर्यक्ष्वेडानां तु प्रकीर्तितम् ॥ ३४ ॥
सामान्यतो, विशेषेण[1] बाधिर्ये पूरणं शृणु ॥
गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत् ॥ ३५ ॥
सजलं च सदुग्धं च बाधिर्ये कर्णपूरणम् ॥
सितामधुकबिम्बीभिः सिद्धं वाऽजे पयस्यपि[2] ॥ ३६ ॥
बिम्बीक्काथे[3] विमथ्योष्णं शीतीभूतं तदुद्धृतम् ॥
पुनः पचेद्दशक्षीरं सितामधुकचन्दनैः ॥ ३७ ॥
बिल्वाम्बुगाढं तत्तैलं बाधिर्ये कर्णपूरणम् ॥
वक्ष्यते यः प्रतिश्याये विधिः सोऽप्यत्र पूजितः ॥ ३८ ॥
वातव्याधिषु यश्चोक्तो विधिः स च हितो भवेत् ॥
कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके ॥ ३९ ॥
समानं कर्म कुर्वीत योगान् वैशेषिकानपि ॥
शिरोविरेचनं चैवं धूपनं पूरणं तथा ॥ ४० ॥
प्रमार्जनं धावनं च वीक्ष्य वीक्ष्यावचारयेत् ॥
राजवृक्षादितोयेन सुरसादिगणेन वा ॥ ४१ ॥
कर्णप्रक्षालनं कार्यं चूर्णैरेषां च पूरणम् ॥
क्काथं पञ्चकषायं[4] तु कपित्थरसयोजितम् ॥ ४२ ॥
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ॥ ४३ ॥
योजितो मधुना वाऽपि कर्णस्रावे प्रशस्यते ॥
लाक्षा[5] रसाञ्जनं सर्जश्चूर्णितं कर्णपूरणम् ॥ ४४ ॥

---

१ 'विशेषस्तु' इति पा० । २ 'पयस्यथ' इति हाराण० । ३ 'सिद्धं वा बिल्वनिःक्काथे शीती°' इति हाराण० । ४ 'चूर्णं पञ्चकषायोत्थं कपित्थ°' इति हाराण० । ५ 'लाक्षासर्जरसौ वापि चूर्णितौ कर्ण°' इति हाराण० ।

सशैवलं महावृक्षजम्ब्वाम्रप्रसवायुतम् ॥
कुलीरक्षौद्रमण्डूकीसिद्धं तैलं च पूजितम् ॥ ४५ ॥
तिन्दुकान्यभया रोध्रं समङ्गाऽऽमलकं मधु ॥
पूरणं चात्र[1] पथ्यं स्यात्कपित्थरसयोजितम् ॥ ४६ ॥
रसमाम्रकपित्थानां मधूकधवशालजम् ॥
पूरणार्थं प्रशंसन्ति तैलं वा तैर्विपाचितम् ॥ ४७ ॥
प्रियङ्गुमधुकाम्बष्ठाधातकी[2]शिलपर्णिभिः ॥
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन वा ॥ ४८ ॥
पचेत्तैलं तदास्रावमवगृह्णाति पूरणात् ॥
घृष्टं रसाञ्जनं नार्याः क्षीरेण [3]मधुसंयुतम् ॥ ४९ ॥
तत्प्रशस्तं चिरोत्थेऽपि सास्रावे पूतिकर्णके ॥
निर्गुण्डीस्वरसस्तैलं [4]सिन्धुधूमरजो गुडः ॥ ५० ॥
पूरणः पूतिकर्णस्य शमनो मधुसंयुतः ॥
कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम् ॥ ५१ ॥
वार्ताकुधूमश्च हितः सार्षपस्नेह एव च ॥
कृमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥ ५२ ॥
[5]गुग्गुलोः कर्णदौर्गन्ध्ये धूपनं श्रेष्ठमुच्यते ॥
छर्दनं धूमपानं च कवलस्य च धारणम् ॥ ५३ ॥
कर्णक्ष्वेडे हितं तैलं सार्षपं चैव पूरणम् ॥
विद्रधौ [6]चापि कुर्वीत विद्रध्युक्तं चिकित्सितम् ॥ ५४ ॥
प्रक्लेद्य धीमांस्तैलेन स्वेदेन [7]प्रविलाय्य च ॥
शोधयेत्कर्णविद्रकं तु भिषक् सम्यक् शलाकया ॥ ५५ ॥

---

१ 'चातिपथ्य स्यात्' इति पा० । २ '°धातकीशीतपर्णिभिः' इति हाराण० । ३ 'क्षौद्रसंयुतम् । प्रशस्यते चिरो°' इति हाराण० । ४ सिन्धुधूम°' इति हाराण० । ५ 'गुग्गुलुः' इति हाराण० । ६ 'वापि' इति हाराण० । ७ 'प्रविलाप्य च' इति हाराण० ।

नाडीस्वेदोऽथ वमनं धूमो मूर्धविरेचनम् ॥
विधिश्च कफहृत्सर्वः कर्णकण्डूमपोहति ॥ ५६ ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ॥
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥ ५७ ॥
कर्णपाकस्य भैषज्यं कुर्यात्पित्तविसर्पवत् ॥
कर्णच्छिद्रे वर्तमानं कीटं क्लेदमलादि वा ॥ ५८ ॥
शृङ्गेणापहरेद्धीमानथवाऽपि शलाकया ॥
शेषाणां तु विकाराणां प्राक् चिकित्सितमीरितम् ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे कर्णगतरोग[1]-प्रतिषेधो नामैकविंशोऽध्याय. ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः।

अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अपीनसः पूतिनस्यं[2] नासापाकस्तथैव च ॥
तथा शोणितपित्तं च पूयशोणितमेव च ॥ ३ ॥
क्षवथुर्भ्रंशथुर्दीप्तो नासानाहः परिस्रवः ॥
नासाशोषेण सहिता दशैकाश्चेरिता गदाः ॥ ४ ॥
चत्वार्यर्शांसि चत्वारः शोफाः सप्तार्बुदानि च ॥
प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः ॥
[3]एकत्रिंशन्मितास्ते तु नासारोगाः प्रकीर्तिताः ॥ ५ ॥

---

१ "°त्तरतन्त्रे कर्णरोगप्रतिषेधो' इति हाराण० । २ 'पूतिनासः' इति पा० । ३ 'एकत्रिंशतसहितैस्तैस्तु' इति पा० ।

आनह्यते यस्य विधूप्यते च [1]प्रक्लिद्यते शुष्यति चापि नासा ॥
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन ॥ ६ ॥
तं चानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥
दोषैर्विदग्धैर्गलतालुमूले [2]संवासितो यस्य समीरणस्तु ॥ ७ ॥
निरेति पूतिर्मुखनासिकाभ्यां तं [3]पूतिनासं प्रवदन्ति रोगम् ॥
घ्राणाश्रितं पित्तमरूंषि कुर्याद्यस्मिन् विकारे बलवांश्च पाकः ॥८॥
तं [4]नासिकापाकमिति व्यवस्येद्विक्लेदकोथावपि यत्र दृष्टौ ॥
चतुर्विधं द्विप्रभवं द्विमार्गं वक्ष्यामि भूयः खलु रक्तपित्तम् ॥ ९ ॥
([5]तल्लक्षणं नासिकरक्तपित्तं जानीहि नासाप्रभवप्रवृत्तम् ।)
दोषैर्विदग्धैरथवाऽपि जन्तोर्ललाटदेशेऽभिहतस्य [6]तैस्तु ॥
नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥ १० ॥
घ्राणाश्रिते मर्मणि सं[7]प्रदुष्टे यस्यानिलो नासिकया निरेति ॥ ११ ॥
कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥
तीक्ष्णोपयो[8]गादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा ॥ १२॥
सूत्रादिभिर्वा तरुणास्थिमर्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति ॥
प्रभ्रश्यते नासिकयैव य[9]श्च सान्द्रो विदग्धो लवणः [10]कफस्तु ॥१३॥
प्राक् संचितो [11]मूर्धनि पित्ततप्तस्तं भ्रंशथुं व्याधिमुदाहरन्ति ॥
घ्राणे भृशं दाहसमन्विते तु विनि सरेद्धूम इवेह वायुः ॥ १४ ॥
नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिं तु तं दीप्तमुदाहरन्ति ॥
कफावृतो वायुरुदानसंज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात्॥१५॥

---

१ 'पापच्यते क्लिद्यति चापि' इति हाराण० । २ 'समूर्च्छितो यस्य' इति हाराण० । ३ 'पूतिनस्य' इति हाराण० । ४ 'नासिकापाक इति' इति हाराण० । ५ चिह्नित श्लोकार्धं तु हाराणचन्द्रसमतम् । ६ 'तैस्तैः' इति हाराण० । ७ 'सप्रदुष्ट०' इति पा० । ८ '°दभिजिघ्रतो वा' इति हाराण० । ९ 'यस्य' इति हाराण० । १० 'कफश्च' इति हाराण० । ११ 'मूर्ध्नि च पित्ततप्तं प्रभ्रंशथु' इति हाराण० ।

घ्राणं वृणोतीव तदा स रोगो नासाप्रतीनाह इति प्रदिष्टः ॥
अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह नासा ॥ १६ ॥
रात्रौ विशेषेण हि तं विकारं नासापरिस्रावमिति[1] व्यवस्येत् ॥
घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च ॥ १७ ॥
समुच्छ्वसित्यूर्ध्वमधश्च कृच्छ्राद्यस्तस्य नासापरिशोष उक्तः ॥
दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथाऽर्शांसि तथैव शोफान् ॥ १८ ॥
शालाक्यसिद्धान्तमवेक्ष्य चापि[2] सर्वात्मकं सप्तममर्बुदं तु ॥
रोगः प्रतिश्याय इहोपदिष्टः[3] स वक्ष्यते पञ्चविधः पुरस्तात् ॥ १९ ॥

(नासास्रोतोगता रोगास्त्रिंशदेकश्च कीर्तिताः ।
स्रोतःपथे यद्विपुलं कोशवच्चार्बुदं भवेत्[4] ॥ २० ॥ )
[5]शोफास्तु शोफविज्ञाना नासास्रोतोव्यवस्थिताः ॥
निदानेऽर्शांसि निर्दिष्टान्येवं तानि विभावयेत् ॥ २१ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[6] शालाक्यतन्त्रे नासागतरोग-
विज्ञानीयो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशतितमोऽध्यायः ।

अथातो नासागतरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
पूर्वोद्दिष्टे पूतिनस्ये च जन्तोः स्नेहस्वेदौ छर्दनं स्रंसनं च ॥
युक्तं भक्तं तीक्ष्णमल्पं लघु स्यादुष्णं तोयं धूमपानं च काले ॥ ३ ॥
हिङ्गु व्योषं वत्सकाख्यं शिवाटी लाक्षा बीजं सौरभं कट्फलं च ॥
उग्रा कुष्ठं तीक्ष्णगन्धा विडङ्गं श्रेष्ठं नित्यं चावपीडे करञ्जम् ॥ ४ ॥

---

१ "°स्राव इति' इति हाराण० । २ 'वापि' हाराण० । ३ 'इह प्रदिष्टः' इति हाराण० । ४ चिह्नित. श्लोकोऽय हाराणचन्द्रासमतः । ५ 'शोफाश्च शोफविज्ञाने' इति हाराण० । ६ "°त्तरतन्त्र नासा°" इति हाराण० ।

एतैर्द्रव्यैः सार्षपं मूत्रयुक्तं तैलं धीमान्नस्यहेतोः पचेत[1] ॥
नासापाके पित्तहृत्संविधानं कार्यं सर्वं बाह्यमाभ्यन्तरं च ॥ ५ ॥
हृत्वा रक्तं क्षीरवृक्षत्वचश्च साज्याः सेका योजनीयाश्च लेपाः ॥
वक्ष्याम्यूर्ध्वं रक्तपित्तोपशान्तिं नाडीवत्स्यात् पूयरक्ते चिकित्सा॥६॥
वान्ते सम्यक् चावपीडं वदन्ति तीक्ष्णं धूमं शोधनं चात्र नस्यम् ॥
क्षेप्यं नस्यं मूर्धवैरेचनीयैर्नाड्या चूर्णं क्षवथौ भ्रंशथौ च ॥ ७ ॥

कुर्यात् स्वेदान् मूर्ध्नि वातामयघ्नान्
स्निग्धान् धूमान् यद्यदन्यद्धितं च ॥
दीप्ते रोगे पैत्तिकं संविधानं
कुर्यात् सर्वं स्वादु यच्छीतलं च ॥ ८ ॥

नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्धबस्तिश्च नित्यम् ॥
बलातैलं सर्वथैवोपयोज्यं वातव्याधावन्यदुक्तं च यद्यत् ॥ ९ ॥
नासास्रावे घ्राणतश्चूर्णमुक्तं नाड्या देयं योऽवपीडश्च तीक्ष्णः ॥
तीक्ष्णं धूमं देवदार्वग्निकाभ्यां मांसं वाऽऽजं युक्तमत्रादिशन्ति॥१०॥
नासाशोषे क्षीरसर्पिः प्रधानं सिद्धं तैलं चाणुकल्पेन[2] नस्यम् ॥
सर्पिःपानं भोजनं जाङ्गलैश्च स्नेहः स्वेदः स्नैहिकश्चापि धूमः ॥११॥

शेषान् रोगान् घ्राणजान् सन्नियच्छे-
दुक्तं तेषां यद्यथा संविधानम् ॥ १२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे नासागतरोग[3]-
प्रतिषेधो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

१ 'पचेच्च' इति हाराण० । २ 'चाणुकल्पे च नस्यम्' हाराण० ।
३ '°त्तरतन्त्रे नासागतरोगविज्ञानीयो नाम' इति हाराण० ।

# चतुर्विंशतितमोऽध्यायः।

अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नारीप्रसङ्गः शिरसोऽभितापो धूमो रजः शीतमतिप्रतापः ॥
संधारणं मूत्रपुरीषयोश्च सद्यः प्रतिश्यायनिदानमुक्तम् ॥ ३ ॥
चयं गता मूर्धनि मारुतादयः पृथक् समस्ताश्च तथैव शोणितम् ॥
प्रकोप्यमाणा विविधैः प्रकोपणैर्नृणां प्रतिश्यायकरा भवन्ति हि॥४॥
शिरोगुरुत्वं क्षवथोः प्रवर्तनं तथाऽङ्गमर्दः परिहृष्टरोमता ॥
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः॥५॥

आनद्धा पिहिता नासा तनुस्रावप्रवर्तिनी ॥
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ ६ ॥
स्वरोपघातश्च भवेत् प्रतिश्यायेऽनिलात्मके ॥
उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके ॥ ७ ॥
कृशोऽतिपाण्डुः सन्तप्तो भवेत्तृष्णानि(भि)पीडितः[1] ॥
सधूमं सहसा वह्निं वमतीव च मानवः ॥ ८ ॥
कफः कफकृते घ्राणाच्छुक्लः शीतः स्रवेन्मुहुः ॥
शुक्लावभासः शूनाक्षो भवेद्गुरुशिरोमुखः ॥ ९ ॥
शिरोगलौष्ठतालूनां कण्डूयनमतीव च ॥
भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्तते ॥ १० ॥
संपक्वो वाऽप्यपक्वो वा स सर्वप्रभवः स्मृतः ॥
लिङ्गानि चैव सर्वेषां पीनसानां च सर्वजे ॥ ११ ॥
रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्तते ॥
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ॥ १२ ॥

---

१ "तृष्णाभिपीडितः" इति हाराण०।

दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च ॥
मूर्च्छन्ति चात्र कृमयः श्वेताः स्निग्धास्तथाऽणवः ॥ १३ ॥
कृमिमूर्धविकारेण समानं चास्य लक्षणम् ॥
प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति ॥ १४ ॥
मुहुरानह्यते चापि मुहुर्विव्रियते तथा ॥
निःश्वासोच्छ्वासदौर्गन्ध्यं तथा गन्धान्न वेत्ति च ॥ १५ ॥
एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम् ॥
सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः ॥ १६ ॥
कालेन रोगजनना जायन्ते दुष्टपीनसाः ॥
बाधिर्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् ॥
कासाग्निसादशोफांश्च वृद्धाः कुर्वन्ति पीनसाः ॥ १७ ॥

नवं प्रतिश्यायमपास्य सर्वमुपाचरेत् सर्पिष एव पानैः ॥
स्वेदैर्विचित्रैर्वमनैश्च युक्तैः कालोपपन्नैरवपीडनैश्च ॥ १८ ॥
अपच्यमानस्य हि पाचनार्थं स्वेदो हितोऽम्लैरहिमं च भोज्यम् ॥
निषेव्यमाणं पयसाऽऽर्द्रकं वा संपाचयेदिक्षुविकारयोगैः ॥ १९ ॥
पक्वं घनं चाप्यवलम्बमानं शिरोविरेकैरपकर्षयेत्तम् ॥
विरेचनास्थापनधूमपानैरवेक्ष्य दोषान् कवलग्रहैश्च ॥ २० ॥
निवातशय्यासनचेष्टनानि मूर्ध्नो गुरूष्णं च तथैव वासः ॥
तीक्ष्णा विरेकाः शिरसः सधूमा रूक्षं यवान्नं विजया च सेव्या ॥२१॥
शीताम्बुयोषिच्छिशिरावगाहचिन्तातिरूक्षाशनवेगरोधान् ॥
शोकं च मद्यानि नवानि चैव विवर्जयेत् पीनसरोगजुष्टः ॥ २२ ॥
छर्द्यङ्गसादज्वरगौरवार्तमरोचकार्त्यतिसारयुक्तम् ॥
विलङ्घनैः पाचनदीपनीयैरुपाचरेत् पीनसिनं यथावत् ॥ २३ ॥

---

१ 'कृष्णास्तथा' इति हाराण०। २ 'रूक्ष पलान्न' हाराण०।

बहुद्रवैर्वातकफोपसृष्टं प्रच्छर्दयेत् पीनसिनं वयःस्थम् ॥
उपद्रवांश्चापि यथोपदेशं स्वैर्भेषजैर्भोजनसंविधानैः ॥
जयेद्विदित्वा मृदुतां गतेषु प्राग्लक्षणेषूक्तमथादिशेच्च ॥ २४ ॥

वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम् ॥
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥ २५ ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ॥
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥ २६ ॥
परिषेकान् प्रदेहांश्च कुर्यादपि च शीतलान् ॥
श्रीसर्जरसपत्तङ्गप्रियङ्गुमधुशर्कराः ॥ २७ ॥
द्राक्षामधूलिकागोजीश्रीपर्णीमधुकैस्तथा ॥
युज्यन्ते कवलाश्चात्र विरेको मधुरैरपि ॥ २८ ॥
धवत्वक्त्रिफलाश्यामातिल्वकैर्मधुकेन च ॥
श्रीपर्णीरजनीमिश्रैः क्षीरे दशगुणे पचेत् ॥ २९ ॥
तैलं कालोपपन्नं तन्नस्यं स्यादनयोर्हितम् ॥
कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ॥ ३० ॥
यवाग्वा वामयेद्वान्तः कफघ्नं क्रममाचरेत् ॥
उभे बले बृहत्यौ च विडङ्गं सत्रिकण्टकम् ॥ ३१ ॥
श्वेतामूलं सदाभद्रां[1] वर्षाभूं चात्र संहरेत् ॥
तैलमेभिर्विपक्वं तु नस्यमस्योपकल्पयेत् ॥ ३२ ॥
सरलाकिणिहीदारुनिकुम्भेङ्गुदिभिः कृताः ॥
वर्तयश्चोपयोज्याः स्युर्धूमपाने यथाविधि ॥ ३३ ॥
सर्पींषि कटुतिक्तानि [2]तीक्ष्णधूमाः कटूनि च ॥
भेषजान्युपयुक्तानि हन्युः सर्वप्रकोपजम् ॥ ३४ ॥

---

१ 'सहा भद्रां' इति हाराण०। २ 'तीक्ष्णा धूमाः' इति हाराण०।

रसाञ्जने सातिविषे मुस्तायां भद्रदारुणि ॥
तैलं विपक्कं नस्यार्थे विदध्याच्चात्र बुद्धिमान् ॥ ३५ ॥
मुस्ता तेजोवती पाठा कट्फलं कटुका वचा ॥
सर्षपा पिप्पलीमूलं पिप्पल्यः सैन्धवाग्निकौ ॥ ३६ ॥
तुत्थं करञ्जबीजं च लवणं भद्रदारु च ॥
एतैः कृतं कषायं तु कवले संप्रयोजयेत् ॥ ३७ ॥
हितं [1]मूर्धविरेके च तैलमेभिर्विपाचितम् ॥
क्षीरमर्धजले क्वाथ्यं जाङ्गलैर्मृगपक्षिभिः ॥ ३८ ॥
पुष्पैर्विमिश्रं जलजैर्वातघ्नैरौषधैरपि ॥
हिमे क्षीरावशिष्टेऽस्मिन् घृतमुत्पाद्य यत्नतः ॥ ३९ ॥
सर्वगन्धसितानन्तामधुक[2] चन्दनं तथा ॥
आवाप्य विपचेद्भूयो दशक्षीरं तु तद्धृतम् ॥ ४० ॥
नस्ये प्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति ॥
यथास्वं दोषशमनैस्तैलं कुर्याच्च यत्नतः ॥ ४१ ॥
समूत्रपित्ता[3]श्चोद्दिष्टाः क्रियाः कृमिषु योजयेत् ॥
यापनार्थं कृमिघ्नानि भेषजानि च बुद्धिमान् ॥ ४२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे प्रतिश्याय-प्रतिषेधो नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशतितमोऽध्यायः ।

अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'मूर्धविरेकेण तैल°' इति हाराण० । २ 'सर्वगन्धा सिताऽनन्ता मधुकं' इति हाराण० । ३ '°पित्तास्तूद्दिष्टाः' इति हाराण० ।

शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः ॥
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ ३ ॥
सूर्यावर्तानन्तवातार्धावभेदकशङ्खकैः ॥
एकादशप्रकारस्य[1] लक्षणं संप्रवक्ष्यते ॥ ४ ॥

यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् ॥
बन्धोपतापैश्च भवेद्विशेषः शिरोभितापः स समीरणेन ॥ ५ ॥
यस्योष्णमङ्गारचितं यथैव दह्येत[2] धूप्येत शिरोक्षिनासम् ॥
शीतेन रात्रौ च भवेद्विशेषः शिरोभितापः स तु पित्तकोपात् ॥६॥
शिरोगलं यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिम च ॥
शूनाक्षिकूटं वदनं च यस्य शिरोभितापः स कफप्रकोपात् ॥ ७ ॥
शिरोभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति[3] ॥
रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्व शिरसो भवेच्च ॥ ८ ॥
वसाबलासक्षतसंभवानां शिरोगतानामिह संक्षयेण ॥
क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥ ९ ॥
संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ॥
निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं [4]स्फुटतीव चान्तः॥१०॥
घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोभितापः कृमिभिः स घोरः ॥
सूर्योदयं वा प्रति मन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढम् ॥ ११॥
विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च ॥
शीतेन शान्ति लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च ॥ १२॥
तं भास्करावर्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम् ॥

---

१ 'सूर्यावर्तावभेदाभ्या शङ्खकेन तथैव च। दशप्रकारस्याप्यस्य' इति पा०। २ 'भवेच्छिरो धूमवती च नासा' इति हाराण०। ३ 'मुहुर्भवन्ति' इति पा०। ४ 'स्फुरतीव चान्तः' इति हाराण०।

दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटासु रुजां सुतीव्राम्॥ १३॥
कुर्वन्ति साक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु ॥
गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् ॥ १४॥
अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥
यस्योत्तमाङ्गार्धमतीव जन्तोः संभेदतोदभ्रमशूलजुष्टम् ॥ १५ ॥
पक्षाद्दशाहादथवाऽप्यकस्मात्तस्यार्धभेदं त्रितयाद्व्यवस्येत् ॥
शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुयात्रः कफपित्तरक्तैः ॥ १६ ॥
रुजः सुतीव्राः प्रतनोति मूर्ध्नि विशेषतश्चापि हि शङ्खयोस्तु ॥
सुकष्टमेनं खलु शङ्खकाख्यं महर्षयो वेदविदः पुराणाः ॥ १७ ॥
व्याधिं वदन्त्युद्गतमृत्युकल्पं भिषक्सहस्रैरपि दुर्निवारम् ॥ १८ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे शिरोरोगविज्ञानीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशतितमोऽध्यायः ।

अथातः शिरोरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वातव्याधिविधिः कार्यः शिरोरोगेऽनिलात्मके ॥
पयोनुपानं सेवेत घृतं तैलमथापि वा ॥ ३ ॥
मुद्गान् कुलत्थान्माषांश्च खादेच्च निशि केवलान् ॥
कटूष्णांश्च[1] ससर्पिष्कानुष्णं चानु पयः[2] पिबेत् ॥ ४ ॥
पिबेद्वा पयसा तैलं तत्कल्कं वाऽपि मानवः ॥
वातघ्नसिद्धैः क्षीरैश्च सुखोष्णैः[3] सेकमाचरेत् ॥ ५ ॥

---

१ 'कटूष्णान् समसर्पिष्कान्' इति पा० । २ 'पिबेत् पयः' इति हाराण० । ३ 'सेकमादिशेत्' इति हाराण० ।

तत्सिद्धैः पायसैर्वाऽपि सुखोष्णैर्लेपयेच्छिरः ॥
स्विन्नैर्वा मत्स्यपिशितैः कृशरैर्वा ससैन्धवैः ॥ ६ ॥
चन्दनोत्पलकुष्ठैर्वा सुश्लक्ष्णैर्मगधायुतैः ॥
स्निग्धस्य तैलं नस्यं स्यात् कुलीररससाधितम् ॥ ७ ॥
वरुणादौ गणे क्षुण्णे क्षीरमर्धोदक पचेत् ॥
क्षीरशेष च तन्मथ्यं शीतं सारमुपाहरेत् ॥ ८ ॥
ततो मधुरकैः सिद्धं नस्ये तत् पूजितं हविः ॥
तस्मिन् विपक्के [१]क्षीरे तु पेयं सर्पिः सशर्करम् ॥ ९ ॥
धूमं चास्य यथाकालं स्नैहिकं योजयेद्भिषक् ॥
पानाभ्यञ्जननस्येषु बस्तिकर्मणि सेचने ॥ १० ॥
विदध्याच्चैवृतं धीमान् बलातैलमथापि वा ॥
भोजयेच्च रसैः स्निग्धैः पयोभिर्वा सुसंस्कृतैः ॥ ११ ॥
पित्तरक्तसमुत्थानौ शिरोरोगौ निवारयेत् ॥
शिरोलेपैः ससर्पिष्कैः परिषेकैश्च शीतलैः ॥ १२ ॥
क्षीरेक्षुरसधान्याम्लमस्तुक्षौद्रसिताजलैः ॥
नलवञ्जुलकह्लारचन्दनोत्पलपद्मकैः ॥ १३ ॥
वं[२]शशैवलयष्ट्याह्वमुस्ताम्भोरुहसंयुतैः ॥
शिरःप्रलेपैः सघृतैर्वैसर्पैश्च तथाविधैः ॥ १४ ॥
मधुरैश्च मुखालेपैर्नस्यकर्मभिरेव च ॥
आस्थापनैर्विरेकैश्च पथ्यैश्च स्नेहबस्तिभिः ॥ १५ ॥
क्षीरसर्पिर्हितं नस्यं वसा वा जाङ्गला शुभा ॥
उत्पलादिविपक्केन क्षीरेणास्थापनं हितम् ॥ १६ ॥

---

१ 'क्षीरे च पेय' इति हाराण०। २ 'शङ्खशैवलयष्ट्याह्व°' इति हाराण०।

भोजनं जाङ्गलरसैः सर्पिषा चानुवासनम् ॥
मधुरैः क्षीरसर्पिस्तु स्नेहने च सशर्करम् ॥ १७ ॥
पित्तरक्तघ्नमुद्दिष्टं यच्चान्यदपि तद्धितम् ॥
कफोत्थितं शिरोरोगं जयेत् कफनिवारणैः ॥ १८ ॥
शिरोविरेकैर्वमनैस्तीक्ष्णैर्गण्डूषधारणैः ॥
अच्छं च पाययेत्सर्पिः स्वेदयेच्चाप्यभीक्ष्णशः ॥ १९ ॥
शिरो मधूकसारेण स्निग्धं चापि विरेचयेत् ॥
इङ्गुदस्य त्वचा वाऽपि मेषशृङ्गस्य[1] वा भिषक् ॥ २० ॥
आभ्यामेव कृतां[2] वर्तिं धूमपाने प्रयोजयेत् ॥
घ्रेयं कट्फलचूर्णं च कवलाश्च कफापहाः ॥ २१ ॥
सरलाकुष्ठशार्ङ्गेष्टादेवकाष्ठैः सरोहिषैः ॥
क्षारपिष्टैः सलवणैः सुखोष्णैर्लेपयेच्छिरः ॥ २२ ॥
यवषष्टिकयोश्चान्नं व्योषक्षारसमायुतम् ॥
पटोलमुद्गकौलत्थैर्मात्रावद्भोजयेद्रसैः ॥ २३ ॥
शिरोरोगे त्रिदोषोत्थे त्रिदोषघ्नो विधिर्हितः ॥
सर्पिःपान विशेषेण पुराणं वा दिशन्ति हि ॥ २४ ॥
क्षयजे क्षयमासाद्य कर्तव्यो बृंहणो विधिः ॥
पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम् ॥ २५ ॥
क्षयकासापहं चात्र सर्पि. पथ्यतमं विदुः ॥
कृमिभिर्भक्ष्यमाणस्य वक्ष्यते[3] शिरसः क्रिया ॥ २६ ॥
नस्ये हि शोणितं दद्यात्तेन मूर्च्छन्ति जन्तवः ॥
मत्ताः शोणितगन्धेन समायान्ति यतस्ततः ॥ २७ ॥

---

१ 'मेषशृङ्ग्या च वा' इति हाराण० । २ 'कृता वर्तीर्धूम°' इति हाराण० । ३ 'वक्ष्यन्ते शिरसः क्रिया. । नस्य.हि शोणित' इति हाराण० ।

तेषां निर्हरणं कार्यं ततो मूर्धविरेचनैः ॥
ह्रस्वशिग्रुकबीजैर्वा कांस्यनीलीसमायुतैः ॥ २८ ॥
कृमिघ्नैरवपीडैश्च मूत्रपिष्टैरुपाचरेत् ॥
पूतिमत्स्ययुतान् धूमान् कृमिघ्नांश्च प्रयोजयेत् ॥ २९ ॥
भोजनानि कृमिघ्नानि पानानि विविधानि च ॥
सूर्यावर्ते विधातव्यं नस्यकर्मादिभेषजम् ॥ ३० ॥
भोजनं जाङ्गलप्रायं [1]क्षीरान्नविकृतिर्घृतम् ॥
तथाऽर्धभेदके व्याधौ प्राप्तमन्यच्च यद्भवेत् ॥ ३१ ॥
शिरीषमूलकफलैरवपीडोऽनयोर्हितः ॥
वंशमूलककर्पूरैरवपीडं प्रयोजयेत् ॥ ३२ ॥
अवपीडो हितश्चात्र वचामागधिकायुतः ॥
मधुकेनावपीडो वा मधुना सह संयुतः ॥ ३३ ॥
मनःशिलावपीडो वा मधुना चन्दनेन वा ॥
तेषामन्ते हितं नस्यं सर्पिर्मधुरसान्वितम् ॥ ३४ ॥
सारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम् ॥
सर्पिस्तैलयुतो लेपो द्वयोरपि सुखावहः ॥ ३५ ॥
एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥
अनन्तवाते कर्तव्यः सूर्यावर्तहरो[2] विधिः ॥ ३६ ॥
सिराव्यधश्च कर्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च विधातव्यो वातपित्तविनाशनः ॥ ३७ ॥
मधुमस्तकसंयावघृतपूरैश्च [3]भोजनम् ॥
क्षीरसर्पिः प्रशसन्ति नस्ये पाने च शङ्खके ॥ ३८ ॥
जाङ्गलानां रसैः स्निग्धैराहारश्चात्र शस्यते ॥
शतावरीं तिलान् कृष्णान् मधुकं नीलमुत्पलम् ॥ ३९ ॥

१ 'क्षीरान्नविकृतैर्घृतम्' इति हाराण०। २ 'सूर्यावर्तेरितो' इति हाराण०। ३ 'भोजनैः' इति हाराण०।

दूर्वां पुनर्नवां चैव लेपे साध्ववचारयेत् ॥
महासुगन्धामथवा पालिन्दीं चाम्लपेषिताम् ॥ ४० ॥
शीतांश्चात्र परीषेकान् प्रदेहांश्च[1] प्रयोजयेत् ॥
अवपीडश्च देयोऽत्र सूर्यावर्तनिवारणः ॥ ४१ ॥
कृमिक्षयकृतौ हित्वा शिरोरोगेषु बुद्धिमान् ॥
मधुतैलसमायुक्तैः शिरांस्यतिविरेचयेत्[2] ॥ ४२ ॥
पश्चात्सर्षपतैलेन ततो नस्यं प्रयोजयेत् ॥
न चेच्छान्तिं व्रजन्त्येवं[3] स्निग्धस्विन्नांस्ततो भिषक् ॥ ४३ ॥
पश्चादुपाचरेत्सम्यक् सिराणामथ मोक्षणैः ॥
षट्सप्ततिर्नेत्ररोगा दशाष्टादश कर्णजाः ॥ ४४ ॥
एकत्रिंशद् घ्राणगताः शिरस्येकादशैव[4] तु ॥
इति विस्तरतो द(दि)ष्टाः सलक्षणचिकित्सिताः ॥ ४५ ॥
संहितायामभिहिताः सप्तषष्टिर्मुखामयाः ॥
एतावन्तो यथास्थूलमुत्तमाङ्गगता गदाः ॥
अस्मिञ्छास्त्रे निगदिताः सङ्ख्यारूपचिकित्सितैः ॥ ४६ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[5] शालाक्यतन्त्रे शिरोरोगप्रतिषेधो नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशतितमोऽध्यायः ।

अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'प्रदेहानत्र योजयेत्' इति हाराण० । २ 'शिरांस्यपि विरेचयेत्' इति हाराण० । ३ 'व्रजत्येव' इति हाराण० । ४ 'शिरस्येकादशेह तु' इति हा० । ५ '°त्तरतन्त्रे शिरो°' इति हाराण० ।

बालग्रहाणां विज्ञानं साधनं चाप्यनन्तरम् ॥
उत्पत्तिं कारणं चैव सुश्रुतैकमनाः शृणु ॥ ३ ॥
स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च ॥
शकुनी रेवती चैव पूतना चान्धपूतना ॥ ४ ॥
पूतना शीतनामा च तथैव मुखमण्डिका ।
नवमो नैगमेषश्च यः पितृग्रहसंज्ञितः ॥ ५ ॥

धात्रीमात्रोः प्राक्प्रदिष्टापचारा-
च्छौचभ्रष्टान्मङ्गलाचारहीनान् ॥
त्रस्तान् हृष्टांस्तार्जितान्[1] ताडितान् वा
पूजाहेतोर्हिंस्युरेते कुमारान् ॥ ६ ॥
ऐश्वर्यस्थास्ते न शक्या विशन्तो
देहं द्रष्टुं मानुषैर्विश्वरूपाः ॥
आप्तं वाक्यं तत्समीक्ष्याभिधास्ये
लिङ्गान्येषां यानि देहे भवन्ति ॥ ७ ॥

शूनाक्षः क्षतजसगन्धिकः स्तनद्विड्
वक्रास्यो हतचलितैकपक्ष्मनेत्रः ॥
उद्विग्नः सुलुलितचक्षुरल्परोदी
स्कन्दार्तो भवति च गाढमुष्टिवर्चाः ॥ ८ ॥
निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः
संरब्धः करचरणैश्च नृत्यतीव ॥
विण्मूत्रे सृजति विनद्य जृम्भमाणः
फेनं च प्रसृजति तत्सखाभिपन्नः ॥ ९ ॥
स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
संस्राविव्रणपरिपीडितः समन्तात् ॥

---

१ 'सर्जितान् क्रन्दितान् वा' इति हाराण० ।

स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ १० ॥
रक्तास्यो हरितमलोऽतिपाण्डुदेहः
श्यावो वा ज्वरमुखपाकवेदनार्तः ॥
रेवत्या व्यथिततनुश्च कर्णनासं
मृद्गाति ध्रुवमभिपीडितः कुमारः ॥ ११ ॥
स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ
विड् भिन्नं सृजति च काकतुल्यगन्धिः ॥
छर्द्याऽऽर्तो हृषिततनूरुहः कुमार-
स्तृष्णालुर्भवति च पूतनागृहीतः ॥ १२ ॥
यो द्वेष्टि स्तनमतिसारकासहिक्का-
च्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः ॥
दुर्वर्णः सततमधःशयोऽम्लगन्धि-
स्तं ब्रूयुर्भिषज इहान्धपूतनार्तम् ॥ १३ ॥
उद्विग्नो भृशमतिवेपते प्ररुद्यात्
संलीनः स्वपिति च यस्य चान्त्रकूजः ॥
विस्राङ्गो भृशमतिसार्यते च यस्तं
जानीयाद्भिषगिह शीतपूतनार्तम् ॥ १४ ॥
म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो
बह्वाशी कलुषसिरावृतोदरो यः ॥
सोद्वेगो भवति च मूत्रतुल्यगन्धिः
स ज्ञेयः शिशुरिह वक्त्रमण्डिकार्तः ॥ १५ ॥
यः फेनं वमति विनम्यते च मध्ये
सोद्वेगं विलपति चोर्ध्वमीक्षमाणः ॥

---

१ 'प्रततनु॰' इति हाराण॰ ।

[1]ज्वर्येत प्रततमथो वसासगन्धि-
निःसंज्ञो भवति हि नैगमेषजुष्टः ॥ १६ ॥
प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन्मुहुः ॥
तं[2] बालमचिराद्धन्ति ग्रहः संपूर्णलक्षणः ॥ १७ ॥
विपरीतमतः साध्यं चिकित्सेदचिरार्दितम् ॥
गृहे पुराणहविषाऽभ्यज्य बालं शुचौ शुचिः ॥ १८ ॥
सर्षपान् प्रकिरेत्तेषां [3]तैलैर्दीपं च कारयेत् ॥
सदा सन्निहितं चापि जुहुयाद्धव्यवाहनम् ॥ १९ ॥
सर्वगन्धौषधीबीजैर्गन्धमाल्यैरलङ्कृतम् ॥
अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति [4]संततम् ॥ २० ॥
नमः स्कन्दाय देवाय ग्रहाधिपतये नमः ॥
शिरसा त्वाऽभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥
नीरुजो निर्विकारश्च शिशुर्मे जायतां द्रुतम् ॥ २१ ॥

इति श्रीसुश्रुतसंहितायामु[5]त्तरतन्त्रान्तर्गते कुमारतन्त्रे नवग्रहाकृति-
विज्ञानीयो नाम ( प्रथमोऽध्यायः, आदितः )
सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशतितमोऽध्यायः ।

अथातः स्कन्धग्रहप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
स्कन्दग्रहोपसृष्टानां [6]कुमाराणां प्रशस्यते ॥
वातघ्नद्रुमपत्राणां निष्क्वाथः परिषेचने ॥ ३ ॥

---

१ 'जीर्येत' इति हाराण० । २ 'त बाल न चिराद्धन्ति' इति हाराण० । ३ 'तैले दीपं' इति पा० । ४ 'सस्मरन्' इति हाराण० । ५ '°त्तरतन्त्रे नवग्रहा°' इति हाराण० । ६ 'कुमाराणां च शस्यते' इति हाराण० ।

तेषां मूलेषु सिद्धं च तैलमभ्यञ्जने हितम् ॥
सर्वगन्धसुरामण्डकैडर्यावापमिष्यते[1] ॥ ४ ॥

देवदारुणि रास्नायां मधुरेषु द्रुमेषु च ॥
सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत् ॥ ५ ॥

सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम् ॥
उष्ट्राजाविगवां चैव रोमाण्युद्धूपनं शिशोः ॥ ६ ॥

सोमवल्लीमिन्द्रवल्लीं शमीं बिल्वस्य कण्टकान् ॥
मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत् ॥ ७ ॥

रक्तानि माल्यानि तथा पताका रक्ताश्च गन्धा विविधाश्च भक्ष्याः ॥
घण्टा च देवाय बलिर्निवेद्यः सुकुक्कुटः स्कन्दग्रहे हिताय ॥ ८ ॥
स्नानं त्रिरात्रं निशि चत्वरेषु कुर्यात् पुरं[2] शालियवैर्नवैस्तु ॥
अद्भिश्च गायत्र्यभिमन्त्रिताभिः प्रज्वालनं[3] व्याहृतिभिश्च वह्नेः ॥९॥

रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ॥
अहन्यहनि कर्तव्या या भिषग्भिरतन्द्रितैः ॥ १० ॥

तपसां तेजसां चैव यशसां वपुषां तथा ॥
निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥ ११ ॥

ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ॥
देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ १२ ॥

देवदेवस्य महतः पावकस्य च यः सुतः ॥
गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ १३ ॥

---

१ '°कैटर्यावापमिष्यते' इति हाराण° । २ 'पुन शालियवैर्नवैरतु' इति हाराण° । ३ 'प्रज्वालयेदाहुतिभिश्च वह्निम्' इति हाराण° ।

रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ॥
रक्तदिव्यवपुर्देव. पातु त्वां क्रौञ्चसूदनः ॥ १४ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[1] कुमारतन्त्रे स्कन्द-प्रतिषेधो नामा( द्वितीयोऽध्याय , आदितो )-ऽष्टाविंशोऽध्याय· ॥ २८ ॥

---

## एकोनत्रिंशत्तमोऽध्यायः ।

अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

बिल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ॥
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ ३ ॥
सर्वगन्धविपक्कं[2]तु तैलमभ्यञ्जने हितम् ॥
क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा ॥ ४ ॥
विपक्तव्यं घृतं[3] चापि पानीयं पयसा सह ॥
उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥ ५ ॥
गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् ॥
वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च ॥ ६ ॥
अनन्तां कुक्कुटीं बिम्बीं मर्कटी चापि धारयेत् ॥
पक्वापक्वानि मांसानि प्रसन्ना रुधिरं पयः ॥ ७ ॥
[4]भूतौदनो निवेद्यश्च स्कन्दापस्मारिणेऽवटे ॥
चतुष्पथे च कर्तव्यं स्नानमस्य यतात्मना ॥ ८ ॥

---

१ "°त्तरतन्त्रे स्कन्दग्रहप्रति°" इति हाराण०। २ 'विपक्वस्तु' इति हाराण०। ३ 'वापि पानीय पयसान्वितम्' इति हाराण०। ४ 'मुद्गौदनो' इति हा०।

स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ॥
विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[1] कुमारतन्त्रे स्कन्दापस्मार-
प्रतिषेधो नाम (तृतीयोऽध्याय, आदितः)
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशत्तमोऽध्यायः ।

अथातः शकुनीप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शकुन्यभिपरीतस्य कार्यो वैद्येन जानता ॥
वेतसाम्रकपित्थानां निष्क्वाथः परिषेचने ॥ ३ ॥
कषायमधुरैस्तैलं कार्यमभ्यञ्जने शिशोः ॥
मधुकोशीरह्रीबेरसारिवोत्पलपद्मकैः ॥ ४ ॥
रोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ॥
व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च ॥ ५ ॥
स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत् ॥
शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाः ॥ ६ ॥
लक्ष्मणां सहदेवां च बृहतीं चापि धारयेत् ॥
तिलतण्डुलकं माल्यं हरितालं मनःशिला ॥ ७ ॥
बलिरेष करञ्जेषु निवेद्यो नियतात्मना ॥
निष्कुटे[2] च प्रयोक्तव्यं स्नानमस्य यथाविधि ॥ ८ ॥
स्कन्दापस्मारशमनं[3] घृतं चापीह पूजितम् ॥
कुर्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः ॥ ९ ॥

---

१ "°त्तरतन्त्रे स्कन्दा" इति हाराण० । २ 'निकुञ्जे च' इति हाराण० ।
३ 'स्कन्दग्रहोपशमनं घृत तच्चेह' इति हाराण० ।

अन्तरीक्षचरा देवी सर्वालङ्कारभूषिता ॥
[1]अयोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥ १० ॥
दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा ॥
लम्बोदरी [2]शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ११ ॥

इति सुश्रुतसंहितायामुत्तरत[3]न्त्रान्तर्गते कुमारतन्त्रे शकुनीप्रतिषेधो नाम( चतुर्थोऽध्याय., आदित. )त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशत्तमोऽध्यायः ।

अथातो रेवतीप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अश्वगन्धाऽजशृङ्गी च सारिवा सपुनर्नवा ॥
[4]सहे तथा विदारी च कषायाः सेचने हिताः ॥ ३ ॥
तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसेऽपि च ॥
[5]पलङ्कषायां नलदे तथा गिरिकदम्बके ॥ ४ ॥
धवाश्वकर्णककुभधातकीतिन्दुकीषु च ॥
काकोल्यादिगणे चैव पानीयं सर्पिरिष्यते ॥ ५ ॥
कुलत्थाः शङ्खचूर्णं च [6]प्रदेहः सार्वगन्धिकः ॥
गृध्रोलूकपुरीषाणि यवा यवफलो घृतम् ॥ ६ ॥
सन्ध्ययोरुभयोः कार्यमेतद्धूपनं शिशोः ॥
वरुणारिष्टकमयं रुचकं [7]सैन्दुकं तथा ॥ ७ ॥

---

१ 'अधोमुखी' इति हाराण० । २ 'शङ्खवर्णा' इति पा० । ३ "°त्तरतन्त्रे शकुनी°" इति हाराण० । ४ 'सहे विदारी च तथा' इति हाराण० । ५ 'पलङ्कषाया' इति श्लोकार्धं हाराणचन्द्रो न पठति । ६ 'प्रदेहाः सार्वगन्धिकाः' इति हाराण० । ७ 'सैन्धुकं' इति हाराण० ।

सततं धारयेच्चापि कृतं वा पौत्रजीविकम् ॥
शुक्लाः सुमनसो लाजाः पयः शाल्योदनं तथा ॥ ८ ॥
बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥
सङ्गमे च भिषक् स्नानं कुर्याद्धात्रीकुमारयोः ॥ ९ ॥
नानावस्त्रधरा देवी चित्रमाल्यानुलेपना ॥
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥ १० ॥
उपासते[1] यां सततं देव्यो विविधभूषणाः ॥
लम्बा कराला विनता तथैव बहुपुत्रिका ॥
रेवती[2] शुष्कनामा या सा ते देवी प्रसीदतु ॥ ११ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे रेवतीप्रतिषेधो नाम (पञ्चमोऽध्यायः, आदितः) एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशत्तमोऽध्यायः ।

अथातः पूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
कपोतवङ्काऽरलुको वरुणः पारिभद्रकः ॥
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥ ३ ॥
वचा वयःस्था गोलोमी हरितालं मनःशिला ॥
कुष्ठं सर्जरसश्चैव तैलार्थे वर्ग इष्यते ॥ ४ ॥
हितं घृतं तुगाक्षीर्यां सिद्धं मधुरकेषु च ॥
कुष्ठतालीश[3]खदिरचन्दनस्यन्दने तथा ॥ ५ ॥

---

१ 'उपासते' इति श्लोकार्धं हाराणचन्द्रो न पठति । २ 'रेवती सतत माता सा ते देवी' इति हाराण०पाठः । ३ "°खदिर चन्दन°" इति हाराण० ।

देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकः ॥
एला हरेणवश्चापि योज्या उद्धूपने सदा ॥ ६ ॥
गन्धनाकुलिकुम्भीके[1] मज्जानो बदरस्य च ॥
कर्कटास्थि घृतं चापि[2] धूपनं सर्षपैः सह ॥ ७ ॥
काकादनीं चित्रफलां बिम्बीं गुञ्जां च धारयेत् ॥
मत्स्यौदनं च कुर्वीत कृशरां पललं तथा ॥
शरावसंपुटे कृत्वा बलिं शून्यगृहे हरेत् ॥ ८ ॥
उच्छिष्टेनाभिषेकेण शिशोः[3] स्नपनमिष्यते ॥
पूज्या च पूतना देवी बलिभिः सोपहारकैः ॥ ९ ॥
मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा ॥
शून्यागाराश्रिता[4] देवी दारकं पातु पूतना ॥ १० ॥
दुर्दर्शना सुदुर्गन्धा कराला मेघकालिका ॥
भिन्नागाराश्रया देवी दारकं पातु पूतना ॥ ११ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[5] कुमारतन्त्रे पूतनाप्रतिषेधो नाम (षष्ठोऽध्यायः, आदितः) द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशत्तमोऽध्यायः ।

अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

तिक्तकद्रुमपत्राणां कार्यः क्वाथोऽवसेचने ॥
सुरा सौवीरकं कुष्ठं हरितालं मनःशिला ॥ ३ ॥
तथा सर्जरसश्चैव तैलार्थमुपदिश्यते ॥
पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु ॥ ४ ॥

---

१ "°कुम्भीका' इति हाराण० । २ 'चैव' इति हाराण० । ३ 'शिरसि स्नानमिष्यते' इति हाराण० । ४ 'शून्यारामाश्रिता' इति पा० । ५ "°त्तरतन्त्रे पूतना°" इति हाराण० ।

शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते ॥
सर्वगन्धैः प्रदेहश्च गात्रेष्वक्ष्णोश्च शीतलैः ॥ ५ ॥
पुरीषं कौक्कुटं केशांश्चर्म सर्पत्वचं तथा ॥
जीर्णां च भिक्षुसंघाटीं धूपनायोपकल्पयेत् ॥ ६ ॥
कुक्कुटीं मर्कटीं शिम्बीमनन्तां चापि धारयेत् ॥
मांसमामं तथा पक्कं शोणितं च चतुष्पथे ॥ ७ ॥
निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः ॥
शिशोश्च स्नपनं कुर्यात् सर्वगन्धोदकैः[1] शुभैः ॥ ८ ॥
कराला पिङ्गला मुण्डा कषायाम्बरवासिनी ॥
देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ॥ ९ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे[2]ऽन्धपूतनाप्रतिषेधो नाम (सप्तमोऽध्यायः, आदितः) त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

कपित्थं सुवहां बिम्बीं तथा बिल्वं प्रचीबलम् ॥
नन्दीं भल्लातकं[3] चापि परिषेके प्रयोजयेत् ॥ ३ ॥
बस्तमूत्रं गवां मूत्रं मुस्तं च सुरदारु च ॥
कुष्ठं च सर्वगन्धांश्च[4] तैलार्थमवचारयेत् ॥ ४ ॥
रोहिणीसर्जखदिरपलाशककुभत्वचः ॥
निष्काथ्य तस्मिन्निष्काथे सक्षीरं[5] विपचेद्घृतम् ॥ ५ ॥

---

१ 'सर्वगन्धादिकैः' इति हाराण० । २ "°तन्त्रेऽन्धपूतना°" इति हाराण० । ३ 'भल्लातकीं' इति हाराण० । ४ 'सर्वगन्धा च' इति हाराण० । ५ 'सक्षीरं च विपाचितम्' इति हाराण० ।

गृध्रोलूकपुरीषाणि बस्तगन्धामहेस्त्वचः ॥
निम्बपत्राणि मधुकं धूपनार्थं[1] प्रयोजयेत् ॥ ६ ॥
धारयेदपि लम्बां च गुञ्जां काकादनीं तथा ॥
नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम् ॥ ७ ॥
देव्यै देयश्चोपहारो वारुणी रुधिरं तथा ॥
जलाशयान्ते बालस्य स्नपनं चोपदिश्यते ॥ ८ ॥
मुद्गौदनाशना देवी सुराशोणितपायिनी ॥
जलाशयालया देवी पातु त्वां शीतपूतना ॥ ९ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[2] कुमारतन्त्रे शीतपूतनाप्रतिषेधो नाम (अष्टमोऽध्यायः, आदितः) चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशत्तमोऽध्यायः।

अथातो मुखमण्डिकाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

कपित्थबिल्वतर्कारीवांशीगन्धर्वहस्तकाः ॥
कुबेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥ ३ ॥
स्वरसैर्भृङ्गवृक्षाणां तथाऽजहरिगन्धयोः ।
तैलं वसां च संयोज्य पचेदभ्यञ्जने शिशोः ॥ ४ ॥
मधूलिकायां पयसि तुगाक्षीर्यां गणे तथा ॥
मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ ५ ॥
वचा सर्जरसः कुष्ठं सर्पिश्चोद्धूपनं[3] हितम् ॥
धारयेदपि जिह्वाश्च चाषचीरल्लिसर्पजाः ॥ ६ ॥

---

१ 'धूपनार्थं' इति हाराण०। २ '°त्तरतन्त्रे शीतपूतना°' इति हाराण०। ३ '°श्चोद्धूपने' इति हाराण०।

वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ॥
मनःशिलां चोपहरेद्गोष्ठमध्ये बलिं तथा ॥ ७ ॥
पायसं सपुरोडाशं बल्यर्थमुपसंहरेत्[1] ॥
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपन हितम् ॥ ८ ॥
अलङ्कृता रूपवती सुभगा कामरूपिणी ॥
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥ ९ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[2] कुमारतन्त्रे मुखमण्डिका-
प्रतिषेधो नाम ( नवमोऽध्यायः, आदितः )
पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

अथातो नैगमेषप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

बिल्वाग्निमन्थपूतीकाः कार्याः स्युः परिषेचने ॥
सुरा[3] सबीजं धान्याम्लं परिषेके च शस्यते ॥ ३ ॥
प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः ॥
पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥ ४ ॥
पञ्चमूलद्वयक्काथे क्षीरे मधुरकेषु च ॥
पचेद्घृतं च मेधावी खर्जूरीमस्तके[4]ऽपि वा ॥ ५ ॥
वचां वयःस्थां गोलोमीं जटिलां चापि[5] धारयेत् ॥
उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥ ६ ॥

---

१ 'बल्यर्थमुपहारयेत्' इति हाराण० । २ '°त्तरतन्त्रे मुखमण्डिका°' इति हाराण० । ३ 'सुरासौवीरधान्याम्लैः परिषेकैश्च शस्यते ।' इति हाराण०पाठः । ४ '°मस्तकेऽपि च' इति हाराण० । ५ 'वापि धारयेत्' इति हाराण० ।

सिद्धार्थकवचाहिङ्गुकुष्ठं चैवाक्षतैः सह ॥
भल्लातकाजमोदाश्च हितमुद्धूपनं शिशोः ॥ ७ ॥
मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे ॥
धूपः सुप्ते जने कार्यो बालस्य हितमिच्छता ॥ ८ ॥
तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि ॥
कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥ ९ ॥
अधस्ताद्वटवृक्षस्य स्नपनं चोपदिश्यते ॥
बलिं न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवेदयेत् ॥ १० ॥
अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः ॥
[1]बालं बालपिता देवो नैगमेषोऽभिरक्षतु ॥ ११ ॥

इति श्रीसुश्रुतसहितायामुत्तर[2]तन्त्रान्तर्गते कुमारतन्त्रे नैगमेषप्रतिषेधो नाम (दशमोऽध्याय., आदित ) षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

अथातो ग्रहोत्पत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
नव स्कन्दादयः प्रोक्ता बालानां य इमे ग्रहाः ॥
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥ ३ ॥
एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः ॥
सृष्टाः शरवणस्थस्य रक्षितस्यात्मतेजसा ॥ ४ ॥
स्त्रीविग्रहा ग्रहा ये तु नानारूपा मयेरिताः ॥
गङ्गोमा[3]कृत्तिकानां ते भागा राजसतामसाः ॥ ५ ॥

---

१ 'बाल पालयिता' इति हाराण०। २ "°तन्त्रे नैगमेष°" इति हाराण०। ३ "°कृत्तिकानाञ्च ते भागा राजसा मता." इति हाराण०।

नैगमेषस्तु पार्वत्या सृष्टो मेषाननो ग्रहः ॥
[1]कुमारधारी देवस्य गुहस्यात्मसमः सखा ॥ ६ ॥
स्कन्दापस्मारसंज्ञो यः सोऽग्निनाऽग्निसमद्युतिः ॥
स च [2]स्कन्दसखा नाम विशाख इति चोच्यते ॥ ७ ॥
स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा ॥
बिभर्ति चापरां संज्ञां कुमार इति स ग्रहः[3] ॥ ८ ॥
बाललीलाधरो योऽयं देवो रुद्राग्निसंभवः ॥
[4]मिथ्याचारेषु भगवान् स्वयं नैष प्रवर्तते ॥ ९ ॥
कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः ॥
गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः ॥ १० ॥
ततो भगवति स्कन्दे सुरसेनापतौ कृते ॥
उपतस्थुर्ग्रहाः सर्वे दीप्तशक्तिधरं गुहम् ॥ ११ ॥
ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संविधत्स्व वै ॥
तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् ॥ १२ ॥
ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत् ॥
[5]तिर्यग्योनिं मानुषं च दैवं च त्रितयं जगत् ॥ १३ ॥
परस्परोपकारेण वर्तते धार्यतेऽपि च ॥
देवा मनुष्यान् प्रीणन्ति [6]तैर्यग्योनींस्तथैव च ॥ १४ ॥
वर्तमानैर्यथाकालं शीतवर्षोष्णमारुतैः ॥
इज्याञ्जलिनमस्कारजपहोमव्रतादिभिः ॥ १५ ॥
नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान् ॥
भागधेयं विभक्तं च शेषं किञ्चिन्न विद्यते ॥ १६ ॥

---

१ 'कौमारधारी' इति हाराण० । २ 'स्कन्दसखो' इति हाराण०पाठ० । ३ अस्याग्रे ९-१० श्लोकौ व्युत्क्रमेण पठति हाराणचन्द्रः । ४ 'मिथ्या बालेषु' इति पा० । ५ 'तैर्यग्योनं मानुषं' इति हाराण० । ६ 'तैर्यग्योनांस्तथैव च' इति हाराण० ।

तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति ॥
कुलेषु येषु नेज्यन्ते देवाः पितर एव च ॥ १७ ॥
ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा ॥
निवृत्ताचारशौचेषु [1]परपाकोपजीविषु ॥ १८ ॥
उत्सन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु ॥
गृहेषु तेषु ये बालास्तान् गृह्णीध्वमशङ्किताः ॥ १९ ॥
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ॥
एवं ग्रहाः समुत्पन्ना बालान् गृह्णन्ति चाप्यतः ॥ २० ॥
ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः ॥
वैकल्यं मरणं [2]चापि ध्रुवं स्कन्दग्रहे मतम् ॥ २१ ॥
स्कन्दग्रहोऽत्युग्रतमः सर्वेष्वेव यतः स्मृतः ॥
अन्यो वा सर्वरूपस्तु न साध्यो ग्रह उच्यते ॥ २२ ॥

इति श्रीसुश्रुतसंहितायामुत्तर[3]तन्त्रान्तर्गते कुमारतन्त्रे ग्रहोत्पत्त्यध्यायो नाम (एकादशोऽध्यायः, आदित.) सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः ।

अथातो योनिव्यापत्प्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

प्रवृद्धलिङ्गं पुरुषं याऽत्यर्थमुपसेवते ॥
[4]रूक्षदुर्बलबाला या तस्या वायुः प्रकुप्यति ॥ ३ ॥
स दुष्टो योनिमासाद्य योनिरोगाय कल्पते ॥
त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु ॥ ४ ॥

---

१ 'परपाकोपभोजिषु' इति हाराण० । २ 'चाशु ध्रुव' इति हाराण० । ३ '°तन्त्रे ग्रहोत्पत्तिर्नाम' इति हाराण० । ४ 'रुक्षदुर्बलबालायास्तस्या' इति हाराण० ।

विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ॥
मिथ्याचारेण या[1] स्त्रीणां प्रदुष्टेनार्तवेन च ॥ ५ ॥
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥
उदावर्ता तथा वन्ध्या विप्लुता च परिप्लुता ॥ ६ ॥
वातला चेति वातोत्थाः[2] पित्तोत्था रुधिरक्षरा ॥
वामिनी स्रंसिनी चापि[3] पुत्रघ्नी पित्तला च या ॥ ७ ॥
अत्यानन्दा च या योनिः कर्णिनी चरणाद्वयम्[4] ॥
श्लेष्मला[5] च कफाज्ज्ञेया षण्डाख्या फलिनी तथा ॥ ८ ॥
महती[6] सूचिवक्त्रा च सर्वजेति त्रिदोषजा ॥
सफेनिल[7]मुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥ ९ ॥
वन्ध्यां नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ॥
परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम् ॥ १० ॥
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ॥
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ११ ॥
सदाहं प्रक्षरत्यस्रं[8] यस्यां सा लोहितक्षरा ॥
सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ॥ १२ ॥
प्रस्रंसिनी स्यन्दते[9] तु क्षोभिता [10]दुःप्रसूश्च या ॥
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्त[11]संस्रवात् ॥ १३ ॥
अत्यर्थं पित्तला योनिर्दाहपाककज्वरान्विता ॥
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ १४ ॥

---

१ 'ता' स्त्रीणां' इति हाराण० । २ 'वातोत्था पित्तोत्था' इति हाराण० । ३ 'वापि' इति हाराण० । ४ 'चरणीद्वयम्' इति पा० । ५ 'श्लैष्मिकी सकफा ज्ञेया' इति हाराण० । ६ 'मेहनी' इति पा० । ७ 'सा फेनिल°' इति हाराण० । ८ 'प्रकिरत्यस्र' इति हाराण० । ९ 'स्रंसते तु' इति हाराण० । १० 'दुःप्रजायना' इति पा० । ११ 'रक्तसंक्षयात्' इति हाराण० ।

अस्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ॥
कर्णिन्यां कर्णिका योनौ [1]श्लेष्मासृग्भ्यां प्रजायते ॥ १५ ॥
मैथुनेऽचरणा[2] पूर्वं पुरुषादतिरिच्यते ॥
बहुशश्चातिचरणादन्या बीजं न विन्दति ॥ १६ ॥
श्लेष्मला पिच्छिला योनिः कण्डूयुक्ताऽतिशीतला ॥
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रितिर्भवेत् ॥ १७ ॥
अनार्तवस्तना[3] षण्डी खरस्पर्शा च मैथुने ॥
अतिकायगृहीतायास्तरुण्याः[4] फलिनी भवेत् ॥ १८ ॥
विवृताऽतिमहायोनिः[5] सूचीवक्त्राऽतिसंवृता ॥
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १९ ॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रितिर्भवेत् ॥
पञ्चासाध्या भवन्तीमा योनयः सर्वदोषजाः ॥ २० ॥
प्रतिदोषं तु साध्यासु स्नेहादिक्रम इष्यते ॥
दद्यादुत्तरबस्तींश्च विशेषेण यथोदितान् ॥ २१ ॥
कर्कशां शीतलां[6] स्तब्धामल्पस्पर्शां च मैथुने ॥
कुम्भीस्वेदैरुपचरेत् सानूपौदकसंयुतैः ॥ २२ ॥
मधुरौषधसंयुक्तान् वेशवारांश्च योनिषु ॥
निक्षिपेद्धारयेच्चापि पिचुतैलमतन्द्रितः[7] ॥ २३ ॥
धावनानि च पथ्यानि कुर्वीतापूरणानि च ॥
ओषचोषान्वितासूक्तं कुर्याच्छीतं विधिं भिषक् ॥ २४ ॥
दुर्गन्धां पिच्छिलां चापि चूर्णैः पञ्चकषायजैः ॥
पूरयेद्राजवृक्षादिकषायैश्चापि धावनम् ॥ २५ ॥

---

१ 'श्लेष्मासृग्भ्या तु जायते' इति हाराण०। २ 'मैथुनेऽचरणी' इति पा०। ३ '°स्तनी षण्डी' इति हाराण०। ४ '°स्तरुण्यफलिनी' इति पा०। ५ हाराण०ग्रन्थे 'सूचीवक्त्रा–' इत्यस्यादौ चरणद्वयत्रुटिर्दृश्यते। ६ 'तुमुला स्तब्धामस्पर्शा' इति पा०। ७ '°मतन्द्रिता' इति हाराण०।

योन्यां तु पूयस्राविण्यां शोधनद्रव्यसंभृतैः ॥
सगोमूत्रैः सलवणैः[1] शोधनं हितमिष्यते ॥ ॥ २६ ॥
बृहतीफलकल्कस्य द्विहरिद्रायुतस्य च ॥
कण्डूमतीमल्पस्पर्शा[2] पूरयेद्धूपयेत्तथा ॥ २७ ॥
वर्तिं प्रदद्यात् कर्णिन्यां शोधनद्रव्यसंभृताम् ॥
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् ॥ २८ ॥
पिधाय वेशवारेण ततो बन्धं समाचरेत् ॥
प्रतिदोषं विदध्याच्च सुरारिष्टासवान् भिषक् ॥ २९ ॥
प्रातः प्रातर्निषेवेत रसोनादुद्धृतं रसम् ॥
क्षीरमांसरसप्रायमाहारं विदधीत च ॥ ३० ॥
शुक्रार्तवादयो दोषाः स्तनरोगाश्च कीर्तिताः ॥
[3]क्लैब्यस्थानानि मूढस्य गर्भस्य विधिरेव च ॥ ३१ ॥
गर्भिणीप्रतिरोगेषु चिकित्सा चाप्युदाहृता ॥
सर्वथा तां प्रयुञ्जीत योनिव्यापत्सु बुद्धिमान् ॥
अपप्रजातारोगांश्च चिकित्सेदुत्तराद्भिषक् ॥ ३२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[4] कुमारतन्त्रे योनिव्यापत्प्रति-
षेधो नामा (द्वादशोऽध्यायः, आदितोऽ)-
ष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

[5]उत्तरतन्त्रे द्वितीयं कौमारतन्त्रं समाप्तम् ॥ २ ॥

---

१ 'सलवणैः पिण्डैरापूरणं हितम्' इति हाराण० । २ '°मपस्पर्शा' इति हाराण० । ३ 'क्लैब्योत्थानानि' इति हाराण० । ४ '°तन्त्रे योनि°' इति हाराण० । ५ 'इति सुश्रुताचार्यविरचिते आयुर्वेदशास्त्रे सुश्रुतसंहितायामुत्तरतन्त्रे कौमारभृत्यं तन्त्रं समाप्तम् ॥' इति हाराण०पाठः ।

# एकोनचत्वारिंशत्तमोऽध्यायः ।

अथातो ज्वरप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

येनामृतमपां मध्यादुद्धृतं पूर्वजन्मनि ॥
यतोऽमरत्वं संप्राप्तास्त्रिदशास्त्रिदिवेश्वरात् ॥ ३ ॥
शिष्यास्तं देवमासीनं पप्रच्छुः सुश्रुतादयः ॥
व्रणस्योपद्रवाः प्रोक्ता व्रणिनामप्यतः परम् ॥ ४ ॥
समासाद् व्यासतश्चैव ब्रूहि नो भिषजांवर ! ॥
उपद्रवेण [1]जुष्टस्य व्रणः कृच्छ्रेण सिध्यति ॥ ५ ॥
उपद्रवास्तु व्रणिनः कृच्छ्रसाध्याः प्रकीर्तिताः ॥
प्रक्षीणबलमांसस्य शेषधातुपरिक्षयात् ॥ ६ ॥
तस्मादुपद्रवान् कृत्स्नान् ब्रूहि नः सचिकित्सितान् ॥
सर्वकायचिकित्सासु ये दृष्टाः [2]परमर्षिणा ॥ ७ ॥
तेषां तद्वचनं श्रुत्वा प्राब्रवीद्भिषजांवरः ॥
ज्वरमादौ प्रवक्ष्यामि स रोगानीकराट् स्मृतः ॥ ८ ॥
रुद्रकोपाग्निसंभूतः सर्वभूतप्रतापनः ॥
तैस्तैर्नाम[3]भिरन्येषां सत्त्वानां परिकीर्त्यते ॥ ९ ॥
[4]जन्मादौ निधने चैव प्रायो विशति देहि[5]नम् ॥
अतः सर्वविकाराणामयं राजा प्रकीर्तितः ॥ १० ॥
ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् ॥
कर्मणा लभते यस्माद्देवत्वं मानुषादपि ॥ ११ ॥

---

१ 'जुष्टस्तु' इति हाराण० । २ 'परमर्षिभिः' इति हाराण० । ३ "°र्नामभिरित्येषां' इति हाराण० । ४ 'जन्मादौ निधने' 'अतः सर्व°' इति श्लोकार्धे 'तैर्यग्योना ज्वरार्दिता.' इति सार्धद्वादशश्लोकात् परतः पठति हाराणचन्द्रः। ५ क्वचित् 'देहिनः' इति (हाराण०) 'देहिनाम्' इति च पा० ।

पुनश्चैव च्युतः स्वर्गान्मानुष्यमनुवर्तते ॥
तस्मात्ते देवभावेन[1] सहन्ते मानुषा ज्वरम् ॥ १२ ॥
शेषाः सर्वे विपद्यन्ते तैर्यग्योना ज्वरार्दिताः ॥
स्वेदावरोधः[2] सन्तापः सर्वाङ्गग्रहणं तथा ॥ १३ ॥
विकारा युगपद्यस्मिन् ज्वरः स परिकीर्तितः ॥
दोषैः पृथक् समस्तैश्च द्वन्द्वैरागन्तुरेव च ॥ १४ ॥
अनेककारणोत्पन्नः स्मृतस्त्वष्टविधो ज्वरः ॥
दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः ॥ १५ ॥
व्याप्य देहमशेषेण ज्वरमापादयन्ति हि ॥
दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमूष्मणा ॥ १६ ॥
सहिता रसमागत्य रसस्वेदप्रवाहिणाम् ॥
स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम् ॥ १७ ॥
निरस्य बहिरूष्माणं पक्तिस्थानाच्च केवलम् ॥
शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम् ॥ १८ ॥
जनयन्त्यथ वृद्धिं[3] वा स्ववर्णं च त्वगादिषु ॥
मिथ्यातियुक्तैरपि च स्नेहाद्यैः कर्मभिर्नृणाम् ॥ १९ ॥
विविधादभिघाताच्च रोगोत्थानात् प्रपाकतः ॥
श्रमात् क्षयादजीर्णाच्च विषात्सात्म्यर्तुपर्ययात् ॥ २० ॥
ओषधीपुष्पगन्धाच्च शोकान्नक्षत्रपीडया[4] ॥
अभिचाराभिशापाभ्यां मनोभूताभिशङ्कया ॥ २१ ॥
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ॥
स्तन्यावतरणे चैव ज्वरो दोषैः प्रवर्तते ॥ २२ ॥

---

१ 'देवभागेन' इति हाराण० । २ 'स्वेदोपरोधः' इति पा० । ३ 'वृद्धिं च' इति हाराण० । ४ 'शोकान्नक्षत्रपीडनात्' इति हाराण० ।

तैर्वेगवद्भिर्बहुधा समुद्भ्रान्तैर्विमार्गगैः ॥
विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु बहिश्चरः ॥ २३ ॥
रुणद्धि चाप्यपांधातुं यस्मात्तस्माज्ज्वरातुरः ॥
भवत्यत्युष्णगात्रश्च ज्व[1]रितस्तेन चोच्यते ॥ २४ ॥
श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ॥
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ २५ ॥
जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ॥
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ २६ ॥
सामान्यतो, विशेषात्तु जृम्भाऽत्यर्थं समीरणात् ॥
पित्तान्नयनयोर्दाहः, कफान्नान्नाभिनन्दनम् ॥ २७ ॥
सर्वलिङ्गस[2]मवायः सर्वदोषप्रकोपजे ॥
द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः ॥ २८ ॥
वेपथुर्विषमो वेगः [3]कण्ठौष्ठपरिशोषणम् ॥
निद्रानाशः [4]क्षुतः स्तम्भो गात्राणां रौक्ष्यमेव च ॥ २९ ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता ॥
जृम्भाऽऽध्मानं तथा शूलं भवत्यनिलजे ज्वरे ॥ ३० ॥
वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ॥
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ ३१ ॥
प्रलापः कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा ॥
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥ ३२ ॥
गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता ॥
स्रोतोरोधो रुग[5]ल्पत्वं प्रसेको मधुरास्यता ॥ ३३ ॥

---

१ 'न च स्विद्यति सर्वत.' इति पा०। 'न च स्विद्यति सर्वशः' इति **हाराण०**। २ '°समावाय.' इति **हाराण०**। ३ 'कण्ठौष्ठमुखशोषणम्' इति **हाराण०**। ४ 'क्षवस्तम्भो' इति **हाराण०**। ५ 'विड्ल्पत्व' इति पा०।

नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकता[1] ॥
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च[2] शुक्लता ॥ ३४ ॥
निद्रानाशो भ्रमः श्वासस्तन्द्रा सुप्ताङ्गताऽरुचिः ॥
तृष्णा मोहो मदः स्तम्भो दाहः शीतं हृदि व्यथा ॥ ३५ ॥
पक्तिश्चिरेण दोषाणामुन्मादः श्यावदन्तता ॥
रसना परुषा कृष्णा सन्धिमूर्धास्थिजा रुजः ॥ ३६ ॥
[3]निर्भुग्ने कलुषे नेत्रे कर्णौ शब्दरुगन्वितौ ॥
प्रलापः स्रोतसां पाकः कूजनं चेतनाच्युतिः ॥ ३७ ॥
स्वेदमूत्रपुरीषाणामल्पशः सुचिरात् स्रुतिः[4] ॥
सर्वजे सर्वलिङ्गानि विशेषं चात्र मे शृणु ॥ ३८ ॥
नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतस्वरः ॥
खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः ॥ ३९ ॥
सास्रो निर्भुग्नहृदयो[5] भक्तद्वेषी हतप्रभः ॥
श्वसन्निपतितः शेते प्रलापोपद्रवायुतः ॥ ४० ॥
तमभिन्यासमित्याहुर्हतौजसमथापरे ॥
सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः ॥ ४१ ॥
निद्रोपेतमभिन्यासं क्षीणमेनं हतौजसम् ॥
संन्यस्तगात्रं संन्यासं विद्यात्सर्वात्मके ज्वरे ॥ ४२ ॥
ओजो विस्रंसते यस्य पित्तानिलसमुच्छ्रयात् ॥
स गात्रस्तम्भशीताभ्यां शयनेप्सुरचेतनः[6] ॥ ४३ ॥
अपि जाग्रत् स्वपन् जन्तुस्तन्द्रालुश्च प्रलापवान् ॥
संहृष्टरोमा स्रस्ताङ्गो मन्दसन्तापवेदनः ॥ ४४ ॥

---

१ '°ऽविपाकिता' इति हाराण० । २ 'कफजेऽक्ष्यादिशुक्लता' इति पा० । ३ 'निर्भुग्नकलुषे' इति हाराण० । ४ 'सृति' हाराण० । ५ 'सास्रनिर्भुग्ननयनः' इति हाराण० । ६ 'शयने स्यादचेतनः' इति हाराण० ।

ओजोनिरोधजं तस्य जानीयात् कुशलो भिषक् ॥
सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ॥ ४५ ॥

पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥
द्विदोषोच्छ्रायलिङ्गास्तु द्वन्द्वजास्त्रिविधाः स्मृताः ॥ ४६ ॥

तृ[1]ष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ॥
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तथा ॥ ४७ ॥

पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥
स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥ ४८ ॥

शिरोग्रहः प्रतिश्यायः कासः स्वेदप्रवर्तनम् ॥
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ४९ ॥

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ॥
मुहुर्दाहो मुहुः शीतं श्लेष्मपित्तज्वराकृतिः ॥ ५० ॥

क्ली[2]शानां ज्वरमुक्तानां मिथ्याहारविहारिणाम् ॥
दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः ॥ ५१ ॥

सततान्येद्युष्कत्र्याख्यचातुर्थान् सप्रलेपकान् ॥
कफस्थानविभागेन यथासंख्यं करोति हि ॥ ५२ ॥

---

१ 'तृष्णा मूर्च्छा' इत्यत आरभ्य 'मुहुर्दाहो मुहुः शीत' इति ५०तमश्लोक यावत् हाराणचन्द्रो न पठति। तत्स्थले तेन 'जृम्भाध्मानमदोत्कम्पपर्वभेदपरिक्षयाः ॥ तृट्प्रलापाभितापाः स्युर्ज्वरे मारुतपैत्तिके ॥ शूलकासकफोत्क्लेशशीतवेपथुपीनसाः ॥ गौरवारुचिविष्टम्भा वातश्लेष्मसमुद्भवे ॥ शीतदाहारुचिस्तम्भस्वेदमोहमदभ्रमाः ॥ कासाङ्गसादहृल्लासा भवन्ति कफपैत्तिके ॥' इत्यय पाठः पठ्यते। २ 'क्षामाणा' इति हाराण०।

अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते ॥
ततश्चामाशयं प्राप्य दोषैः[1] कुर्याज्ज्वरं नृणाम् ॥ ५३ ॥
तथा प्रलेपको ज्ञेयः[2] शोषिणां प्राणनाशनः ॥
दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत् ॥ ५४ ॥
कफस्थानेषु वा दोषस्तिष्ठन् द्वित्रिचतुर्षु वा ॥
विपर्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान् ॥ ५५ ॥
परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः ॥
आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे ॥ ५६ ॥

वाताधिकत्वात् प्रवदन्ति तज्ज्ञास्तृतीयकं चापि चतुर्थकं च ॥
[3]औपत्यके मद्यसमुद्भवे च हेतुं ज्वरे पित्तकृतं वदन्ति ॥ ५७ ॥
प्रलेपकं वातबलासकं च कफाधिकत्वेन वदन्ति तज्ज्ञाः ॥
मूर्च्छानुबन्धा विषमज्वरा ये प्रायेण ते द्वन्द्वसमुत्थितास्तु ॥ ५८ ॥

त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ॥
तयोः [4]प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥ ५९ ॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ॥
[5]प्रशान्ते कुरुतस्तस्मिञ्छीतमन्ते च तावपि ॥ ६० ॥
द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ ॥
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यश्च[6] स स्मृतः ॥ ६१ ॥
प्रसक्तश्चाभिघातोत्थश्चेतनाप्रभवस्तु[7] यः ॥
रात्र्यह्नोः षट्सु कालेषु कीर्तितेषु यथा पुरा[8] ॥ ६२ ॥

---

१ 'घोर' इति पा०। २ 'प्रलेपकस्त्वविषमः' इति मधुकोशे पाठः। ३ 'औपात्यके' इति हाराण०। ४ 'तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः' इति पा०। ५ 'तस्मिन्प्रशान्ते त्वितरौ कुरुते शीतमन्ततः।' इति श्लोकार्धमत्र पठति हाराणचन्द्रः। ६ 'कृच्छ्रसाध्यतमश्च स०' इति हाराण०। ७ 'चेतनाप्रसवश्च यः' इति पा०। ८ 'पुरा यथा' इति हाराण०।

प्रसह्य विषमोऽभ्येति मानवं बहुधा ज्वरः ॥
स चापि विषमो देहं न कदाचिद्विमुञ्चति ॥ ६३ ॥
[1]ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ॥
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ॥ ६४ ॥
धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते ॥
अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः ॥ ६५ ॥
दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ ६६ ॥
[2]सततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ॥
मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ॥ ६७ ॥
कुर्याच्चातुर्थकं घोरमन्तकं रोगसंकरम् ॥
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥ ६८ ॥
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥
सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ॥ ६९ ॥
अहोरात्रे सततको द्वौ कालावनुवर्तते ॥
अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्तते ॥ ७० ॥
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥
[3]वातेनोदीर्यमाणाश्च हीयमाणाश्च सर्वतः ॥
एकद्विदोषा मर्त्यानां तस्मिन्नेवोदितेऽहनि ॥ ७१ ॥
वेलां तामेव कुर्वन्ति ज्वरवेगे मुहुर्मुहुः ॥
([4]वातेनोद्धूयमानस्तु यथा पूर्येत सागरः ॥ ७२ ॥

---

१ 'यस्माद्गौरववैवर्ण्यकार्श्येभ्यो न विमुच्यते' इति पा०। २ 'सन्तत' इति हाराण०। ३ 'वातेनोदीर्यमाणाश्च' इत्यत आरभ्य 'ज्वरवेगे मुहुर्मुहुः' इति सार्धश्लोको हाराणचन्द्रो न पठति। ४ अय पाठो हाराणचन्द्रसंमतः, पर हस्तलिखितादर्शे तु नोपलभ्यते।

वातेनोदीरितास्तद्वद्दोषाः कुर्वन्ति वै ज्वरान् ॥
यथा वेगागमे वेलां छादयित्वा महोदधेः ॥ ७३ ॥
वेगहानौ तदेवाम्भस्तत्रैवान्तर्निलीयते[1] ॥
दोषवेगोदये तद्वदुदीर्येत ज्वरोऽस्य वै ॥ ७४ ॥
वेगहानौ प्रशाम्येत यथाऽम्भः[2] सागरे तथा ) ॥
विविधेनाभिघातेन ज्वरो यः संप्रवर्तते ॥ ७५ ॥
यथादोषप्रकोपं तु तथा मन्येत तं ज्वरम् ॥
श्यावास्यता विषकृते दाहातीसारहृद्ग्रहाः[3] ॥ ७६ ॥
अभक्तरुक्[4] पिपासा च तोदो मूर्च्छा बलक्षयः ॥
ओषधीगन्धजे मूर्च्छा शिरोरुक् वमथुः[5] क्षवः ॥ ७७ ॥
कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमरोचकः[6] ॥
हृदये वेदना चास्य[7] गात्रं च परिशुष्यति ॥ ७८ ॥
भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥ ७९ ॥
भूताभिषङ्गादुद्वेगहास्यकम्पनरोदनम् ॥
श्रमक्षयाभिघातेभ्यो देहिनां कुपितोऽनिलः ॥ ८० ॥
पूरयित्वाऽखिलं देहं ज्वरमापादयेद्भृशम् ॥
रोगाणां तु समुत्थानाद्विदाहागन्तुतस्तथा ॥ ८१ ॥
ज्वरोऽपरः संभवति तैस्तैरन्यैश्च हेतुभिः ॥
दोषाणां स तु लिङ्गानि कदाचिन्नातिवर्तते ॥ ८२ ॥

---

१ '°र्निधीयते' इति हाराण० । २ 'यथान्तः सागरे' इति हाराण० ।
३ 'दाहातिसारहृद्रदाः' इति पा० । ४ 'अभक्ता रुक्' इति हाराण० ।
५ 'क्षवथुस्तथा' इति हाराण० । ६ '°न्द्रालस्यमभक्तरुक्' इति हाराण० ।
७ 'चाशु' इति हाराण० ।

[1]गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ॥
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥ ८३ ॥
रक्तनिष्ठीवनं दाहः स्वेदश्छर्दनविभ्रमौ ॥
प्रलापः पिटिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ ८४ ॥
पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ॥
[2]ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ८५ ॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ॥
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥ ८६ ॥
भेदोऽस्थ्नां कुञ्च(ज)नं श्वासो विरेकश्छर्दिरेव च ॥
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥ ८७ ॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ॥
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ॥ ८८ ॥
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥
दग्ध्वेन्धनं यथा वह्निर्धातून् हत्वा यथा विषम् ॥ ८९ ॥
कृतकृत्यो व्रजेच्छान्तिं देहं हत्वा तथा ज्वरः ॥
वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा ॥ ९० ॥
तथा तेषां भिषग्ब्रूयाद्रसादिष्वपि बुद्धिमान् ॥
समस्तैः सन्निपातेन धातुस्थमपि निर्दिशेत् ॥ ९१ ॥
द्वन्द्वजं द्वन्द्वजैरेव दोषैश्चापि वदेत् कृतम् ॥
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥ ९२ ॥
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ॥
हतप्रभेन्द्रियं क्षीण[3]मरोचकनिपीडितम् ॥ ९३ ॥

---

१ 'गुरुता हृदयोत्क्लेश०' इत्यत आरभ्य 'द्वन्द्वज द्वन्द्वजैरेव दोषैश्चापि वदेत्कृतम्।' इति यावद्दश श्लोका हाराणचन्द्रो न पठति। २ 'ऊष्मान्तर्मोहविक्षेपौ' इति पा०। ३ 'क्षाम दुरात्मानमुपद्रुतम्' इति हाराण०।

गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ॥
हीनमध्याधिकैर्दोषैस्त्रिसप्तद्वादशाहिकः ॥ ९४ ॥
ज्वरवेगो भवेत्तीव्रो यथापूर्वं सुखक्रियः ॥
[1]कालो ह्येष यमश्चैव नियतिर्मृत्युरेव च ॥ ९५ ॥
तस्मिन् व्यपगते देहाज्जन्मेह पुनरुच्यते ॥
इति ज्वराः समाख्याताः, कर्मेदानीं प्रवक्ष्यते ॥ ९६ ॥
ज्वरस्य पूर्वरूपेषु वर्तमानेषु बुद्धिमान् ॥
पाययेत घृतं स्वच्छं ततः स लभते सुखम् ॥ ९७ ॥
विधि[2]र्मारुतजेष्वेष, पैत्तिकेषु विरेचनम् ॥
मृदु, प्रच्छर्दनं तद्वत्कफजेषु विधीयते ॥ ९८ ॥
[3]सर्वद्विदोषजेषूक्तं यथादोषं विकल्पयेत् ॥
अस्नेहनीयोऽशोध्यश्च संयोज्यो लङ्घनादिना ॥ ९९ ॥
रूपप्राग्रूपयोर्विद्यान्नानात्वं वह्निधूमवत् ॥
प्रव्यक्तरूपेषु हितमेकान्तेनापतर्पणम् ॥ १०० ॥
आमाशयस्थे दोषे तु सोत्क्लेशे वमनं परम् ॥
आनद्धः स्तिमितैर्दोषैर्यावन्तं कालमातुरः ॥ १०१ ॥
कुर्यादनशनं तावत्ततः संसर्गमाचरेत् ॥
न लङ्घयेन्मारुतजे क्षयजे मानसे तथा ॥ १०२ ॥
अलङ्घ्याश्चापि ये पूर्वं द्विव्रणीये प्रकीर्तिताः ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ॥ १०३ ॥
ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥
सृष्टमारुतविण्मूत्रं क्षुत्पिपासाऽसहं लघुम् ॥ १०४ ॥

---

१ हाराणचन्द्रस्तु 'कालो ह्येष' इत्यत आरभ्य "°ज्जन्मेह पुनरुच्यते' इति श्लोकार्धं न पठति। २ "°मारुतजेष्वेव' इति हाराण०। ३ 'सर्वं द्विदोष°' इति हाराण०।

प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम् ॥
बलक्षयस्तृषा शोषस्तन्द्रानिद्राभ्रमक्लमाः ॥ १०५ ॥
उपद्रवाश्च श्वासाद्याः संभवन्त्यतिलङ्घनात् ॥
दीपनं कफविच्छेदि पित्तवातानुलोमनम् ॥ १०६ ॥
कफवातज्वरार्तेभ्यो हितमुष्णाम्बु तृट्छिदम् ॥
तद्धि मार्दवकृद्दोषस्रोतसां शीतमन्यथा ॥ १०७ ॥
सेव्यमानेन तोयेन ज्वरः शीतेन वर्धते ॥
पित्तमद्यविषोत्थेषु शीतलं तिक्तकैः श्रृतम् ॥ १०८ ॥
गाङ्गेयनागरोशीरपर्पटोदीच्यचन्दनैः ॥
दीपनी पाचनी लघ्वी ज्वरार्तानां ज्वरापहा ॥ १०९ ॥
अन्नकाले हिता पेया यथास्वं पाचनैः कृता ॥
बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे ॥ ११० ॥
लङ्घनाम्बुयवागूभिर्यदा[1] दोषो न पच्यते ॥
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ॥ १११ ॥
कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत् ॥
पञ्चमूलीकषायं तु पाचनं पवनज्वरे ॥ ११२ ॥
सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम् ॥
पिप्पल्यादिकषायं तु कफजे परिपाचनम् ॥ ११३ ॥
द्वन्द्वजेषु तु संसृष्टं दद्यादथ विवर्जयेत् ॥
पीताम्बुर्लङ्घितो भुक्तोऽजीर्णी क्षीणः पिपासितः ॥ ११४ ॥
(तीक्ष्णे ज्वरे गुरौ देहे विबद्धेषु मलेषु च ॥
सामदोषं विजानीयाज्ज्वरं पक्वमतोऽन्यथा[2] ॥ )
मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ॥
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ११५ ॥

---

१ 'लङ्घनान्ते यवागूभि' इति पा० । २ श्लोकोऽयं केषुचित्पुस्तकेषु न पठ्यते, हाराणचन्द्रासमतश्च ।

दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम् ॥
हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः ॥ ११६ ॥
दोषाप्रवृत्तिरालस्यं विबन्धो बहुमूत्रता ॥
गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः ॥ ११७ ॥
स्वापः स्तम्भो गुरुत्वं च गात्राणां वह्निमार्दवम् ॥
मुखस्याशुद्धिरग्लानिः प्रसङ्गी बलवाञ्ज्वरः ॥ ११८ ॥
लिङ्गैरेभिर्विजानीयाज्ज्वरमाम विचक्षणः ॥
सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम् ॥ ११९ ॥
दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः ॥
पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ॥ १२० ॥
अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः ॥
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ १२१ ॥
शोधनं, शमनीयं तु करोति विषमज्वरम् ॥
च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ॥ १२२ ॥
अतिप्रवर्तमानं च साधयेदतिसारवत् ॥
यदा कोष्ठानुगाः पक्वा विबद्धाः स्रोतसां मलाः ॥ १२३ ॥
अचिरज्वरितस्यापि तदा दद्याद्विरेचनम् ॥
पक्वो ह्यनिर्हृतो दोषो देहे तिष्ठन् महात्ययम् ॥ १२४ ॥
विषमं वा ज्वरं कुर्याद्बलव्यापदमेव च ॥
तस्मान्निर्हरणं कार्यं दोषाणां वमनादिभिः ॥ १२५ ॥
प्राक्कर्म वमनं चास्य कार्यमास्थापनं तथा ॥
विरेचनं तथा कुर्याच्छिरसश्च विरेचनम् ॥ १२६ ॥
क्रमशो बलिने देयं वमनं श्लैष्मिके ज्वरे ॥
पित्तप्राये विरेकस्तु कार्यः प्रशिथिलाशये ॥ १२७ ॥

---

१ 'कृशतोऽच्युतिः' इति हाराण० । २ 'क्रमेण बलिने' इति हाराण० ।

सरुजेऽनिलजे कार्यं सोदावर्ते निरूहणम् ॥
कटीपृष्ठग्रहार्तस्य दीप्ताग्नेरनुवासनम् ॥ १२८ ॥
शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ॥
कफाभिपन्ने शिरसि कार्यं मूर्धविरेचनम् ॥ १२९ ॥
दुर्बलस्य समाध्मातमुदरं सरुजं दिहेत् ॥
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ १३० ॥
अम्लपिष्टैः सुखोष्णैश्च पवने तूर्ध्वमागते ॥
रुद्धमूत्रपूरीषाय गुदे वर्तिं निधापयेत् ॥ १३१ ॥
पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् ॥
पाययेत यवागूं वा मारुताद्यनुलोमिनीम्[1] ॥ १३२ ॥
शुद्धस्योभयतो यस्य ज्वरः शान्तिं न गच्छति ॥
सशेषदोषरूक्षस्य तस्य तं सर्पिषा जयेत् ॥ १३३ ॥
कृशं चैवाल्पदोषं च शमनीयैरुपाचरेत् ॥
उपवासैर्बलस्थं तु ज्वरे सन्तर्पणोत्थिते ॥ १३४ ॥
क्लिन्नां यवागूं मन्दाग्निं[2] तृषार्तं पाययेन्नरम् ॥
तृट्छर्दिदाहघर्मार्तं मद्यपं लाजतर्पणम् ॥ १३५ ॥
सक्षौद्रमम्भसा पश्चाज्जीर्णे यूषरसौदनम् ॥
उपवासश्रमकृते [3]क्षीणं(णे) वाताधिके ज्वरे ॥ १३६ ॥
दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम् ॥
मुद्गयूषौदनश्चापि[4] हितः कफसमुत्थिते ॥ १३७ ॥
स एव सितया युक्तः शीतः पित्तज्वरे हितः ॥
दाडिमामलमुद्गानां यूषश्चानिलपैत्तिके ॥ १३८ ॥

---

१ "°लोमनीम्' इति हाराण०। २ 'मन्दाग्नितृषार्तं' इति हाराण०। ३ 'क्षीणे' इति हाराण०। ४ "°यूषौदनश्चापि' इति हाराण०।

ह्रस्वमूलकयूषस्तु[1] वातश्लेष्माधिके हितः॥
पटोलनिम्बयूषस्तु पथ्यः पित्तकफात्मके॥ १३९॥
दाहच्छर्दियुतं क्षामं निरन्नं तृष्णयाऽर्दितम्॥
सिताक्षौद्रयुतं लाजतर्पणं पाययेत च॥ १४०॥
कफपित्तपरीतस्य ग्रीष्मेऽसृक्पित्तिनस्तथा॥
मद्यनित्यस्य न हिता यवागूस्तमुपाचरेत्॥ १४१॥
यूषैरम्लैरनम्लैर्वा जाङ्गलैश्च[2] रसैर्हितैः॥
मद्यं पुराणं मन्दाग्नेर्यवान्नोपहितं हितम्॥ १४२॥
सव्योषं वितरेत्तक्रं कफारोचकपीडिते॥
कृशोऽल्पदोषो दीनश्च नरो जीर्णज्वरार्दितः॥ १४३॥
विबद्धः सृष्टदोषश्च रूक्षः पित्तानिलज्वरी॥
पिपासार्तः सदाहो वा पयसा स सुखी भवेत्॥ १४४॥
तदेव[3] तरुणे पीतं विषवद्धन्ति मानवम्॥
सर्वज्वरेषु सुलघु मात्रावद्भोजनं हितम्॥ १४५॥
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्धनम्॥
ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत्॥ १४६॥
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा॥
स[4] क्षीणः कृच्छ्रतां याति यात्यसाध्यत्वमेव च॥ १४७॥
तस्माद्रक्षेद्बलं पुंसां बले सति हि जीवितम्॥
गुर्वभिष्यन्द्यकाले[5] च ज्वरी नाद्यात् कथञ्चन॥ १४८॥
न तु तस्याहितं भुक्तमायुषे वा सुखाय वा॥
संततं विषमं वाऽपि क्षीणस्य सुचिरोत्थितम्॥ १४९॥

---

१ 'ह्रस्वमूलकयूषेण भोजयेत् कफवातिके' इति हाराण०। २ 'जाङ्गलैर्वा' इति हाराण०। ३ 'तदेव तु पयः पीत तरुणे हन्ति मानवम्। सर्वज्वरेषु सप्ताह मात्रावद्' इति हाराण०। ४ 'स क्षीणः', 'तस्माद्रक्षेद्बल' इति श्लोकार्धद्वय हाराणचन्द्रो न पठति। ५ 'गुर्व्यभिष्यन्द्यकाले' इति हाराण०।

ज्वरं संभोजनैः पथ्यैर्लघुभिः समुपाचरेत् ॥
मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान् ॥ १५० ॥
आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥
[1]पटोलपत्रं वार्ताकं कठिल्लं पापचैलिकम् ॥ १५१ ॥
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम् ॥
पत्रं गुडूच्याः शाकार्थे ज्वरितानां प्रदापयेत् ॥ १५२ ॥
लावान् कपिञ्जलानेणान् पृषताञ्छरभाञ्छशान् ॥
कालपुच्छान् कुरङ्गांश्च तथैव [2]मृगमातृकान् ॥ १५३ ॥
मांसार्थे मांससात्म्यानां [3]ज्वरितानां प्रदापयेत् ॥
सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरां[4](रीं)स्तथा ॥ १५४ ॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ॥
ज्वरितानां प्रकोपं तु यदा याति समीरणः ॥ १५५ ॥
तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः ॥
[5]परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च ॥ १५६ ॥
( [6]स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः ॥ )
क[7]षायगुरुरूक्षाणि क्रोधादीनि तथैव च ॥ १५७ ॥
सारवन्ति च भोज्यानि वर्जयेत्तरुणज्वरी ॥
तथैव नवधान्यादिं वर्जयेच्च समासतः ॥ १५८ ॥
अनवस्थितदोषाग्नेरेभिः सन्धुक्षितो ज्वरः ॥
गम्भीरतीक्ष्णवेगत्वं यात्यसाध्यत्वमेव च ॥ १५९ ॥

---

१ 'पटोलपत्र' इत्यत आरभ्य 'ज्वरितानां प्रदापयेत्' इति सार्धश्लोको हाराणचन्द्रेण न पठ्यते । २ 'मृगमात्रिकान्' [ क्षुद्रो मृगो मृगमात्रिकः, अत्र मात्रशब्दोऽल्पार्थे ] इति हाराण० । ३ 'हितानीति प्रकल्पयेत्' इति पा० । ४ '°स्तित्तिरीस्तथा' इति हाराण० । ५ 'परिषेकावगाहांश्च स्नेहान्' इति हाराण० । ६ पाठोऽयं हाराणचन्द्रसंमतः । ७ 'कषायगुरुरूक्षाणि' इत्यत आरभ्य 'क्रोधव्यायामयोषितः' इति यावत् हाराणचन्द्रो न पठति ।

शीततोयदिवास्वप्नक्रोधव्यायाममैथुनम् ॥
न[1] सेवेत ज्वरोत्सृष्टो यावन्न बलवान् भवेत् ॥ १६० ॥
मु[2]क्तस्यापि ज्वरेणाशु दुर्बलस्याहितैर्ज्वरः ॥
प्रत्यापन्नो दहेद्देहं शुष्कं वृक्षमिवानलः ॥ १६१ ॥
तस्मात्कार्यः परीहारो ज्वरमुक्तैर्विरिक्तवत् ॥
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ १६२ ॥
ज्वरे प्रमोहो भवति स्वल्पैर[3]प्यवचेष्टितैः ॥
निषण्णं भोजयेत्तस्मान्मूत्रोच्चारौ च कारयेत् ॥ १६३ ॥
अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ॥
शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः ॥ १६४ ॥
न जातु स्ना[4]पयेत् प्राज्ञः सहसा ज्वरकर्शितम् ॥
तेन संदूषितो ह्यस्य पुनरेव भवेज्ज्वरः ॥ १६५ ॥
चिकित्सेच्च ज्वरान् सर्वान्निमित्तानां विपर्ययैः ॥
श्रमक्षयाभिघातोत्थे मूलव्याधिमुपाचरेत् ॥ १६६ ॥
स्त्रीणामपप्रजातानां स्तन्यावतरणे च यः ॥
तत्र संशमनं कुर्याद्यथादोषं विधानवित् ॥ १६७ ॥
अतः संशमनीयानि कषायाणि निबोध मे ॥
सर्वज्वरेषु देयानि यानि वैद्येन जानता ॥ १६८ ॥
पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ॥
कृतः कषायः सगुडो हन्याच्छ्वसनज ज्वरम् ॥ १६९ ॥
शृतं शीतकषायं वा गुडूच्याः पेयमेव तु ॥
बलादर्भश्वदंष्ट्राणां कषाय पादशेषितम् ॥ १७० ॥

---

१ 'न भजेत ज्वरोत्सृष्टो' इति हाराण० । २ 'त्यक्तस्यापि' इति हाराण० । ३ '°रप्यपचेष्टितै.' इति हाराण० । ४ 'तर्पयेत्' इति हाराण० ।

शर्कराघृतसंयुक्तं पिबेद्वातज्वरापहम् ॥
शतपुष्पावचाकुष्ठदेवदारुहरेणुकाः ॥ १७१ ॥
कुस्तुम्बुरूणि नलदं मुस्तं[1] चैवाप्सु साधयेत् ॥
क्षौद्रेण सितया चापि युक्तः क्वाथोऽनिलाधिके[2] ॥ १७२ ॥
द्राक्षागुडूचीकाश्मर्यत्रायमाणाः ससारिवाः ॥
निष्क्वाथ्य सगुडं क्वाथं पिबेद्वातकृते ज्वरे ॥ १७३ ॥
गुडूच्याः स्वरसो ग्राह्यः शतावर्याश्च तत्समः ॥
निहन्यात्सगुडः पीतः सद्योऽनिलकृतं ज्वरम् ॥ १७४ ॥
घृताभ्यङ्गस्वेदलेपानवस्थासु च योजयेत् ॥
श्रीपर्णीचन्दनोशीरपरूषकमधूकजः ॥ १७५ ॥
शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम् ॥
पीतं पित्तज्वरं हन्यात्सारिवाद्यं सशर्करम् ॥ १७६ ॥
सयष्टीमधुकं हन्यात्तथैवोत्पलपूर्वकम् ॥
शृतं शीतकषायं वा सोत्पलं शर्करायुतम् ॥ १७७ ॥
गुडूचीपद्मरोध्राणां सारिवोत्पलयोस्तथा ॥
शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः ॥ १७८ ॥
द्राक्षारग्वधयोश्चापि काश्मर्यस्याथवा पुनः ॥
स्वादुतिक्तकषायाणां कषायैः शर्करायुतैः ॥ १७९ ॥
सुशीतैः शमयेत्तृष्णां प्रवृद्धां दाहमेव च ॥
शीतं मधुयुतं तोयमाकण्ठाद्वा पिपासितम् ॥ १८० ॥
वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति ॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनायुतैः[3] ॥ १८१ ॥

---

१ 'मांसी' इति पा०। २ '°ऽनिलात्मके' इति हाराण०। ३ '°श्चन्दनायुतैः' [घृष्टश्वेतचन्दनबहुलैः] इति हाराण०।

अन्तर्दाहे विधातव्यमेभिश्चान्यैश्च शीतलैः ॥[2]
पद्मकं मधुकं द्राक्षां पुण्डरीकमथोत्पलम् ॥ १८२ ॥
यवान् भृष्टानुशीराणि समङ्गां काश्मरीफलम् ॥
निदध्यादप्सु चालोड्य निशापर्युषितं ततः ॥ १८३ ॥
क्षौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः ॥
जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत् ॥ १८४ ॥
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥
शर्करादाडिमाभ्यां वा द्राक्षाखर्जूरयोस्तथा ॥ १८५ ॥
वैरस्ये धारयेत्कल्कं गण्डूषं च तथा हितम् ॥
सप्तच्छदं गुडूचीं च निम्बं स्फूर्जकमेव च ॥ १८६ ॥
क्राथयित्वा पिबेत् क्राथं सक्षौद्रं कफजे ज्वरे ॥
कटुत्रिकं नागपुष्पं हरिद्रा कटुरोहिणी ॥ १८७ ॥
कौटजं च फलं हन्यात् सेव्यमानं कफज्वरम् ॥
हरिद्रां चित्रकं निम्बमुशीरातिविषे वचाम् ॥ १८८ ॥
कुष्ठमिन्द्रयवान् मूर्वां पटोलं चापि साधितम् ॥
पिबेन्मरिचसंयुक्तं सक्षौद्रं[3] कफजे ज्वरे ॥ १८९ ॥
सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः ॥
मुस्तेन च कृतः क्राथः पीतो हन्यात् कफज्वरम् ॥ १९० ॥
मुस्तं वृक्षकबीजानि त्रिफला कटुरोहिणी ॥
परूषकाणि च क्राथः कफज्वरविनाशनः ॥ १९१ ॥
राजवृक्षादिवर्गस्य कषायो मधुसंयुतः[4] ॥
कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितः[5] ॥ १९२ ॥

---

१ 'विधातव्यमेतैश्चान्यैश्च' इति हाराण० । २ अस्याग्रे-'निदध्यादप्सु', 'क्षौद्रेण युक्तं पिबतो' इति श्लोकार्धेऽनंतरं च 'पद्मकं मधुकं द्राक्षां', 'यवान् भृष्टानुशीराणि' इति व्युत्क्रमेण पठति हाराण० । ३ 'सगुड' इति पा० । ४ 'कषायं मधुसंयुतम्' इति हाराण० । ५ 'कालेऽवचारितम्' इति हा० ।

नागरं धान्यकं भार्गीमभयां सुरदारु च ॥
वचां पर्पटकं मुस्तं भूतीकमथ कट्फलम् ॥ १९३ ॥
निष्काथ्य कफवातोत्थे क्षौद्रहिङ्गुसमन्वितम् ॥
[1]दा(पा)तव्यं श्वासकासघ्नं श्लेष्मोत्सेके गलग्रहे ॥ १९४ ॥
हिक्कासु कण्ठश्वयथौ शूले हृदयपार्श्वजे ॥
बलापटोलत्रिफलायष्ट्याह्वानां वृषस्य च ॥ १९५ ॥
क्काथो मधुयुतः पीतो हन्ति पित्तकफज्वरम् ॥
कटुकाविजयाद्राक्षामुस्तपर्पटकैः कृतः ॥ १९६ ॥
कषायो नाशयेत् पीतः श्लेष्मपित्तभवं ज्वरम् ॥
भार्गीवचापर्पटकधान्यहिङ्ग्वभयाघनैः ॥ १९७ ॥
काश्मर्यनागरैः क्काथः सक्षौद्रः श्लेष्मपित्तजे ॥
सशर्करामक्षमात्रां कटुकामुष्णवारिणा ॥ १९८ ॥
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥
किराततिक्तममृतां द्राक्षामामलकं शटीम् ॥ १९९ ॥
निष्काथ्य वातपित्तोत्थे तं क्काथं सगुडं पिबेत् ॥
[2]रास्ना वृषोऽथ त्रिफला राजवृक्षफलैः सह ॥ २०० ॥
कषायः साधितः पीतो वातपित्तज्वरं जयेत् ॥
सर्वदोषसमुत्थे तु संसृष्टानवचारयेत् ॥ २०१ ॥
यथादोषोच्छ्रयं चापि ज्वरान् सर्वानुपाचरेत् ॥
[3]वृश्चीवबिल्ववर्षाभ्वः पयश्चोदकमेव च ॥ २०२ ॥
पचेत् क्षीरावशिष्टं तु तद्धि सर्वज्वरापहम् ॥
उदकांशास्त्रयः क्षीरं [4]शिंशपासारसंयुतम् ॥ २०३ ॥
तत् क्षीरशेषं क्कथितं पेयं सर्वज्वरापहम् ॥
नलवेतसयोर्मूले मूर्वायां देवदारुणि ॥ २०४ ॥

---

१ 'पातव्य' इति हाराण० । २ 'रास्नावृषोत्थस्त्रिफला°' इति हाराण० । ३ '°वृश्चीरबिल्व°' [वृश्चीरो नामौषधि 'लताविछाति' इति परिचीयते ] इति हाराण०।[वृश्चीव:=श्वेतपुनर्नवा इति डह्लणः] ४ 'शिशपासारमेव च' इति पा०।

[1]कषायं विधिवत् कृत्वा पेयमेतज्ज्वरापहम् ॥
हरिद्रा भद्रमुस्तं च त्रिफला कटुरोहिणी ॥ २०५ ॥
पिचुमन्दः पटोली च देवदारु निदिग्धिका ॥
एषां कषायः पीतस्तु सन्निपातज्वरं जयेत् ॥ २०६ ॥
अविपक्तिं प्रसेकं च शोफं कासमरोचकम् ॥
त्रैफलो वा ससर्पिष्कः क्काथः पेयस्त्रिदोषजे ॥ २०७ ॥
अनन्तां बालकं मुस्तां नागरं कटुरोहिणीम् ॥
सुखाम्बुना प्रागुदयात्पाययेताक्षसंमितम् ॥ २०८ ॥
एष सर्वज्वरान् हन्ति दीपयत्याशु चानलम् ॥
द्रव्याणि दीपनीयानि तथा वैरेचनानि च ॥ २०९ ॥
एकशो वा द्विशो वाऽपि ज्वरघ्नानि प्रयोजयेत् ॥
सर्पिर्मध्वभयातैललेहोऽयं सर्वजं ज्वरम् ॥ २१० ॥
शान्तिं नयेत्त्रिवृच्चापि सक्षौद्रा प्रबलं ज्वरम् ॥
ज्वरे तु विषमे कार्यमूर्ध्वं चाधश्च शोधनम् ॥ २११ ॥
घृतं प्लीहोदरोक्तं वा निहन्याद्विषमज्वरम् ॥
गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ॥ २१२ ॥
गुडूचीनिम्बधात्रीणां कषायं वा समाक्षिकम् ॥
प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयेत् ॥ २१३ ॥
त्रिचतुर्भिः [2]पिबेत् क्काथ पञ्चभिर्वा समन्वितैः ॥
मधुकस्य पटोलस्य रोहिण्या मुस्तकस्य च ॥ २१४ ॥
हरीत[3]क्याश्च सर्वोऽयं त्रिविधो योग इष्यते ॥
सर्पिःक्षीरसिताक्षौद्रमागधीर्वा यथाबलम् ॥ २१५ ॥
दशमूलीकषायेण मागधीर्वा प्रयोजयेत् ॥
पिप्पलीवर्धमानं वा पिबेत् क्षीररसाशनः ॥ २१६ ॥

---

१ एन २०५ श्लोकमारभ्य 'कासमरोचकम्' इति यावत् सार्धश्लोकद्वय **हाराणचन्द्रो** न पठति । २ 'पचेत्' इति **हाराण०** । ३ 'हरीतक्याश्च कर्बोऽय' [ कर्बति गर्वतीति कर्ब., स्वगुणगौरवादन्येपा विषमज्वरभेषजानामवशाकारकः ] इति **हाराण०** ।

ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ॥
कोलाग्निमन्थत्रिफलाक्काथे दध्ना घृत पचेत् ॥ २१७ ॥
तिल्वकावापमेतद्धि विषमज्वरनाशनम् ॥
पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः ॥ २१८ ॥
कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः ॥
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ॥ २१९ ॥
पक्वमेतैर्घृतं पीतं विजित्य विषमाग्निताम् ॥
जीर्णज्वरशिरःशूलगुल्मोदरहलीमकान्[1] ॥ २२० ॥
क्षयकासं ससंतापं पार्श्वशूलानपास्यति ॥
गुडूचीत्रिफलावासात्रायमाणायवासकैः ॥ २२१ ॥
क्वथितैर्विधिवत्पक्वमेतैः कल्कीकृतैः समैः ॥
द्राक्षामागधिकाम्भोदनागरोत्पलचन्दनैः ॥ २२२ ॥
पीतं सर्पिः क्षयश्वासकासजीर्णज्वरान्[2] जयेत् ॥
कलशीबृहतीद्राक्षात्रायन्तीनिम्बगोक्षुरैः ॥ २२३ ॥
बलापर्पटकाम्भोदशालपर्णीयवासकैः ॥
पक्वमुत्क्वथितैः सर्पिः कल्कैरेभिः समन्वितम्[3] ॥ २२४ ॥
शटीतामलकीभार्गीमेदामलकपौष्करैः[4] ॥
क्षीरद्विगुणसंयुक्तं जीर्णज्वरमपोहति ॥ २२५ ॥
शिरःपार्श्वरुजाकासक्षयप्रशमनं परम् ॥
पटोलीपर्पटारिष्टगुडूचीत्रिफलावृषैः ॥ २२६ ॥
कटुकाम्बुदभूनिम्बयासयष्ट्याह्वचन्दनैः[5] ॥
दार्वीशक्रयवोशीरत्रायमाणाकणोत्पलैः ॥ २२७ ॥

---

१ '°हलीमकम्' इति हाराण०। २ 'कासाजीर्ण°' इति हाराण०।
३ 'समन्वितैः' इति हाराण०। ४ '°मेदाकतकपौष्करैः' इति हाराण०।
५ '°यासषष्ट्याह्वचन्दनैः' इति हाराण०।

धात्रीभृङ्गरजोभीरुकाकमाचीरसैर्घृतम् ॥
सिद्धमाश्वपचीकुष्ठज्वरशुक्रार्जुनव्रणान् ॥ २२८ ॥
हन्यान्नयनव[1]दनश्रवणघ्राणजान् गदान् ॥
विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ॥ २२९ ॥
प्रियङ्ग्वेलैलवालूकचन्दनामरदारुभिः ॥
बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयैः ॥ २३० ॥
हरेणुकात्रिवृद्दन्तीवचातालीशकेसरैः ॥
द्विक्षीरं विपचेत्सर्पिर्मालतीकुसुमैः सह ॥ २३१ ॥
[2]जीर्णज्वरश्वासकासगुल्मोन्मादगरापहम् ॥
एतत्कल्याणकं नाम सर्पिर्माङ्गल्यमुत्तमम् ॥ २३२ ॥
अलक्ष्मीग्रहरक्षोऽग्निमान्द्यापस्मारपापनुत् ॥
शस्यते नष्टशुक्राणां वन्ध्यानां गर्भदं परम् ॥ २३३ ॥
मेध्यं चक्षुष्यमायुष्यं [3]रेतोमार्गविशोधनम् ॥
एतैरेव तथा द्रव्यैः सर्वगन्धैश्च साधितम् ॥ २३४ ॥
कपिलाया घृतप्रस्थं सुवर्णमणिसंयुतम् ॥
तत्क्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमैः ॥ २३५ ॥
सुमनश्चम्पकाशोकशिरीषकुसुमैर्वृ[4]तम् ॥
तथा नलदपद्मानां केशरैर्दाडिमस्य च ॥ २३६ ॥
तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च ॥
कृतं मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितम् ॥ २३७ ॥
दत्तं सर्वज्वरान् हन्ति महाकल्याणकं त्वि[5]दम् ॥ २३८ ॥
दर्शनस्पर्शनाभ्यां [6]च सर्वरोगहरं शिवम् ॥
अधृष्यः सर्वभूतानां वलीपलितवर्जितः ॥ २३९ ॥

---

१ "°वदनकर्णजान् घ्राणजान् गदान्' इति हाराण० । २ 'विषमज्वरकश्वास°' इति हाराण० । ३ 'रेतोमार्गरुजापहम् । एतैरेव यथा°' इति हाराण० । ४ 'कुसुमैर्घृतम्' इति हाराण० । ५ 'घृतम्' इति हाराण० । ६ 'तु' इति हाराण० ।

अस्याभ्यासाद्धृतस्येह जीवेद्वर्षशतत्रयम् ॥
गव्यं दधि च मूत्रं च क्षीरं सर्पिः शकृद्रसः ॥ २४० ॥
समभागानि पाच्यानि कल्कांश्चैतान् समावपेत् ॥
त्रिफलां चित्रकं मुस्तं [1]हरिद्राऽतिविषे वचाम् ॥ २४१ ॥
विडङ्गं त्र्यूषणं चव्यं सुरदारु तथैव च ॥
पञ्चगव्यमिदं पानाद्विषमज्वरनाशनम् ॥ २४२ ॥
पञ्चगव्यमृते गर्भात्पाच्यमन्यद् वृषेण च ॥
बलयाऽथ परं पाच्यं गुडूच्या तद्वदेव तु ॥ २४३ ॥
जीर्णज्वरे च शोफे च पाण्डुरोगे च पूजितम् ॥
एतेनैव तु कल्पेन घृतं पञ्चाविकं पचेत् ॥
पञ्चाजं पञ्चमहिषं चतुरुष्ट्र[2]मथापि च ॥ २४४ ॥
त्रिफलोशीरशम्पाककटुकातिवि[3]षाघनैः ॥
शतावरीसप्तपर्णगुडूचीरजनीद्वयैः ॥ २४५ ॥
चित्रकत्रिवृतामूर्वापटोलारिष्टवालकैः ॥
किराततिक्तकवचाविशालापद्मकोत्पलैः ॥ २४६ ॥
सारिवाद्वययष्ट्याह्वचविकारक्तचन्दनैः ॥
दुरालभापर्पटकत्रायमाणाटरूषकैः ॥ २४७ ॥
रास्नाकुङ्कुममञ्जिष्ठामागधीनागरैस्तथा ॥
धात्रीफलरसैः सम्यग्द्विगुणैः साधितं हविः ॥ २४८ ॥
परिसर्पज्वरश्वासगुल्मकुष्ठनिवारणम् ॥
[4]पाण्डुप्लीहाग्निसादिभ्य एतदेव परं हितम् ॥ २४९ ॥
पटोलकटुकादार्वीनिम्बवासाफलत्रिकम् ॥
दुरालभापर्पटकत्रायमाणाः पलोन्मिताः ॥ २५० ॥

---

१ 'हरिद्रे द्वे विषा वचाम्' इति हाराण० । २ '°मथापि वा' इति हाराण० । ३ '°विषान्वितैः' इति हाराण० । ४ 'पाण्डुप्लीहाग्निमान्द्येभ्यः' इति हाराण० ।

प्रस्थमामलकानां च क्वाथयेत्सलिलार्मणे ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २५१ ॥
कल्कैः कुटजभूनिम्बघनयष्ट्याह्वचन्दनैः ॥
[1]सपिप्पलीकैस्तत्सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥ २५२ ॥
घ्राणकर्णाक्षिवदनवर्त्मरोगव्रणापहम् ॥
रक्तपित्तकफस्वेदक्लेद[2]पूयोपशोषणम् ॥ २५३ ॥
कामलाज्वरवीसर्पगण्डमालाहरं परम् ॥
शृतं पयः शर्करा च पिप्पल्यो मधुसर्पिषी ॥ २५४ ॥
पञ्चसारमिदं पेयं मथितं विषमज्वरे ॥
क्षतक्षीणे क्षये श्वासे हृद्रोगे चैतदिष्यते ॥ २५५ ॥
लाक्षाविश्वानिशामूर्वामञ्जिष्ठास्वर्जिकामयैः ॥
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥ २५६ ॥
क्षीरिवृक्षासनारिष्टजम्बूसप्तच्छदार्जुनैः ॥
शिरीष[3]खदिरास्फोटामृतवल्ल्याटरूषकैः ॥ २५७ ॥
कटुकापर्पटोशीरवचातेजोवतीघनैः ॥
साधितं तैलमभ्यङ्गादाशु जीर्णज्वरापहम् ॥ २५८ ॥
निर्विषैर्भुजगैर्नागैर्विनीतैः कृततस्करैः ॥
त्रासयेदागमे चैनं तदहर्भोजयेन्न च ॥ २५९ ॥
अत्यभिष्यन्दिगुरुभिर्वामयेद्वा पुनः पुनः ॥
मद्यं तीक्ष्णं पाययेत घृतं वा ज्वरनाशनम् ॥ २६० ॥
पुराणं वा घृतं काममुदारं वा विरेचनम् ॥
निरूहयेद्वा मतिमान् सुस्विन्नं तदहर्नरम् ॥ २६१ ॥

---

१ 'सपिप्पलीकै°', 'घ्राणकर्णाक्षिवदन°' इति श्लोकार्धे हाराणचन्द्रो न पठति । २ '°पूयाङ्गशोषणम्' इति हाराण० । ३ '°खदिरास्फोता°' इति हाराण० ।

अजाव्योश्चर्मरोमाणि वचा कुष्ठं पलङ्कषा ॥
निम्बपत्रं मधुयुतं धूपनं तस्य दापयेत् ॥ २६२ ॥
बैडालं वा शकृद्योज्यं वेपमानस्य धूपनम् ॥
पिप्पली सैन्धवं तैलं नेपाली चेक्षणाञ्जनम् ॥ २६३ ॥
उदरोक्तानि सर्पींषि यान्युक्तानि पुरा मया ॥
कल्पोक्तं चाजितं सर्पिः सेव्यमानं ज्वरं जयेत् ॥ २६४ ॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनपूजनैः ॥[1]
जयेद्भूताभिषङ्गोत्थं विज्ञानाद्यैश्च मानसम् ॥ २६५ ॥
[2]श्रमक्षयोत्थे भुञ्जीत घृताभ्यक्तो रसौदनम् ॥
अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् ॥ २६६ ॥
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडितम्[3] ॥
अभिघातज्वरे कुर्यात् क्रियामुष्णविवर्जिताम् ॥ २६७ ॥
कषायमधुरां स्निग्धां यथादोषमथापि वा ॥
ओषधीगन्धविषजौ विषपित्तप्रसाधनैः[4] ॥ २६८ ॥
जयेत् कषायं च हितं सर्वगन्धकृतं तथा ॥
निम्बदारुकषायं वा हितं सौमनसं यथा[5] ॥ २६९ ॥
यवान्नविकृतिः सर्पिर्मद्यं च विषमे हितम् ॥
संपूजयेद्द्विजान् गाश्च देवमीशानमम्बिकाम् ॥ २७० ॥
कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितम् ॥
दिह्यादुष्णेन वर्गेण परश्चोष्णो विधिर्हितः ॥ २७१ ॥
सिञ्चेत् कोष्णैरारनालशुक्तगोमूत्रमस्तुभिः ॥
दिह्यात् पलाशैः[6] पिष्टैर्वा सुरसार्जकशिग्रुजैः ॥ २७२ ॥

---

१ '°वेशनताडनैः' इति हाराण०। २ 'श्रमक्षये च भुञ्जीत' इति हाराण०। ३ '°ग्रहपीडजौ' इति हाराण०। ४ 'विषपित्तप्रसादनैः' इति हाराण०। ५ 'तथा' इति हाराण०। ६ 'पलाशैरथवा सुरसा°' इति हाराण०।

[१]क्षारतैलेन वाऽभ्यङ्गः सशुक्तेन विधीयते ॥
पानमारग्वधादेश्च कथितस्य विशेषतः ॥ २७३ ॥
अवगाहः सुखोष्णश्च [२]वातघ्नक्वाथयोजितः ॥
जित्वा शीत क्रमैरेभिः सुखोष्णजलसेचितम् ॥ २७४ ॥
[३]प्रवेश्यौर्णिककार्पासकौशेयाम्बरसंवृतम् ॥
शाययेत् [४]क्षामदेहं च कालागुरुविभूषितम् ॥ २७५ ॥
स्तनाढ्या रूपसंपन्नाः कुशला नवयौवनाः ॥
भजेयुः प्रमदा गात्रैः [५]शीतदैन्यापहाः शुभाः ॥ २७६ ॥
शरच्छशाङ्कवदना नीलोत्[६]पलविलोचनाः ॥
स्फुरितभ्रूलताभङ्गललाटतटकम्पनाः ॥ २७७ ॥
प्रलम्बबिम्बप्रचलद्बिम्बीफलनिभाध[७]राः ॥
कृशोदर्योऽतिविस्तीर्णजघनोद्वहनालसाः ॥ २७८ ॥
कुङ्कुमागुरुदिग्धाङ्ग्यो घनतुङ्गपयोधराः ॥
सुगन्धिधूपितश्लक्ष्णस्रस्तांशुकविभूषणाः ॥ २७९ ॥
गाढमालिङ्गयेयुस्तं [८]तरुं वनलता इव ॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः ॥ २८० ॥
[९]तासामङ्गपरिष्वङ्गनिवारितहिमज्वरम् ॥
भोजयेद्धितमन्नं च यथा सुखमवाप्नुयात् ॥ २८१ ॥
दाहाभिभूते तु विधिं कुर्याद्दाहविनाशनम् ॥
मधुफाणितयुक्तेन निम्बपत्राम्भसाऽपि वा ॥ २८२ ॥
दाहज्वरार्तं मतिमान् वामयेत् क्षिप्रमेव च ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः ॥ २८३ ॥

---

१ 'क्षारतैलेन चाभ्यङ्गः' इति हाराण०। २ 'वातघ्नक्वाथसयुतः' इति हाराण०। ३ 'प्रवेण्यौर्णिक°' इति हाराण०। ४ 'ग्लानदेह च' इति हाराण०। ५ 'शीतदैन्यापहारिभिः' इति हाराण०। ६ '°त्पलदलेक्षणाः' इति हाराण०। ७ 'प्रलम्बिविलसत्काञ्च्यो बिम्बीफलनिभाधराः' इति हाराण०। ८ 'नर वनलता इव' इति हाराण०। ९ '°मङ्गवरश्लेष°' इति हाराण०।

कोलामलकसंयुक्तैः शुक्तधान्याम्लसंयुतैः ॥
अम्लपिष्टैः सुशीतैश्च फेनिलापल्लवैस्तथा ॥ २८४ ॥
अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् ॥
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य च ॥ २८५ ॥
लिप्तेऽङ्गे दाहतृण्मूर्च्छाः प्रशाम्यन्ति च सर्वशः ॥
यवार्धकुडवं पिष्ट्वा मञ्जिष्ठार्धपलं तथा ॥ २८६ ॥
अम्लप्रस्थशतोन्मिश्रं तैलप्रस्थं विपाचयेत् ॥
एतत् प्रह्लादनं तैलं ज्वरदाहविनाशनम् ॥ २८७ ॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यो गणः ॥
उत्पलादिर्गणो यस्तु पिष्टैर्वा तैः प्रलेपयेत् ॥ २८८ ॥
तत्कषायाम्लसंसिद्धाः स्नेहाश्चाभ्यञ्जने हिताः ॥
तेषां शीतकषाये वा दाहार्तमवगाहयेत् ॥ २८९ ॥
दाहवेगे त्वतिक्रान्ते तस्मादुद्धृत्य मानवम् ॥
परिषिच्याम्बुभिः शीतैः प्रलिम्पेच्चन्दनादिभिः ॥ २९० ॥
ग्लानं वा दीनमनसमाश्लिषेयुर्वराङ्गनाः ॥
पेलवक्षौमसंवीताश्चन्दनार्द्रपयोधराः ॥ २९१ ॥
बिभ्रत्योऽब्जस्रजश्चित्रा मणिरत्नविभूषिताः ॥
भजेयुस्ताः स्तनैः शीतैः स्पृशन्त्योऽम्बुरुहैः सुखैः ॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः ॥
हितं च भोजयेदन्नं तथाऽऽप्नोति सुखं महत् ॥ २९३ ॥
पित्तज्वरोक्तं शमनं विरेकोऽन्यद्धितं च यत् ॥
निर्हरेत्पित्तमेवादौ दोषेषु समवायिषु ॥ २९४ ॥

१ 'शूकधान्या°' इति हाराण०। २ 'अम्लपिष्टैस्तु शीतैर्वा' इति हाराण०। ३ 'मूर्च्छा सर्वथैव प्रशाम्यति' इति हाराण०। ४ 'सानन्दा दीनमनसमाश्लि०' इति हाराण०। ५ 'मणिहारविभूषिताः' इति हाराण०। ६ 'प्रह्लादा चास्य' इति हाराण०। ७ 'विरेकस्तद्धित' इति पा०। ८ 'ज्वरेषु समवायिषु' इति हाराण०।

दुर्निवारतरं तद्धि [1]ज्वरार्तानां विशेषतः ॥
छर्दिमूर्च्छापिपासादीनविरोधाज्ज्वरस्य च[2] ॥ २९५ ॥
उपद्रवाञ्जयेच्चापि प्रत्यनीकेन हेतुना ॥
विशेषमपरं चात्र शृणूपद्रवनाशनम् ॥ २९६ ॥
मधुकं रजनी मुस्तं दाडिमं [3]साम्लवेतसम् ॥
अञ्जनं तिन्तिडीकं च नलदं पत्रमुत्पलम् ॥ २९७ ॥
त्वचं व्याघ्रनखं चैव मातुलुङ्गरसो मधु ॥
दिह्यादेभिर्ज्वरार्तस्य मधुशुक्तयुतैः शिरः ॥ २९८ ॥
शिरोभितापसंमोहवमिहिक्काप्रवेपथून् ॥
प्रदेहो नाशयत्येष ज्वरितानामुपद्रवान् ॥ २९९ ॥
मधूकमथ ह्रीबेरमुत्पलानि मधूलिकाम् ॥ ३०० ॥
लीढ्वा चूर्णानि मधुना सर्पिषा च जयेद्वमिम् ॥
कफप्रसेकासृक्पित्तहिक्काश्वासांश्च दारुणान् ॥ ३०१ ॥
लिहन् ज्वरार्तस्त्रिफलां पिप्पलीं च समाक्षिकाम् ॥
कासे श्वासे च मधुना सर्पिषा च सुखी भवेत् ॥ ३०२ ॥
विदारी दाडिमं लोध्रं दधित्थं बीजपूरकम् ॥
एभिः प्रदिह्यान्मूर्धानं तृड्दाहार्तस्य देहिनः ॥ ३०३ ॥
दाडिमस्य सितायाश्च द्राक्षामलकयोस्तथा ॥
वैरस्ये धारयेत् कल्कं गण्डूषं च यथाहितम् ॥ ३०४ ॥
क्षीरेक्षु[4]रसमाक्षीकसर्पिस्तैलोष्णवारिभिः ॥
शून्ये मूर्ध्नि हितं नस्यं जीवनीयशृतं घृतम् ॥ ३०५ ॥
[5]चूर्णितैस्त्रिफलाश्यामात्रिवृत्पिप्पलिसंयुतैः ॥
सक्षौद्रः शर्करायुक्तो विरेकस्तु प्रशस्यते ॥ ३०६ ॥

---

१ 'ज्वरार्तेषु विशेषतः' इति हाराण० ।　२ 'तु' इति हाराण० ।
३ 'चाम्लवेतसम्' इति हाराण० ।　४ '°रसमाध्वीक°' इति हाराण० ।
५ 'चूर्णितत्रिफलाश्यामा......सयुतः' इति हाराण० ।

पक्के पित्तज्वरे रक्ते चोर्ध्वगे वेपथौ तथा ॥
कफवातोत्थयोरेवं स्नेहाभ्यङ्गैर्विशोधयेत् ॥ ३०७ ॥
हृतदोषो भ्रमार्तस्तु लिह्यात् क्षौद्रसिताभयाः ॥
वातघ्नमधुरैर्योज्या निरूहा वातजे ज्वरे ॥ ३०८ ॥
अवेक्ष्य[1] दोषं प्राणं च यथास्वं चानुवासनाः[2] ॥
उत्पलादिकषायाद्या(ढ्या)श्चन्दनोशीरसंयुताः ॥ ३०९ ॥
शर्करामधुराः शीताः पित्तज्वरहरा मताः ॥
आम्रादीनां त्वचं शङ्खं चन्दनं मधुकोत्पले[3] ॥ ३१० ॥
गैरिकाञ्जनमञ्जिष्ठामृणालान्यथ पद्मकम् ॥
श्लक्ष्णपिष्टं तु पयसा शर्करामधुसंयुतम् ॥ ३११ ॥
सुपूतं शीतलं बस्तिं दह्यमानाय[4] दापयेत् ॥
ज्वरदाहापहं तेषु सिद्धं चैवानुवासनम् ॥ ३१२ ॥
आरग्वधगणक्काथाः पिप्पल्यादिसमायुताः ॥
सक्षौद्रमूत्रा[5] देयाः स्युः कफज्वरविनाशनाः ॥ ३१३ ॥
कफघ्नैरेव संसिद्धा द्रव्यैश्चाप्यनुवासनाः ॥
संसर्गे सन्निपाते च संसृष्टा बस्तयो हिताः ॥ ३१४ ॥
संसृष्टैरेव संसृष्टा द्रव्यैश्चाप्यनुवासनाः ॥
वातरोगापहाः सर्वे स्नेहा ये सम्यगीरिताः ॥ ३१५ ॥
विना तैलं त एव स्युर्योज्या मारुतजे ज्वरे ॥
निखिलेनोपयोज्याश्च त एवाभ्यञ्जनादिषु ॥ ३१६ ॥
पैत्तिके मधुरैस्तिक्तैः सिद्धं[6] सर्पिश्च पूज्यते ॥
श्लैष्मिके कटुतिक्तैश्च संसृष्टानीतरेषु च ॥ ३१७ ॥
हृतावशेषं पित्तं तु त्वक्स्थं जनयति ज्वरम् ॥
पिबेदिक्षुरसं तत्र शीतं वा शर्करोदकम् ॥ ३१८ ॥

---

१ 'विभज्य' इति पा०। २ 'वानुवासनम्' इति हाराण०। ३ 'चन्दनामलकोत्पलैः' इति हाराण०। ४ 'दूयमानाय' इति हाराण०। ५ 'सक्षौद्रा एव देयाः' इति हाराण०। ६ 'सिद्धं सर्पिः प्रयुज्यते' इति हाराण०।

शालिषष्टिकयोरन्नमश्नीयात् क्षीरसंप्लुतम् ॥
कफवातोत्थयोरेव स्वेदाभ्यङ्गौ प्रयोजयेत् ॥ ३१९ ॥
घृतं द्वादशरात्रात्तु देयं सर्वज्वरेषु च ॥
तेनान्तरेणाशयं स्वं गता दोषा भवन्ति हि ॥ ३२० ॥
धातून् प्रक्षोभयन् दोषो मोक्षकाले बलीयते[1] ॥
तेन व्याकुलचित्तस्तु म्रियमाण इवेहते ॥ ३२१ ॥
लघुत्वं शिरसः स्वेदो मुखमापाण्डु पाकि च ॥
क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणम् ॥ ३२२ ॥
शम्भुक्रोधोद्भवो घोरो बलवर्णाग्निसादकः ॥
रोगराट् रोगसंघातो ज्वर इत्युपदिश्यते ॥ ३२३ ॥
व्यापित्वात् सर्वसंस्पर्शात् कृच्छ्रत्वादन्तसंभवात् ॥
अन्तको ह्येष भूतानां ज्वर इत्युपदिश्यते ॥ ३२४ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[2] कायचिकित्सातन्त्रे ज्वरप्रतिषेधो नाम (प्रथमोऽध्यायः, आदितः) एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः ।

अथातोऽतीसारप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ॥
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥ ३ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात् ॥
शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्तुपर्ययात् ॥ ४ ॥

---

१ "°कालेऽवलीयते' [अवलीयते लीनो भवति, विनश्यति] इति हाराण० ।
२ "°तन्त्रे ज्वरप्रति°" इति हाराण० ।

जलातिरमणैर्वेगविघातैः कृमिदोषतः ॥
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ५ ॥
संशम्यापांधातुरन्तः कृशानुं वर्चोमिश्रो मारुतेन प्रणुन्नः ॥
वृद्धोऽतीवाधः सरत्येष यस्माद्व्याधिं घोरं तं त्वतीसारमाहुः ॥ ६ ॥
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः ॥
केचित् प्राहुर्नैकरूपप्रकारं नैवेत्येवं काशिराजस्त्ववोचत् ॥ ७ ॥
दोषावस्थास्तस्य नैकप्रकाराः काले काले व्याधितस्योद्भवन्ति ॥
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः ॥ ८ ॥
विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥
शूलाविष्टः सक्तमूत्रोऽन्त्रकूजी स्रस्तापानः सन्नकट्यूरुजङ्घः ॥ ९ ॥
वर्चो मुञ्चत्यल्पमल्पं सफेनं रूक्षं श्यावं सानिलं मारुतेन ॥
दुर्गन्ध्युष्णं वेगवन्मांसतोयप्रख्यं भिन्नं स्विन्नदेहोऽतितीक्ष्णम् ॥ १० ॥
पित्तात् पीतं नीलमालोहितं वा तृष्णामूर्च्छादाहपाकज्वरार्तः ॥
तन्द्रानिद्रागौरवोत्क्लेशसादी वेगाशङ्की सृष्टविट्कोऽपि भूयः ॥ ११ ॥
शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं भक्तद्वेषी निःस्वनं हृष्टरोमा ॥
तन्द्रायुक्तो मोहसादास्यशोषी वर्चः कुर्यान्नैकवर्णं तृषार्तः ॥ १२ ॥
सर्वोद्भूते सर्वलिङ्गोपपत्तिः कृच्छ्रश्चायं बालवृद्धेष्वसाध्यः ॥
तैस्तैर्भावैः शोचतोऽल्पाशनस्य बाष्पावेगः पक्तिमाविध्य(श्य)जन्तोः
कोष्ठं गत्वा क्षोभयत्यस्य रक्तं तच्चाधस्तात् काकणन्तीप्रकाशम् ॥
वर्चोमिश्रं निःपुरीषं सगन्धं निर्गन्धं वा सार्यते तेन कृच्छ्रात् ॥ १४ ॥
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥
आमाजीर्णोपद्रुताः क्षोभयन्तः कोष्ठं दोषाः संप्रदुष्टाः सभक्तम् ॥ १५ ॥

१ 'जलाभिरमणैः' इति हाराण० । २ 'सरत्येव' इति हाराण० । ३ 'मोहमादास्यशोषी' [मादो=मदः] इति हाराण० । ४ 'बाष्पो वेगः पक्तिमाविध्य जन्तोः' इति हाराण० । ५ 'क्षोभयेद् यस्य' इति हाराण० । ६ 'कोष्ठात्' इति हाराण० । ७ 'अन्नाजीर्णैः प्रद्रुताः' इति हाराण० ।

नानावर्णं नैकशः सारयन्ति कृच्छ्राज्जन्तोः षष्ठमेनं वदन्ति ॥ १६ ॥

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ॥
पुरीषं [1]भृशदुर्गन्धि विच्छिन्नं [2]चामसंज्ञकम् ॥ १७ ॥

एतान्येव तु लिङ्गानि विपरीतानि यस्य तु ॥
लाघवं च मनुष्यस्य तस्य पक्वं विनिर्दिशेत् ॥ १८ ॥

सर्पिर्मेदोवेसवाराम्बुतैल[3]मज्जाक्षीरक्षौद्ररूपं स्रवेद्यत् ॥
मञ्जिष्ठाभं मस्तुलुङ्गोपमं वा विस्रं शीतं प्रेतगन्ध्यञ्जनाभम् ॥१९॥

राजीमद्वा चन्द्रकैः सन्ततं वा पूयप्रख्यं कर्दमाभं तथोष्णम् ॥
[4]हन्यादेतद्यत् प्रतीपं भवेच्च क्षीणं हन्युश्चोपसर्गाः प्रभूताः ॥ २० ॥

असंवृतगुदं क्षीणं दुराध्मातमुपद्रुतम् ॥
गुदे पक्वे गतोष्माणमतीसारकिणं त्यजेत् ॥ २१ ॥

शरीरिणामतीसारः संभूतो येन केनचित् ॥
दोषाणामेव लिङ्गानि कदाचिन्नातिवर्तते ॥ २२ ॥

स्नेहाजीर्णनिमित्तस्तु बहुशूलप्रवाहिकः ॥
विसूचिकानिमित्तस्तु चान्योऽजीर्णनिमित्तजः ॥
विषार्शःकृमिसंभूतो यथास्वं दोषलक्षणः ॥ २३ ॥

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ॥
अतः सर्वेऽतिसारास्तु ज्ञेयाः पक्वामलक्षणैः ॥ २४ ॥

[5]तत्रादौ लङ्घनं कार्यमतिसारेषु देहिनाम् ॥
ततः पाचनसंयुक्तो यवाग्वादिक्रमो हितः ॥ २५ ॥

---

१ 'भृशदुर्गन्ध' इति हाराण० । २ 'चामसंस्कृतम्' इति पा० । 'चामसशितम्' इति हाराण० । ३ '°मज्जक्षीर' इति हाराण० । ४ 'हन्यादेनयत्' इति हाराण० । ५ 'आदौ तु लङ्घन कार्यं' इति पा० । 'तत्र लङ्घनमेवादौ पूर्वरूपेषु देहिनाम्' इति हाराण० ।

अथवा वामयित्वाऽऽमे[1] शूलाध्माननिपीडितम् ॥
पिप्पलीसैन्धवाम्भोभिर्लङ्घनाद्यैरुपाचरेत् ॥ २६ ॥
कार्यं च वमनस्यान्ते प्रद्रवं[2] लघुभोजनम् ॥
खडयूषयवागूषु पिप्पल्याद्यं[3] च योजयेत् ॥ २७ ॥
अनेन विधिना चामं यस्य वै नोपशाम्यति ॥
हरिद्रादिं वचादिं वा पिबेत् प्रातः स मानवः ॥ २८ ॥
आमातीसारिणां कार्यं नादौ संग्रहणं नृणाम् ॥
तेषां दोषा विबद्धाः प्रागजनयन्त्यामयानिमान् ॥ २९ ॥
प्लीहपाण्ड्वामयानाहमेहकुष्ठोदरज्वरान् ॥
शोफगुल्मग्रहण्यर्शःशूलालसकहृद्ग्रहान् ॥ ३० ॥
सशूलं बहुशः कृच्छ्राद्विबद्धं[4] योऽतिसार्यते ॥
दोषान् सन्निचितान् तस्य[5] पथ्याभिः संप्रवर्तयेत् ॥ ३१ ॥
योऽतिद्रवं प्रभूतं च पुरीषमतिसार्यते ॥
तस्यादौ वमनं कुर्यात् पश्चाल्लङ्घनपाचनम् ॥ ३२ ॥
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते ॥
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ ३३ ॥
आमे च लङ्घनं शस्तमादौ पाचनमेव वा ॥
योगाश्चात्र प्रवक्ष्यन्ते त्वामातीसारनाशनाः ॥ ३४ ॥
[6]कलिङ्गातिविषाहिङ्गुसौवर्चलवचाभयाः ॥
देवदारुवचामुस्तानागरातिविषाभयाः ॥ ३५ ॥

---

१ 'वामयित्वा तु शूला°' इति हाराण०। २ 'प्रायशो लघु°' इति हाराण०। ३ 'पिप्पल्याद्येव योजयेत्' इति हाराण०। ४ 'कृच्छ्राद्विबन्धं' इति हाराण०। ५ 'वाथ पथ्याभिः' इति हाराण०। ६ 'कलिङ्गातिविषा°' 'देवदारु°' इति श्लोकार्धे व्युत्क्रमेण पठ्येते हाराणचन्द्रेण।

अभया[1] धान्यकं मुस्तं पिप्पली नागरं वचा ॥
नागरं धान्यकं मुस्तं वालकं बिल्वमेव च ॥ ३६ ॥
मुस्तं पर्पटकं शुण्ठी वचा[2] प्रतिविषाऽभया ॥
अभयाऽतिविषा हिङ्गु वचा सौवर्चलं तथा ॥ ३७ ॥
चित्रकः पिप्पलीमूलं वचा कटुकरोहिणी ॥
पाठा वत्सकबीजानि हरीतक्यो[3] महौषधम् ॥ ३८ ॥
मूर्वा निर्दहनी पाठा त्र्यूषणं गजपिप्पली ॥
सिद्धार्थका भद्रदारु शताह्वा कटुरोहिणी ॥ ३९ ॥
एला सावरकं कुष्ठं हरिद्रे कौटजा यवाः ॥
मेषशृङ्गी त्वगेले च कृमिघ्नं वृक्षकाणि च ॥ ४० ॥
वृक्षादनी वीरतरुर्बृहत्यौ द्वे सहे तथा ॥
अरलुत्वक्[4] तैन्दुकी च दाडिमी कौटजी शमी ॥ ४१ ॥
पाठा तेजोवती मुस्तं पिप्पली कौटजं फलम् ॥
पटोलं( ली ) दीप्यको बिल्वं हरिद्रे देवदारु च ॥ ४२ ॥
विडङ्गमभया पाठा शृङ्गवेरं घनं वचा ॥
वचा वत्सकबीजानि सैन्धवं कटुरोहिणी ॥ ४३ ॥
हिङ्गुर्वत्सकबीजानि वचा बिल्वशलाटु च ॥
नागरातिविषे मुस्तं पिप्पल्यो वात्सकं फलम् ॥ ४४ ॥
महौषधं प्रतिविषा मुस्तं चेत्यामपाचनाः ॥
प्रयोज्या विंशतिर्योगाः श्लोकार्धविहितास्त्विमे ॥ ४५ ॥
धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा ॥
निष्क्राथान् वा पिबेदेषां सुखोष्णान् साधु साधितान्[5] ॥ ४६ ॥

---

१ 'अभया धान्यकं मुस्तं बालकं बिल्वमेव च । मुस्तं पर्पटकं शुण्ठी वचा सातिविषाभयाः' इति हाराण०संमतः पाठः । २ 'वचा सौवर्चलं तथा' इति हाराण० । ३ 'हरीतकी' इति हाराण० । ४ 'एरण्डत्वक्' इति हाराण० । ५ 'साम्बुसाधितान्' इति हाराण० ।

[1]पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणाम्भसि ॥
क्षीरावशिष्टं तत्पीतं हन्त्यामं शूलमेव च ॥ ४७ ॥
निखिलेनोपदिष्टोऽयं विधिरामोपशान्तये ॥
हरीतकीमतिविषां हिङ्गु सौवर्चलं वचाम् ॥ ४८ ॥
पिबेत् सुखाम्बुना जन्तुरामातीसारपीडितः ॥
पटोलं दीप्यकं बिल्वं वचापिप्पलिनागरम् ॥ ४९ ॥
मुस्तं कुष्ठं विडङ्गं च पिबेद्वाऽपि सुखाम्बुना ॥
शृङ्गवेरं गुडूचीं च पिबेदुष्णेन वारिणा ॥ ५० ॥
लवणान्यथ पिप्पल्यो विडङ्गानि हरीतकी ॥
चित्रकं शिंशपा पाठा शार्ङ्गेष्टा लवणानि च ॥ ५१ ॥
हिङ्गुवृक्षकबीजानि लवणानि च भागशः ॥
हस्तिदन्त्यथ पिप्पल्यः कल्कावक्षसमौ स्मृतौ ॥ ५२ ॥
वचा गुडूचीकाण्डानि योगोऽयं परमो मतः ॥
एते सुखाम्बुना योगा देयाः पञ्च सतां मताः ॥ ५३ ॥
निवृत्तेष्वामशूलेषु यस्य न प्रगुणोऽनिलः ॥
स्तोकं स्तोकं रुजामच्च सशूलं योऽतिसार्यते ॥ ५४ ॥
सक्षारलवणैर्युक्तं मन्दाग्निः स[2] पिबेद्घृतम् ॥
क्षीरनागरचाङ्गेरीकोलदध्यम्लसाधितम् ॥ ५५ ॥
सर्पिरच्छं पिबेद्वापि शूलातीसारशान्तये ॥
दध्ना तैल[3]घृतं पक्वं सव्योषाजातिचित्रकैः ॥ ५६ ॥
सबिल्वपिप्पलीमूलदाडिमैर्वा रुगन्वितैः ॥
निखिलो विधिरुक्तोऽयं वातश्लेष्मोपशान्तये ॥ ५७ ॥

---

१ 'पयस्युत्क्वाथ्य', 'क्षीरावशिष्ट', 'निखिलेनोप°' इति चाय सार्धश्लोकः 'पञ्च सतां मता.' इति ५३त्तमश्लोकात् पर पठति हाराण०। २ 'प्रपिबेद्घृतम्' इति हाराण०। ३ 'तैल घृत' इति हाराण०।

तीक्ष्णोष्णवर्ज्यमेनं तु विदध्यात्पित्तजे भिषक् ॥
यथोक्तमुपवासान्ते यवागूश्च प्रशस्यते ॥ ५८ ॥
बलयोरंशुमत्यां च श्वदंष्ट्राबृहतीषु च ॥
शतावर्यां च संसिद्धाः सुशीता मधुसंयुताः ॥ ५९ ॥
मुद्गादिषु च यूषाः स्युर्द्रव्यैरेतैः सुसंस्कृताः ॥[1]
मृदुभिर्दीपनैस्तिक्तैर्द्रव्यैः स्यादामपाचनम् ॥ ६० ॥
हरिद्रातिविषापाठावत्सबीजरसाञ्जनम् ॥
रसाञ्जनं हरिद्रे द्वे बीजानि कुटजस्य च ॥ ६१ ॥
पाठा गुडूची भूनिम्बस्तथैव कटुरोहिणी ॥
एतैः श्लोकार्धनिर्दिष्टैः क्वाथाः स्युः पित्तपाचनाः ॥ ६२ ॥
मुस्तं कुटजबीजानि भूनिम्बं सरसाञ्जनम् ॥
दार्वी दुरालभा बिल्वं वालकं रक्तचन्दनम् ॥ ६३ ॥
चन्दनं वालकं मुस्तं भूनिम्बं सदुरालभम् ॥
मृणालं चन्दनं रोध्रं नागरं नीलमुत्पलम् ॥ ६४ ॥
पाठा मुस्तं हरिद्रे द्वे पिप्पली कौटजं फलम् ॥
फलत्वचं वत्सकस्य शृङ्गवेरं घनं[2] वचा ॥ ६५ ॥
षडेतेऽभिहिता योगाः पित्तातीसारनाशनाः ॥
बिल्वशक्रयवाम्भोदवालकातिविषाकृतः ॥
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥ ६६ ॥
मधुकोत्पलबिल्वाब्दह्रीबेरोशीरनागरैः ॥[3]
कृतः क्वाथो मधुयुतः पित्तातीसारनाशनः ॥ ६७ ॥
यदा पक्वोऽप्यतीसारः सरत्येव मुहुर्मुहुः ॥
ग्रहण्या मार्दवाज्जन्तोस्तत्र संस्तम्भनं हितम् ॥ ६८ ॥

---

१ 'स्युर्दीपनीयैः सुसंस्कृताः' इति हाराण० । २ 'शृङ्गवेरघृते वचा' इति हाराण० । 'वचा बिडम्' इति पा० । ३ "°बिल्वाम्रह्रीबेरो°" इति हाराण० ।

समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रमुस्तकम् ॥
[१]शाल्मलीवेष्टको रोध्रं वृक्षदाडिमयोस्त्वचौ ॥ ६९ ॥
आम्रास्थिमध्यं लोध्रं च बिल्वमध्यं प्रियङ्गवः ॥
मधुकं शृङ्गवेरं च दीर्घवृन्तत्वगेव च ॥ ७० ॥
[२]चत्वार एते योगाः स्युः पक्कातीसारनाशनाः ॥
उक्ता य उपयोज्यास्ते सक्षौद्रास्तण्डुलाम्बुना ॥ ७१ ॥
मौस्तं कषायमेकं वा पेयं मधुसमायुतम् ॥
लोध्राम्बष्ठाप्रियङ्ग्वादीन् [३]गणानेवं प्रयोजयेत् ॥ ७२ ॥
पद्मां समङ्गां मधुकं बिल्वजम्बूशलाटु [४]च ॥
पिबेत्तण्डुलतोयेन सक्षौद्रमगदङ्करम् ॥ ७३ ॥
कच्छुरामूलकल्कं [५]वाऽप्युदुम्बरफलोपमम् ॥
पयस्या चन्दनं पद्मा सितामुस्ताब्जकेशरम् ॥ ७४ ॥
पक्कातिसारं योगोऽयं जयेत्पीतः सशोणितम् ॥
निरामरूपं शूलार्तं लङ्घनाद्यैश्च कर्षितम् ॥ ७५ ॥
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेद्घृतम् ॥
बलाबृहत्यंशुमतीकच्छुरामूलसाधितम् ॥ ७६ ॥
मधूक्षितं समधुकं पिबेच्छूलैरभिद्रुतः ॥
दार्वीबिल्वकणाद्राक्षाकटुकेन्द्रयवैर्घृतम् ॥ ७७ ॥
साधितं हन्त्यतीसारं वातपित्तकफात्मकम् ॥
[६]दध्ना चाम्लेन संपक्कं सव्योषाजाजिचित्रकम् ॥ ७८ ॥
सचव्यपिप्पलीमूलं दाडिमैर्वा रुगर्दितः ॥

---

१ शाल्मलीवेष्टक' इति हाराण० । २ अन्ये तु—'समङ्गाधातकीपुष्पमञ्जिष्ठारोध्रमुस्तकम् । शाल्मलीवेष्टकं वापि विदध्याद्योगमुत्तमम् ॥' इति शाल्मलीवेष्टकेनापरं पञ्चमं योगं मन्यमाना 'एते हि पञ्चयोगाः स्युः पक्कातीसारनाशनाः' इति पठन्ति । ३ 'गणान् नव प्रयोजयेत्' इति हाराण० । ४ 'वा' इति हाराण० । ५ 'वा उदुम्बर°' इति हाराण० । ६ 'दध्ना चाम्लेन', 'सचव्यपिप्पलीमूल' इति श्लोकार्धे हाराणचन्द्रो न पठति ।

पयो घृतं च मधु च पिबेच्छूलैरभिद्रुतः ॥ ७९ ॥
सिताजमोदकट्वङ्गमधुकैरवचूर्णितम् ॥
अवेदनं सुसंपक्कं दीप्ताग्नेः सुचिरोत्थितम् ॥ ८० ॥
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥
त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेसरसंयुतम् ॥ ८१ ॥
काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण[1] संदृढम् ॥
मृदाऽवलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥ ८२ ॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं ततः ॥
शीतं मधुयुतं कृत्वा पाययेतोदरामये ॥ ८३ ॥
जीवन्तीमेषशृङ्ग्यादिष्वेवं द्रव्येषु साधयेत् ॥
[2]तित्तिरिं लुञ्चितं सम्यक् निष्कुष्टान्त्रं तु पूरयेत् ॥ ८४ ॥
न्यग्रोधादित्वचां कल्कैः पूर्ववच्चावकूलयेत्[3] ॥
रसमादाय तस्याथ सुस्विन्नस्य समाक्षिकम् ॥ ८५ ॥
शर्करोपहितं शीतं पाययेतोदरामये[4] ॥
लोध्रचन्दनयष्ट्याह्वदार्वीपाठासितोत्पलान् ॥ ८६ ॥
तण्डुलोदकसंपिष्टान् दीर्घवृन्तत्वगन्वितान् ॥
पूर्ववत् कूलितात्तस्माद्रसमादाय शीतलम् ॥ ८७ ॥
मध्वाक्तं पाययेच्चैतत् कफपित्तोदरामये ॥
एवं प्ररोहैः कुर्वीत वटादीनां [5]विधानवत् ॥ ८८ ॥
पुटपाकान् यथायोगं जाङ्गलोपहितान् शुभान्[6] ॥
बहुश्लेष्म सरक्तं च मन्दवातं चिरोत्थितम् ॥ ८९ ॥

---

१ 'सूत्रेण त दृढम्' इति हाराण० । २ 'तित्तिर लुञ्चित' इति हाराण० । ३ 'पूर्ववच्चावकल्पयेत्' इति हाराण० । ४ 'पाययेच्चोदरामये' इति हाराण० । ५ 'विधानवित्' इति हाराण० । ६ अस्याग्रे—'अम्बष्ठादिमधु°', 'कौटजं फाणित चापि', 'बहुश्लेष्म°' इति क्रमेण पठति हाराण० ।

कौटजं फाणितं वा[1]ऽपि हन्त्यतीसारमोजसा ॥
अम्बष्ठादिमधुयुतं पिप्पल्यादिसमन्वितम् ॥ ९० ॥
पृश्निपर्णीबलाबिल्वबालकोत्पलधान्यकैः ॥
सनागरैः पिबेत् पेयां साधितामुदरामयी ॥ ९१ ॥
अरलुत्वक् प्रियङ्गुं च मधुकं दाडिमाङ्कुरान् ॥
आवाप्य पिष्ट्वा दधनि यवागूं साधयेद्द्रवाम् ॥ ९२ ॥
एषा सर्वानतीसारान् हन्ति पक्वानसंशयम् ॥
[2]रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा ॥ ९३ ॥
धातकी नागरं चैव पाययेत्तण्डुलाम्बुना ॥
[3]सशूलं रक्तजं घ्नन्ति एते सधुसमायुताः ॥ ९४ ॥
मधुकं बिल्[4]वपेशी च शर्करामधुसंयुता ॥
अतीसारं निहन्युश्च शालिषष्टिकयोः कणाः ॥ ९५ ॥
तद्वल्लीढं मधुयुतं बदरीमूलमेव तु ॥
बदर्यर्जुनजम्ब्वाम्रशल्लकीवेतसत्वचः ॥ ९६ ॥
शर्कराक्षौद्रसंयुक्ताः पीता घ्नन्त्युदरामयम् ॥
[5]एतैरेव यवागूंश्च षडान् यूषांश्च कारयेत् ॥ ९७ ॥
पानीयानि च तृष्णासु द्रव्येष्वेतेषु बुद्धिमान् ॥
कृतं शाल्मलिवृन्तेषु कषायं हिम[6]संज्ञितम् ॥ ९८ ॥
निशापर्युषितं पेयं सक्षौद्रं मधुकान्वितम् ॥

---

१ 'चापि' इति हाराण० । २ 'रसाञ्जन' इत्यत आरभ्य 'द्रव्येष्वेतेषु बुद्धिमान्' इति सार्धसप्तनवतितमश्लोक यावत् कार्तिकाचार्यो न पठति । ३ 'सशूलरक्तजं घ्नन्ति योगा मधुसमन्विताः' इति हाराण० । ४ 'बिल्वपेश्यश्च शर्करामधुसयुता.' इति हाराण० । ५ 'एतैरेव यवागूश्च मण्डान् यूषांश्च' इति हाराण० । ६ 'हिमसञ्ज्ञकम्' इति हाराण० ।

विबद्धवातविट् शूलपरीतः सप्रवाहिकः ॥ ९९ ॥
सरक्तपित्तश्च पयः पिबेत्तृष्णासमन्वितः ॥
यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम् ॥ १०० ॥
चिरोत्थितेषु तत् पेयमपां भागैस्त्रिभिः शृतम् ॥
दोषशेषं हरेत्तद्धि तस्मात्पथ्यतमं स्मृतम् ॥ १०१ ॥
हितः स्नेहविरेको वा बस्तयः पिच्छिलाश्च ये ॥
पिच्छिलस्वरसे सिद्धं हितं च घृतमुच्यते ॥ १०२ ॥
शकृता यस्तु संसृष्टमतिसार्येत शोणितम् ॥
प्राक् पश्चाद्वा पुरीषस्य सरुक् सपरिकर्तिकः ॥ १०३ ॥
क्षीरिशुङ्गाशृतं सर्पिः पिबेत् सक्षौद्रशर्करम् ॥
दार्वीत्वक्पिप्पलीशुण्ठीलाक्षाशक्रयवैर्घृतम् ॥ १०४ ॥
संयुक्तं भद्ररोहिण्या पक्वं पेयादिमिश्रितम् ॥
त्रिदोषमप्यतीसारं पीतं हन्ति सुदारुणम् ॥ १०५ ॥
गौरवे वमनं पथ्यं यस्य स्यात् प्रबलः कफः ॥
ज्वरे दाहे सविड्बन्धे मारुताद्रक्तपित्तवत् ॥ १०६ ॥
संपक्वे बहुदोषे च विबन्धे मूत्रशोधनैः ॥
कार्यमास्थापनं क्षिप्रं तथा चैवानुवासनम्[1] ॥ १०७ ॥
प्रवाहणे[2] गुदभ्रंशे मूत्राघाते कटिग्रहे ॥
मधुराम्लैः[3] शृतं तैलं सर्पिर्वाऽप्यनुवासनम् ॥ १०८ ॥
गुदपाकस्तु पित्तेन यस्य स्यादहिताशिनः ॥
तस्य[4] पित्तहराः सेकास्तत्सिद्धाश्चानुवासनाः ॥ १०९ ॥
दधिमण्डसुराबिल्वसिद्धं तैलं समारुते ॥
भोजने च हितं क्षीरं कच्छुरामूलसाधितम् ॥ ११० ॥

---

१ 'तथैवाप्यनुवासनम्' इति पा० । २ 'प्रवाहेण' इति हाराण० । ३ 'मधुराम्लशृतं' इति हाराण० । ४ 'तत्र पित्तहराः' इति हाराण० ।

अल्पाल्पं बहुशो रक्तं सरुग्य उपवेश्यते ॥
यदा वायुर्विबद्धश्च पिच्छाबस्तिस्तदा हितः ॥ १११ ॥
प्रायेण गुददौर्बल्यं दीर्घकालातिसारिणाम् ॥
भवेत्तस्माद्धितं तेषां गुदे तैलावचारणम् ॥ ११२ ॥
कपित्थशाल्मलीफञ्जीवटकार्पासदाडिमाः[1] ॥
यूथिका[2] कच्छुरा शेलुः शणश्चुच्चूश्च दाधिकाः ॥ ११३ ॥
शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् ॥ ११४ ॥
एष आहार[3]संयोगे हितः सर्वातिसारिणाम् ॥
तिलकल्को हितश्चात्र मौद्गो मुद्गरसस्तथा ॥ ११५ ॥
पित्तातिसारी यो मर्त्यः [4]पित्तलान्यतिषेवते ॥
पित्तं प्रदुष्टं तस्याशु रक्तातीसारमावहेत् ॥ ११६ ॥
ज्वरं शूलं तृषां दाहं गुदपाकं च दारुणम् ॥
यो रक्तं शकृतः पूर्वं पश्चाद्वा प्रतिसार्यते ॥ ११७ ॥
स पल्लवैर्वटादीनां ससर्पिः साधितं पयः ॥
पिबेत् सशर्कराक्षौद्रमथवाऽप्यभिमथ्य तत् ॥ ११८ ॥
नवनीतमथो लिह्यात्तक्रं चानुपिबेत्ततः ॥
प्रियालशाल्मलीप्लक्षशल्लकीतिनिशत्वचः ॥ ११९ ॥
क्षीरे विमृदिताः पीताः सक्षौद्रा रक्तनाशनाः ॥
मधुकं शर्करां लोध्रं पयस्यामथ सारिवाम् ॥ १२० ॥
पिबेच्छागेन पयसा सक्षौद्रं[5] रक्तनाशनम् ॥
मञ्जिष्ठां सारिवां लोध्रं पद्मकं कुमुदोत्पलम् ॥ १२१ ॥

---

१ "°वनकार्पासिदाडिमा°' इति हाराण०। २ 'पूतिकाकच्छुरा......श्चुच्चः सदाहिका' इति हाराण०। ३ "°सयोगो' इति हाराण०। ४ 'पित्तलानि निषेवते' इति हाराण०। ५ 'सक्षौद्रां रक्तनाशनीम्' इति हाराण०।

पिबेत् पथ्यां च दुग्धेन छागेनासृक्प्रशान्तये ॥
शर्करोत्पललोध्राणि समङ्गा मधुकं तिलाः ॥ १२२ ॥
तिला[1]: कृष्णाः सयष्ट्याह्वाः समङ्गा चोत्पलानि च ॥
तिला मोचरसो लोध्रं तथैव मधुकोत्पलम् ॥ १२३ ॥
कच्छुरा तिलकल्कश्च योगाश्चत्वार एव च[2] ॥
आजेन पयसा पेयाः सरक्ते मधुसंयुताः ॥ १२४ ॥
द्रवे सरक्ते स्रवति बालबिल्वं सफाणितम् ॥
सक्षौद्रतैलं प्रागेव लिह्याद्दा[3]शु हितं हि तत् ॥ १२५ ॥
कोशकारं घृते भृष्टं लाजचूर्णं सिता मधु ॥
सशूलं रक्तपित्तोत्थं लीढं हन्त्युदरामयम् ॥ १२६ ॥
बिल्वमध्यं समधुकं शर्कराक्षौद्रसंयुतम् ॥
तण्डुलाम्बुयुतो योगः पित्तरक्तोत्थितं जयेत् ॥ १२७ ॥
[4]योगान् सांग्राहिकांश्चान्यान् पिबेत्सक्षौद्रशर्करान् ॥
न्यग्रोधादिषु कुर्याच्च पुटपाकान् यथेरितान् ॥ १२८ ॥
गुदपाके च ये उक्तास्तेऽत्रापि विधयः स्मृताः ॥
रु[5]जायां चाप्रशाम्यन्त्यां पिच्छाबस्तिर्हितो भवेत् ॥ १२९ ॥
[6]सक्तविड् दोषबहुलं दीप्ताग्निर्योऽतिसार्यते ॥
विडङ्गत्रिफलाकृष्णाकषायैस्तं विरेचयेत् ॥ १३० ॥
अथवैरण्डसिद्धेन पयसा केवलेन वा ॥
यवागूर्वितरे[7]च्चास्य वातघ्नैर्दीपनैः कृताः ॥ १३१ ॥
दीप्ताग्निर्निष्पुरीषो यः सार्यते फेनिलं शकृत् ॥
स पिबेत् फाणितं शुण्ठीदधितैलपयोघृतम् ॥ १३२ ॥

---

१ 'तिलाः कृष्णाः' इति श्लोकार्धं हाराणचन्द्रो न पठति । २ 'एव तु' इति हाराण० । ३ '°द्धितकर हि तत्' इति पा० । ४ 'योगान् साग्राहिकान्' इत्यत आरभ्य 'पुटपाकान् यथेरितान्' इति श्लोकार्धं हाराणचन्द्रो न पठति । ५ 'रुजायां वाप्रशाम्य°' इति हाराण० । ६ 'रक्तविड्दोषबहुल' इति हाराण० । ७ '°वितरेत्तस्य' इति हाराण० ।

स्विन्नानि गुडतैलाभ्यां भक्षयेद्बदराणि च ॥
स्विन्नानि[1] पिष्टवद्वाऽपि समं बिल्वशलाटुभिः ॥ १३३ ॥
दध्नोपयुज्य कुल्माषान् श्वेतामनुपिबेत् सुराम् ॥
शशमांसं सरुधिरं समङ्गां सघृतं दधि ॥ १३४ ॥
खादेद्विपाच्य सेवेत मृद्वन्नं शकृतः क्षये ॥
संस्कृतो यमके माषयवकोलरसः शुभः ॥ १३५ ॥
भोजनार्थं[2] प्रदातव्यो दधिदाडिमसाधितः ॥
बिडं बिल्वशलाटूनि नागरं चाम्लपेषितम् ॥ १३६ ॥
दध्नः सरश्च यमके भृष्टो वर्चःक्षये हितः ॥
सशूलं क्षीणवर्चा यो दीप्ताग्निरतिसार्यते ॥
स पिबेद्दीपनैर्युक्तं सर्पिः संग्राहकैः सह ॥ १३७ ॥

वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य ॥
प्रवाहमाणस्य मुहुर्मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ॥१३८॥
प्रवाहिका वातकृता सशूला पित्तात् सदाहा सकफा कफाच्च ॥
सशोणिता शोणितसंभवा तु ताः स्नेहरूक्षप्रभवा मतास्तु ॥१३९॥
तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वतां च ॥
न शान्तिमायाति विलङ्घनैर्या योगैरुदीर्णा यदि पाचनैर्वा ॥१४०॥
तां[3] क्षीरमेवाशु श्टतं निहन्ति तैलं तिलाः पिच्छिलबस्तयश्च ॥
आर्द्रैः कुशैः संपरिवेष्टितानि वृन्तान्यथार्द्राणि हि शाल्मलीनाम् ॥
पक्वानि सम्यक् पुटपाकयोगेनापोथ्य तेभ्यो रसमाददीत ॥
क्षीरं श्टतं तैलहविर्विमिश्रं कल्केन यष्टीमधुकस्य वाऽपि ॥ १४२ ॥

---

१ 'सुस्विन्नान् पिष्ट°' इति हाराण०। 'सुस्विन्नान् पिष्टवद्वापि माषान् बिल्व°' इति पा०। २ 'भोजनार्थं च दातव्यो' इति हाराण०। ३ 'ताः क्षीर°' इति हाराण०।

बस्तिं विदध्याद्भिषगप्रमत्तः प्रवाहिकामूत्रपुरीषसङ्गे ॥
द्विपञ्चमूलीक्वथितेन शूले प्रवाहमाणस्य समाक्षिकेण ॥ १४३ ॥
क्षीरेण चास्थापनमग्र्यमुक्तं तैलेन युञ्ज्यादनुवासनं च ॥
वातघ्नवर्गे [1]लवणेषु चैव तैलं च सिद्धं हितमन्नपाने ॥ १४४ ॥
लोध्रं विडं बिल्वशलाटु चैव लिह्याच्च तैलेन [2]कटुत्रिकाढ्यम् ॥
दध्ना ससारेण समाक्षिकेण भुञ्जीत निश्चाः( सा )रक्तपीडितस्तु ॥
सुतप्तकुप्यक्वथितेन वाऽपि क्षीरेण शीतेन मधुप्लुतेन ॥
शूलार्दितो व्योषविदारिगन्धासिद्धेन दुग्धेन हिताय भोज्यः १४६
[3]वातघ्नसांग्राहिकदीपनीयैः कृतान् [4]षडांश्चाप्युपभोजयेच्च ॥
खादेच्च मत्स्यान् रसमाप्नुयाच्च वातघ्नसिद्धं सघृतं सतैलम्॥१४७॥
एणाव्यजानां तु वटप्रवालैः सिद्धानि सार्धं पिशितानि खादेत् ॥
[5]मेध्य(घ)स्य सिद्धं त्वथ वाऽपि रक्तं बस्तस्य दध्ना घृततैलयुक्तम् ॥
खादेत् प्रदेहैः शि[6]खिलावजैर्वा भुञ्जीत यूषैर्दधिभिश्च मुख्यैः ॥
माषान् सुसिद्धान् घृतमण्डयुक्तान् खादेच्च दध्ना मरिचोपदंशान् ॥

महारुजे मूत्रकृच्छ्रे भिषग् बस्तिं प्रदापयेत् ॥
पयोमधुघृतोन्मिश्रं मधुकोत्पलसाधितम् ॥ १५० ॥
स बस्तिः शमयेत्तस्य रक्तं दाहमथो ज्वरम् ॥
मधुरौषधसिद्धं च हितं तस्यानुवासनम् ॥ १५१ ॥
रात्रावहनि वा नित्यं रुजार्तो यो भवेन्नरः ॥
यथा यथा सतैलः स्याद्वातशान्तिस्तथा तथा ॥ १५२ ॥

---

१ 'मधुरेषु' इति पा०। २ 'कटुत्रिकाक्तम्' इति हाराण०। ३ 'वातघ्नसंग्राहक०' इति हाराण०। ४ 'रसांश्चा०' इति हाराण०। ५ 'मेध्यस्य' (=खड्गिप्रभृतेः) इति हाराण०। 'मेध्यं च' इत्यपि पा०। ६ 'प्रयुक्तैः शिखिलावजैश्च' इति हाराण०।

प्रशान्ते मारुते [1]चापि शान्तिं याति प्रवाहिका ॥
तस्मात् प्रवाहिकारोगे मारुतं शमयेद्भिषक् ॥ १५३ ॥
पाठाजमोदा[2]कुटजोत्पलं च शुण्ठी समा मागधिकाश्च पिष्टाः ॥
सुखाम्बुपीताः शमयन्ति रोगं मेध्याण्डसिद्धं सघृतं पयो वा १५४
शुण्ठीं घृतं सक्षवकं सतैलं विपाच्य लीढ्वाऽऽमयमाशु हन्यात् ॥
गजाशनाकुम्भिकदाडिमानां रसैः [3]कृता तैलघृते सदध्नि ॥ १५५ ॥
बिल्वान्विता पथ्यतमा यवागूर्धारोष्णदुग्धस्य तथा च पानम् ॥
लघूनि पथ्यान्यथ दीपनानि स्निग्धानि भोज्यान्युदरामयेषु ॥१५६॥
हिताय नित्यं [4]वितरेद्विभज्य योगांश्च तांस्तान् भिषगप्रमत्तः १५७
तृष्णापनयनी लघ्वी दीपनी बस्तिशोधनी ॥
ज्वरे चैवातिसारे च यवागूः सर्वदा हिता ॥ १५८ ॥
[5]रूक्षाज्जाते क्रिया स्निग्धा रूक्षा स्नेहनिमित्तजे ॥
भयजे सान्त्वनापूर्वा शोकजे शोकनाशिनी ॥ १५९ ॥
विषार्शःकृमिसंभूते हिता चोभयशर्मदा ॥
छर्दिमूर्च्छातृडाद्यांश्च साधयेदविरोधतः ॥ १६० ॥
समवाये तु दोषाणां पूर्वं पित्तमुपाचरेत् ॥
ज्वरे चैवातिसारे च सर्वत्रान्यत्र मारुतम् ॥ १६१ ॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ॥
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ १६२ ॥
कर्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे ॥
कर्मदोषोद्भवाश्चान्ये कर्मजास्तेष्वहेतुकाः ॥ १६३ ॥

---

१ 'वापि' इति हाराण०। २ 'कुटजस्य बीजैः शुण्ठी°' इति हाराण०। ३ 'कृते' इति हाराण०। ४ 'वितरेद्धि भोज्यं' इति हाराण०। ५ 'रौक्ष्याज्जाते' इति हाराण०।

नश्यन्ति स्वक्रियाभिस्ते क्रियाभिः कर्मसंक्षये ॥
शाम्यन्ति दोषसंभूता दोषसंक्षयहेतुभिः ॥ १६४ ॥
तेषामल्पनिदाना ये प्रतिकृष्टा भवन्ति च ॥
मृदवो बहुदोषा वा कर्मदोषोद्भवास्तु ते ॥ १६५ ॥
कर्मदोषक्षयकृता तेषां सिद्धिर्विधीयते ॥
दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः ॥ १६६ ॥
अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ॥
भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १६७ ॥
तस्मात्कार्यः परीहारस्त्वतीसारे विरिक्तवत् ॥
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ १६८ ॥
षष्ठी पित्तधरा नाम या कला परिकीर्तिता ॥
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्तिता ॥ १६९ ॥
ग्रहण्या बलमग्निर्हि स चापि [1]ग्रहणीं श्रितः ॥
तस्मात् संदूषिते वह्नौ ग्रहणी संप्रदुष्यति ॥ १७० ॥
एकशः सर्वशश्चैव दोषैरत्यर्थमुच्छ्रितैः ॥
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ १७१ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ॥
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ १७२ ॥
तस्योत्पत्तौ [2]विदाहोऽन्ने सदनालस्यतृट्क्लमाः ॥
बलक्षयोऽरुचिः कासः कर्णक्ष्वेडोऽन्त्रकूजनम् ॥ १७३ ॥
अथ जाते भवेज्जन्तुः शूनपादकरः कृशः ॥
पर्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान् ॥ १७४ ॥
उद्गिरेच्छुक्ततिक्ताम्ललोहधूमामगन्धिकम् ॥
प्रसेकमुखवैरस्यतमकारुचिपीडितः ॥ १७५ ॥

---

१ 'ग्रहणीश्रितः' इति हाराण०। २ 'विदाहोऽन्तःसदना°' इति हाराण०।

वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः ॥
पित्तात् सदाहैर्गुरुभिः कफात्त्रिभ्यस्त्रिलक्षणैः ॥ १७६ ॥
[२]दोषवर्णैर्नखैस्तद्वद्विण्मूत्रनयनाननैः ॥
हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः ॥ १७७ ॥
[३]यथादोषोच्छ्रयं तस्य विशुद्धस्य यथाक्रमम् ॥
पेयादिं वितरेत् सम्यग्दीपनीयोपसंभृतम् ॥ १७८ ॥
ततः पाचनसंग्राहिदीपनीयगणत्रयम् ॥
पिबेत् प्रातः सुरारिष्टस्नेहमूत्रसुखाम्बुभिः ॥ १७९ ॥
तक्रेण वाऽथ तक्रं वा केवलं हितमुच्यते ॥
कृमिगुल्मोदरार्शोघ्नीः क्रियाश्चात्रावचारयेत् ॥ १८० ॥
चूर्णं हिङ्ग्वादिकं चात्र घृतं वा प्लीहनाशनम् ॥
कल्केन मगधादेश्च चाङ्गेरीस्वरसेन च ॥ १८१ ॥
चतुर्गुणेन दध्ना च घृतं सिद्धं हितं भवेत् ॥
सर्वथा दीपनं सर्वं ग्रहणीरोगिणां हितम् ॥
ज्वरादीनविरोधाच्च साधयेत् स्वैश्चिकित्सितैः ॥ १८२ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रेऽति-
सारप्रतिषेधो नाम ( द्वितीयोऽध्यायः, आदितः )
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशत्तमोऽध्यायः ।

अथातः शोषप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'कफात्त्रिभिस्त्रिलक्षणैः' इति हाराण०। २ 'दोषवर्णनखैः' इति हाराण०। ३ 'यथादोषबल' इति पा०। ४ '°तन्त्रेऽतिसारप्रतिषेधो' इति हाराण०।

अनेकरोगानुगतो बहुरोगपुरोगमः ॥
दुर्विज्ञेयो दुर्निवारः शोषो व्याधिर्महाबलः ॥ ३ ॥
संशोषणाद्रसादीनां शोष इत्यभिधीयते ॥
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः ॥ ४ ॥
राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ॥
तस्मात्तं राजयक्ष्मेति [१]केचिदाहुः पुनर्जनाः ॥ ५ ॥
स व्यस्तैर्जायते दोषैरिति केचिद्वदन्ति हि ॥
एकादशानामेकस्मिन् सान्निध्यात्तन्त्रयुक्तितः ॥ ६ ॥
[२]क्रियाणामविभागेन प्रागेकोत्पादनेन च ॥
एक एव मतः शोषः सन्निपातात्मको ह्यतः ॥ ७ ॥
उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति हि ॥
क्षयाद्वेगप्रती[३]घाताद्दाघाताद्विषमाशनात् ॥ ८ ॥
जायते कुपितैर्दोषैर्व्याप्तदेहस्य देहिनः ॥
कफप्रधानैर्दोषैर्हि रुद्धेषु रसवर्त्मसु ॥ ९ ॥
अतिव्यवायिनो वाऽपि क्षीणे [४]रेतस्यनन्तरम् ॥
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ १० ॥
भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ॥
स्वरभेदश्च [५]जायेत षड्रूपे राजयक्ष्मणि ॥ ११ ॥
स्वरभेदोऽनिलाच्छूल [६]संलोचश्चांसपार्श्वयोः ॥
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ १२ ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ॥
कासः कण्ठस्य चोद्धंसो विज्ञेयः कफकोपतः ॥ १३ ॥

---

१ 'केचिदाहुर्मनीषिणः' इति हाराण० । २ 'क्रियाणा चाविभागेन प्रागेकोत्पादनेन च' इति हाराण० । ३ "°घाताद्व्यायामाद्विष°" इति हाराण० । ४ 'रेतस्यनन्तरा' इति हाराण० । ५ 'जायन्ते' इति हाराण० । ६ 'सकोचश्चांस°' इति हाराण० ।

एकादशभिरेभिर्वा[1] षड्भिर्वाऽपि समन्वितम् ॥
( कासातीसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥ १४ ॥
त्रिभिर्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः[2] ॥ )
जह्याच्छोषार्दितं जन्तुमिच्छन् सुविपुलं यशः ॥ १५ ॥
व्यवायशोकस्थाविर्यव्यायामाध्वोपवासतः ॥
व्रणोरःक्षतपीडाभ्यां शोषानन्ये वदन्ति हि ॥ १६ ॥
व्यवायशोषी[3] शुक्रस्य क्षयलिङ्गैरुपद्रुतः ॥
पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ॥ १७ ॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ॥
विना शुक्रक्षयकृतैर्विकारैरभिलक्षितः ॥ १८ ॥
जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः[4] ॥
कम्पनो[5]ऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः(नः) ॥ १९ ॥
ष्ठीवति श्लेष्मणा हीनं [6]गौरवारुचिपीडितः ॥
संप्रस्रुतास्यनासाक्षः सुप्तरूक्षमलच्छविः[7] ॥ २० ॥
अध्वप्रशोषी[8] स्रस्ताङ्गः [9]संभृष्टपरुषच्छविः ॥
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥ २१ ॥
व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ॥
उरःक्षतकृतैर्लिङ्गैः संयुक्तश्च क्षताद्विना ॥ २२ ॥
रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ॥
व्रणितस्य[10] भवेच्छोषः स चासाध्यतमः स्मृतः[11] ॥ २३ ॥

---

१ "°रेतैर्वा' इति हाराण० । २ कोष्ठकस्थोऽय पाठो हाराणचन्द्रसंमतः । ३ 'व्यवायशोषः' इति हाराण० । ४ 'मन्दस्वल्पबुद्धि°' इति हाराण० । ५ 'श्वसनो' इति हाराण० । ६ 'तथैवारुचिपीडितः' इति पा० । 'तथैवारतिपीडितः' इति हाराण० । ७ 'शुष्करुक्ष°' इति हाराण० । ८ 'तृडङ्गमर्ददौर्बल्यपारुष्यैरर्दितोऽध्वना' इति पा० । ९ 'संसृष्टपरुषच्छविः' इति च पा० । १० 'व्रणितस्य भवेच्छोषो दोषैः' इति पा० । ११ 'मतः' इति हाराण० ।

व्यायामभाराध्ययनैरभिघातातिमैथुनैः ॥
कर्मणा[1] चाप्युरस्येन वक्षो यस्य विदारितम् ॥
तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति ॥ २४ ॥
कासमानश्छर्दयेच्च पीतरक्तासितारुणम् ॥
संतप्तवक्षाः सोऽत्यर्थं दूयनात्परिताम्यति ॥ २५ ॥
दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नरः ॥
केषांचिदेवं शोषो हि कारणैर्भेदमागतः ॥ २६ ॥
न तत्र दोषलिङ्गानां समस्तानां निपातनम् ॥
क्षया एव हि ते ज्ञेयाः प्रत्येकं [2]धातुसंज्ञिताः ॥ २७ ॥
चिकित्सितं तु तेषां हि प्रागुक्तं धातुसंक्षये ॥ २८ ॥

श्वासाङ्गसादकफसंस्रवतालुशोष-
च्छर्द्यग्निसादमद[3]पीनसपाण्डुनिद्राः ॥
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ २९ ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च ॥
तं वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून् पवनधूमदवार्दितांश्च ॥ ३० ॥

महाशनं क्षीयमाणमतीसारनिपीडितम् ॥
शूनमुष्कोदरं चैव यक्ष्मिणं[4] परिवर्जयेत् ॥ ३१ ॥
उपाचरेदात्मवन्तं दीप्ताग्निमकृशं नवम्[5] ॥
स्थिरादिवर्गसिद्धेन घृतेनाजाविकेन च ॥ ३२ ॥

---

१ 'कर्मभिश्चाप्यनौरस्यैर्वक्षो' इति पा० । २ 'धातुसक्षयात्' इति हाराण० । ३ '°पीनसकासनिद्राः' इति हाराण० । ४ 'शोषिणं' इति पा० । ५ 'नरम्' इति पा० ।

स्निग्धस्य मृदु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ॥
आस्थापनं तथा कार्यं शिरसश्च विरेचनम् ॥ ३३ ॥
यवगोधूम[1]शालींश्च रसैर्भुञ्जीत शोधितः ॥
इद्धेऽग्नौ बृंहयेच्चापि निवृत्तोपद्रवं नरम् ॥ ३४ ॥
व्यवायशोषिणं प्रायो भजन्ते वातजा गदाः ॥
बृंहणीयो विधिस्तस्मै हितः स्निग्धोऽनिलापहः ॥ ३५ ॥
काकानुलूकान्नकुलान् बिडालान् गण्डूपदान् व्यालबिलेशयाखून् ॥
गृध्रांश्च दद्याद्विविधैः प्र[2]वादैः ससैन्धवान् सर्षपतैलभृष्टान् ॥ ३६ ॥
देयानि मांसानि च जाङ्गलानि मुद्गाढकीसूपर[3]साश्च हृद्याः ॥
खरोष्ट्रनागाश्वतराश्वजानि देयानि मांसानि सुकल्पितानि ॥ ३७ ॥
मांसोपदंशांश्च पिबेदरिष्टान् मार्द्वी[4]कयुक्तान् मदिराश्च सेव्याः ॥
अर्कामृताक्षारजलोषितेभ्यः कृत्वा यवेभ्यो विविधांश्च भक्ष्यान् ३८
खादेत्, पिबेत् सर्पिरजाविकं वा कृशो यवाग्वा सह भक्तकाले ॥
सर्पिर्मधुभ्यां त्रिकटु प्रलिह्याच्चव्याविडङ्गोपहितं क्षयार्तः ॥ ३९ ॥
मांसादमांसेषु घृतं च सिद्धं शोषापहं क्षौद्रकणासमेतम् ॥
द्राक्षासितामागधिकावलेहः सक्षौद्रतैलः क्षयरोगघाती ॥ ४० ॥
घृतेन चाजेन समाक्षिकेण तुरङ्गगन्धातिलमाषचूर्णम् ॥
सिताश्वगन्धामगधोद्भवानां [5]चूर्णं [6]घृतक्षौद्रयुतं प्रलिह्यात् ॥ ४१ ॥
क्षीरं पिबेद्वाऽप्यथ वाजिगन्धाविपक्वमेवं [7]लभतेऽङ्गपुष्टिम् ॥
तदुत्थितं क्षीरघृतं सिताढ्यं प्रातः [8]पिबेद्वाऽपि पयोनुपानम् ॥ ४२ ॥
उत्सादने चापि तुरङ्गगन्धा योज्या यवाश्चैव पुनर्नवे च ॥
कृत्स्ने वृषे तत्कुसुमैश्च सिद्धं सर्पिः पिबेत्क्षौद्रयुतं हिताशी ॥ ४३ ॥

---

१ "°शालीश्च' इति हाराण०। २ 'प्रकारैः' इति हाराण०। ३ 'मुद्गाढकीयूषरसाश्च' इति पा०। ४ "°युक्ता मदिराश्च' इति हाराण०। ५ 'कल्क' इति पा०। ६ "°घृतं क्षौद्र°" इति हाराण०। ७ 'लभते च पुष्टिम्' इति हाराण०। ८ 'पिबेद्वाथ' इति हाराण०।

यक्ष्माणमेतत् प्रबलं च कासं श्वासं च हन्यादपि पाण्डुतां च ॥
शकृद्रसा गोऽश्वगजाव्यजानां क्वाथा मिताश्चापि तथैव भागैः ॥४४॥
मूर्वाहरिद्राखदिरद्रुमाणां क्षीरस्य भागस्त्वपरो घृतस्य ॥
भागान् दशैतान् विपचेद्विधिज्ञो दत्त्वा त्रिवर्गं मधुरं च कृत्स्नम् ४५
कटुत्रिकं चैव सभद्रदारु घृतोत्तमं यक्ष्मनिवारणाय ॥
द्वे पञ्चमूल्यौ वरुणं करञ्जं भल्लातकं बिल्वपुनर्नवे च ॥ ४६ ॥
यवान् कुलत्थान् बदराणि भार्गीं पाठां हुताशं समहीकदम्बम् ॥
कृत्वा कषायं विपचेद्धि तस्य षड्भिर्हि पात्रैर्घृतपात्रमेकम् ॥ ४७ ॥
व्योषं महावृक्षपयोऽभयां च चव्यं सुराख्यं लवणोत्तमं च ॥
एतद्धि शोषं जठराणि चैव हन्यात् प्रमेहांश्च सहानिलेन ॥ ४८ ॥
गोऽश्वाव्यजेभैणखरोष्ट्रजातैः शकृद्रसक्षीररसक्षतोत्थैः ॥
द्राक्षाश्वगन्धामगधासिताभिः सिद्धं घृतं यक्ष्मविकारहारि ॥ ४९ ॥
एलाजमोदामलकाभयाक्षगायत्र्यरिष्टासनशालसारान् ॥
विडङ्गभल्लातकचित्रकोग्राकटुत्रिकाम्भोदसुराष्ट्रजांश्च ॥ ५० ॥
पक्त्वा जले तेन पचेद्धि सर्पिस्तस्मिन् सुसिद्धे त्ववतारिते च ॥
त्रिंशत्पलान्यत्र सितोपलाया दत्त्वा तुगाक्षीरिपलानि षट् च ॥५१॥
प्रस्थे घृतस्य द्विगुणं च दद्यात् क्षौद्रं ततो मन्थहतं विदध्यात् ॥
पलं पलं प्रातरतः प्रलिह्य[1] पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥ ५२ ॥
एतद्धि मेध्यं परमं पवित्रं चक्षुष्यमायुष्यमथो यशस्यम् ॥
यक्ष्माणमाशु व्यपहन्ति चैतत् पाण्ड्वामयं चैव भगन्दरं च ॥ ५३ ॥
श्वासं च हन्ति स्वरभेदकासहृत्प्लीहगुल्मग्रहणीगदांश्च[2] ॥
न चात्र किंचित् परिवर्जनीयं रसायनं चैतदुपास्यमानम् ॥ ५४ ॥
प्लीहोदरोक्तं विहितं च सर्पिस्त्रीण्येव[3] चान्यानि हितानि चात्र ॥
उपद्रवांश्च स्वरवैकृतादीन् जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ॥ ५५ ॥

---

१ 'प्रलिह्यात्' इति हाराण० । २ 'स्वरभेदकाचहृत्प्लीह०' इति हाराण० ।
३ 'सर्पिस्तान्येव' इति हाराण० ।

अजाशकृन्मूत्रपयोघृतासृङ्मांसालयानि प्रतिसेवमानः ॥
स्नानादिना वा विधिना जहाति मासादशेषं नियमेन शोषम् ॥५६॥
रसोनयोगं विधिवत् क्षयार्तः क्षीरेण वा नागबलाप्रयोगम् ॥
सेवेत वा मागधिकाविधानं तथोपयोगं जतुनोऽश्मजस्य ॥ ५७ ॥
शोकं स्त्रियं क्रोधमसूयनं च त्यजेदुदारान् विषयान् भजेत् ॥
वैद्यान् द्विजातींस्त्रिदशान् गुरूंश्च वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः ५८

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[1] कायचिकित्सातन्त्रे शोषप्रतिषेधो नाम(तृतीयोऽध्याय ,आदित) एकचत्वारिंशोऽध्यायः ॥४१॥

---

## द्विचत्वारिंशत्तमोऽध्यायः।

अथातो गुल्मप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः ॥
जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते ॥ ३ ॥
[2]हृद्बस्त्योरन्तरे ग्रन्थिः संचारी यदि वाऽचलः ॥
[3]चयापचयवान् वृत्तः स गुल्म इति कीर्तितः ॥ ४ ॥
पञ्च गुल्माश्रया नृणां पार्श्वे हृन्नाभिबस्तयः ॥
[4]कुपितानिलमूलत्वाद्गूढ[5]मूलोदयादपि ॥ ५ ॥
गुल्मवद्वा विशालत्वाद्गुल्म इत्यभिधीयते ॥
स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः ॥ ६ ॥
अन्तः सरति यस्माच्च न पाकमुपयात्यतः ॥
स व्यस्तैर्जायते दोषैः समस्तैरपि [6]चोच्छ्रितैः ॥ ७ ॥

---

१ "°तन्त्रे शोष°" इति हाराण०। २ 'हृन्नाभ्योरन्तरे' इति पा०। ३ 'स्थिरोपचयवान्' इति पा०। ४ 'कुपितानिलमूलत्वात्' इति हाराण०। ५ 'गूढगुल्मोदयादपि' इति पा०। ६ 'वोच्छ्रितैः' इति हाराण०।

पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥
सदनं मन्दता वह्नेराटोपोऽन्त्रविकूजनम् ॥ ८ ॥
विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा ॥
द्वेषोऽन्ने वायुरूर्ध्वं च पूर्वरूपेषु गुल्मिनाम् ॥ ९ ॥
हृत्कुक्षिशूलं मुखकण्ठशोषो वायोर्निरोधो विषमाग्निता च ॥
ते ते विकाराः पवनात्मकाश्च भवन्ति गुल्मेऽनिलसंभवे तु ॥ १० ॥
[1]स्वेदज्वराहारविदाहदाहास्तृष्णाऽङ्गरागः कटुवक्त्रता च ॥
पित्तस्य लिङ्गान्यखिलानि यानि पित्तात्मके तानि भवन्ति गुल्मे ११
स्तैमित्यमन्नेऽरुचिरङ्गसादश्छर्दिः प्रसेको मधुरास्यता च ॥
कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफसंभवे तु ॥१२॥
[2]सर्वात्मकः सर्वविकारयुक्तः सोऽसाध्य उक्तः, [3]क्षतजं प्रवक्ष्ये ॥
नवप्रसूताऽहितभोजना या या चामगर्भं [4]विसृजेदृतौ वा ॥ १३ ॥
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ॥ १४ ॥
न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिङ्गानि च गर्भिणीनाम् ॥
तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥१५॥
वातगुल्मार्दितं स्निग्धं युक्तं स्नेहविरेचनैः ॥
उपाचरेद्यथाकालं निरूहैः सानुवासनैः ॥ १६ ॥
पित्तगुल्मार्दितं स्निग्धं काकोल्यादिघृतेन तु ॥
विरिक्तं मधुरैर्योगैर्निरूहैः समुपाचरेत् ॥ १७ ॥
श्लेष्मगुल्मार्दितं स्निग्धं पिप्पल्यादिघृतेन तु ॥
तीक्ष्णैर्विरिक्तं तद्रूपैर्निरूहैः समुपाचरेत् ॥ १८ ॥

---

१ एतत्स्थले 'अम्लीभवत्यन्नमथो ज्वरश्च दाहः पिपासा कटुवक्त्रता च । पित्तस्य लिङ्गानि च कीर्तितानि भवन्ति पित्तप्रभवे तु गुल्मे' इति पा० । २ 'सर्वात्मके सर्वरुजोपपत्तिः' इति पा० । ३ 'क्षतज च वक्ष्ये' इति हाराण० । ४ 'प्रसवेदथर्तौ' इति पा० । ५ "यथायोग' इति पा० ।

सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥
पित्तवद्रक्तगुल्मिन्या नार्याः कार्यः क्रियाविधिः ॥ १९ ॥
विशेषमपरं चास्याः शृणु रक्तविभेदनम् ॥
पलाशक्षारतोयेन[1] सिद्धं सर्पिः प्रयोजयेत् ॥ २० ॥
दद्यादुत्तरबस्तिं च पिप्पल्यादिघृतेन तु ॥
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ॥ २१ ॥
आनूपौदकमज्जानो वसा तैलं घृतं दधि ॥
विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनम् ॥ २२ ॥
जाङ्गलैकशफानां तु वसा सर्पिश्च पैत्तिके ॥
तैलं जाङ्गलमज्जान एवं गुल्मे कफोत्थिते ॥ २३ ॥
धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम् ॥
शर्करासैन्धवोपेतं तद्धितं वातगुल्मिने ॥ २४ ॥
चित्रकव्योषसिन्धूत्थपृथ्वीकाचव्यदाडिमैः ॥
दीप्यकग्रन्थिकाजाजीहपुषाधान्यकैः समैः ॥ २५ ॥
दध्यारनालबदरमूलकस्वरसैर्घृतम् ॥
तत्पिबेद्वातगुल्माग्निदौर्बल्याटोपशूलनुत् ॥ २६ ॥
हिङ्गुसौवर्चलाजाजीविडदाडिमदीप्यकैः ॥
पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥ २७ ॥
शटीवचाजगन्धैलासुरसैश्च विपाचितम् ॥
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ २८ ॥
विडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः ॥
हिङ्गुसौवर्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः ॥ २९ ॥
बीजपूररसोपेतं सर्पिर्दधिचतुर्गुणम् ॥
साधितं दाधिकं नाम गुल्महृत् प्लीहशूलजित् ॥ ३० ॥

---

१ 'पलाशभस्मतोयेन' इति हाराण० ।

रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम् ॥
सुरारनालदध्यम्लमूलकस्वरसैः सह ॥ ३१ ॥
व्योषदाडिमवृक्षाम्लयवानीचव्यसैन्धवैः ॥
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च समांशिकैः ॥ ३२ ॥
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ॥
कासापस्मारमन्दाग्निप्लीहशूलानिलाञ्जयेत् ॥ ३३ ॥
दधि सौवीरकं सर्पिः क्वाथौ मुद्गकुलत्थजौ ॥
पञ्चाढकानि विपचेदावाप्य द्विपलान्यथ ॥ ३४ ॥
सौवर्चलं सर्जिकां च देवदार्वथ सैन्धवम् ॥
वातगुल्मापहं सर्पिरेतद्दीपनमेव च ॥ ३५ ॥
तृणमूलकषाये तु जीवनीयैः पचेद्घृतम् ॥
न्यग्रोधादिगणे वाऽपि गणे वाऽप्युत्पलादिके ॥ ३६ ॥
रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयम् ॥
आरग्वधादौ विपचेद्दीपनीययुतं घृतम् ॥ ३७ ॥
क्षारवर्गे पचेच्चान्यत् पचेन्मूत्रगणेऽपरम् ॥
घ्नन्ति गुल्मं कफोद्भूतं घृतान्येतान्यसंशयम् ॥ ३८ ॥
यथादोषोच्छ्रयं चापि चिकित्सेत्सान्निपातिकम् ॥
चूर्णं हिङ्ग्वादिकं वाऽपि घृतं वा प्लीहनाशनम् ॥ ३९ ॥
पिबेद्गुल्मापहं काले सर्पिस्तैल्वकमेव वा ॥
तिलेक्षुरकपालाशसार्षपं यावनालजम् ॥ ४० ॥
भस्म मूलकजं चापि गोजाविखरहस्तिनाम् ॥
मूत्रेण महिषीणां च पालिकैश्चावचूर्णितैः ॥ ४१ ॥
कुष्ठसैन्धवयष्ट्याह्वनागरकृमिघातिभिः ॥
साजमोदैश्च दशभिः सामुद्राच्च पलैर्युतम् ॥ ४२ ॥

अयःपात्रेऽग्निनाऽल्पेन पक्त्वा [1]लेह्य(ह्)मथोद्धरेत् ॥
तस्य मात्रां पिबेद्दध्ना सुरया सर्पिषाऽपि वा ॥ ४३ ॥
धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा ॥
गुल्मान् वातविकारांश्च क्षारोऽयं हन्त्यसंशयम् ॥ ४४ ॥
स्वर्जिकाकुष्ठसहितः क्षारः [2]केतकिजोऽपि वा ॥
तैलेन शमयेत् पीतो गुल्मं पवनसंभवम् ॥ ४५ ॥
पीतं सुखाम्बुना वाऽपि स्वर्जिकाकुष्ठसैन्धवम् ॥
वृश्चीव(र)मुरुबूकं[3] च वर्षाभूर्बृहतीद्वयम्[4] ॥ ४६ ॥
चित्रकं च जलद्रोणे पक्त्वा पादावशेषितम् ॥
मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत् ॥ ४७ ॥
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्धसंयुतम् ॥
[5]बुसोषितं दशाहं तु जीर्णभक्तः पिबेन्नरः ॥ ४८ ॥
अरिष्टोऽयं जयेद्गुल्ममविपाकमरोचकम् ॥
पाठानिकुम्भरजनीत्रिकटुत्रिफलाग्निकम् ॥ ४९ ॥
लवणं वृक्षबीजं च तुल्यं स्यादनवो[6] गुडः ॥
पथ्याभिर्वा युतं[7] चूर्णं गवां मूत्रयुतं पचेत् ॥ ५० ॥
गुटिकास्तद्घनीभूतं कृत्वा खादेदभुक्तवान् ॥
गुल्मप्लीहाग्निसादांस्ता नाशयेयुरशेषतः ॥ ५१ ॥
हृद्रोगं ग्रहणीदोषं पाण्डुरोगं च दारुणम् ॥
सशूले सोन्नतेऽस्पन्दे[8] दाहपाकरुगन्विते ॥ ५२ ॥

---

१ 'लेह्यमथोद्धरेत्' इति हाराण०। २ 'केतकजोऽपि वा' इति हाराण०। ३ 'पृथ्वीकामुरुबूकं च' इति पा०। ४ 'वर्षाभूबृहती°' इति हाराण०। ५ 'तुषोषित' इति हाराण०। ६ '°दनव गुडम्' इति हाराण०। ७ 'पथ्याभिः सहितं चूर्णं' इति हाराण०। ८ '°ऽस्यन्दे' इति हाराण०।

गुल्मे रक्तं जलौकोभिः सिरामोक्षेण वा हरेत् ॥
सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः ॥ ५३ ॥
कटुत्रिकसमायुक्ता हिताः पाने तु[1] गुल्मिनाम् ॥
पेया वातहरैः सिद्धाः कौलत्थाः संस्कृता रसाः ॥ ५४ ॥
खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः ॥
बद्धवर्चोऽनिलानां तु सार्द्रकं क्षीरमिष्यते ॥ ५५ ॥
[2]कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ॥
गुल्मिनः सर्व एवोक्ता दुर्विरेच्यतमा भृशम् ॥ ५६ ॥
अतश्चैतांस्तु सुस्विन्नान् स्रंसनेनोपपादयेत् ॥
विम्लापनाभ्यञ्जनानि[3] तथैव दहनानि च ॥ ५७ ॥
उपनाहाश्च कर्तव्याः सुखोष्णाः साल्वणादयः ॥
उदरोक्तानि सर्पींषि मूत्रवर्ति[4]क्रियास्तथा ॥ ५८ ॥
लवणानि च योज्यानि यान्युक्तान्यनिलामये ॥
वातवर्चोनिरोधे तु सामुद्रार्द्रकसर्षपैः ॥ ५९ ॥
कृत्वा पायौ विधातव्या वर्तयो मरिचोत्तराः ॥
दन्तीचित्रकमूलेषु तथा वातहरेषु च ॥ ६० ॥
कुर्यादरिष्टान् सर्वांश्च [5]श्लोकस्थाने यथेरितान् ॥
खादेद्वाऽप्यङ्कुरान् भृष्टान् [6]पूतीकनृपवृक्षयोः ॥ ६१ ॥
[7]ऊर्ध्ववातं मनुष्यं च गुल्मिनं न निरूहयेत् ॥
पिबेत्त्रिवृन्नागरं वा सगुडां वा हरीतकीम् ॥ ६२ ॥

---

१ 'पाने च' इति हाराण०। २ 'कुम्भीपिष्टेष्टकास्वेदान्' इति हाराण०। ३ 'विलेपनाभ्यञ्जनानि तथा संदहनानि च।' इति हाराण०। ४ 'चूर्णवर्तिक्रियास्तथा' इति हाराण०। ५ 'सूत्रस्थाने' इति हाराण०। ६ 'पूतीकनृपवृक्षजान्' इति हाराण०। ७ 'ऊर्ध्ववातमनुष्य च' हाराण०। केचित्तु श्लोकार्धमिद न पठन्ति।

गुग्गुलुं त्रिवृतां दन्तीं द्रवन्तीं सैन्धवं वचाम् ॥
मूत्रमद्यपयोद्राक्षारसैर्वीक्ष्य बलाबलम् ॥ ६३ ॥
एवं पीलूनि भृष्टानि[1] पिबेत् सलवणानि तु ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवैः ॥ ६४ ॥
युक्ता हन्ति सुरा गुल्मं शीघ्रं काले प्रयोजिता ॥
बद्धविण्मारुतो गुल्मी भुञ्जीत पयसा यवान् ॥ ६५ ॥
कुल्माषान् वा बहुस्नेहान् भक्षयेल्लवणोत्तरान् ॥
अथास्योपद्रवः शूलः[2] कथञ्चिदुपजायते ॥ ६६ ॥
शूलं[3] निखानितमिवासुखं येन तु वेत्त्यसौ ॥
तत्र विण्मूत्रसंरोधः कृच्छ्रोच्छ्वासः स्थिराङ्गता ॥ ६७ ॥
तृष्णा दाहो भ्रमोऽन्नस्य विदग्धपरिवृद्धिता ॥
रोमहर्षोऽरुचिश्छर्दिर्भुक्तवृद्धिर्जडाङ्गता ॥ ६८ ॥
वाय्वादिभिर्यथासङ्ख्यं मिश्रैर्वा वीक्ष्य योजयेत् ॥
पथ्यात्रिलवणं क्षारं हिङ्गुतुम्बुरुपौष्करम् ॥ ६९ ॥
यवानीं[4] च हरिद्रां च विडङ्गान्यम्लवेतसम् ॥
विदारीत्रिफलाऽभीरुश्रृङ्गाटीगुडशर्कराः ॥ ७० ॥
काश्मरीफलयष्ट्याह्वपरूषकहिमानि च ॥
षड्ग्रन्थातिविषादारुपथ्यामरिचवृक्षजान्[5] ॥ ७१ ॥
कृष्णामूलकचव्यं च नागरक्षारचित्रकान् ॥
उष्णाम्लकाञ्जिकक्षीरतोयैः श्लोकसमापनान् ॥ ७२ ॥
यथाक्रमं विमिश्रांश्च द्वन्द्वे सर्वांश्च सर्वजे ॥
तथैव सेकावगाहप्रदेहाभ्यङ्गभोजनम् ॥ ७३ ॥
शिशिरोदकपूर्णानां भाजनानां च धारणम् ॥
वमनोन्मर्दनस्वेदलङ्घनक्षपणक्रियाः ॥ ७४ ॥

---

१ 'पिष्टानि' इति हाराण० । २ 'शूल' इति पा० । ३ 'शूल निखानितमिव सुखं येन न वेत्त्यसौ' इति हाराण० । ४ 'यवान्यथ' इति हाराण० । ५ '°वृक्षकान्' इति हाराण० ।

स्नेहादिश्च क्रमः सर्वो विशेषेणोपदिश्यते ॥
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम् ॥ ७५ ॥
न खादेदालुकं गुल्मी मधुराणि फलानि च[1] ॥
विना गुल्मेन यच्छूलं गुल्मस्थानेषु जायते ॥ ७६ ॥
निदानं तस्य वक्ष्यामि रूपं च सचिकित्सितम् ॥
वातमूत्रपुरीषाणां निग्रहादतिभोजनात् ॥ ७७ ॥
अजीर्णाध्यशनायासविरुद्धान्नोपसेवनात् ॥
पानीयपानात् क्षुत्काले विरूढानां च सेवनात् ॥ ७८ ॥
पिष्टान्नशुष्कमांसानामुपयोगात्तथैव च ॥
एवंविधानां द्रव्याणामन्येषां चोपसेवनात् ॥ ७९ ॥
वायुः प्रकुपितः कोष्ठे शूलं संजनयेद्भृशम् ॥
निरुच्छ्वासी भवेत्तेन वेदनापीडितो नरः ॥ ८० ॥
[2]शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः ॥
शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते ॥ ८१ ॥
निराहारस्य यस्यैव तीव्रं शूलमुदीर्यते ॥
प्रस्तब्धगात्रो भवति कृच्छ्रेणोच्छ्वसितीव च ॥ ८२ ॥
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥
एतैर्लिङ्गैर्विजानीयाच्छूलं वातसमुद्भवम् ॥ ८३ ॥
तृष्णा दाहो मदो मूर्च्छा तीव्रं शूल तथैव च ॥
शीताभिकामो भवति शीतेनैव प्रशाम्यति ॥ ८४ ॥
एतैर्लिङ्गैर्विजानीयाच्छूलं पित्तसमुद्भवम् ॥
शूलेनोत्पीड्यमानस्य हृल्लास उपजायते ॥ ८५ ॥

---

१ अस्याग्रे केचित् 'लघ्वन्न दीपन स्निग्धमुष्ण वातानुलोमनम् । बृहण च भवेद्यच्च तद्धित सर्वगुल्मिनाम् ॥ स्थानेऽवसेको रक्तस्य बाहुमध्ये सिराव्यधः । स्वेदोऽनुलोमन चैव प्रशस्त सर्वगुल्मिनाम्' इत्यादिकं पठन्ति । २ 'शङ्का-स्फोटनवत्' इति पा० ।

अतीव पूर्णकोष्ठत्वं तथैव गुरुगात्रता ॥
एतच्छ्लेष्मसमुत्थस्य शूलस्योक्तं निदर्शनम् ॥ ८६ ॥
सर्वाणि दृष्ट्वा रूपाणि निर्दिशेत्सान्निपातिकम् ॥
सन्निपातसमुत्थानमसाध्यं तं विनिर्दिशेत् ॥ ८७ ॥
शूलानां लक्षणं प्रोक्तं [1]चिकित्सां तु निबोध मे ॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ॥ ८८ ॥
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥
पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितैर्हितः ॥ ८९ ॥
त्रिवृच्छाकेन वा स्निग्धमुष्णं भुञ्जीत भोजनम् ॥
च्चिरबिल्वाङ्कुरान् वापि तैलभृष्टांस्तु भक्षयेत् ॥ ९० ॥
वैहङ्गांश्च रसान् स्निग्धान् जाङ्गलान् शूलपीडितः ॥
यथालाभं निषेवेत मांसानि बिलशायिनाम् ॥ ९१ ॥
सुरा सौवीरकं चुक्रं मस्तूदश्विच्चथा दधि ॥
सकाललवणं पेयं शूले वातसमुद्भवे ॥ ९२ ॥
कुलत्थयूषो युक्ताम्लो लावकीयूषसंस्कृतः ॥
ससैन्धवः समरिचो वातशूलविनाशनः ॥ ९३ ॥
विडङ्गशिग्रुकम्पिल्लपथ्याश्यामाम्लचेतसान् ॥
[2]सुरसामश्वमूत्रीं च सौवर्चलयुतान् पिबेत् ॥ ९४ ॥
मद्येन वातजं शूलं क्षिप्रमेव प्रशाम्यति ॥
पृथ्वीकाजाजिचविकायवानीव्योषचित्रकाः ॥ ९५ ॥
पिप्पल्यः पिप्पलीमूलं सैन्धवं चेति चूर्णयेत् ॥
तानि चूर्णानि पयसा पिबेत् काम्बलिकेन वा ॥ ९६ ॥
मध्वासवेन चुक्रेण सुरासौवीरकेण वा ॥
[3]अथवै(चै)तानि चूर्णानि मातुलुङ्गरसेन वा ॥ ९७ ॥

---

१ 'च्चिकित्सां च' इति हाराण० । २ 'सुरसामश्वकर्णं च' इति हाराण० । ३ 'अथवैतानि' इति हाराण० ।

तथा बदरयूषेण भावितानि पुनः पुनः ॥
तानि हिङ्गुप्रगाढानि सह शर्करया पिबेत् ॥ ९८ ॥
सह दाडिमसारेण वर्तिः कार्या भिषग्जिता ॥
सा वर्तिर्वातिकं शूलं क्षिप्रमेव व्यपोहति ॥ ९९ ॥
गुडतैलेन वा लीढा पीता मद्येन वा पुनः ॥
बुभुक्षाप्रभवे शूले लघु संतर्पणं हितम् ॥ १०० ॥
उष्णैः क्षीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ॥
वातशूले समुत्पन्ने रूक्षं स्निग्धेन भोजयेत् ॥ १०१ ॥
सुसंस्कृताः प्रदेयाः स्युर्घृतपूरा विशेषतः ॥
वारुणीं च पिबेज्जन्तुस्तथा संपद्यते सुखी ॥ १०२ ॥
एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितम् ॥
अथ पित्तसमुत्थस्य क्रियां वक्ष्याम्यतः परम् ॥ १०३ ॥
स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः ॥
शीतलानि च सेवेत सर्वाण्युष्णानि वर्जयेत् ॥ १०४ ॥
मणिराजतताम्राणि भाजनानि च सर्वशः ॥
वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् ॥ १०५ ॥
गुडः[1] शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ॥
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ १०६ ॥
रसान् सेवेत पित्तघ्नान् पित्तलानि विवर्जयेत् ॥
पालाशं धान्वनं वाऽपि पिबेद्यूषं सशर्करम् ॥ १०७ ॥
परूषकाणि मृद्वीकाखर्जूरोदकजान्यपि ॥
तत् पिबेच्छर्करायुक्तं पित्तशूलनिवारणम् ॥ १०८ ॥
अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥
वमनं कारयेत्तत्र पिप्पलीवारिणा भिषक् ॥ १०९ ॥

---

१ 'गुडशालियवाः' इति हाराण० ।

रूक्षः स्वेदः प्रयोज्यः स्यादन्याश्चोष्णाः क्रिया हिताः ॥
पिप्पली शृङ्गवेरं च श्लेष्मशूले भिषग्जितम् ॥ ११० ॥

पाठां वचां त्रिकटुकं तथा कटुकरोहिणीम् ॥
चित्रकस्य च [1]निर्यूहे पिबेद्यूषं [2]सहार्जकम् ॥ १११ ॥

एरण्डफलमूलानि मूलं गोक्षुरकस्य च ॥
शालपर्णीं [3]पृश्निपर्णीं बृहतीं कण्टकारिकाम् ॥ ११२ ॥

दद्याच्छृगालविन्नां च सहदेवां तथैव च ॥
महासहां क्षुद्रसहां [4]मूलमिक्षुरकस्य च ॥ ११३ ॥

एतत् संभृत्य संभारं जलद्रोणे विपाचयेत् ॥
चतुर्भागावशेषं तु यवक्षारयुतं पिबेत् ॥ ११४ ॥

वातिकं पैत्तिकं वाऽपि श्लैष्मिकं सान्निपातिकम् ॥
प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः ॥ ११५ ॥

[5]पिप्पली स्वर्जिकाक्षारो यवाश्चित्रक एव च ॥
सेव्यं [6]चैतत् समानीय भस्म कुर्याद्विचक्षणः ॥ ११६ ॥

तदुष्णवारिणा पीतं श्लेष्मशूले भिषग्जितम् ॥
रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः ॥ ११७ ॥

स संरुद्धः करोत्याशु [7]साध्मानं गुडगुडायनम् ॥
सूचीभिरिव [8]निस्तोदं कृच्छ्रोच्छ्वासी तदा नरः ॥ ११८ ॥

नान्नं वाञ्छति नो निद्रामुपैत्यर्तिनिपीडितः ॥
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ॥ ११९ ॥

---

१ 'निर्यूहे' इति हाराण० । २ 'समार्जकम्' इति हाराण० । ३ 'शालिपर्णीं पृष्ठपर्णीं' इति पा० । ४ 'मूलञ्चैक्षुरकस्य च' इति हाराण० । ५ 'पिप्पल्यः स्वर्जिकाक्षारो यव°' इति हाराण० । ६ 'चैव समानीय' इति हाराण० । ७ 'ध्मान गुडगुडायनम्' इति हाराण० । ८ 'निस्तोदः' इति हाराण० ।

तत्र पुष्करमूलानि हिङ्गु सौवर्चलं विडम् ॥
सैन्धवं [1]तुम्बुरुं पथ्यां चूर्णं कृत्वा तु पाययेत् ॥ १२० ॥
पार्श्वहृद्बस्तिशूलेषु यवक्वाथेन संयुतम् ॥
सर्पिः प्लीहोदरोक्तं वा घृत वा हिङ्गुसंयुतम् ॥ १२१ ॥
[2]बीजपूरकसारं वा पयसा सह साधितम् ॥
एरण्डतैलमथवा मद्यमस्तुपयोरसैः ॥ १२२ ॥
भोजयेच्चापि पयसा जाङ्गलेन रसेन वा ॥
प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः ॥ १२३ ॥
तदाऽस्य भोजनं भुक्तं सोपस्तम्भं न पच्यते ॥
उच्छ्वसित्यामशकृता शूलेनाहन्यते मुहुः ॥ १२४ ॥
नैवासने न शयने [3]तिष्ठन् वा लभते सुखम् ॥
कुक्षिशूल इति ख्यातो वातादामसमुद्भवः ॥ १२५ ॥
वमनं कारयेत्तत्र लङ्घयेद्वा यथाबलम् ॥
संसर्गपाचनं कुर्यादम्लैर्दीपनसंयुतैः ॥ १२६ ॥
नागरं दीप्यकं चव्यं हिङ्गु सौवर्चलं विडम् ॥
[4]मातुलुङ्गस्य बीजानि तथा श्यामोरुबूकयोः ॥ १२७ ॥
बृहत्याः कण्टकार्याश्च क्वाथं शूलहरं पिबेत् ॥
वचा सौवर्चलं हिङ्गु कुष्ठं सातिविषाऽभया ॥ १२८ ॥
कुटजस्य च बीजानि सद्यःशूलहराणि तु ॥
[5]विरेचनं प्रयुञ्जीत ज्ञात्वा दोषबलाबलम् ॥ १२९ ॥
स्नेहबस्तीन्निरूहांश्च कुर्याद्दोषनिबर्हणान् ॥
उपनाहाः स्नेहसेका धान्याम्लपरिषेचनम् ॥ १३० ॥

---

१ 'तुम्बुरूपथ्याचूर्णं' इति हाराण० । २ 'पिबेद्बीजकसारं च' इति पा० । ३ 'तिष्ठन् स लभते' इति हाराण० । 'तिष्ठन्न' इति च पा० । ४ 'मातुलुङ्गस्याश्च बीजानि' इति हाराण० । ५ 'विरेचनं' इति हाराण० ।

अवगाहाश्च[1] शस्यन्ते यच्चान्यदपि तद्धितम् ॥
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ॥ १३१ ॥
हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं[2] परम् ॥
स हृच्छूल इति ख्यातो रसमारुतसंभवः ॥ १३२ ॥
तत्रापि कर्माभिहितं यदुक्तं हृद्विकारिणाम् ॥
संरोधात् कुपितो वायुर्बस्तिमावृत्य तिष्ठति ॥ १३३ ॥
बस्तिवङ्क्षणनाभीषु ततः शूलोऽस्य जायते ॥
विण्मूत्रवातसंरोधी बस्तिशूलः स मारुतात्[3] ॥ १३४ ॥
नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रान्त्रमर्दकः ॥
मूत्रमावृत्य गृह्णाति मूत्रशूलः स मारुतात् ॥ १३५ ॥
वायुः प्रकुपितो यस्य रूक्षाहारस्य देहिनः ॥
मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकम् ॥ १३६ ॥
शूलं संजनयंस्तीव्रं स्रोतांस्यावृत्य तस्य हि ॥
दक्षिणं यदि वा वामं कुक्षिमादाय जायते ॥ १३७ ॥
सर्वत्र वर्धते क्षिप्रं भ्रमंस्त्वथ[4] सघोषवान् ॥
पिपासा वर्धते तीव्रा भ्रमो मूर्च्छा च जायते ॥ १३८ ॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ॥
विट्शूलमेतज्जानीयाद्भिषक् परमदारुणम् ॥ १३९ ॥
क्षिप्रं दोषहरं कार्यं भिषजा साधु जानता ॥
स्वेदनं शमनं[5] चैव निरूहाः स्नेहबस्तयः ॥ १४० ॥
पूर्वोद्दिष्टान् पाययेत योगान् कोष्ठविशोधनान् ॥
उदावर्तहराश्चास्य क्रियाः सर्वाः सुखावहाः ॥ १४१ ॥

---

१ श्लोकार्धमिदं हाराणचन्द्रो न पठति। २ 'उच्छ्वासरोधक' इति हाराण०। ३ 'संज्ञित॰' इति पा०। ४ 'शूल तत्र सघोषवत्' इति हाराण०। ५ 'वमन चैव' इति हाराण०।

अतिमात्रं यदा भुक्तं पावके मृदुतां गते ॥
स्थिरीभूतं तु तत्कोष्ठे वायुरावृत्य तिष्ठति ॥ १४२ ॥
अविपाकगतं ह्यन्नं शूलं तीव्रं करोत्यति ॥
मूर्च्छाऽऽध्मानं [1]विदाहश्च हृदुत्क्लेशो विलम्बिका ॥ १४३ ॥
विरिच्यते छर्दयति कम्पतेऽथ विमुह्यति ॥
[2]अविपाकाद्भवेच्छूलस्त्वन्नदोषसमुद्भवः ॥ १४४ ॥
वमनं लङ्घन स्वेदः पाचनं फलवर्तयः ॥
क्षारा[3]श्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः ॥ १४५ ॥
गुल्मावस्थाः क्रियाः कार्या यथावत् सर्वशूलिनाम् ॥

इति श्रीसुश्रुतसंहितायामुत्तरत[4]न्त्रान्तर्गते कायचिकित्सातन्त्रे गुल्मप्रतिषेधो नाम (चतुर्थोऽध्यायः, आदितः) द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशत्तमोऽध्यायः ।

अथातो हृद्रोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
वेगाघातोष्णरूक्षान्नैरतिमात्रोपसेवितैः ॥
विरुद्धाध्यशनाजीर्णैरसात्म्यै[5]श्चापि(ति) भोजनैः ॥ ३ ॥
दूषयित्वा रसं दोषा विगुणा हृदयं गताः ॥
कुर्वन्ति हृदये बाधां हृद्रोगं तं प्रचक्षते ॥ ४ ॥

---

१ 'विदाह च हृदुत्क्लेश विलम्बिकाम्' इति हाराण० । २ 'अविपाकाद्' इति, 'वमनं लङ्घन' इति श्लोकार्धं हाराणचन्द्रो न पठति । ३ 'क्षारचूर्णानि' इति पा० । ४ "°तन्त्रे गुल्मप्रति°" इति हाराण० । ५ "°श्चापि भोजनैः" इति हाराण० ।

चतुर्विधः स [1]दोषैः स्यात् [2]कृमिभिश्च पृथक् पृथक् ॥
लक्षणं तस्य वक्ष्यामि चिकित्सितमनन्तरम् ॥ ५ ॥
आयम्यते मारुतजे हृदयं [3]तुद्यते तथा ॥
निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि च ॥ ६ ॥
[4]तृष्णोषादाहचोषाः स्युः पैत्तिके हृदयक्लमः ॥
धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ ७ ॥
गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् ॥
माधुर्यमपि चाऽऽस्यस्य बलासावतते हृदि[5] ॥ ८ ॥
उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः ॥
अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत् ॥ ९ ॥
[6]भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः ॥
कृमिजे कृमिजातीनां श्लैष्मिकाणां च ये मताः ॥ १० ॥
वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ॥
द्विपञ्चमूलक्काथेन सस्नेहलवणेन तु ॥ ११ ॥
पिप्पल्येलावचाहिङ्गुयवभस्मानि सैन्धवम् ॥
सौवर्चलमथो शुण्ठीमजमोदां च चूर्णितम् ॥ १२ ॥
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः ॥
पाययेत विशुद्धं च स्नेहेनान्यतमेन वा ॥ १३ ॥
भोजयेज्जीर्णशाल्यन्नं जाङ्गलैः सघृतै रसैः ॥
वातघ्नसिद्धं तैलं च दद्याद्वस्तिं प्रमाणतः ॥ १४ ॥
श्रीपर्णीमधुकक्षौद्रसितोत्पलजलैर्वमेत् ॥
पित्तोपसृष्टे हृदये सेवेत मधुरैः श्रृतम् ॥ १५ ॥

---

१ 'दोषैश्च पञ्चमः क्रिमिभिस्तथा। पृथग्लिङ्ग प्रवक्ष्यामि' इति हाराण०। २ 'पञ्चमः क्रिमिभिस्तथा। पृथग्लिङ्ग प्रवक्ष्यामि' इति पा०। ३ 'पीड्यते' इति पा०। ४ 'तृष्णोष्मदाह°' इति हाराण०। ५ अस्याग्रे—'त्रिदोष सर्वलिङ्ग स्या-दोजःक्षयकर परम्' इत्यधिक लभ्यते हाराण०ग्रन्थे। ६ एतत्पूर्वं—'पाण्डुत्व स्वेदशोथौ च श्वासो हृदयकम्पनम्' इति पाठोऽधिको हाराण०पुस्तके।

घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥
तृप्तस्य च रसैर्मुख्यैर्मधुरैः[1] सघृतैर्भिषक् ॥ १६ ॥
सक्षौद्रं वितरेद्बस्तौ[2] तैलं मधुकसाधितम् ॥
वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके ॥ १७ ॥
चूर्णं तु पाययेतोक्तं वातजे भोजयेच्च[3] तम् ॥
फलादिमथ मुस्तादिं त्रिफलां वा पिबेन्नरः ॥ १८ ॥
श्यामात्रिवृत्कल्कयुतं घृतं वाऽपि विरेचनम् ॥
बलातैलैर्विदध्याच्च[4] बस्तिं बस्तिविशारदः ॥ १९ ॥
कृमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ॥
दध्ना च पललोपेतं त्र्यहं, पश्चाद्विरेचयेत् ॥ २० ॥
सुगन्धिभिः सलवणैर्योगैः[5] साजाजिशर्करैः ॥
विडङ्गगाढं धान्याम्लं पाययेताप्यनन्तरम् ॥ २१ ॥
हृदयस्थाः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ॥
यवान्नं वितरेच्चास्य सविडङ्गमतः परम् ॥ २२ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[6] कायचिकित्सातन्त्रे हृद्रोगप्रतिषेधो नाम ( पञ्चमोऽध्यायः, आदितः ) त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

अथातः पाण्डुरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् ॥
निषेवमाणस्य विदूष्य रक्तं कुर्वन्ति दोषास्त्वचि पाण्डुभावम् ॥३॥

---

१ "°जाङ्गलैः" इति हाराण० । २ 'वितरेद्बस्ति' इति हाराण० । ३ 'भोजयेद्घृतम्' इति पा० । ४ 'बलातैल विदध्यात्' इति पा० । ५ 'सपललै°' इति पा० । ६ "°तन्त्रे हृद्रोग°" इति हाराण० ।

पाण्ड्वामयोऽष्टार्धविधः प्रदिष्टः पृथक्समस्तैर्युगपच्च दोषैः ॥
सर्वेषु [1]चैतेष्विह पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः ॥४॥
त्वक्स्फोटनं ष्ठीवनगात्रसादौ मृद्भक्षणं प्रेक्षणकूटशोथाः ॥
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥ ५ ॥
स कामलापानकिपाण्डुरोगः कुम्भाह्वयो लाघर(व)कोऽलसाख्यः ॥
विभाष्यते लक्षणमस्य कृत्स्नं निबोध वक्ष्याम्यनुपूर्वशस्तत्[2] ॥ ६ ॥
कृष्णेक्षणं कृष्णसिरावनद्धं तद्वर्णविण्मूत्रनखाननं च ॥
वातेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथाऽन्यैस्तदुपद्रवैश्च ॥ ७ ॥
पीतेक्षणं पीतसिरावनद्धं तद्वर्णविण्मूत्रनखाननं च ॥
पित्तेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथाऽन्यैस्तदुपद्रवैश्च ॥ ८ ॥
शुक्लेक्षणं शुक्लसिरावनद्धं तद्वर्णविण्मूत्रनखाननं च ॥
कफेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथाऽन्यैस्तदुपद्रवैश्च ॥ ९ ॥
सर्वात्मके सर्वमिदं व्यवस्येद् वक्ष्यामि लिङ्गान्यथ कामलायाः ॥
यो ह्यामयान्ते सहसाऽन्नमम्लमद्यादपथ्यानि च तस्य पित्तम् ॥१०॥
करोति पाण्डुं[3] वदनं विशेषात् पूर्वेरितौ[4] तन्द्रिबलक्षयौ च ॥
भेदस्तु तस्याः खलु कुम्भसाह्वः शोफो महांस्तत्र च पर्वभेदः ॥११॥
ज्वराङ्गमर्दभ्रमसादतन्द्राक्षयान्वितो लाघर(व)कोऽलसाख्यः[5] ॥
तं वातपित्ताद्धरित्पीतनीलं[6] हलीमकं नाम वदन्ति तज्ज्ञाः ॥ १२ ॥

---

१ 'चैवेष्विह' इति हाराण० । २ '°स्तम्' इति पा० । 'अत्र कामलेति कामशब्दोऽय साधारणशब्दविशेपात्स्वल्पे भक्ताद्यभिलाषे प्रवर्तते, त लातीति कामला । दुष्टत्वेन कुत्सितोऽपानोऽपानकः, सोऽस्यास्तीति अपानकी, कामलकाख्योऽपानकिपाण्डुरोग. कामलापानकिपाण्डुरोगः । कुम्भकामलकाख्योऽपानकिपाण्डुरोगस्त्वत्र कुम्भाह्वय उच्यते, भीमो भीमसेन इतिवत् । रोगस्यास्य कुम्भकामलेति सज्ञा तन्त्रान्तरे उपदिश्यते । स एव पुनर्ज्वरादिभिर्लाघव करोति, सत्यपि सामर्थ्ये कर्मस्वनुत्साह च जनयतीत्यलसाख्योऽपानकिपाण्डुरोगस्तु लाघवक उच्यते' इति हाराणचन्द्रः । ३ 'पीतवदन' इति पा० । ४ 'तन्द्राविलत्व प्रथमोदिताश्च' इति हाराण० । ५ 'लाघवको°' इति हाराण० । ६ 'वातपित्ताभिपरीतलिङ्ग' इति हाराण० ।

उपद्रवास्तेष्वरुचिः पिपासा छर्दिर्ज्वरो मूर्धरुजाऽग्निसादः ॥
शोफस्तथा कण्ठगतोऽबलत्वं मूर्च्छा क्लमो हृदयवपीडनं च ॥ १३ ॥
साध्यं तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् ॥
संपादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णयुतैः प्रयोगैः ॥ १४ ॥
पिबेद्धृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेव वाऽपि ॥
विरेचनद्रव्यकृतं [१]पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥ १५ ॥
मूत्रे निकुम्भार्धपलं विपाच्य पिबेदभीक्ष्णं कुडवार्धमात्रम् ॥
खादेद्गुडं वाऽप्यभयाविपक्व[२]मारग्वधादिक्कथितं पिबेद्वा ॥ १६ ॥
अयोरजोव्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा ॥
सर्पिर्मधुभ्यां विदधीत वाऽपि शास्त्रप्रदेशाभिहितांश्च योगान् ॥१७॥
हरेच्च दोषान् बहुशोऽल्पमात्रान् श्वयेद्धि दोषेष्वतिनिर्हृतेषु ॥
धात्रीफलानां रसमिक्षुजं च मन्थं पिबेत् क्षौद्रयुतं हिताशी ॥१८॥
उभे बृहत्यौ रजनीं शुकाख्यां काकादनीं चापि सकाकमाचीम् ॥
आदारिबिम्बीं सकदम्बपुष्पीं विपाच्य सर्पिर्विपचेत् कषाये ॥ १९ ॥
तत् पाण्डुतां हन्त्युपयुज्यमानं क्षीरेण वा [३]मागधिका यथाग्नि ॥
हितं च यष्टीम[४]धुजं कषायं चूर्णं समं वा मधुनाऽवलिह्यात् ॥ २० ॥
[५]गोमूत्रयुक्तं त्रिफलादलानां दत्त्वा[६]ऽऽयसं चूर्णमनल्पकालम् ॥
प्रवालमुक्ताञ्जनशङ्खचूर्णं लिह्यात्तथा काञ्चनगैरिकोत्थम् ॥ २१ ॥
आजं शकृत्स्या[७]त् कुडवप्रमाणं विडं हरिद्रा लवणोत्तमं च ॥
पृथक् पलांशानि समग्रमेतच्चूर्णं हिताशी मधुनाऽवलिह्यात् ॥ २२ ॥

---

१ 'पिबेद्धि' इति हाराण०। २ "°प्यभयाविमिश्र°" इति हाराण०। ३ 'मागधिक यथाग्नि' इति हाराण० । ४ 'यष्टीमधुक' इति हाराण० । ५ 'गोमूत्रपीता त्रिफलादलाना', 'गोमूत्रपीतां त्रिफला सपिष्टा' इति पा० । ६ "°ऽऽयसा चूर्ण°" इति हाराण० । ७ 'शकृद्र°' इति पा० । 'शकृद्वा' इति हाराण० ।

मण्डूरलोहाग्निविडङ्गपथ्याव्योषांशकः सर्वसमानताप्यः ॥
[1]मूत्रासुतोऽयं मधुनाऽवलेहः पाण्ड्वामयं हन्त्यचिरेण घोरम् ॥ २३ ॥
बिभीतकायोमलनागराणां चूर्णं तिलानां च गुडश्च मुख्यः ॥
[2]तक्रानुपानो वटकः प्रयुक्तः क्षिणोति घोरानपि पाण्डुरोगान् ॥२४॥
सौवर्चलं हिङ्गु किराततिक्तं कलायमात्राणि सुखाम्बुना वा ॥
मूर्वांहरिद्रामलकं च लिह्यात् स्थितं गवां सप्तदिनानि मूत्रे ॥ २५ ॥
मूलं बलाचित्रकयोः पिबेद्वा पाण्ड्वामयार्तोऽक्षसमं हिताशी ॥
सुखाम्बुना वा लवणेन तुल्यं शिग्रोः फलं क्षीरभुजोपयोज्यम् २६
न्यग्रोधवर्गस्य पिबेत् कषायं शीतं सिताक्षौद्रयुतं हिताशी ॥
शालादिकं चाप्यथ सारचूर्णं धात्रीफलं वा मधुनाऽवलिह्यात् ॥२७॥
विडङ्गमुस्तत्रिफलाजमोदपरूषकव्योषविनिर्दहन्यः ॥
[3]चूर्णानि कृत्वा गुडशर्करे च तथैव सर्पिर्मधुनी शुभे च ॥ २८ ॥
संभारमेतद्विपचेन्निधाय सारोदके सारवतो गणस्य ॥
जातं च लेह्यं मतिमान् विदित्वा निधापयेन्मोक्षकजे समुद्गे ॥ २९ ॥
हन्त्येष लेहः खलु पाण्डुरोगं सशोथमुग्रामपि कामलां च ॥
सशर्करा कामलिनां त्रिभण्डी हिता गवाक्षी सगुडा च शुण्ठी ३०
कालेयके चापि घृतं विपक्वं हितं च तत् स्याद्रजनीविमिश्रम् ॥
धातुं नदीजं जतु शैलजं वा कुम्भाह्वये मूत्र[4]युतं पिबेद्वा ॥ ३१ ॥
[5]मूत्रे स्थितं सैन्धवसंप्रयुक्तं मासं पिबेद्वाऽपि हि लोहकिट्टम् ॥
दग्ध्वाऽक्षकाष्ठैर्मलमायसं वा गोमूत्रनिर्वापितम[6]ष्टवारान् ॥ ३२ ॥

---

१ 'मूत्रायुतोऽय' इति हाराण०। २ 'तक्रानुपान वटकाप्रयुक्त' इति हाराण०। ३ 'चूर्णीकृता वा गुड°' इति हाराण०। ४ 'क्षौद्रयुतम्' इति हाराण०। ५ 'मूत्रस्थित' इति हाराण०। ६ '°मष्टवारम्' इति हाराण०।

विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्यात् ॥
सिन्धूद्भवं वाऽग्निसमं च कृत्वा [1]क्षिप्त्वा च मूत्रे सकृदेव तप्तम् ३३
लौहं च किट्टं बहुशश्च तप्त्वा निर्वाप्य मूत्रे बहुशस्तथैव ॥
एकीकृतं गोजलपिष्टमेतदेकध्यमावाप्य पचेदुखायाम् ॥ ३४ ॥
यथा न दह्येत तथा विशुष्कं चूर्णीकृतं पेयमुदश्विता तत् ॥
तक्रौदनाशी विजयेत रोगं पाण्डुं तथा दीपयतेऽनलं च ॥ ३५ ॥
द्राक्षागुडूच्यामलकीरसैश्च सिद्धं घृतं लाघर(व)के हितं च ॥
गौडानरिष्टान् मधुशर्कराश्च मूत्रासवान् क्षारकृतांस्तथैव ॥ ३६ ॥
स्निग्धान् रसानामलकैरुपेतान् कोलान्वितान् वाऽपि हि जाङ्गलानाम्॥
सेवेत शोफाभिहितांश्च योगान् पाण्ड्वामयी शालियवांश्च नित्यम् ३७
श्वासातिसारारुचिकासमूर्च्छा[2]तृट्छर्दिशूलज्वरशोफदाहान् ॥
तथाऽविपाकस्वरभेदसादान् जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ॥ ३८ ॥
अन्तेषु शूनं परिहीनमध्यं म्लानं तथाऽन्तेषु च मध्यशूनम् ॥
गुदे च शेफस्यथ मुष्क[3]शूनं प्रताम्यमानं च विसंज्ञकल्पम् ॥ ३९ ॥
विवर्जयेत् पाण्डुकिनं यशोऽर्थी तथाऽतिसारज्वरपीडितं च ॥४०॥

इति श्रीसुश्रुतसंहितायामुत्तरत[4]न्त्रान्तर्गते कायचिकित्सातन्त्रे
पाण्डुरोगप्रतिषेधो नाम ( षष्ठोऽध्यायः, आदितः )
चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

---

१ 'सिक्त्वा च' इति हाराण० । २ 'तृष्णां ज्वर च्छर्दिमथातिसार मूर्च्छा क्षय श्वासमनन्नलिप्साम् । तथाऽविपाकस्वरभेदसादान् जयेद्यथावत् प्रसमीक्ष्य शास्त्रम् ॥' इति पा० । ३ 'मुष्कयोश्च शून, प्रताम्यन्तमसंज्ञकल्पम्' इति हाराण० । ४ "°तन्त्रे पाण्डु°" इति हाराण० ।

# पञ्चचत्वारिंशत्तमोऽध्यायः।

अथातो रक्तपित्तप्रतिषेधं व्याख्यास्यामः॥ १॥

यथोवाच भगवान् धन्वन्तरिः॥ २॥

क्रोधशोकभयायासविरुद्धान्नातपानलान्॥
[1]कट्वम्ललवणक्षारतीक्ष्णोष्णातिविदाहिनः॥ ३॥
नित्यम[2]भ्यसतो दुष्टो रसः पित्तं प्रकोपयेत्॥
विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितम्॥ ४॥
ततः प्रवर्त्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा॥
आमाशयाद्व्रजेदूर्ध्वमधः पक्वाशयाद्व्रजेत्॥ ५॥
[3]विदग्धयोर्द्वयोश्चापि द्विधा[4]भागं प्रवर्त्तते॥
केचित् सयकृतः प्लीह्नः प्रवदन्त्यसृजो गतिम्॥ ६॥
ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्ग[5]तम्॥
सदनं शीतकामित्वं कण्ठधूमायनं वमिः॥ ७॥
लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति॥
बाह्यासृग्लक्षणैस्तस्य सङ्ख्यादोषोच्छ्रितीर्विदुः॥ ८॥

दौर्बल्यश्वासकासज्वरवमथुम[6]दास्तन्द्रितादाहमूर्च्छा
[7]भुंक्ते चान्ने विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा॥
तृष्णा [8]कण्ठस्य भेदः शिरसि च [9]दवनं पूतिनिष्ठीवनं च
द्वेषो भक्तेऽविपाकौ [10]विरतिरपि रते रक्तपित्तोपसर्गाः॥ ९॥

---

१ 'तीक्ष्णमुष्णाम्ललवण दिवास्वप्नं विदाहि यत्' इति पा०। २ '°मभ्यस्यतो दुष्टो रसः पित्त च कोपयेत्' इति हाराण०। ३ 'विदग्धयोश्चाप्युभयोः' इति पा०। ४ 'द्विधामार्गं' इति पा०। 'द्विधा मार्गः' इति हाराण०। ५ 'युगपद्गति.' इति पा०। ६ '°मदा॰ पाण्डुता दाह°' इति हाराण०। ७ 'भुक्ते घोरो विदाह°' इति पा०। ८ 'कोष्ठस्य भेदः' इति पा०। ९ 'तपन' इति हाराण०। 'भेदः प्रविततसिरता' इति पा०। १० 'विनतिरपि भवेत्' इति पा०। 'विकृतिरपि भवेत्' इत्यपि च पा०।

मांसप्रक्षालनाभं [1]क्वथितमिव च यत् कर्दमाम्भोनिभं वा
मेदःपूयास्र[2]कल्पं यकृदिव यदि वा पक्कजम्बूफलाभम् ॥
यत् कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १० ॥

नादौ संग्राह्यमुद्रिक्तं यदसृग्[3]बलिनोऽश्नतः ॥
तत् पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहम् ॥ ११ ॥
[4]अधःप्रवृत्तं वमनै[5]रूर्ध्वगं च विरेचनैः ॥
[6]जयेदन्यतरद्वाऽपि क्षीणस्य शमनैरसृक् ॥ १२ ॥
[7]अतिप्रवृद्धदोषस्य पूर्वं लोहितपित्तिनः ॥
अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥ १३ ॥
लङ्घितस्य ततः पेयां विदध्यात् स्वल्पतण्डुलाम् ॥
[8]रसयूषौ प्रदातव्यौ सुरभिस्नेहसंस्कृतौ ॥
तर्पणं पाचनं लेहान् सर्पींषि विविधानि च ॥ १४ ॥
द्राक्षामधुककाश्मर्यसितायुक्तं विरेचनम् ॥
यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितम् ॥ १५ ॥

पयांसि शीतानि रसाश्च जाङ्गलाः सतीनयूषाश्च सशालिषष्टिकाः ॥
पटोलशेलुसुनिषण्णयूथिकावटातिमुक्ताङ्कुर[9]सिन्दुवारजम् ॥ १६ ॥
हितं च शाकं घृतसंस्कृतं सदा [10]तथैव धात्रीफलदाडिमान्वितम् ॥
रसाश्च पारावतशङ्खकूर्मजास्तथा [11]यवाग्वो विहिता घृतोत्तराः ॥ १७ ॥

---

१ 'क्वथितमिव यकृत्' इति पा० । २ 'मेद-पूयास्थिकल्प' इति पा० । ३ '°बलिनो यत-' इति हाराण० । ४ तत्रान्तरे तु 'अधोग वमनैर्धीमानूर्ध्वग रेचनैर्जयेत्' । 'ऊर्ध्वग वाऽप्यधोग वा क्षीणस्य शमनैर्जयेत्' इति पठ्यते । ५ '°रूर्ध्वमार्ग विरेचनैः' इति हाराण० । ६ 'जयेदन्यतरच्चापि' इति हाराण० । ७ 'अतिप्रवृत्तदोषस्य' इति हाराण० । ८ श्लोकार्धमिद हाराणचन्द्रो न पठति । ९ '°सिन्धुवारजम्' इति हाराण० । १० 'यथैव' इति हाराण० । ११ 'यवाग्वोऽभिहिता' इति हाराण० ।

सन्तानिकाश्चोत्पलवर्गसाधिते क्षीरे प्रशस्ता मधुशर्करोत्तराः ॥
हिमाः प्रदेहा मधुरा[1] गणाश्च ये घृतानि पथ्यानि च रक्तपित्तिनाम् ॥
मधूकशोभाञ्जनकोविदारजैः प्रियङ्गुकायाः कुसुमैश्च चूर्णितैः ॥
भिषग्विदध्याच्चतुरः समाक्षिकान् हिताय लेहानसृजः प्रशान्तये १९
लिह्याच्च [2]दूर्वावटजांश्च पल्लवान् मधुद्वितीयान् सितकर्णिकस्य[3] च ॥
हितं च खर्जूरफलं समाक्षिकं फलानि चान्यान्यपि तद्गुणान्यथ २०

रक्तातिसारप्रोक्तांश्च योगानत्रापि योजयेत् ॥
[4]शुक्लेक्षुकाण्डमापोथ्य नवे कुम्भे हिमाम्भसा ॥ २१ ॥
योजयित्वा क्षिपेद्रात्रावाकाशे सोत्पलं तु तत् ॥
प्रातः स्रुतं क्षौद्रयुतं पिबेच्छोणितपित्तवान् ॥ २२ ॥
पिबेच्छीतकषायं वा जम्ब्वाम्रार्जुनसंभवम् ॥
उदुम्बरफलं पिष्ट्वा पिबेत्तद्रसमेव वा ॥ २३ ॥
त्रपुषीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ॥
पिबेदक्षसमं कल्कं यष्टीमधुकमेव वा ॥ २४ ॥
चन्दनं मधुकं रोध्रमेवमेव समं पिबेत् ॥
करञ्जबीजमेवं वा सिताक्षौद्रयुतं पिबेत् ॥ २५ ॥
मज्जानमिङ्गुदस्यैवं पिबेन्मधुकसंयुतम् ॥
सुखोष्णं लवणं बीजं कारञ्जं दधिमस्तुना ॥ २६ ॥
पिबेद्वाऽपि त्र्यहं मर्त्यो रक्तपित्ताभिपीडितः ॥
रक्तपित्तहराः शस्ताः [5]षडेते योगसत्तमाः ॥ २७ ॥
पथ्याश्चैवावपीडेषु घ्राणतः प्रस्रुतेऽसृजि ॥
अतिनिस्रुतरक्तो वा क्षौद्रयुक्तं पिबेदसृक् ॥
यकृद्वा भक्षयेदाजमामं पित्तसमायुतम् ॥ २८ ॥

---

१ 'मधुशर्कराश्च' इति हाराण० । २ 'दुग्धद्रुमपल्लवांश्च°' इति पा० । ३ 'शृतस्य' इति पा० । ४ 'शुक्लेक्षुकाण्ड°' इति हाराण० । ५ 'नवैते योग°' इति हाराण० ।

पलाशवृक्षस्वरसे विपक्वं सर्पिः पिबेत् क्षौद्रयुतं सुशीतम् ॥
वनस्पतीनां स्वरसैः कृतं वा सशर्करं क्षीरघृतं पिबेद्वा ॥ २९ ॥
द्राक्षामुशीराण्यथ पद्मकं सिता पृथक्पलांशान्युदके समावपेत् ॥
स्थितं निशां तद्रुधिरामयं जयेत् पीतं पयो वाऽम्बुसमं हिताशिनः ॥
तुरङ्गवर्चःस्वरसं समाक्षिकं पिबेत् सिताक्षौद्रयुत वृषस्य वा ॥
[1]लिहेत्तथा वास्तुकबीजचूर्णं क्षौद्रान्वितं तण्डुलसाह्वयं वा ॥ ३१ ॥
लिह्याच्च [2]लाजाञ्जनचूर्णमेकमेवं सिताक्षौद्रयुतां तुगाख्याम् ॥
द्राक्षां सितां तिक्तकरोहिणीं च हिमाम्बुना वा मधुकेन युक्ताम् ३२
पथ्यामहिंस्रां [3]रजनीं घृतं च लिह्यात्तथा शोणितपित्तरोगी ॥
वासाकषायोत्पलमृत्प्रियङ्गुरोध्रा[4]ञ्जनाम्भोरुहकेशराणि ॥ ३३ ॥
पीत्वा सिताक्षौद्रयुतानि जह्यात् पित्तासृजो वेगमुदीर्णमाशु ॥
गायत्रिजम्ब्वर्जुनकोविदारशिरीषरोध्राशनशाल्मलीनाम् ॥ ३४ ॥
पुष्पाणि शिग्रोश्च विचूर्ण्य लेहो मध्वन्वितः शोणितपित्तरोगे ॥
सक्षौद्रमिन्दीवरभस्मवारि करञ्जबीजं [5]मधुसर्पिषी च ॥ ३५ ॥
जम्ब्वर्जुनाम्रक्कथितं च तोयं घ्नन्ति त्रयः पित्तमसृक् च योगाः ॥
मूलानि पुष्पाणि च मातुलुङ्ग्याः पिष्ट्वा पिबेत्तण्डुलधावनेन ॥ ३६ ॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं [6]नासिकया पयो वा ॥
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हिमं वा ॥ ३७ ॥
शीतोपचारं मधुरं च कुर्याद्विशेषतः शोणितपित्तरोगे ॥
द्राक्षाघृतक्षौद्रसितायुतेन विदारिगन्धादिविपाचितेन ॥ ३८ ॥
क्षीरेण चास्थापनमग्र्यमुक्तं हितं घृतं चाप्यनुवासनार्थम् ॥
प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैः सुवर्ण[7]कालीयकरक्तचन्दनैः ॥ ३९ ॥

---

१ 'सतण्डुलीय मधुनाऽवलेहयेत् सितायुत वास्तुकमूलमेव वा' इति पा० । २ 'कालाञ्जनचूर्ण°' इति पा० । ३ 'रजनीद्वय च' इति पा० । ४ 'नेत्राञ्जना°' इति हाराण० । ५ 'मधु शर्करा च' इति पा० । ६ 'नासिकयोः' इति पा० ७ 'कालीयकशङ्खचन्दनैः' इति हाराण० ।

सिताश्वगन्धाम्बुदयष्टिकाह्वयैर्मृणालसौगन्धिकतुल्यपेषितैः ॥
निरूह्य चैनं पयसा समाक्षिकैर्घृतप्लुतैः [१]शीतजलावसेचितम् ॥४०॥
क्षीरौदनं भुक्तमथानुवासयेद्घृतेन यष्टीमधुसाधितेन च ॥
अधोवहं [२]शोणितमेष नाशयेत्तथाऽतिसारं रुधिरस्य दुस्तरम् ॥४१॥
विरेकयोगे त्वति चैव शस्यते वाम्यश्च रक्ते विजिते बलान्वितः ४२
एवंविधा उत्तरबस्तयश्च मूत्राशयस्थे रुधिरे विधेयाः ॥
प्रवृत्तरक्तेषु च पायुजेषु कुर्याद्विधानं खलु रक्तपैत्तम् ॥ ४३ ॥

विधिश्चासृग्दरेऽप्येष स्त्रीणां कार्यो विजानता ॥
शस्त्रकर्मणि [३]रक्तं च यस्यातीव प्रवर्तते ॥ ४४ ॥
त्रयाणामपि दोषाणां [४]शोणितेऽपि च सर्वशः ॥
लिङ्गान्यालोक्य कर्तव्यं चिकित्सितमनन्तरम् ॥ ४५ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे [५]रक्तपित्तप्रतिषेधो नाम ( सप्तमोऽध्यायः, आदितः ) पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः ।

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ॥
वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः ॥ ३ ॥
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च ॥
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥ ४ ॥

---

१ 'शीतजलाम्बुसेचितम्' इति पाठमादृत्य 'शीतलद्रव्यसिद्ध जल शीतजलम्, तच्च शीतानुषङ्गादौपयौगिकत्वाच्च शीतमेव' इति हाराणचन्द्रो व्याख्यातवान्। २ 'शोणितमाशु' इति हाराण०। ३ 'रक्त वा' इति हाराण०। ४ 'शोणितस्य च सर्वश.' इति हाराण०। ५ "°तन्त्रे रक्त°" इति हाराण०।

हृत्पीडा[1] जृम्भणं ग्लानिः संज्ञानाशो बलस्य[2] च ॥
सर्वासां पूर्वरूपाणि, यथास्वं[3] ता विभावयेत् ॥ ५ ॥
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ॥
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ६ ॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ॥
मोहो मूर्च्छेति तां प्राहुः षड्विधा सा प्रकीर्तिता ॥ ७ ॥
वातादिभिः शोणितेन मद्येन च विषेण च ॥
षट्स्वप्येतासु[4] पित्तं हि प्रभुत्वेनावतिष्ठते[5] ॥ ८ ॥
(नीलं वा यदि वा कृष्णमाकाशमथ वारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते ॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ।
कार्श्यं श्यावारुणाच्छायामूर्च्छाये वातसंभवे ॥
रक्तं हरितवर्णं वा वियत् पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥
सपिपासः ससन्तापो रक्तपीतारुणेक्षणः ।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥
मेघसंकाशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे[6] ॥)
[7]अपस्मारोक्तलिङ्गानि तासामुक्तानि तत्त्वतः ॥

---

१ 'हृत्पीडा जृम्भण' इत्यारभ्य 'यथास्व ता विभावयेत्' इति यावत् पञ्चमः श्लोकोऽयमष्टमश्लोकस्याग्रे पठति हाराणचन्द्रः । २ 'बलक्षयः' इति हाराण० । ३ 'यथास्वमुपलक्षयेत्' इति पा० । ४ 'तासु षट्स्वपि' इति हाराण० । ५ हाराणचन्द्रस्तु—अस्याग्रे 'हृत्पीडा' इति पञ्चमश्लोकमत्र पठति । ६ चिह्नितोऽय पाठो हाराणचन्द्रग्रन्थेऽधिकः समुपलभ्यते । ७ श्लोकार्धमिदं हाराणचन्द्रो न पठति ।

पृथिव्यम्भस्तमोरूपं रक्तगन्धश्च तन्मयः[1] ॥ ९ ॥
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवः ॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति[2] ॥ १० ॥
गुणास्तीव्रतरत्वेन[3] स्थितास्तु विषमद्ययोः ॥
ते[4] एव तस्माज्जायेत मोहस्ताभ्यां यथेरितः ॥ ११ ॥
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥
मद्येन विलपंश्शेते नष्टविभ्रान्तमानसः ॥
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥ १२ ॥
वेपथुस्वप्नतृष्णाः स्युः स्तम्भश्च विषमूर्च्छिते ॥
वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ १३ ॥

सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च ॥
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥१४॥
सिताप्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वरसान्वितानि ॥
खर्जूरकाश्मर्यरसैः शृतानि पानानि सर्पींषि[5] च जीवनानि ॥ १५ ॥
सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च ॥
तथा यवा लोहितशालयश्च मूर्च्छासु पथ्याश्च सदा सतीनाः ॥१६॥
भुजङ्गपुष्पं मरिचान्युशीरं कोलस्य मध्यं च पिबेत् समानि ॥
शीतेन तोयेन[6] बिसं मृणालं क्षौद्रेण कृष्णां सितया च पथ्याम् १७
कुर्याच्च नासावदनावरोधं क्षीरं पिबेद्वाऽप्यथ मानुषीणाम् ॥
मूर्च्छां प्रसक्तां तु शिरोविरेकैर्जयेदभीक्ष्णं वमनैश्च [7]तीक्ष्णैः ॥ १८ ॥
[8]हरीतकीक्वाथशृतं घृतं वा धात्रीफलानां स्वरसैः कृतं वा ॥
द्राक्षासितादाडिमलाजवन्ति शीतानि नीलोत्पलपद्मवन्ति ॥ १९ ॥

---

१ 'रक्तगन्धस्तदन्वयः' इति पा०। 'रक्त गन्धश्च तन्मयः' इति हाराण०। २ 'यदभिमूर्च्छति' इति हाराण०। ३ 'तीव्रतमत्वेन' इति पा०। ४ 'त एव तस्माज्जायन्ते ताभ्या मोहा यथेरिताः' इति हाराण०। ५ 'सर्पींषि सजीवनानि' इति हाराण०। ६ 'सतीनतोयेन' इति हाराण०। ७ 'पथ्यैः' इति पा०। ८ 'हरीतकीक्वाथघृत पिबेद्वा' इति हाराण०।

पिबेत् कषायाणि च गन्धवन्ति पित्तज्वरं यानि शमं नयन्ति ॥
प्रभूतदोषस्तमसोऽतिरेकात् संमूर्च्छितो नैव विबुध्यते यः ॥ २० ॥
संन्यस्तसंज्ञो भृशदुश्चिकित्स्यो ज्ञेयस्तदा बुद्धिमता मनुष्यः ॥
यथाऽऽमलोष्टं सलिले निषिक्तं समुद्धरेदाश्वविलीनमेव ॥ २१ ॥
तद्वच्चिकित्सेत्त्वरया [1]भिषक्तमस्वेदनं मृत्युवशं [2]प्रयातम् ॥
तीक्ष्णाञ्जनाभ्यञ्जनधूमयोगैस्तथा नखाभ्यन्तरतोत्रपातैः ॥ २२ ॥
वादित्रगीतानुनयैरपूर्वैर्विघट्टनैर्गुप्तफलावघर्षैः[3] ॥
आभिः क्रियाभिश्च न-लब्धसंज्ञः सानाहलालाश्वसनश्च वर्ज्यः ॥२३॥
[4]प्रबुद्धसंज्ञं वमनानुलोम्यैस्तीक्ष्णैर्विशुद्धं लघुपथ्यभुक्तम् ॥
फलत्रिकैश्चित्रकनागराढ्यैस्[5]तथाऽश्मजाताज्जतुनः प्रयोगैः ॥
सशर्करैर्मासमुपक्रमेत विशेषतो जीर्णघृतं स पाय्यः ॥ २४ ॥

यथास्वं च ज्वरघ्नानि कषायाण्युपयोजयेत् ॥
सर्वमूर्च्छापरीतानां [6]विषजायां विषापहम् ॥ २५ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे[7] मूर्च्छाप्रतिषेधो नाम ( अष्टमोऽध्यायः, आदितः ) षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥

---

## सप्तचत्वारिंशत्तमोऽध्यायः ।

अथातः पानात्ययप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च ॥
रूक्षमाशुकरं चैव व्यवायि च विकाशि च ॥ ३ ॥

---

१ 'भिषक् तमवेदन' इति हाराण० । २ '°वशप्रयातम्' इति हाराण० । ३ '°फलावघर्षणै.' इति हाराण० । ४ 'प्रभूतसञ्ज्ञ' इति हाराण० । ५ '°नागराद्यै°' इति हाराण० । ६ 'विषजाना' इति हाराण० । ७ '°तन्त्रे मूर्च्छा°' इति हाराण० ।

औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिम् ॥
विशत्यवयवान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् ॥ ४ ॥
मारुतं कोपयेद्रौक्ष्यादाशुत्वाच्चाशुकर्मकृत् ॥
हर्षदं च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥ ५ ॥
तदम्लं रसतः प्रोक्तं लघु रोचनदीपनम् ॥
केचिल्लवणवर्ज्यांस्तु रसानत्रादिशन्ति हि ॥ ६ ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ॥
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥ ७ ॥
काम्यता मनसस्तुष्टिर्धैर्यं तेजोऽतिविक्रमः ॥
विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥ ८ ॥
तदेवानन्नमज्ञेन सेव्यमानममात्रया ॥
कायाग्निना ह्यग्निसमं समेत्य कुरुते मदम् ॥ ९ ॥
मदेन करणानां तु भावान्यत्वे कृते सति ॥
निगूढमपि भावं स्वं प्रकाशीकुरुतेऽवशः ॥ १० ॥
त्र्यवस्थश्च मदो ज्ञेयः पूर्वो मध्योऽथ पश्चिमः ॥
पूर्वे वीर्यरतिप्रीतिहर्षभाष्यादिवर्धनम् ॥ ११ ॥
प्रलापो मध्यमे मोहो युक्तायुक्तक्रियास्तथा ॥
विसंज्ञः पश्चिमे शेते नष्टकर्मक्रियागुणः ॥ १२ ॥
श्लैष्मिकानल्पपित्तांश्च स्निग्धान्मात्रोपसेविनः ॥
पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते ॥ १३ ॥

निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् ॥
उत्पादयेत् कष्टतमान् विकारानापादयेच्चापि शरीरभेदम् ॥ १४ ॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ॥
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥ १५ ॥

---

१ 'हर्षः' इति हाराण०। २ 'मांसोपसेविन.' इति पा०।

अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथाऽबलेन ॥
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान् विकारान्॥१६॥
पानात्ययं परमदं पानाजीर्णमथापि वा ॥
पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम् ॥ १७ ॥
स्तम्भाङ्गमर्दहृदयग्रहतोदकम्पाः
पानात्ययेऽनिलकृते शिरसो रुजश्च ॥
स्वेदप्रलापमुखशोषणदाहमूर्च्छाः
पित्तात्मके वदनलोचनपीतता च ॥ १८ ॥
श्लेष्मात्मके वमथुशीतकफप्रसेकाः
सर्वात्मके भवति सर्वविकारसंपत् ॥
[1]ऊष्माणमङ्गगुरुतां विरसाननत्वं
श्लेष्माधिकत्वमरु[2]चिं मलमूत्रसङ्गम् ॥ १९ ॥
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा-
[3]स्तृष्णां रुजां शिरसि सन्धिषु चापि भेदम् ॥
आध्मानमुद्गिरणमम्लरसो विदाहो-
ऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम् ॥ २० ॥
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि ॥
हृद्गात्रतोदवमथुज्वरकण्ठधूम-
मूर्च्छाकफस्रवणमूर्धरुजो विदाहः ॥ २१ ॥
द्वेषः सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः ॥
हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यम[4]ति(पि)पानहतं विजह्यात् ॥ २२ ॥

---

१ 'ऊष्मा शरीरगुरुता' इति हाराण० । २ "°रुचिर्मलमूत्रसगः' इति हा० । ३ "°स्तृष्णा रुजा' इति हाराण० । ४ "°मतिपानहत' इति हाराण० ।

जिह्वौष्ठदन्तमसितं त्वथवाऽपि नीलं
पीते च यस्य नयने रुधिरप्रभे च ॥
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥ २३ ॥
तेषां निवारणमिदं हि मयोच्यमानं
व्यक्ताभिधानमखिलेन विधिं निबोध ॥
मद्यं तु चुक्रमरिचार्द्रकदीप्यकुष्ठ-[1]
सौवर्चलायुतमलं पवनस्य शान्त्यै ॥ २४ ॥
पृथ्वीकदीप्यकमहौषधहिङ्गुभिर्वा
सौवर्चलेन च युतं वितरेत् सुखाय ॥
आम्रातकाम्रफलदाडिममातुलुङ्गैः
कुर्याच्छुभान्यपि च [2]षाडवपानकानि ॥ २५ ॥
सेवेत वा फलरसोपहितान् रसादी-
नानूपवर्गपिशितान्यपि गन्धवन्ति ॥
पित्तात्मके मधुरवर्गकषायमिश्रं
मद्यं हितं समधुशर्करमिष्टगन्धम् ॥ २६ ॥
पीत्वा च मद्यमपि चेक्षुरसप्रगाढं
निःशेषतः क्षणमवस्थितमुल्लिखेच्च ॥
लावैणतित्तिरिरसांश्च पिबेदनम्लान्
[3]मौद्गान् सुखाय सघृतान् ससितांश्च यूषान् ॥ २७ ॥
पानात्यये कफकृते कफमुल्लिखेच्च
मद्येन बिम्बिविदुलोदकसंयुतेन ॥

---

१ 'दीप्यकाढ्य' इति पा०। २ पाडवकल्पना तु तन्त्रान्तरे—'युतमिक्षुविकारेण कथित चूतज फलम्। धृतशुण्ठीतिलयुत विज्ञेयो घनषाडवः॥' इति। ३ 'मौद्गान् सशर्करघृतान् स हिताय यूषान्' इति पा०।

सेवेत तिक्तकटुकांश्च रसानुदारान्
यूषांश्च तिक्तकटुकोपहितान् हिताय ॥ २८ ॥
पथ्यं यवान्नविकृ[1]तानि च जाङ्गलानि
श्लेष्मघ्नमन्यदपि यच्च निरत्ययं स्यात् ॥
कुर्याच्च सर्वमथ सर्वभवे विधानं
द्वन्द्वोद्भवे द्वयमवेक्ष्य यथाप्रधानम् ॥ २९ ॥
सामान्यमन्यदपि यच्च समग्रमग्र्यं
वक्ष्यामि यच्च मनसो मदकृत् सुखं च ॥
त्वङ्नागपुष्पमगधैलमधूकधान्यैः
श्लक्ष्णैरजाजिमरिचैश्च कृतं समांशैः ॥ ३० ॥
पानं कपित्थरसवारिपरूषकाढ्यं
पानात्ययेषु विधिवत्स्तुतमम्बरान्ते ॥
ह्रीवेरपद्मपरिपेलवसंप्रयुक्तैः
पु[2]ष्पैर्विलिप्य करवीरजलोद्भवैश्च ॥ ३१ ॥
पिष्टैः सपद्मकयुतैरपि सारिवाद्यैः
सेकं जलैश्च वितरेदमलैः सुशीतैः ॥
त्वक्पत्रचोचमरिचैलभुजङ्गपुष्प-
श्लेष्मातकप्रसववल्कगुडैरुपेतम् ॥ ३२ ॥
द्राक्षायुतं हृतमलं मदिरामयार्तै-
स्तत्पानकं शुचि सुगन्धि नरैर्निषेव्यम् ॥
पिष्ट्वा पिबेच्च मधुकं कटुरोहिणीं च
द्राक्षां च मूलमसकृत् त्रपुषीभवं यत् ॥ ३३ ॥
[3]कार्पासिनीमथ च नागबलां च तुल्यां
पीत्वा सुखी भवति साधु सुवर्चलां च ॥

१ "विकृतान्यपि जाङ्ग°" इति हाराण०। २ 'पुष्पैः प्रलिप्य' इति हाराण०।
३ 'कार्पासमूलमथ नाग°' इति हाराण० ।

काश्मर्यदारुविडदाडिमपिप्पलीषु
द्राक्षान्वितासु कृतमम्बुनि पानकं यत् ॥ ३४ ॥
तद्बीजपूरकरसायुतमाशु पीतं
शान्तिं परां[1] परमदे त्वचिरात् करोति ॥
द्राक्षासितामधुकजीरकधान्यकृष्णा-
स्त्वेवं कृतं त्रिवृतया च [2]पिबेत्तथैव ॥ ॥ ३५ ॥
सौवर्चलायुतमुदाररसं फलाम्लं
भार्गीश्रृतेन च जलेन [3]हितोऽवसेकः ॥ ३६ ॥
इक्ष्वाकुधामार्गववृक्षकाणि काकाह्वयोदुम्बरिकाश्च दुग्धे ॥
विपाच्य तस्याञ्जलिना वमेद्धि मद्यं [4]पिबेच्चाह्नि गते त्वजीर्णे ॥३७॥
त्वक्पिप्पलीभुजगपुष्पविडैरुपेतं
सेवेत हिङ्गुमरिचैलयुतं फलाम्लम् ॥
उष्णाम्बुसैन्धवयुतास्त्वथवा [5]विडत्वक्
चव्यैलहिङ्गुमगधाफलमूलशुण्ठीः ॥ ३८ ॥
[6]हृद्यैः खडैरपि च भोजनमत्र शस्तं
द्राक्षाकपित्थफलदाडिमपानकं यत् ॥
तत् पानविभ्रमहरं मधुशर्कराढ्य-
माम्रातकोलरसपानकमेव [7]चापि ॥ ३९ ॥
[8]खर्जूरवेत्रककरीरपरूषकेषु
द्राक्षात्रिवृत्सु च कृतं ससितं [9]हिमं वा ॥
श्रीपर्णियुक्तमथवा तु पिबेदिमानि
यष्ट्याह्वयोत्पलहिमाम्बुविमिश्रितानि ॥ ४० ॥

---

१ 'परा मदगदेष्वचिरात्' इति हाराण० । २ 'पिबेत्तथापि' इति हाराण० । ३ 'हितावसेकः' इति हाराण० । ४ 'पिबेदह्नि' इति हाराण० । ५ '°स्त्वथवा यथोक्तम्' इति पा० । ६ 'मद्यैः' इति पा० । ७ 'वापि' इति हाराण० । ८ 'खर्जूरवेत्रकरवीरपरूषकेषु' इति हाराण० । ९ 'हित वा' इति हाराण० ।

क्षीरिप्रवालबिसजीरकनागपुष्प-
पत्रैलवालुसितसारिवपद्मकानि ॥
आम्रातभव्यकरमर्दकपित्थकोल-
वृक्षाम्लवेत्रफलजीरकदाडिमानि ॥ ४१ ॥
सेवेत वा मरिचजीरकनागपुष्प-
त्वक्पत्रविश्वचविकैलयुतान् रसांश्च ॥
सूक्ष्माम्बरस्रुतहिमांश्च सुगन्धिगन्धान्
पानोद्भवान्नुदति सक्षगदान[1]शेषान् ॥ ४२ ॥
पञ्चेन्द्रियार्थविषया मृदुपानयोगा
हृद्याः सुखाश्च मनसः सततं निषेव्याः[2] ॥
पानात्ययेषु विकटोरुनितम्बवत्यः
पीनोन्नतस्तनभरानतमध्यदेशाः ॥ ४३ ॥
प्रौढाः स्त्रियोऽभिनवयौवनपीनगात्र्यः
सेव्याश्च [3]पञ्चविषयातिशयस्वभावाः ॥ ४४ ॥

पिबेद्रसं पुष्पफलोद्भवं वा सितामधूकत्रिसुगन्धियुक्तम् ॥
संचूर्ण्य संयोज्य च नागपुष्पैरजाजिकृष्णामरिचैश्च तुल्यैः ॥ ४५ ॥
वर्षाभूयष्ट्याह्वमधूकलाक्षात्वक्कर्बुदाराङ्कुरजीरकाणि ॥
द्राक्षां च कृष्णामथ केशरं च क्षीरे समालोड्य पिबेत् [4]सुखेप्सुः ४६
भवेच्च मद्येन तु येन पातितः प्रकामपीतेन सुरासवादिना ॥
तदेव तस्मै विधिवत् प्रदापयेद्विपर्यये [5]भ्रंशमवश्यमृच्छति ॥ ४७ ॥
यथा नरेन्द्रोपहतस्य कस्यचिद्भवेत् प्रसादस्तत एव नान्यतः ॥
ध्रुवं तथा मद्यहतस्य देहिनो भवेत् प्रसादस्तत एव नान्यतः ॥४८॥

---

१ '°नशेषम्' इति हाराण०। २ 'नियोज्याः' इति हाराण०। ३ 'पञ्चे-न्द्रियार्थविषयातिशयस्वभावाः' इति पा०। ४ 'सुखोष्णम्' इति हाराण०। ५ 'भ्रशमसौ च गच्छति' इति हाराण०।

विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते ॥
तस्य पानात्ययोद्दिष्टा विकाराः संभवन्ति हि ॥ ४९ ॥
मद्यस्याग्नेयवायव्यौ [1]गुणावम्बु(म्भा)वहानि तु ॥
स्रोतांसि शोषयेयातां तेन [2]तृष्णोपजायते ॥ ५० ॥
पाटलोत्पलकन्देषु मुद्ग[3]पर्ण्यां च साधितम् ॥
[4]पिबेन्मागधिकोन्मिश्रं तत्राम्भो हिमशीतलम् ॥ ५१ ॥
सर्पिस्तैलवसामज्जदधिभृङ्गरसैर्युतम् ॥
क्वाथेन बिल्वयवयोः सर्वगन्धैश्च पेषितैः ॥ ५२ ॥
पक्वमभ्यञ्जने श्रेष्ठं सेके [5]क्वाथश्च शीतलः ॥
रसवन्ति च भोज्यानि यथास्वमवचारयेत् ॥ ५३ ॥
पानकानि सुशीतानि हृद्यानि सुरभीणि च ॥
त्वचं प्राप्तस्तु [6]पानोष्मा पित्तरक्ताभिमूर्च्छितः ॥
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ ५४ ॥

शीतं विधानमत ऊर्ध्वमहं प्रवक्ष्ये
दाहप्रशान्तिकरमृद्धिमतां नराणाम् ॥
तत्रादितो मलयजेन हितः प्रदेह-
श्चन्द्रांशु[7]हारतुहिनोदकशीतलेन ॥ ५५ ॥
शीताम्बु[8]शीतलतरैश्च [9]शयानमेनं
[10]हारैर्मृणालवलयैरबलाः स्पृशेयुः ॥
भिन्नोत्पलोज्ज्वलहिमे शयने शयीत
पत्रेषु वा सजलबिन्दुषु पद्मिनीनाम् ॥ ५६ ॥

---

१ 'गुणावम्बुवहानि च' इति हाराण०। २ 'तृष्णा प्रजायते' इति हाराण०। ३ '°पर्ण्या च' इति हाराण०। ४ 'पिबेन्मागधिकामिश्र' इति हाराण०। ५ 'क्वाथः सुशीतलः' इति हाराण०। ६ 'मद्योष्मा' इति पा०। ७ '°हारकरकाहिमशीतलेन' इति पा०। ८ '°शीतलकरैश्च' इति पा०। ९ 'शयानमेव' इति हाराण०। १० 'हारैस्तुषारविमलैरबलाः' इति पा०।

आसादयन् पवनमाहृतमङ्गनाभि:[1]
कह्लारपद्मदलशैवलसंचयेषु[2] ॥
कान्तैर्वनान्तपवनैः[3] परिमृश्यमानः[4]
शक्तश्चरेद्भवनकाननदीर्घिकासु[5] ॥ ५७ ॥
दाहाभिभूतमथवा परिषेचयेत्तु[6]
लामज्जकाम्बुरुहचन्दनतोयतोयैः[7] ॥
विस्राविता हृतमला नववारिपूर्णा
पद्मोत्पलाकुलजलामधिवासिताम्बुम्[8] ॥ ५८ ॥
वापीं भजेत हरिचन्दनभूषिताङ्गः
कान्ताकरस्पृशनकर्कशरोमकूपः ॥
तत्रैनमम्बुरुहपत्रसमैः स्पृशन्त्यः
शीतैः करोरुवदनैः[9] कठिनैः स्तनैश्च ॥ ५९ ॥
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबलाः सुकलैः[10] प्रलापैः ॥
धारागृहे प्रगलितोदकदुर्दिनाभे
क्लान्तः शयीत [11]सलिलानिलशीतकुक्षौ ॥ ६० ॥
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ[12]
पत्राम्बुचन्दनरसैरुपलिप्तकुड्ये[13][14] ॥

---

१ 'पवनमाहृतमिष्टगन्ध' इति हाराण० । २ '°संचयेभ्यः' इति हाराण० । ३ 'शीतैर्वना°' इति हाराण० । ४ 'परिमृज्यमानः' इति पा० । ५ 'प्रीतश्चरे°' इति हाराण० । ६ 'परिषेचयेत्त' इति पा० । ७ 'लामज्जकाम्बुरुहचन्दनतोयतोयैः' इति पा० । 'शीतैरुशीरजलचन्दनवारिभिस्तम्' इति च हाराण० पाठः । ८ 'पद्मोत्पलोज्ज्वलजलामधिवासितां च' इति हाराण० । ९ 'करोरुजघनैः' इति पा० । १० 'मधुरैः' इति हाराण० । ११ 'सजलाम्बुदशीतकुक्षौ' इति पा० । १२ 'पट्टभिरुक्षितभूमिभागे' इति पा० । १३ 'मांसीतमालतृणकुङ्कुमपद्मपत्र°' इति हाराण० । १४ '°रुपदिग्धकुड्ये' इति पा० ।

जात्युत्पलप्रियककेशरपुण्डरीक-
पुन्नागनागकरवीरकृतोपचारे[1] ॥ ६१ ॥
तस्मिन् गृहे कमलरेण्वरुणे शयीत
यत्राहतानिलविकम्पितपुष्पदाम्नि[2] ॥
हेमन्तविन्ध्यहिमवन्मलयाचलानां
शीताम्भसां सकदलीहरितद्रुमाणाम् ॥ ६२ ॥
उद्भिन्ननीलनलिनाम्बुरुहाकराणां
चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञाः ॥
म्लानं[3] प्रतान्तमनसं मनसोऽनुकूलाः
पीनस्तनोरुजघना हरिचन्दनाङ्ग्यः[4] ॥ ६३ ॥
ता[5] एनमार्द्रवसनाः सह संविशेयुः
श्लिष्टाऽबलाः शिथिलमेखलहारयष्ट्यः ॥ ६४ ॥
हर्षयेयुर्नरं[6] नार्यः स्वगुणै रहसि स्थिताः ॥
ताः शैत्याच्छमयेयुश्च पित्तपानात्ययान्तरम्[7] ॥ ६५ ॥
तृड्दाहरक्तपित्तेषु कार्योऽयं भेषजक्रमः[8] ॥
सामान्यतो विशेषं तु शृणु दाहेष्वशेषतः ॥ ६६ ॥
कृत्स्नदेहानुगं रक्तमुद्रिक्तं[9] दहति ह्यति ॥
संचूष्यते दह्यते च ताम्राभस्ताम्रलोचनः ॥ ६७ ॥
लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते ॥
तं विलङ्घ्य विधानेन संसृष्टाहारमाचरेत् ॥ ६८ ॥

---

१ '°कृतोपकारे' इति हाराण०। २ 'यत्राहतानिल°' इति हाराण०। ३ 'ग्लान सुदीनमनस' इति हाराण०। ४ 'घनसारदिग्धा.' इति हाराण०। ५ 'ता एवमार्द्रवसना.' इति हाराण०। ६ 'हर्षयेयुः पुनर्नार्यः' इति हाराण०। ७ 'पित्तपानात्यय स्त्रियः' इति हाराण०। ८ 'रक्तपित्ततृषादाहेष्वयमेव विधिः स्मृतः' इति हाराण०। ९ 'रक्त' इति हस्तलि० पु० पा०।

अप्रशाम्यति दाहे च रसैस्तृप्तस्य जाङ्गलैः ॥
शाखाश्रया यथान्यायं रोहिणीर्व्यधयेत् सिराः ॥ ६९ ॥
पित्तज्वरसमः पित्तात् स चाप्यस्य विधिर्हितः ॥
तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम्[1] ॥ ७० ॥
सबाह्याभ्यन्तरं देहं दहेद्वै मन्दचेतसः ॥
संशुष्कगलताल्वोष्ठो [2]जिह्वां निष्कृष्य चेष्टते[3] ॥ ७१ ॥
तत्रोपशमयेत्तेजस्त्वब्धातु च विवर्धयेत् ॥
पाययेत् काममम्भश्च[4] शर्कराढ्यं पयोऽपि वा ॥ ७२ ॥
शीतमिक्षुरसं मन्थं [5]वितरेच्चेरितं विधिम् ॥
[6]असृजा पूर्णकोष्ठस्य दाहो भवति[7] दुःसहः ॥ ७३ ॥
विधिः सद्योव्रणीयोक्तस्तस्य क्षणमेव च ॥
धातुक्षयोक्तो यो दाहस्तेन मूर्च्छातृषान्वितः ॥ ७४ ॥
क्षामस्वरः क्रियाहीनो भृशं[8] सीदति पीडितः ॥
रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः ॥ ७५ ॥
क्षतजेनाश्नतश्चान्यः शोचतो वाऽप्यनेकधा ॥
तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान् ॥ ७६ ॥
तमिष्टविषयोपेतं सुहृद्भिरभिसंवृतम्[9] ॥
क्षीरमांसरसाहारं विधिनोक्तेन साधयेत् ॥ ७७ ॥
मर्माभिघातजोऽप्यस्ति स[10] चासाध्यतमः स्मृतः ॥
सर्वे एव च वर्ज्याः स्युः शीतगात्रेषु देहिषु ॥ ७८ ॥

---

१ 'समुत्थितम्' इति हाराण० । २ 'जिह्वा निःसृत्य वेपते' इति पा० । ३ 'जिह्वा निष्कृष्य वेपते' इति हाराण० । ४ 'इच्छाऽम्भश्च' इति 'इच्छायाऽम्भस्त' इति पा० । ५ 'वितरेच्चेतर विधिम्' इति पा० । 'वितरेत्त्वरित' च इति पा० । ६ 'असृज.' इति पा० । ७ 'दाहोऽन्यः स्यात्सुदुस्तरः' इति हाराण० । ८ 'स सीदेद्भृशपीडित.' इति च हाराण० । ९ 'सुहृद्भिरपि संवृतम्' इति हाराण० । १० 'सोऽसाध्यः सप्तमो मतः' इति हाराण० ।

( एवंविधो भवेद्यस्तु मदिरामयपीडितः[1] ॥ )
[2]प्रशान्तोपद्रवे चापि शोधनं प्राप्तमाचरेत् ॥ ७९ ॥
सजीरकाण्यार्द्रकशृङ्गवेरसौवर्चलान्यर्धजलप्लुतानि ॥
मद्यानि हृद्यान्यथ गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम् ८०
जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम् ॥
[3]पिबन् सुरां नैव लभेत रोगान् [4]मनोनुविघ्नं च मदं न याति ॥८१॥

इति श्रीसुश्रुतसंहितायामुत्तरत[5]न्त्रान्तर्गते कायचिकित्सातन्त्रे पानात्ययप्रतिषेधो नाम ( नवमोऽध्याय , आदितः ) सप्तचत्वारिंशत्तमोऽध्याय. ॥ ४७ ॥

---

## अष्टचत्वारिंशत्तमोऽध्यायः ।

अथातस्तृष्णाप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
सततं यः पिबेद्वारि न तृप्तिमधिगच्छति ॥
पुनः काङ्क्षति तोयं च तं तृष्णार्दितमादिशेत् ॥ ३ ॥
संक्षोभशोकश्रममद्यपानाद्रूक्षाम्लशुष्कोष्णकटू[6]पयोगात् ॥
धातुक्षयाल्लङ्घनसूर्यतापात् पित्तं च वातश्च भृशं प्रवृद्धौ ॥ ४ ॥
स्रोतांसि संदूषयतः समेतौ यान्यम्बुवाहीनि शरीरिणां हि ॥
स्रोतःस्वपांवाहिषु दूषितेषु जायेत तृष्णाऽतिबला[7] ततस्तु ॥ ५ ॥
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथाऽन्याऽऽमसमुद्भवा च ॥
स्यात् सप्तमी भक्तनिमित्तजा तु निबोध[8] लिङ्गान्यनुपूर्वशस्तु ॥ ६ ॥

---

१ 'अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते, हाराणचन्द्रस्तु पठति। २ 'प्रशान्तोपद्रवश्चापि' इति हाराण०। ३ 'पिबेत्' इति हाराण०। ४ 'मनोमतिघ्नं च' इति हाराण०। ५ "तन्त्रे पानात्यय" इति हाराण०। ६ "कषाययोगात्' इति पा०। ७ 'तृष्णा प्रतिबला' इति पा०। 'तृष्णा प्रबला ततस्तु' इति हाराण०। ८ 'लिङ्गानि तासां शृणु चौषधानि' इति हाराण०।

ताल्वोष्ठकण्ठास्यविशोष[1]दाहाः संतापमोहभ्रमविप्रलापाः ॥
पूर्वाणि रूपाणि भवन्ति तासामुत्पत्तिकालेषु [2]विशेषतस्तु ॥ ७ ॥
शुष्कास्यता मारुतसंभवायां तोदस्तथा [3]शङ्खशिरःसु चापि ॥
स्रोतोनिरोधो विरसं च वक्रं शीताभिरद्भिश्च विवृद्धिमेति ॥ ८ ॥
मूर्च्छाप्रलापारुचिवक्रशोषाः पीतेक्षणत्वं प्रततश्च दाहः ॥
शीताभिकाङ्क्षा मुखतिक्तता च पित्तात्मिकायां परिधूपनं च ॥ ९ ॥
कफावृताभ्यामनिलानलाभ्यां कफोऽपि शुष्कः प्रकरोति तृष्णाम्[4] ॥
निद्रा गुरुत्वं मधुरास्यता च तयाऽर्दितः[5] शुष्यति चातिमात्रम् ॥१०॥
कण्ठोपलेपो मुखपिच्छिलत्वं शीतज्वरश्छर्दिररोचकश्च ॥
कफात्मिकायां गुरुगात्रता च शाखासु शोफस्त्वविपाक एव ॥
एतानि रूपाणि भवन्ति त[6]स्यां तयाऽर्दितः काङ्क्षति नाति चाम्भः ११
क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा म[7]ता तु ॥
तयाऽभिभूतस्य निशादिनानि गच्छन्ति दुःखं पिबतोऽपि तोयम् १२
र[8]संक्षयाद्या क्षयजा मता सा तयाऽर्दितः शुष्यति दह्यते च ॥
अत्यर्थमाकाङ्क्षति चापि तोयं तां सन्निपातादिति केचिदाहुः ॥१३॥
रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ॥
त्रिदोषलिङ्गाऽऽमसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता ॥ १४ ॥
स्निग्धं तथाऽम्लं लवणं च भुक्तं गु[9]र्वन्नमेवातितृषां करोति ॥
क्षीणं विचित्तं बधिरं तृषार्तं विवर्जयेन्निर्गतजिह्वमाशु ॥ १५ ॥
तृष्णाभिवृद्धावुदरे च पूर्णे तं वामयेन्मागधिकोदकेन ॥

---

१ "°वितोददाहाः' इति पा० । २ 'विशेषतो हि' इति हाराण० । ३ 'शङ्ख-शिरोगलेषु' इति हाराण० । ४ 'बाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तु तत्र' इति हाराण० । ५ 'तृष्णार्दितः' इति हाराण० । ६ 'यस्या' इति हाराण० । ७ 'भवेत्सा' इति पा० । ८ 'रसक्षयाद्या क्षयसंभवा सा तयाऽभिभूतस्तु निशादिनेषु । पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः' इति हाराण० । ९ 'गुर्वन्नमेवाशु' इति हाराण० ।

[१]विलोभनं चात्र हितं विधेयं स्याद्दाडिमाम्रातकमातुलुङ्गैः ॥ १६ ॥
तिस्रः[२] प्रयोगैरिह सन्निवार्याः शीतैश्च सम्यग्रसवीर्यजातैः ॥
गण्डूषमम्लैर्विरसे च वक्त्रे कुर्याच्छुभैरामलकस्य चूर्णैः ॥ १७ ॥
सुवर्णरूप्यादिभिरग्नितप्तैर्लोष्टैः कृतं वा सिकतादिभिर्वा[३] ॥
जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं क्षौद्रयुतं हिमं वा ॥ १८ ॥
पञ्चाङ्गिकाः पञ्चगणा य उक्तास्तेष्वम्बु[४] सिद्धं प्रथमे गणे वा ॥
पिबेत् सुखोष्णं मनुजोऽचिरेण[५] तृषो विमुच्येत हि वातजायाः १९
[६]पित्तघ्नवर्गैस्तु कृतः कषायः सशर्करः क्षौद्रयुतः सुशीतः ॥
पीतस्तृषां पित्तकृतां निहन्ति क्षीरं श्रृतं वाऽप्यथ जीवनीयैः ॥२०॥
बिल्वाढकीकन्यकपञ्चमूलीदर्भेषु[७] सिद्धं कफजां निहन्ति ॥
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ २१ ॥
सर्वासु तृष्णास्वथवाऽपि पैत्तं कुर्याद्विधिं तेर्न[८] हि ता न सन्ति ॥
पर्यागतोदुम्बरजो रसस्तु सशर्करस्तत्क्वथितोदकं वा ॥ २२ ॥
वर्गस्य सिद्धस्य च सारिवादेः पातव्यमम्भः शिशिरं तृषार्तैः ॥
कशेरुशृङ्गाटकपद्ममोचबिसेक्षुसिद्धं[९] क्षतजां निहन्ति ॥ २३ ॥
[१०]लाजोत्पलोशीरकुचन्दनानि दत्त्वा प्रवाते निशि वासयेत्तु ॥
तदुत्तमं तोयमुदारगन्धि सितायुतं क्षौद्रयुतं [११]वदन्ति ॥ २४ ॥
द्राक्षाप्रगाढं च हिताय वैद्यस्तृष्णार्दितेभ्यो वितरेन्नरेभ्यः ॥
[१२]ससारिवादौ तृणपञ्चमूले तथोत्पलादौ प्रथमे[१३] गणे च ॥ २५ ॥

---

१ 'विलेपनं चात्र हितं वदन्ति' इति हाराण० । २ 'तृष्णा प्रयोगैरिह सा निवार्या' इति हाराण० । ३ 'लोष्टैः कृतं वा सिकतोपलैर्वा' इति हाराण० । ४ 'तेरम्बु' इति पा० । ५ 'मनुजोऽल्पशस्तु' इति हाराण० । ६ 'पित्तघ्न-वर्गेण कृत.' इति हाराण० । ७ "कण्टकपञ्चमूली" इति हाराण० । ८ 'तेन विना न शान्तिः' इति हाराण० । ९ "बिसेषु सिद्धम्' इति पा० । १० 'नीलोत्पलोशीर" इति हाराण० । ११ 'तथैव' इति पा० । १२ हाराणदत्तस्तु-'स सारिवादौ' इति विश्लिष्टपाठमादृत्य 'स =तृषार्तः अत्र शीतफाण्टकषायकषायेषु मध्ये यमेव यावन्तमौपयोगिकं मन्येत तमेव तावन्तं कारयितुमिदमुच्यते-यथैव युक्तमिति' इति व्याचष्टे । १३ 'मधुरे' इति पा० ।

कुर्यात् कषायं च यथेरितेन[1] मधूकपुष्पादिषु चापरेषु[2] ॥
राजादनक्षीरिकपीतनेषु षट्ट पानकान्यत्र हितानि च स्युः ॥ २६ ॥
सतुण्डिकेराण्यथवा पिबेत्तु पिष्टानि कार्पाससमुद्भवानि ॥
क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ॥ २७ ॥
क्षयोत्थितां क्षीरघृतं निहन्यान्मांसोदकं वा मधुकोदकं वा ॥
आमोद्भवां बिल्ववचायुतैस्तु[3] जयेत् कषायैरथ दीपनीयैः[4] ॥ २८ ॥
आम्रातभल्लातबलायुतानि पिबेत् कषायाण्यथ दीपनानि ॥
गुर्वन्नजातां वमनैर्जयेच्च क्षयादृते सर्वकृतां[5] च तृष्णाम् ॥ २९ ॥
श्रमोद्भवां मांसरसो निहन्ति गुडोदकं वाऽप्यथवाऽपि मन्थः ॥
भक्तोपरोधात्तृषितो यवागूमुष्णां पिबेन्मन्थमथो हिमं च ॥ ३० ॥
या स्नेहपीतस्य भवेच्च तृष्णा तत्रोष्णमम्भः प्रपिबेन्मनुष्यः ॥
मद्योद्भवामर्धजलं निहन्ति मद्यं तृषां याऽपि च मद्यपस्य ॥ ३१ ॥
तृष्णोद्भवां[6] हन्ति जलं सुशीतं सशर्करं सेक्षुरसं तथाऽम्भः ॥
स्वैः स्वैः कषायैर्वमनानि तासां तथा ज्वरोक्तानि च पाचनानि ॥ ३२ ॥
लेपावगाहौ परिषेचनानि कुर्यात्तथा शीतगृहाणि चापि ॥
संशोधनं क्षीररसौ घृतानि सर्वासु लेहान्मधुरान् हिमांश्च ॥ ३३ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[7] कायचिकित्सातन्त्रे तृष्णाप्रतिषेधो नाम (दशमोऽध्यायः, आदित ) अष्टचत्वारिंशोऽध्यायः ॥४८॥

---

## एकोनपञ्चाशत्तमोऽध्यायः ।

अथातश्छर्दिप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति[8] ॥
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥ ३ ॥

---

१ 'यथैव युक्त' इति पा० । २ 'वापरेषु' इति हाराण० । ३ '°वचायुतानां' इति हाराण० । ४ 'दीपनानाम्' इति पा० । ५ '°कृताश्च तृष्णाः' इति हाराण० । ६ 'उष्णोद्भवा' इति हाराण० । ७ '°तन्त्रे तृष्णा°' इति हाराण० । ८ '°र्लवणैरपि' इति हाराण० ।

श्रमात् क्षयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः ॥
नार्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः ॥ ४ ॥
(अत्यन्तामपरीतस्य छर्देर्वै संभवो ध्रुवम् ॥)[1]
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ॥ ५ ॥
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्दिरिति दोषो वक्त्राद्विनिश्चरन् ॥ ६ ॥
दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः ॥
ऊर्ध्वमागच्छति भृशं विरुद्धाहारसेवनात्[3] ॥ ७ ॥
प्रसेको[4] हृदयोत्क्लेशो भक्तस्यानभिनन्दनम् ॥
पूर्वरूपं मतं छर्द्या यथास्वं च विभावयेत् ॥ ८ ॥
प्रच्छर्दयेत्[5] फेनिलमल्पमल्पं शूलार्दितोऽभ्यर्दितपार्श्वपृष्ठः ॥
श्रान्तः सघोषं बहुशः कषायं जीर्णेऽधिकं साऽनिलजा वमिस्तु ॥९॥
योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा ॥
सदाहचोषज्वरवक्त्रशोषो मूर्च्छान्वितः[6] पित्तनिमित्तजा सा ॥ १० ॥
यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धम् ॥
अभक्तरुग्गौरवसादयुक्तो[7] वमेद्वमी सा कफकोपजा स्यात् ॥ ११ ॥
सर्वाणि रूपाणि भवन्ति यस्यां सा सर्वदोषप्रभवा मता तु ॥
बीभत्सजा दौहृदजाऽऽमजा च सात्म्यप्रकोपात्[8] क्रिमिजा च या[9] हि ॥
सा पञ्चमी तां[10] च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ॥ १२ ॥
शूलहृल्लासबहुला[11] क्रिमिजा च विशेषतः ॥
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ १३ ॥

---

१ अयमर्धश्लोको हाराणचन्द्रेण न पठितः। २ 'वक्त्रं प्रधावितः' इति पा०। ३ 'विरुद्धाहारसेविनाम्' इति पा०। ४ 'हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः। द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम्' इति हाराण०। ५ 'यश्छर्दयेत्' इति पा०। ६ 'मूर्च्छान्विता' इति हाराण०। ७ "गौरवसादयुक्त' इति पा०। ८ 'याऽसात्म्यतो वा' इति हाराण०। ९ 'या स्यात्' इति हाराण०। १० 'ताश्च' इति हाराण०। ११ 'शूलहृल्लासभूयिष्ठा' इति पा०।

क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकाम् ॥
छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुम् ॥ १४ ॥
आमाशयोत्क्लेशभवा[1] हि सर्वा-
स्तस्माद्धितं लङ्घनमेव तासु[2] ॥ १५ ॥
वमीषु बहुदोषासु छर्दनं हितमुच्यते ॥
विरेचनं वा कुर्वीत यथादोषोच्छ्रयं भिषक् ॥ १६ ॥
संसर्गैश्चानुपूर्वेण[3] यथास्वं भेषजायुतः ॥
लघूनि परिशुष्काणि सात्म्यान्यन्नानि चाचरेत् ॥ १७ ॥
यथास्वं च कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥
हन्यात् क्षीरघृतं पीतं छर्दिं पवनसंभवाम् ॥ १८ ॥
ससैन्धवं[4] पिबेत् सर्पिर्वातच्छर्दिनिवारणम् ॥
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ॥ १९ ॥
पिबेद्वा व्यक्तसिन्धूत्थं फलाम्लं वैष्किरं रसम् ॥
सुखोष्णलवणं चात्र हितं स्नेहविरेचनम् ॥ २० ॥
पित्तोपशनीयानि पाक्यानि[5] शिशिराणि च ॥
कषायाण्युपयुक्तानि घ्नन्ति पित्तकृतां वमीम् ॥ २१ ॥
शोधनं मधुरैश्चात्र द्राक्षारससमायुतैः ॥
बलवत्यां प्रशंसन्ति सर्पिस्तैल्वकमेव च ॥ २२ ॥
आरग्वधादिनिर्यूहं[6] दशाङ्गयोगमेव वा ॥
पाययेताथ सक्षौद्रं कफजायां चिकित्सकः ॥ २३ ॥
कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम् ॥
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समन्वितम् ॥ २४ ॥

---

१ "°भवाश्च सर्वा°" इति हाराण० । २ 'ताभ्य' इति पा० । ३ 'ससर्गाश्चानुपूर्वेण यथास्वं भेषजैर्युतान्' इति हाराण० । ४ इद श्लोकार्धं हाराण०पुस्तके न दृश्यते । ५ 'पानानि' इति पा० । ६ 'आरग्वधादिभिर्यूषं' इति पा० ।

बीभत्सजां हृद्यतमैर्दौर्हृदीं काङ्क्षितैः फलैः ॥
लङ्घनैर्वमनैश्चामां सात्म्यैः[1] सात्म्यप्रकोपजाम् ॥ २५ ॥
कृमिहृद्रोगवच्चापि कृमिजां साधयेद्वमीम् ॥
वितरेच्च यथादोषं शस्तं विधिमनन्तरम् ॥ २६ ॥
दधित्थरससंसक्तां[2] पिप्पलीं माक्षिकान्विताम् ॥
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रवि(ति)मुच्यते ॥ २७ ॥
समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना ॥
तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ॥ २८ ॥
स्वयङ्गुप्तां सयष्ट्याह्वां तण्डुलाम्बुमधुद्रवाम् ॥
पिबेद्यवागूमथवा सिद्धां पत्रैः करञ्जजैः ॥ २९ ॥
युक्ताम्ललवणाः पिष्टाः कुस्तुम्बुर्योऽथवा हिताः ॥
तण्डुलाम्बुयुतं खादेत् कपित्थ त्र्यूषणेन वा ॥ ३० ॥
सिताचन्दनमध्वाक्तं लिह्याद्वा मक्षिकाशकृत् ॥
पिबेत् पयोऽग्नितप्तं च निर्वाप्य गृहगोधिकाम्[3] ॥ ३१ ॥
सर्पिः क्षौद्रयुतान् वाऽपि लाजशक्तून् पिबेत्तथा ॥
सर्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा ॥ ३२ ॥
धात्रीरसे चन्दनं वा [4]घृष्टं मुद्गदलाम्बुना ॥
कोलामलकमज्जानं लिह्याद्वा त्रिसुगन्धिकम् ॥ ३३ ॥
सक्षौद्रां शालिलाजानां यवागूं वा पिबेन्नरः ॥
घ्रेयाण्युपहरेच्चापि मनोघ्राणसुखानि च ॥ ३४ ॥
जाङ्गलानि च मांसानि शुभा[5]नि पानकानि च ॥
भोजनानि विचित्राणि कुर्यात्सर्वास्वतन्द्रितः ॥ ३५ ॥

इति सुश्रुतसंहितायामुत्तरत[6]न्त्रान्तर्गते कायचिकित्सातन्त्रे छर्दि-प्रतिषेधो नाम ( एकादशोऽध्यायः, आदितः ) एकोन-पञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

१ 'सात्म्यैश्चासात्म्यकोपजाम्' इति हाराण० । २ '°सयुक्तां' इति हाराण० । ३ 'गृहगोपिकाम्' इति पा० । ४ 'शृत मुद्गदलाम्बु वा' इति हाराण० । ५ 'स्वादुवत्पानकानि' इति हाराण० । ६ '°तन्त्रे छर्दि°' इति हाराण० ।

# पञ्चाशत्तमोऽध्यायः।

अथातो हिक्काप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः ॥
शीतपानासनस्थानरजोधूमानिलानलैः ॥ ३ ॥
व्यायामकर्मभाराध्ववेगाघातापतर्पणैः ॥
आमदोषाभिघातस्त्रीक्षय[1]दोषप्रपीडनैः ॥ ४ ॥
विषमाशनाध्यनशनैस्तथा समशनैरपि ॥
हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥ ५ ॥

मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् ॥
स घोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केति भिषग्भिरुच्यते ॥ ६ ॥

अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥
वायुः कफेनानुगतः पञ्च हिक्काः करोति हि ॥ ७ ॥
मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः ॥
पूर्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥ ८ ॥
त्वरमाणस्य चाहारं भुञ्जानस्याथवा घनम् ॥
वायुरन्नैरवस्तीर्णः कटुकैरर्दितो भृशम्[2] ॥ ९ ॥
हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥
चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्तते ॥ १० ॥
कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्दिशेत् ॥
विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्तते ॥ ११ ॥
क्षुद्रिका नाम सा हिक्का जत्रुमूलात् प्रधाविता ॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी ॥ १२ ॥

---

१ "°क्षयरोगप्रपीडनैः" इति हाराण०। २ 'त्वरमाणस्य' इति नवमश्लोकस्थले 'पानान्नैरतिसयुक्तैः सहसा पीडितोऽनिलः' इति पाठो हाराणचन्द्रः पठति।

शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ॥
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता ॥ १३ ॥
मर्माण्यापीडयन्तीव सततं या प्रवर्तते ॥
देहमायम्य वेगेन घोषयत्यतितृष्यतः[१] ॥
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥ १४ ॥
आयम्यते हिक्कतोऽङ्गानि यस्य दृष्टिश्चोर्ध्वं ताम्यते यस्य गाढम् ॥
क्षीणोऽन्नद्विट्[२] कासते यश्च हिक्की तौ द्वावन्त्यौ वर्जयेद्धिक्कमानौ ॥१५॥
प्राणायामोद्वेजनत्रासनानि सूचीतोदैः संभ्रमश्चात्र शस्तः ॥
यष्ट्याह्वं वा माक्षिकेणावपीडे[३] पिप्पल्यो वा शर्कराचूर्णयुक्ताः ॥१६॥
सर्पिः कोष्णं क्षीरमिक्षो रसो वा नातिक्षीणे छर्दनं[४] शान्तिहेतोः ॥
नारीपयःपिष्टमशुक्लचन्दनं घृतं सुखोष्णं च ससैन्धवं तथा ॥ १७ ॥
चूर्णीकृतं सैन्धवमम्भसाऽथवा[५] निहन्ति हिक्कां च हितं च नस्यतः ॥
युञ्ज्याद्धूमं शालनिर्यासजातं नैपालं वा गोविषाणोद्भवं वा ॥ १८ ॥
सर्पिःस्निग्धैश्चर्मबालैः कृतं वा हिक्कास्थाने स्वेदनं चापि[६] कार्यम् ॥
क्षौद्रोपेतं गैरिकं काञ्चनाह्वं लिह्याद्भस्म ग्राम्यसत्त्वास्थिजं वा ॥१९॥
तद्वच्छ्वाविन्मेषगोशल्य(ल्ल)कानां रोमाण्यन्तर्धूमदग्धानि चात्र ॥
मध्वाज्याक्तं बर्हिपत्रप्रसूतमेवं भस्मौदुम्बरं तैल्वकं वा ॥ २० ॥
स्वर्जिक्षारं बीजपूराद्रसेन
क्षौद्रोपेतं हन्ति लीढ्वाऽऽशु हिक्काम् ॥
सर्पिःस्निग्धा घ्नन्ति हिक्कां यवाग्वः
कोष्णग्रासाः पायसो वा सुखोष्णः ॥ २१ ॥
शुण्ठीतोये साधितं क्षीरमाजं तद्वत् पीतं शर्करासंयुतं वा ॥
आतृप्तेर्वा सेव्यमानं निहन्याद् घ्रातं हिक्कामाशु मूत्रं त्वजाव्योः २२

---

१ 'तृष्णार्तस्य महास्वना' इति पा० । २ 'क्षौति यश्चातिमात्र' इति पा० ।
३ 'माक्षिकेणावपीडः' इति हाराण० । ४ 'स्वसन छर्दन च' इति पा० ।
५ '°मम्भसा तथा' इति हाराण० । ६ 'वापि' इति हाराण० ।

सपूतिकीटं लशुनोग्रगन्धाहिङ्गुवज्ञमाचूर्ण्य[1] सुभावितं तत् ॥
क्षौद्रं सितां वारणकेशरं च पिबेद्रसेनेक्षुमधूकजेन ॥ २३ ॥
पिबेत् पलं वा लवणोत्तमस्य द्वाभ्यां पलाभ्यां हविषः समग्रम् ॥
हरीतकीं कोष्णजलानुपानां पिबेद्घृतं क्षौरमधूपपन्नम्[2] ॥ २४ ॥
रसं कपित्थान्मधुपिप्पलीभ्यां
शुक्तिप्रमाणं[3] प्रपिबेत् सुखाय ॥ २५ ॥
कृष्णां सितां चामलकं च लीढं सश्रृङ्गवेरं मधुनाऽथवाऽपि ॥
कोलास्थिमज्जाञ्जनलाजचूर्णं हिक्कां निहन्यान्मधुनाऽवलीढम्[4] ॥२६॥
पाटलायाः फलं पुष्प गैरिकं कटुरोहिणी ॥
खर्जूरमध्य मागध्यः काशीसं[5] दधिनाम च ॥ २७ ॥
चत्वार[6] एते योगाः स्युः प्रतिपादप्रदर्शिताः ॥
मधुद्वितीयाः कर्तव्यास्ते हिक्कासु विजानता ॥ २८ ॥
कपोतपारावतलावशल्लक-
श्वदंष्ट्रगोधावृषदंशजान् रसान् ॥
पिबेत् फलाम्लानहिमान् ससैन्धवान्
स्निग्धांस्तथैवर्ष्यमृगद्विजोद्भवान् ॥ २९ ॥
विरेचनं पथ्यतमं ससैन्धवं घृतं सुखोष्णं च सितोपलायुतम् ॥
सदागतावूर्ध्वगतेऽनुवासनं वदन्ति केचिच्च हिताय हिक्किनाम् ॥३०॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे[7] हिक्का-
प्रतिषेधो नाम ( द्वादशोऽध्याय , आदितः )
पञ्चाशत्तमोऽध्याय· ॥ ५० ॥

---

१ 'हिङ्ग्वम्बुनाऽऽचूर्ण्य' इति पा०। २ 'क्षारमधुप्रपन्नम्' इति हाराण०। ३ 'पिचुप्रमाण' इति हाराण०। ४ 'मधुना च लीढम्' इति हाराण०। ५ 'काशीसं दधिना सह' इति पा०। ६ 'चत्वारो यूषयोगाः स्यु·' इति हाराण०। ७ "तन्त्रे हिक्का" इति हाराण०।

# एकपञ्चाशत्तमोऽध्यायः।

अथातः श्वासप्रतिषेधं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

यैरेव कारणैर्हिक्का बहुभिः संप्रवर्तते ॥
तैरेव कारणैः श्वासो घोरो भवति देहिनाम् ॥ ३ ॥

विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः ॥
श्वासयत्यूर्ध्वगो भूत्वा तं श्वासं परिचक्षते ॥ ४ ॥

क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चधा[१] ॥
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ ५ ॥

प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा ॥
आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च ॥ ६ ॥

किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्तते ॥
निषण्णस्यैति शान्तिं च स[२] क्षुद्र इति संज्ञितः ॥ ७ ॥

तृट्स्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः ॥
विशेषाद्दुर्दिने ताम्येच्छ्वासः स तमको मतः ॥ ८ ॥

घोषेण महताऽऽविष्टः सकासः सकफो नरः ॥
यः श्वसित्यबलोऽन्नद्विट् सुप्तस्तमकपीडितः[३] ॥ ९ ॥

स शाम्यति कफे हीने स्वपतश्च विवर्धते ॥
मूर्च्छाज्वराभिभूतस्य ज्ञेयः प्रतमकस्तु सः ॥ १० ॥

आध्मातो दह्यमानेन बस्तिना सरुजं नरः ॥
सर्वप्राणेन विच्छिन्नं श्वस्याच्छिन्नं तमादिशेत् ॥ ११ ॥

---

१ तन्त्रान्तरे तु—'क्षुद्रको वातिक श्लेष्मभूयिष्ठस्तमकः स्मृतः। छिन्नः पित्तप्रधान. स्यादन्यौ - मारुतकोपजौ ॥" इत्युक्तम्। २ 'स्यात्तमको' इति हाराण०। ३ 'स वै तमकपीडितः' इति पा०।

निःसंज्ञः पार्श्वशूलार्तः शुष्ककण्ठोऽतिघोषवान् ॥
संरब्धनेत्रस्त्वायम्य यः श्वस्यात् स महान् स्मृतः ॥ १२ ॥
मर्मस्वायम्यमानेषु श्वसन्मूढो मुहुश्च यः ॥
ऊर्ध्वप्रेक्षी हतरवस्तमूर्ध्वश्वासमादिशेत् ॥ १३ ॥
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ॥
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च[1] ॥ १४ ॥
स्नेहबस्तिं विना[2] केचिदूर्ध्वं चाधश्च शोधनम् ॥
मृदु प्राणवतां श्रेष्ठ श्वासिनामादिशन्ति हि ॥ १५ ॥
श्वासे कासे च हिक्कायां हृद्रोगे चापि पूजितम् ॥
घृतं पुराणं संसिद्धमभयाविडरामठैः ॥ १६ ॥
सौवर्चलाभयाबिल्वैः संस्कृतं[3] वाऽनवं घृतम् ॥
पिप्पल्यादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥ १७ ॥
सपञ्चलवणं सर्पिः श्वासकासौ व्यपोहति ॥
हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥ १८ ॥
द्विक्षीरं साधितं सर्पिश्चतुर्गुणजलाप्लुतम्[4] ॥
कोलमात्रैः पिबेत्तद्धि[5] श्वासकासौ व्यपोहति ॥ १९ ॥
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥
कृत्स्ने वृषकषाये वा पचेत् सर्पिश्चतुर्गुणे ॥ २० ॥
तन्मूलकुसुमावापं शीतं क्षौद्रेण योजयेत् ॥
शृङ्गीमधूलिका[6]भार्गीशुण्ठीतार्क्ष्यसिताम्बुदैः ॥ २१ ॥
सहरिद्रैः सयष्ट्याह्वैः समैरावाप्य योगतः ॥
घृतप्रस्थं पचेद्धीमान् शीततोये चतुर्गुणे ॥ २२ ॥

---

१ चकारेण तन्त्रान्तरोक्तस्य 'ज्वरमूर्च्छादियुक्तस्य' इत्यादिकस्यापि समुच्चयो ज्ञेयः। २ 'स्नेहबस्तिमृते' इति पा०। ३ 'संयोज्य' इति पा०। ४ "°जलान्वितम्" इति हाराण०। ५ 'पचेत्तद्धि' इति पा०। ६ "°मधुरिका°" इति हाराण०।

श्वासं कासं तथा हिक्कां सर्पिरेतन्नियच्छति ॥
सुवहा कालिका भार्गी शुकाख्या नैचुलं फलम् ॥ २३ ॥
काकादनीं शृङ्गवेरं वर्षाभूर्बृहतीद्वयम् ॥
कोलमात्रैर्घृतप्रस्थं पचेदेभिर्जलद्विकम्[1] ॥ २४ ॥
कटूष्णं पीतमेतद्धि श्वासामयविनाशनम् ॥
सौवर्चलयवक्षारकटुकाव्योषचित्रकैः ॥ २५ ॥
[2]वचाभयाविडङ्गैश्च साधितं श्वासशान्तये ॥
गोपवल्लयुदके सिद्धं स्यादन्यद्द्विगुणे घृतम् ॥ २६ ॥
पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः[3] ॥
तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः ॥ २७ ॥
बिल्वपुष्करभूतीकसौवर्चलकणाग्निभिः ॥
पथ्यातेजोवतीयुक्तैः सर्पिर्जलचतुर्गुणम् ॥ २८ ॥
हिङ्गुपादयुतं सिद्धं सर्वश्वासहरं परम् ॥
वासाघृतं षट्पलं वा[4] घृतं चात्र हितं भवेत् ॥ २९ ॥
तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे ॥
सेव्यमानं यथान्यायं श्वासकासौ व्यपोहति ॥ ३० ॥
फलाम्ला विष्किररसाः स्निग्धाः प्रव्यक्तसैन्धवाः ॥
एणादीनां शिरोभिर्वा कौलत्था वा सुसंस्कृताः ॥ ३१ ॥
हन्युः श्वासं च कासं च संस्कृतानि पयांसि च ॥
तिमिरस्य[5] च बीजानि कर्कटाख्या[6] च चूर्णिता ॥ ३२ ॥

---

१ "°जलार्द्धकम्" इति हाराण०। २ 'घृतं वचाविडङ्गैश्च' इति पा०। ३ श्लोकार्धमिद–'हिङ्गुपादयुत' इति सार्धाष्टाविंशतिश्लोकस्याग्रे हाराणचन्द्रः पठति। ४ 'च' इति हाराण०। ५ 'तिनिशस्य' इति हाराण०। ६ 'कर्कटाख्यश्च (=तृणजातिः)' इति पा०। 'कर्कटाख्या सुवर्चिका' इति हाराण०।

दुरालभाऽथ पिप्पल्यः कटुकाख्या हरीतकी ॥
श्वाविन्मयूररोमाणि कोला मागधिकाकणाः ॥ ३३ ॥
भार्गीत्वक् शृङ्गवेरं च शर्करा शल्लकाङ्गजम् ॥[1]
नृत्तकौण्डकबीजानि[2] चूर्णितानि तु केवलम् ॥ ३४ ॥
पञ्च श्लोकार्धिकास्त्वेते लेहा ये सम्यगीरिताः ॥
सर्पिर्मधुभ्यां ते लेह्याः कासश्वासार्दितैर्नरैः ॥ ३५ ॥
सप्तच्छदस्य पुष्पाणि पिप्पलीश्चापि मस्तुना ॥
पिबेत् संचूर्ण्य मधुना धानाश्चाप्यथ भक्षयेत् ॥ ३६ ॥
अर्काङ्कुरैर्भावितानां यवानां साध्वनेकशः ॥
तर्पणं वा पिबेदेषां सक्षौद्रं श्वासपीडितः ॥ ३७ ॥
शिरीषकदलीकुन्दपुष्पं मागधिकायुतम् ॥
तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥ ३८ ॥
[3]कोलमज्जां तालमूल[4]सृष्यचर्ममसीमपि ॥
लिह्यात् क्षौद्रेण भार्गीं वा सर्पिर्मधुसमायुताम् ॥ ३९ ॥
[5]नीचैःकदम्बबीजं वा स क्षौद्रं तण्डुलाम्बुना ॥
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभाम् ॥ ४० ॥
सर्पिर्मधुभ्यां विलिहन् हन्ति श्वासान् सुदारुणान् ॥
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कर्णां शटीम् ॥ ४१ ॥

---

१ 'शल्लका गजम्' इति पा० । २ 'त्रिकण्टकस्य बीजानि' इति हाराण० । 'नीचै-कदम्बबीजानि' इत्यपि पा० । ३ 'कोलमज्जः' इति हाराण० । ४ 'तालमूली (=मुषली)' इति पा० । केचित्तु 'नीपं कदम्ब रक्त च तत् पीतं तण्डुलाम्बुना' इति पाठमादृत्य 'नीप=बृहत्कदम्बफल, कदम्ब=लघुकदम्बवृक्ष-फलं, रक्तमिति–विशेषणादनयोः पक्वयोर्ग्रहण' इति व्याख्यानयन्ति । 'निम्बैः कदम्ब°' इति तु हाराण० ।

लिह्यात्तैलेन तुल्यानि श्वासार्तो हितभोजनः ॥
गवां पुरीषस्वरसं मधुसर्पिःकणायुतम् ॥ ४२ ॥
लिह्याच्छ्वासेषु कासेषु वाजिनां वा शकृद्रसम् ॥
पाण्डुरोगेषु शोथेषु ये योगाः संप्रकीर्तिताः ॥ ४३ ॥
श्वासकासापहास्तेऽपि कासघ्ना ये च कीर्तिताः ॥
भार्गीत्वक् त्र्यूषणं तैलं हरिद्रां कटुरोहिणीम् ॥ ४४ ॥
पिप्पलीं मरिचं चण्डां गोशकृद्रसमेव च ॥
तलकोटस्य बीजेषु पचेदुत्कारिकां शुभाम् ॥ ४५ ॥
सेव्यमाना निहन्त्येषा श्वासानाशु सुदुस्तरान् ॥
पुराणसर्पिः पिप्पल्यः कौलत्था जाङ्गला रसाः ॥ ४६ ॥
सुरा सौवीरकं हिङ्गु मातुलुङ्गरसो मधु ॥
द्राक्षामलकबिल्वानि शस्तानि श्वासिहिक्किनाम् ॥ ४७ ॥
श्वासहिक्कापरिगतं स्निग्धैः स्वेदैरुपाचरेत् ॥
आक्तं लवणतैलाभ्यां तैरस्य ग्रथितः कफः ॥ ४८ ॥
खस्थो विलयनं याति मारुतश्च प्रशाम्यति ॥
स्विन्नं ज्ञात्वा ततश्चैव भोजयित्वा रसौदनम् ॥ ४९ ॥
वातश्लेष्मविबन्धे वा भिषग् धूमं प्रयोजयेत् ॥
मनःशिलादेवदारुहरिद्राच्छदनामिषैः ॥ ५० ॥
लाक्षोरुबूकमूलैश्च कृत्वा वर्तीर्विधानतः ॥
सर्पिर्यवमधूच्छिष्टशालनिर्यासजं तथा ॥ ५१ ॥

---

१ 'तैलेन विलिहन् हन्याच्छ्वासान् प्राणहरानपि' इति पा०। २ 'मधुमागधिकायुतम्' इति हाराण०। ३ 'युक्तैः' इति हाराण०। 'युक्तं' इति च पा०। ४ 'मारुतश्चास्य शाम्यति' इति हाराण०। ५ 'स्निग्ध' इति हाराण०। ६ 'सर्पिर्नवमधूच्छिष्ट०' इति पा०।

शृङ्गबालखुरस्नायुत्वक् समस्तं गवामपि ॥
[1]तुरुष्कशल्लकीनां च गुग्गुलोः पद्मकस्य च ॥ ५२ ॥
एते सर्वे ससर्पिष्का धूमाः कार्या विजानता ॥
बलीयसि कफग्रस्ते वमनं सविरेचनम् ॥ ५३ ॥
दुर्बले चैव रूक्षे च तर्पणं हितमुच्यते ॥
जाङ्गलोरभ्रजैर्मांसैरानूपैर्वा सुसंस्कृतैः ॥ ५४ ॥
निदिग्धिकां चामलकप्रमाणां हिङ्ग्वर्धयुक्तां मधुना सुयुक्ताम् ॥
लिहन्नरः श्वासनिपीडितो हि श्वासं जयत्येव बलाद्ग्रहेण ॥ ५५ ॥
यथाऽग्निरिद्धः [2]पवनानुविद्धो वज्रं यथा वा सुरराजमुक्तम् ॥
रोगास्तथैते खलु दुर्निवाराः श्वासश्च कासश्च विलम्बिका च ॥ ५६ ॥

इति सुश्रुतसंहितायामुत्तर[3]तन्त्रान्तर्गते कायचिकित्सातन्त्रे हिक्का-
श्वासप्रतिषेधो नाम ( त्रयोदशोध्यायः, आदितः ) एक-
पञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशत्तमोऽध्यायः ।

अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः ॥
कासस्यापि च विज्ञेयास्त एवोत्पत्तिहेतवः ॥ ३ ॥
धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ॥
विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥ ४ ॥

---

१ 'तुरष्क' इति हाराण० । २ 'खलु काष्ठसङ्घैः' इति पा० । ३ "तन्त्रे हिक्का" इति हाराण० ।

प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः ॥
निरेति वक्त्रात् सहसा सदोषः[1] कासः स विद्वद्भिरुदाहृतस्तु ॥ ५ ॥
स वातपित्तप्रभवः कफाच्च क्षतात्तथाऽन्यः क्षयजोऽपरश्च ॥
पञ्चप्रकारः कथितो[2] भिषग्भिर्विवर्धितो यक्ष्मविकारकृत् स्यात् ॥ ६ ॥
भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः ॥
स्वरशब्दवैषम्यमरोचकोऽग्निसादश्च[3] लिङ्गानि भवन्त्यमूनि ॥ ७ ॥
हृच्छङ्खमूर्धोदरपार्श्वशूली[4] क्षामाननः क्षीणबलस्वरौजाः ॥
प्रसक्तमन्तःकफमीरणेन[5] कासेत्तु शुष्कं स्वरभेदयुक्तः[6] ॥ ८ ॥
उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्तः ॥
पित्तेन पीतानि वमेत् कटूनि कासेत् स पाण्डुः परिदह्यमानः ॥ ९ ॥
प्र(वि)लिप्यमानेन[7] मुखेन सीदन् शिरोरुजार्तः कफपूर्णदेहः ॥
अभक्तरुग्गौरवसादयुक्तः कासेत[8] ना सान्द्रकफं कफेन ॥ १० ॥
वक्षोऽतिमात्रं विहतं[9] तु यस्य व्यायामभाराध्ययनाभिघातैः ॥
विश्लिष्टवक्षाः स नरः सरक्तं ष्ठीवत्यभीक्ष्णं क्षतजं[10] तमाहुः ॥ ११ ॥

([11]अतिव्यवायभाराध्वयुक्ताश्वगजविग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।
कण्ठेन रुजताऽत्यर्थं विभिन्नेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥

---

१ 'सघोषः' इति पा०। २ 'पठितो भिषग्भिर्विशेषतो लक्षणतः पुराणैः' इति पा०। ३ 'सशब्दवैषम्य०' इति पा०। ४ '°पार्श्वशूल' इति पा०। ५ 'प्रसक्तवेगश्च समीरणेन' इति हाराण०। ६ 'स्वरभेदयुक्तम्' इति हाराण०। ७ 'विलिप्यमानेन' इति हाराण०। ८ 'कासेत्कृश सान्द्रकफः' इति हाराण०। ९ 'विहतञ्च' इति हाराण०। १० 'क्षतजः स उक्तः' इति हाराण०। ११ कोष्ठकस्थोऽयं पाठो हाराण०ग्रन्थेऽधिकः समुपलभ्यते।

पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ॥
विषमासात्म्यभोज्यातिव्यवायाद् वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ।
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ॥ )
स गात्रशूलज्वरदाहमोहान् प्राणक्षयं चोपलभेत कासी ॥
शुष्यन् विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् ॥ १२ ॥
[1]संसर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं [2]वदन्ति ॥
वृद्धत्वमासाद्य [3]भवेत्तु यो वै याप्यं तमाहुर्भिषजस्तु कासम् ॥ १३ ॥
शृङ्गीवचाकट्फलकत्तृणाब्दधान्याभयाभार्ग्यमराह्वविश्वम् ॥
उष्णाम्बुना हिङ्गुयुतं तु पीत्वा बद्धास्यमप्याशु जहाति कासम् १४
फलत्रिकव्योषविडङ्गशृङ्गी[4]रास्नावचापद्मकदेवकाष्ठैः ॥
लेहः समैः क्षौद्रसिताघृताक्तः कासं निहन्यादचिरादुदीर्णम् ॥ १५ ॥
पथ्यां सितामामलकानि लाजां समागधीं चापि विचूर्ण्य शुण्ठीम् ॥
सर्पिर्मधुभ्यां विलिहीत कासी ससैन्धवां वोष्णजलेन कृष्णाम् १६
खादेद्गुडं नागरपिप्पलीभ्यां द्राक्षां च सर्पिर्मधुनाऽवलिह्यात् ॥
द्राक्षां सितां मागधिकां च तुल्यां सशृङ्गवेरं मधुकं तुगां च ॥ १७ ॥
लिह्याद्घृतक्षौद्रयुतां समांशां सितोपलां वा मरिचांशयुक्ताम् ॥
धात्रीकणाविश्वसितोपलाश्च संचूर्ण्य मण्डेन पिबेच्च दध्नः ॥ १८ ॥
हरेणुकां मागधिकां च [5]तुल्यां दध्ना पिबेत् कासगदाभिभूतः ॥
उभे हरिद्रे सुरदारुशुण्ठी गायत्रिसारं च पिबेत् समांशम् ॥ १९ ॥
बस्तस्य मूत्रेण सुखाम्बुना वा दन्तीं द्रवन्तीं च सतिल्व[6]काख्याम् ॥

१ 'त सर्वलिङ्ग इति पा० । २ 'तमाहु.' इति पा० । तन्त्रान्तरे तु—'क्षये कासादिक लिङ्गमेकदोषकृत मतम् । तदेव तत्कृते कासे सर्वदोषान्वित बुधै. ॥' इति लभ्यते । ३ 'भवत्यथो वै' इति हाराण० । ४ 'रास्नाबलापद्मकदेवकाष्ठै.' इति पा० । ५ 'मुख्यां' इति पा० । ६ 'सतिल्वकांशाम्' इति हाराण० ।

भृष्टानि सर्पींष्यथ बादराणि खादेत् पलाशानि ससैन्धवानि ॥२०॥
कोलप्रमाणं प्रपिबेद्धि हिङ्गु [१]सौवीरकेणाम्लरसेन वाऽपि ॥
क्षौद्रेण लिह्यान्मरिचानि वाऽपि भार्गीवचाहिङ्गुकृता च वर्तिः २१
धूमे प्रशस्ता घृतसंप्रयुक्ता वेणुत्वगेलालवणैः कृता वा [२] ॥
मुस्तेङ्गुदीत्वङ्मधुकाह्वमांसीमनःशिलालैश्छगलाग्बुपिष्टैः ॥ २२ ॥
विधाय वर्तीश्च [३] पयोऽनुपानं धूम पिबेद्वातबलासकासी ॥
पिबेच्च सीधु मरिचान्वितं वा तेनाशु कासं जयति [४] प्रसह्य ॥ २३ ॥
द्राक्षाम्बुमञ्जिष्ठपुराह्वयाभिः क्षीरं शृतं [५] माक्षिकसंप्रयुक्तम् [६] ॥
निदिग्धिकानागरपिप्पलीभिः खादेच्च मुद्गान्मधुना सुसिद्धान् ॥२४॥
उत्कारिकां सर्पिषि नागराढ्यां पक्त्वा समूलैस्त्रुटिकोलपत्रैः [७] ॥
एभिर्निषेवेत कृतां च पेयां तन्वीं सुशीतां मधुना विमिश्राम् ॥२५॥
यत् प्लीह्नि सर्पिर्विहितं षडङ्गं तद्वातकासं जयति प्रसह्य ॥
विदारिगन्धादिकृतं घृतं वा रसेन वा वासकजेन पक्वम् ॥ २६ ॥
विरेचनं स्नैहिकमत्र चोक्तमास्थापनं चाप्यनुवासनं च ॥
धूमं पिबेत् स्नैहिकमप्रमत्तः पिबेत् सुखोष्णं घृतमेव चात्र ॥ २७ ॥
हिता यवागूवश्च रसेषु सिद्धाः पयांसि लेहाः सघृतास्तथैव ॥
प्रच्छर्दनं कायशिरोविरेकास्तथैव धूमाः कवलग्रहाश्च ॥ २८ ॥
उष्णाश्च लेहाः कटुका निहन्युः कफं विशेषेण विशोषणं च ॥
कटुत्रिकं चापि वदन्ति पथ्यं घृतं कृमिघ्नस्वरसे विपक्वम् ॥ २९ ॥
निर्गुण्डिपत्रस्वरसे च पक्वं सर्पिः कफोत्थं विनिहन्ति कासम् ॥
पाठाविडव्योषविडङ्गसिन्धुत्रिकण्टरास्नाहुतभुग्बलाभिः ॥ ३० ॥

---

१ 'सौवीरकेणापि समातुलुङ्गम्' इति पा० । अस्याग्रे—'सर्पिर्मधुभ्या विलिह्यात कासी ससैन्धवा वोष्णजलेन कृष्णाम्' इत्यधिक० पाठो हाराण०पुस्तके । ३ 'वर्तीः सपयो°' इति हाराण० । ४ 'शममभ्युपैति' इति हाराण० । ५ 'घृतं माहिषसप्रयुक्तम्' इति पा० । ६ 'मञ्जिष्ठशुण्ठीजलगोस्तनीभिः क्षीर घृतं माक्षिकसंयुत वा' इति पा० । ७ '°वटकोलपत्रैः' इति पा० ।

शृङ्गीवचाम्भोधरदेवदारुदुरालभाभार्ग्यभयाशटीभिः ॥
सम्यग्विपक्वं द्विगुणेन सर्पिर्निदिग्धिकायाः स्वरसेन चैतत् ॥ ३१ ॥
श्वासाग्निसादस्वरभेदभिन्नान्निहन्त्युदीर्णानपि[1] पञ्च कासान् ॥
विदारिगन्धोत्पलसारिवादीन् निष्क्वाथ्य वर्गं[2] मधुरं च कृत्स्नम् ३२
घृतं पचेदिक्षुरसाम्बुदुग्धैः काकोलिवर्गं च सशर्करं तत् ॥
प्रातः पिबेत् पित्तकृते च कासे रतिप्रसूते क्षतजे[3] च कासे ॥ ३३ ॥
खर्जूरभार्गीमगधाप्रियालमधूलिकैलामलकैः समांशैः ॥
चूर्णं सिताक्षौद्रघृतप्रगाढं त्रीन् हन्ति कासानुपयुज्यमानम् ॥ ३४ ॥
[4]रक्ताहरिद्राञ्जनवह्निपाठामूर्वोपकुल्या विलिहेत् समांशाः ॥
क्षौद्रेण कासे क्षतजे क्षयोत्थे पिबेद्धृतं चेक्षुरसे विपक्वम् ॥ ३५ ॥
चूर्णं पिबेदामलकस्य वाऽपि क्षीरेण पक्वं सघृतं [5]हिताशी ॥
चूर्णानि गोधूमयवोद्भवानि काकोलिवर्गश्च कृतः सुसूक्ष्मः ॥ ३६ ॥
कासेषु पेयस्त्रिषु कासवद्भिः क्षीरेण सक्षौद्रघृतेन वाऽपि ॥
गुडोदकं वा क्वथितं पिबेद्धि क्षौद्रेण शीतं मरिचोपदंशम् ॥ ३७ ॥
प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्वाऽर्धतुलां गुडस्य ॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीरव्योषेभकृष्णाहपुषाजमोदैः ॥ ३८ ॥
विडङ्गसिन्धुत्रिफलायवानीपाठाग्निधान्यैश्च [6]पिचुप्रमाणैः ॥
दत्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् ॥ ३९ ॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टस्त्रिसुगन्धियुक्तम् ॥
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः[7] ॥ ४० ॥
शाम्यन्ति चायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ॥
स्त्रीणां च वन्ध्यामयनाशनः स्यात् कल्याणको नाम गुडः प्रतीतः ४१

---

१ 'जयति' इति पा० । २ 'वर्गान्' इति पा० । ३ 'क्षयजे' इति हाराण० । ४ 'रक्तां' इति हाराण० । ५ 'हिताय' इति पा० । ६ 'पलप्रमाणैः' इति पा० । ७ '°शोषाः' इति हाराण० ।

द्विपञ्चमूलेभकणात्मगुप्ताभार्गीशटीपुष्करमूलविश्वान् ॥
पाठामृताग्रन्थिकशङ्खपुष्पीरास्नाद्व्यपामार्गबलायवासान् ॥ ४२ ॥
द्विपालिकान्[1] न्यस्य यवाढकं च हरीतकीनां च शतं गुरूणाम् ॥
द्रोणे जलस्याढकसंयुते च क्वाथे कृते पूतचतुर्थभागे ॥ ४३ ॥
पचेत्तुलां शुद्धगुडस्य दत्त्वा पृथक् च तैलात् कुडवं घृताच्च ॥
चूर्णं च तावन्मगधोद्भवाया देयं च तस्मिन्मधु सिद्धशीते ॥ ४४ ॥
रसायनात् कर्षमतो विलिह्याद्द्वे चाभये नित्यमथाशु हन्यात् ॥
तद्राजयक्ष्मग्रहणीप्रदोषशोफाग्निमान्द्यस्वरभेदकासान् ॥ ४५ ॥
पाण्ड्वामयश्वासशिरोविकारान् हृद्रोगहिक्काविषमज्वरांश्च ॥
मेधाबलोत्साहमतिप्रदं च चकार चैतद्भगवानगस्त्यः ॥ ४६ ॥
कुलीरशुक्तीचटकैणलावान्निष्[2]क्वाथ्य वैर्गं[3] मधुरं च कृत्स्नम् ॥
पचेद्घृतं तत्तु निषेव्यमाणं हन्यात् क्षतोत्थं क्षयजं च कासम् ॥ ४७ ॥
शतावरीनागबला[4]विपक्कं घृतं विधेयं च हिताय कासिनाम् ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रा[5]न्तर्गते कायचिकित्सातन्त्रे कास-प्रतिषेधो नाम ( चतुर्दशोऽध्याय , आदित ) द्विपञ्चाशत्तमोऽध्याय· ॥ ५२ ॥

---

## त्रिपञ्चाशत्तमोऽध्यायः ।

अथातः स्वरभेदप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'द्विपालिकांशांश्च' इति हाराण० । २ 'निष्क्वाथ्य वर्गैर्मधुरैस्तथान्यं' इति पा० । ३ 'वर्गैर्मधुरैस्तथान्यैः' इति हाराण० । ४ "बलाबलाभिर्घृत इति हाराण० । ५ "तन्त्रे कास" इति हाराण० ।

अत्युच्चभाषणविषाध्ययनातिगीत-[1]
शीतादिभिः प्रकुपिताः पवनादयस्तु ॥
[2]स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥ ३ ॥
वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गद्गदवत्[3] स्वरं च ॥
पित्तेन पीतवदनाक्षिपुरीषमूत्रो ब्रूयाद्गलेन परिदाहसमन्वितेन[4] ॥४॥
कृच्छ्रात् कफेन सततं कफरुद्धकण्ठो
मन्दं शनैर्वदति चापि दिवा विशेषैः[5] ॥
सर्वात्मके भवति सर्वविकारसंप-
द्व्यक्तता च वचसस्तमसाध्यमाहुः ॥ ५ ॥
धूप्येत वाक् क्षयकृते क्षयमाप्नुयाच्च
वागेष चा (वा)पि हतवाक् परिवर्जनीयः ॥
[6]अन्तर्गलं स्वरमलक्ष्यपदं चिरेण
मेदश्चयाद्वदति[7] दिग्धगलौष्ठतालुः ॥ ६ ॥
क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः ॥
मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥ ७ ॥
स्निग्धान् स्वरातुरनरानपकृष्टदोषान्
न्यायेन तान्[8] वमनरेचनबस्तिभिश्च ॥
नस्यावपीडमुखधावनधूमलेहैः
संपादयेच्च विविधैः कवलग्रहैश्च ॥ ८ ॥

---

१ "°विषाध्ययनाभिघात°" इति हाराण० । २ 'ते शब्दवाहिधमनीषु' इति हाराण० । ३ 'गर्दभवत्स्वरं च' इति हाराण० । ४ 'च विदाहसमन्वितेन' इति हाराण० । ५ 'विशेषात्' इति हाराण० । ६ 'अन्तर्गतस्वर°' इति पा० । 'अन्तर्गतं' इत्यपि पा० । ७ 'मेदोऽन्वयात्' इति हाराण० । ८ 'संयोजयेत्' इति हाराण० ।

यः श्वासकासविधिरादित एव चोक्तस्तं
चाप्यशेषमवतारयितुं यतेत ॥
वैशेषिकं च विधिमूर्ध्वमतो वदामि
तं वै स्वरातुरहितं निखिलं निबोध ॥ ९ ॥
स्वरोपघातेऽनिलजे भुक्तोपरि घृतं पिबेत् ॥
कासमर्दकवार्ताकमार्कवस्वरसे शृतम् ॥ १० ॥
पीतं घृतं हन्त्यनिलं सिद्धमार्तगले रसे ॥
यवक्षाराजमोदाभ्यां चित्रकामलकेषु वा ॥ ११ ॥
देवदार्वग्निकाभ्यां वा सिद्धमाजं समाक्षिकम् ॥
सुखोदकानुपानो वा ससर्पिष्को गुडौदनः ॥ १२ ॥
क्षीरानुपानं पित्ते तु पिबेत् सर्पिरतन्द्रितः ॥
अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥ १३ ॥
लिह्यान्मधुरकाणां वा चूर्णं मधुघृताप्लुतम् ॥
शतावरीचूर्णयोगं बलाचूर्णमथापि वा ॥ १४ ॥
पिबेत् कटूनि मूत्रेण कफजे स्वरसंक्षये ॥
लिह्याद्वा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि वा ॥ १५ ॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ॥
सर्वजे क्षयजे चापि प्रत्याख्यायाचरेत् क्रियाम् ॥ १६ ॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह ॥
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ १७ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे छर्दि-
प्रतिषेधो नाम ( पञ्चदशोऽध्यायः, आदितः ) त्रिपञ्चा-
शत्तमोऽध्यायः ॥ ५३ ॥

---

१ 'तन्त्रे स्वर°' इति हाराण० ।

# चतुःपञ्चाशत्तमोऽध्यायः ।

अथातः कृमिरोगप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अजीर्णाध्यशनासात्म्यविरुद्धमलिनाशनैः ॥
अव्यायामदिवास्वप्नगुर्वतिस्निग्धशीतलैः ॥ ३ ॥
माषपिष्टान्नविदलबिसशालूकसेरुकैः ॥
पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः ॥ ४ ॥
पललानूपपिशितपिण्याकपृथुकादिभिः ॥
स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तं च कुप्यति ॥ ५ ॥
कृमीन् बहुविधाकारान् करोति विविधाश्रयान् ॥
आमपक्काशये तेषां कफविड्जन्मनां पुनः ॥
धमन्यां रक्तजानां च प्रसवः प्रायशः स्मृतः ॥ ६ ॥
विंशतेः कृमिजातीनां त्रिविधः संभवः स्मृतः ॥
पुरीषकफरक्तानि, तासां वक्ष्यामि [1]विस्तरम् ॥ ७ ॥
अजवा विजवाः[2] किप्याश्चिप्या गण्डूपदास्तथा ॥
चूरवो द्विमुखाश्चैव [3]ज्ञेयाः सप्त पुरीषजाः ॥ ८ ॥
श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च ॥
तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥ ९ ॥
शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसंक्षयाः ॥
प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः ॥ १० ॥
रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ॥
शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥ ११ ॥

---

१ 'लक्षणम्' इति हाराण० । २ 'अयवा वियवाः' इति पा० । ३ 'सप्तैवेते पुरीषजाः' इति हाराण० ।

दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ॥
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥ १२ ॥
रोमशा रोममूर्धानः सपुच्छाः श्यावमण्डलाः ॥
रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥ १३ ॥
मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ॥
शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥ १४ ॥
केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ॥
कुष्ठजाः[1] सपरीसर्पा ज्ञेयाः शोणितसंभवाः ॥ १५ ॥
ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ॥
रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते ॥ १६ ॥
माषपिष्टान्न[2]विदलपर्णशाकैः पुरीषजाः ॥
मांसमाषगुडक्षीरदधितैलैः कफोद्भवाः ॥ १७ ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥
ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥ १८ ॥
भक्तद्वेषोऽतिसारश्च संजातकृमिलक्षणम् ॥
इत्यास्त्रयोदशाद्यास्तु कृमीणां परिकीर्तिताः ॥ १९ ॥
केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत् ॥
एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम् ॥ २० ॥
सुरसादिविपक्वेन सर्पिषा वान्तमादितः ॥
विरेचयेत्तीक्ष्णतरैर्योगैरास्थापयेच्च तम् ॥ २१ ॥
यवकोलकुलत्थानां सुरसादेर्गणस्य च ॥
विडङ्गस्नेहयुक्तेन क्वाथेन लवणेन च ॥ २२ ॥

---

१ 'कुष्ठजाश्च परी°' इति हाराण०। २ 'पिष्टान्नलवणगुडशाकैः' इति हाराण०।

प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना ॥
युञ्ज्यात् क्रिमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥ २३ ॥
स्नेहेनोक्तेन चैनं तु योजयेत् स्नेहबस्तिना ॥
ततः शिरीषकिणिहीरसं क्षौद्रयुतं पिबेत् ॥ २४ ॥
केबूकस्वरसं वाऽपि पूर्ववत्तीक्ष्णभोजनः ॥
पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना ॥ २५ ॥
पारिभद्रकपत्राणां क्षौद्रेण स्वरसं पिबेत् ॥
पत्तूरस्वरसं वाऽपि पिबेद्वा सुरसादिजम् ॥ २६ ॥
लिह्यादश्वशकृच्चूर्णं [1]वैडङ्गं वा समाक्षिकम् ॥
पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः ॥ २७ ॥
खादेत् [2]पूपलिकाः पक्का धान्याम्लं च पिबेदनु ॥
सुरसादिगणे पक्वं तैलं वा पानमिष्यते ॥ २८ ॥
विडङ्गचूर्णयुक्तैर्वा पिष्टैर्भक्ष्यांस्तु कारयेत्[3] ॥
तत्कषायप्रपीतानां तिलानां स्नेहमेव वा ॥ २९ ॥
श्वाविधः शकृतश्चूर्णं सप्तकृत्वः सुभावितम् ॥
विडङ्गानां कषायेण त्रैफलेन तथैव च ॥ ३० ॥
क्षौद्रेण लीढ्वाऽनुपिबेद्रसमामलकोद्भवम् ॥
अक्षाभयारसं वाऽपि विधिरेषोऽयसामपि ॥ ३१ ॥
पूतीकस्वरसं वा[4]ऽपि पिबेद्वा मधुना सह ॥
पिबेद्वा पिप्पलीमूलमजामूत्रेण संयुतम् ॥ ३२ ॥

---

१ 'वैडाल' इति पा० । 'विडङ्ग इति हा० । २ 'पूपालिकान् पक्वान्' इति हाराण० । ३ 'विडङ्गचूर्णपिष्टाभ्या तस्मिन् भक्ष्य तु कारयेत्' इति हाराण० । ४ 'चापि' इति हाराण० ।

सप्तरात्रं पिबेद्धृष्टं त्रपु वा दधिमस्तुना ॥
पुरीषजान् कफोत्थांश्च हन्यादेवं क्रुमीन् भिषक् ॥ ३३ ॥

शिरोहृद्घ्राणकर्णाक्षि[1]संश्रिता[2]ंश्च पृथग्विधान् ॥
विशेषेणाञ्जनैर्नस्यैरवपीडैश्च साधयेत् ॥ ३४ ॥

शकृद्रसं तुरङ्गस्य सुशुष्कं भावयेद्‌दृति ॥
निष्क्वाथेन विडङ्गानां चूर्णं प्रधमनं तु तत् ॥ ३५ ॥

अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक् ॥
सकांस्यनीलं तैलं च नस्यं स्यात्सुरसादिके ॥ ३६ ॥

इन्द्रलुप्तविधिश्चापि विधेयो रोमभोजिषु ॥
दन्तादानां समुद्दिष्टं विधानं मुखरोगिकम् ॥ ३७ ॥

रक्तजानां प्रतीकारं कुर्यात् कुष्ठ[3]चिकित्सिते ॥
सुरसादिं तु सर्वेषु सर्वथैवोपयोजयेत् ॥ ३८ ॥

अव्यक्ततिक्तकटुकं भोजनं च हितं भवेत् ॥
[4]कुलत्थक्षारसंसृष्टं क्षारपानं च पूजितम्[5] ॥ ३९ ॥

क्षीराणि मांसानि घृतानि चैव दधीनि शाकानि च पर्णवन्ति ॥
समासतोऽम्लान्मधुरान् हिमांश्च क्रुमीन् जिघांसुः परिवर्जयेत्तु ४०

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[6] शालाक्यतन्त्रे कायचिकित्सातन्त्रे क्रुमिप्रतिषेधो नाम (षोडशोऽध्यायः आदितः) चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

१ "वक्त्राक्षि°" इति हाराण०। २ "°संसृतान्' इति पा०। ३ 'कुष्ठचिकित्सितात्' इति पा०। ४ 'विडङ्गक्षार°" इति पा०। ५ 'कुलत्थक्वाथसंसृष्ट क्षीरपानं च पूजितम्' इति पा०। ६ "°तन्त्रे क्रुमिचि°" इति हाराण०।

## पञ्चपञ्चाशत्तमोऽध्यायः ।

अथात उदावर्तप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अधश्चोर्ध्वं च भावानां प्रवृत्तानां स्वभावतः ॥
न वेगान् धारयेत् प्राज्ञो[1] वातादीनां जिजीविषुः ॥ ३ ॥

वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः ॥
व्याहन्यमानैरुदितैरुदावर्तो निरुच्यते ॥ ४ ॥

[2]क्षुत्तृष्णाश्वासनिद्राणामुदावर्तो विधारणात् ॥
तस्याभिधास्ये व्यासेन लक्षणं च चिकित्सितम् ॥ ५ ॥

त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः ॥
अपथ्यभोजनाच्चापि वक्ष्यते च तथाऽपरः ॥ ६ ॥

आध्मानशूलौ हृदयोपरोधं शिरोरुजं श्वासमतीव हिक्काम् ॥
कासप्रतिश्यायगलग्रहांश्च बलासपित्तप्रसरं च घोरम् ॥ ७ ॥
कुर्यादपानोऽभिहतः स्वमार्गे हन्यात् पुरीषं मुखतः क्षिपेद्वा ॥
आटोपशूलौ परिकर्तनं च सङ्गः पुरीषस्य तथोर्ध्ववातः ॥ ८ ॥
पुरीषमास्यादपि वा निरेति पुरीषवेगेऽभिहते नरस्य ॥
मूत्रस्य वेगेऽभिहते नरस्तु कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम् ॥ ९ ॥
मेढ्रे गुदे [3]वङ्क्षणबस्तिमुष्कनाभिप्रदेशेष्वथवाऽपि मूर्ध्नि ॥
[4]आनद्धबस्तिश्च भवन्ति तीव्राः शूलाश्च शूलैरिव भिन्नमूर्तेः ॥ १० ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात् पवनात्मकाः स्युः ॥
श्रोत्राननघ्राणविलोचनोत्था भवन्ति तीव्राश्च तथा विकाराः ॥ ११ ॥

---

१ 'प्रासान्' इति पा०। २ केचित्तु—'वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः क्षुत्तृष्णाश्वासनिद्राणां धृत्योदावर्तसंभवः' इति पठन्ति। ३ 'वङ्क्षणमुष्कयोश्च' इति हाराण०। ४ 'आनद्धबस्तेश्च' इति हाराण०।

आनन्दजं शोकसमुद्भवं वा नेत्रोदकं प्राप्तममुञ्चतो हि ॥
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥ १२ ॥

भवन्ति गाढं क्षवथोर्विघाताच्छिरोक्षिनासाश्रवणेषु रोगाः ॥
[1]कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरुत वाऽप्रवृत्तिः ॥ १३ ॥

उद्गारवेगेऽभिहते भवन्ति [2]घोरा विकाराः पवनप्रसूताः ॥
छर्देर्विघातेन भवेच्च कुष्ठं येनैव दोषेण विदग्धमन्नम् ॥ १४ ॥

मूत्राशये [3]पायुनि मुष्कयोश्च शोफो रुजो मूत्रविनिग्रहश्च ॥
शुक्राश्मरी तत्स्रवणं भवेद्वा ते ते विकारा विहते तु शुक्रे ॥ १५ ॥

तन्द्राङ्गमर्दा[4]रुचिविभ्रमाः स्युः क्षुधोऽभिघातान् कृशता च दृष्टेः ॥
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघाताद्धृदये व्यथा च ॥ १६ ॥

श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथवाऽपि गुल्मः ॥
जृम्भाऽङ्गमर्दोऽङ्गशिरोक्षिजाड्यं निद्राभिघातादथवाऽपि तन्द्रा १७

तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतम् ॥
शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत् ॥ १८ ॥

[5]सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः ॥
वायोः क्रिया विधातव्याः स्वमार्गप्रतिपत्तये ॥ १९ ॥

सामान्यतः पृथक्त्वेन क्रियां भूयो निबोध मे ॥
आस्थापनं मारुतजे [6]स्निग्धस्विन्ने विशिष्यते ॥ २० ॥

पुरीषजे तु कर्तव्यो विधिरानाहिको भवेत् ॥
सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् ॥ २१ ॥

---

१ 'कण्ठस्य पूर्णत्व°' इति पा० । २ 'जन्तोः' इति पा० । ३ 'वा गुदमुष्कयोश्च' इति हाराण० । ४ 'तन्द्राऽङ्गमर्दावरुचिः श्रमश्च' इति हाराण० । ५ 'नवस्वेतेषु' इति पा० । ६ 'स्निग्धे स्विन्ने' इति हाराण० ।

ऐलां[1] वाऽप्यथ मद्येन क्षीरं वाऽपि पिबेन्नरः ॥
धात्रीफलानां स्वरसं सजलं वा पिबेत्त्र्यहम् ॥ २२ ॥
रसमश्वपुरीषस्य गर्दभस्याथवा पिबेत् ॥
मांसोपदंशं मधु वा पिबेद्वा सीधु गौडिकम् ॥ २३ ॥
भद्रदारु घनं मूर्वां हरिद्रा मधुकं तथा ॥
कोलप्रमाणानि पिबेदान्तरिक्षेण वारिणा ॥ २४ ॥
दुःस्पर्शास्वरसं वाऽपि कषायं कुङ्कुमस्य च ॥
एर्वारुबीज तोयेन पिबेद्वाऽलवणीकृतम् ॥ २५ ॥
पञ्चमूलीश्रृतं क्षीरं द्राक्षारसमथापि वा ॥
योगांश्च [2]वितरेदत्र पूर्वोक्तानश्मरीभिदः ॥ २६ ॥
मूत्रकृच्छ्रक्रमं चापि कुर्यान्निरवशेषतः ॥
भूयो वक्ष्यामि [3]योगान् यान् मूत्राघातोपशान्तये ॥ २७ ॥
स्नेहैः स्वेदैरुदावर्तं जृम्भाजं समुपाचरेत् ॥
अश्रुमोक्षोऽश्रुजे कार्यः स्निग्धस्विन्नस्य देहिनः ॥ २८ ॥
तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपशिङ्घनैः ॥
वर्तिप्रयोगैरथवा क्षवसक्तिं प्रवर्तयेत् ॥ २९ ॥
( तीक्ष्णौषधप्रधमनैरथवाऽऽदित्यरश्मिभिः[4] ॥ )
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ ३० ॥
सुरां सौवर्चलवतीं बीजपूररसान्विताम् ॥
छर्द्याघातं यथादोषं सम्यक् स्नेहादिभिर्जयेत् ॥ ३१ ॥
सक्षारलवणोपेतमभ्यङ्गं चात्र[5] दापयेत् ॥
बस्तिशुद्धिकरावापं चतुर्गुणजलं पयः ॥ ३२ ॥

---

१ 'एलामप्यथ मद्येन' इति हाराण० । २ 'वितरेत्तत्र' इति हाराण० । ३ 'योगांश्च मूत्रा°' इति हाराण० । ४ इदमर्धमधिकं लभ्यते हाराण०ग्रन्थे । ५ 'वात्र' इति हाराण० ।

आवारिनाशात् कथितं पीतवन्तं प्रकामतः ॥
रमयेयुः[1] प्रिया नार्यः शुक्रोदावर्तिनं नरम् ॥ ३३ ॥

क्षुद्विघाते हितं स्निग्धमुष्णमल्पं च भोजनम् ॥
तृष्णाघाते पिबेन्मन्थं यवागूं वाऽपि शीतलाम् ॥ ३४ ॥

भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः ॥
निद्राघाते पिबेत् क्षीरं स्वप्याच्चेष्टकथा[2] नरः ॥ ३५ ॥

आध्मानाद्येषु रोगेषु यथास्वं प्रयतेत हि ॥
यच्च यत्र[3] भवेत्प्राप्तं तच्च तस्मिन् प्रयोजयेत् ॥ ३६ ॥

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ॥
भोजनैः कुपितः सद्य उदावर्तं करोति हि ॥ ३७ ॥

वातमूत्रपुरीषासृक्कफमेदोवहानि वै ॥
स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत् ॥ ३८ ॥

ततो हृद्बस्तिशूलार्तो गौरवारुचिपीडितः ॥
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥ ३९ ॥

श्वासकासप्रतिश्यायदाहमोहवमिज्वरान् ॥
तृष्णाहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥ ४० ॥

लभते च बहूनन्यान् विकारान् वातकोपजान् ॥
तं तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत् ॥ ४१ ॥

दोषतो [4]भिन्नवर्चस्कं भुक्तं चाप्यनुवासयेत्[5] ॥
न चेच्छान्ति व्रजत्येवमुदावर्तः सुदारुणः ॥ ४२ ॥

---

१ 'रमयेरन्' इति पा०। २ 'स्वप्याच्चेष्टकथारत.' इति हाराण०। तत्रान्तरे तु 'निद्राघाते पिबेत् क्षीर गोस्तनादथवा नरः' इति लभ्यते। ३ 'यस्मिन्भवेत्' इति हाराण०। ४ 'भिन्नवर्चांसि' इति पा०। 'दोषतोऽभिन्नवर्चस्क' इति हाराण०। ५ '°वर्तयेत्' इति हाराण०।

अथैनं बहुशः स्विन्नं युञ्ज्यात् स्नेहविरेचनैः ॥
पाययेत त्रिवृत्पीलुयवानीरम्लपाचनैः[1] ॥ ४३ ॥
हिङ्गुकुष्ठवचास्वर्जिविडङ्गं वा द्विरुत्तरम् ॥
योगावेतावुदावर्तं शूलं चानिलजं[2] हतः ॥ ४४ ॥
[3]देवदार्वग्निकौ कुष्ठं शुण्ठीं[4] पथ्यां पलङ्कषाम् ॥
पौष्कराणि च मूलानि तोयस्यर्धाढके पचेत् ॥ ४५ ॥
पादावशिष्टं तत् पीतमुदावर्तमपोहति[5] ॥
मूलकं शुष्कमार्द्रं च वर्षाभूः पञ्चमूलकम् ॥ ४६ ॥
आरेवतफलं चाप्सु पक्त्वा तेन घृतं पचेत् ॥
तत् पीयमानं शास्त्युग्रमुदावर्तमशेषतः[6] ॥ ४७ ॥
वचामतिविषां कुष्ठं यवक्षारं हरीतकीम् ॥
कृष्णां निर्दहनीं चापि पिबेदुष्णेन वारिणा ॥ ४८ ॥
इक्ष्वाकुमूलं मदनं विशल्यातिविषे वचाम् ॥
कुष्ठं किण्वाग्निकौ चैव पिबेत्तुल्यानि पूर्ववत् ॥ ४९ ॥
मूत्रेण देवदार्वग्नित्रिफलाबृहतीः पिबेत् ॥
यवप्रस्थं[7] फलैः सार्धं कण्टकार्या जलाढके ॥ ५० ॥
पक्त्वाऽर्धप्रस्थशेषं तु पिबेद्धिङ्गुसमन्वितम् ॥
मदनालाबुबीजानि पिप्पलीं सनिदिग्धिकाम् ॥ ५१ ॥
संचूर्ण्य प्रधमेन्नाड्या विशल्येतद्यथा गुदम् ॥
चूर्णं निकुम्भकम्पिल्लश्यामेक्ष्वाक्वग्निकोद्भवम् ॥ ५२ ॥

---

१ '°रम्लपानकै' इति पा० । २ 'चापि नियच्छतः' इति हाराण० । ३ तन्त्रान्तरे तु—'कुष्ठ पलङ्कषां पथ्या शुण्ठीं दार्वग्निपुष्करम् । द्वात्रिंशता तोयपलैः पक्त्वा पादावशेषितम् ॥ पाययेत्—' इति लभ्यते । ४ 'वचां' इति हाराण० । ५ '°वर्तं व्यपोहति' इति हाराण० । ६ 'शमयेदुदावर्तमशेषतः' इति हाराण० । ७ 'यवप्रस्थ पले द्वे च कण्टकार्याः' इति पा० ।

कृतवेधनमागध्योर्लवणानां च साधयेत् ॥
गवां मूत्रेण ता वर्तीः कारयेत्तु गुदानुगाः ॥
सद्यः शर्मकरावेतौ योगावमृतसंमतौ ॥ ५३ ॥

इति सुश्रुतसंहितायामुत्तरतंत्रान्तर्गते[1] कायचिकित्सातन्त्रे उदावर्तप्रतिषेधो नाम ( सप्तदशोऽध्यायः, आदितः ) पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशत्तमोऽध्यायः ।

अथातो विसूचिकाप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ॥
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ ३ ॥
सूचीभिरिव गात्राणि तुदन्[2] संतिष्ठतेऽनिलः ॥
यस्याजीर्णेन सा वैद्यैरुच्यते ति[3] विसूचिका ॥ ४ ॥
न तां परिमिताहारा लभन्ते विदितागमाः ॥
मूढास्तामजितात्मानो लभन्ते कलुषाशयाः[4] ॥ ५ ॥

मूर्च्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः ॥
वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥ ६ ॥

कुक्षिरानह्यतेऽत्यर्थं प्रताम्यति[5] विकूजति ॥
निरुद्धो मारुतश्चापि कुक्षौ[6] विपरिधावति ॥ ७ ॥

---

१ 'तन्त्रे उदावर्त°' इति हाराण०। २ 'भिन्दन्' इति पा०। ३ 'तु' इति हाराण०। ४ '°ऽशनलोलुपः' इति हाराण०। ५ 'प्रताम्यत्यथ कूजति' इति हाराण०। ६ 'कुक्षावुपरि धावति' इति हाराण०।

वातवर्चोनिरोधश्च कुक्षौ यस्य भृशं भवेत् ॥
तस्यालसकमाचष्टे तृष्णोद्गारावरोधकौ[1] ॥ ८ ॥
दुष्टं[2] तु भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य ॥
बिलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते[3] शास्त्रविदः पुराणाः ॥ ९ ॥
यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ॥
दोषेण येनावततं स्वलिङ्गैस्तं[4] लक्षयेदामसमुद्भवैश्च ॥ १० ॥
यः श्यावदन्तौष्ठनखोऽल्पसंज्ञश्छर्द्यर्दितोऽभ्यन्तरयातनेत्रः ॥
क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरः[5] सोऽपुनरागमाय ॥ ११ ॥
साध्यासु पार्ष्ण्योर्दहनं प्रशस्तमग्निप्रतापो वमनं च तीक्ष्णम् ॥
पक्के ततोऽन्ने तु विलङ्घनं स्यात् संपाचनं चापि विरेचनं च ॥ १२ ॥
विशुद्धदेहस्य हि सद्य एव मूर्च्छातिसारादिरुपैति शान्तिम् ॥
आस्थापनं चापि वदन्ति पथ्यं सर्वासु[6] योगानपरान्निबोध ॥ १३ ॥
पथ्यावचाहिङ्गुकलिङ्गगृञ्जसौवर्चलैः सातिविषैश्च चूर्णम् ॥
सुखाम्बुपीतं विनिहन्त्यजीर्णं शूलं विसूचीमरुचिं च सद्यः ॥ १४ ॥
क्षारागदं वा लवणं विडं वा गुडप्रगाढानथ सर्षपान् वा ॥
अम्लेन वा सैन्धवहिङ्गुयुक्तौ सबीजपूरौ[7] सघृतौ त्रिवर्गौ ॥ १५ ॥
कटुत्रिकं वा लवणैरुपेतं पिबेत् स्नुहीक्षीरविमिश्रितं तु ॥
कल्याणकं वा लवणं पिबेत्तु यदुक्तमादावनिलामयेषु[8] ॥ १६ ॥
कृष्णाजमोदक्षवकाणि[9] वाऽपि तुल्यौ पिबेद्वा मगधानिकुम्भौ ॥
दन्तीयुतं वा मगधोद्भवानां कल्कं पिबेत् कोषवतीरसेन ॥ १७ ॥
उष्णाभिरद्भिर्मगधोद्भवानां कल्कं [10]पिबेन्नागरकल्कयुक्तम् ॥

---

१ 'तृष्णोद्गारौ तु यस्य तु' इति पा० । 'हिक्कोद्गारौ तु यस्य तु' इति च हाराण० । २ 'लीन' इति पा० । ३ 'तु विवर्जनीयां' इति पा० । ४ 'शरीर तल्लक्षणैरामसमुद्भवैश्च' इति पा० । ५ '°न्नरोऽसौ पुन°' इति हाराण० । ६ 'सर्वाश्च' इति पा० । ७ 'सशाकबीजौ' इति पा० । 'सबीजपूर्णौ' इति तु हाराण० । ८ '°मामेष्वनिलामयेषु' इति पा० । ९ '°क्षवकाम्रिकान् वा' इति पा० । १० 'पिबेन्नागरचूर्णयुक्तम्' इति पा० ।

व्योषं करञ्जस्य फलं हरिद्रे मूलं समं चाप्यथ[1] मातुलुङ्ग्याः ॥ १८ ॥
छायाविशुष्का गुटिकाः कृतास्ता हन्युर्विसूचीं नयनाञ्जनेन ॥
सुवामितं साधुविरेचितं वा सुलङ्घितं वा मनुजं विदित्वा ॥ १९ ॥
पेयादिभिर्दीपनपाचनीयैः सम्यक्क्षुधार्तं समुपक्रमेत ॥
आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन ॥ २० ॥
प्रवर्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥
तस्मिन् भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः ॥२१॥
आमाशये शूलमथो गुरुत्वं हृल्लास[2] उद्गारविघातनं च ॥
स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा स[3] शकृद्वमेच्च ॥ २२ ॥
श्वासश्च पक्वाशयजे भवन्ति लिङ्गानि चात्रालसकोद्भवानि ॥
आमोद्भवे वान्तमुपक्रमेत संसर्गभक्तक्रमदीपनीयैः ॥ २३ ॥
अथेतरं यो न शकृद्वमेत्तमामं जयेत् [4]स्वेदनपाचनैश्च ॥
विसूचिकायां परिकीर्तितानि द्रव्याणि वैरेचनिकानि यानि ॥ २४ ॥
तान्येव वर्तीर्विरचेद्द्विचूर्ण्य महिष्यजावीभगवां तु मूत्रैः ॥
स्विन्नस्य पायौ विनिवेश्य ताश्च चूर्णानि चैषां प्रधमेत्तु नाड्या ॥२५॥
मूत्रेषु संसाध्य यथाविधानं द्रव्याणि यान्यूर्ध्वमधश्च यान्ति ॥
क्वाथेन तेनाशु निरूहयेच्च मूत्रार्धयुक्तेन समाक्षिकेण ॥ २६ ॥
त्रिभण्डियुक्तं लवणप्रकुञ्चं दत्त्वा विरिक्तक्रममाचरेच्च ॥
एष्वेव तैलेन च साधितेन प्राप्तं यदि स्यादनुवासयेच्च ॥ २७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे[5] विसूचिकाप्रतिषेधो नाम ( अष्टादशोऽध्याय आदित. ) षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

१ 'वाप्यथ' इति हाराण०। २ 'हृत्स्तम्भ°' इति पा०। ३ 'च शकृद्वमिश्च' इति हाराण०। 'स्वेद्य यथाविधानम्' इति कार्तिककुण्डः। ४ "°विंतरेद्" इति हाराण०। ५ "तन्त्रे विसूचिका°" इति हाराण०।

# सप्तपञ्चाशत्तमोऽध्यायः ।

अथातोऽरोचकप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

दोषैः पृथक् सह च [१]चित्तविपर्ययाच्च
भक्तायनेषु हृदि चावतते प्रगाढम् ॥
नान्ने रुचिर्भवति तं भिषजो विकारं
भक्तोपघातमिह पञ्चविधं वदन्ति [२] ॥ ३ ॥

हृच्छूलपीडनयुतं विरसाननत्वं वातात्मके भवति लिङ्गमरोचके तु ॥
हृद्दाहचोषबहुता मुखतिक्तता च मूर्च्छा सतृड् भवति पित्तकृते तथैव ४
कण्डूगुरुत्वकफसंस्रवसा[३]दतन्द्राः श्लेष्मात्मके मधुरमास्यमरोचके तु ॥
सर्वात्मके पवनपित्तकफा बहूनि रूपाण्यथास्य हृदये समुदीरयन्ति ५

संरागशोकभयविप्लुतचेतसस्तु
चिन्ताकृतो भवति सोऽशुचिदर्शनाच्च ॥
वाते वचाम्बुवमनं कृतवान् पिबेच्च
स्नेहैः सुराभिर[४]थवेलजलेन चूर्णम् ॥ ६ ॥

कृष्णाविडङ्गयवभस्महरेणुभार्गीरास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥
पित्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं स्नेहः ससैन्धवसितामधुसर्पिरिष्टः ७

---

१ 'शोकसमुच्छ्रयाच्च' इति पा० । 'चित्तविपर्ययैश्च' इति हाराण० । २ वृद्धभोजस्तु—'प्रक्षिप्तं तु मुखे चान्नं जन्तोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो, भक्तद्वेषमतः शृणु ॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वापि भोजनम् । द्वेषमायाति यज्जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्य नान्ने भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते' इति पठति । ३ '°कण्ठसादाः' इति पा० । ४ '°वोष्णजलेन' इति हाराण० ।

निम्बाम्बुवामितवतः कफजेऽनुपानं
राजद्रुमाम्बु मधुना तु सदीप्यकं स्यात् ॥
चूर्णं यदुक्तमथवाऽनिलजे तदेव
सर्वैश्च सर्वकृतमेवमुपक्रमेत ॥ ८ ॥

द्राक्षापटोलविडवेत्रकरीरनिम्बमूर्वाभयाक्षबदरामलकेन्द्रवृक्षैः ॥
बीजैः करञ्जनृपवृक्षभवैश्च पिष्टैर्लेहं पचेत् सुरभिमूत्रयुतं यथावत् ९

मुस्तां वचां त्रिकटुकं रजनीद्वयं च
भार्गीं च कुष्ठमथ निर्दहनीं च पिष्ट्वा ॥
मूत्रेऽविजे द्विरदमूत्रयुते पचेद्वा
पाठां तुगामतिविषां रजनीं च मुख्याम् ॥ १० ॥
मण्डूकिमर्कममृतां च सलाङ्गलाख्यां
मूत्रे पचेत्तु महिषस्य विधानविद्वा ॥
एतान्न सन्ति चतुरो लिहतस्तु लेहान्
गुल्मारुचिश्वसनकण्ठहृदामयाश्च ॥ ११ ॥
सात्म्यान् [1]स्वदेशरचितान् विविधांश्च भक्ष्यान्
पानानि मूलफलषाडवरागयोगान् ॥
अद्याद्रसांश्च विविधान् विविधैः प्रकारै-
र्भुञ्जीत चापि लघुरूक्षमनःसुखानि ॥ १२ ॥
आस्थापनं विधिवदत्र विरेचनं च
कुर्यान्मृदूनि शिरसश्च विरेचनानि ॥
त्रीण्यूषणानि रजनीत्रिफलायुतानि
चूर्णीकृतानि यवशूकविमिश्रितानि ॥ १३ ॥

---

१ 'सदेशरचितान्' इति हाराण० ।

क्षौद्रायुतानि वितरेन्मुखबोधनार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ॥
मुस्तादिराजतरुवर्गदशाङ्गसिद्धैः
क्वाथैर्जयेन्मधुयुतैर्विविधैश्च लेहैः ॥ १४ ॥
मूत्रासवैर्गुडकृतैश्च तथा त्वरिष्टैः
क्षारासवैश्च मधुमाधवतुल्यगन्धैः ॥
स्यादेष एव कफवातहते विधिश्च
शान्ति गते हुतभुजि प्रशमाय तस्य ॥ १५ ॥
इच्छाभिघातभयशोकहतेऽन्तरग्नौ
भावान् भवाय वितरेत् खलु शक्यरूपान् ॥
अर्थेषु चाप्यपचितेषु पुनर्भवाय
पौराणिकैः श्रुतिशतैरनुमानयेत्तम् ॥ १६ ॥
दैन्यं गते मनसि बोधनमत्र शस्तं
यद्यत् प्रियं तदुपसेव्यमरोचके तु ॥ १७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रेऽरोचकप्रतिषेधो नाम (एकोनविंशोऽध्यायः, आदित ) सप्तपञ्चाशत्तमोऽध्याय ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः ।

अथातो मूत्राघातप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'मुखधावनार्थम°' इति हाराण० । २ 'चातिपतितेषु' इति पा० । ३ 'अनुभावयेत्तम्' इति हाराण० । ४ '°तन्त्रेऽरोचक°' इति हाराण० ।

वातकुण्डलिकाऽष्ठीला वातबस्तिस्तथैव च ॥
मूत्रातीतः सजठरो मूत्रोत्सङ्गः क्षयस्तथा ॥ ३ ॥
मूत्रग्रन्थिर्मूत्रशुक्रमुष्णवातस्तथैव च ॥
मूत्रौकसादौ द्वौ चापि रोगा द्वादश कीर्तिताः ॥ ४ ॥
रौक्ष्याद्वेगविघाताद्वा वायुरन्तरमाश्रितः[1] ॥
मूत्रं चरति संगृह्य विगुणः कुण्डलीकृतः ॥ ५ ॥
[2]सृजेदल्पाल्पमथवा सरुजस्कं शनैः शनैः ॥
वातकुण्डलिकां [3]तं तु व्याधिं विद्यात् सुदारुणम् ॥ ६ ॥
शकृन्मार्गस्य बस्तेश्च वायुरन्तरमाश्रितः ॥
अष्ठीलावद्घनं ग्रन्थिं करोत्यचलमुन्नतम् ॥ ७ ॥
विण्मूत्रानिलसङ्गश्च तत्राध्मानं च जायते ॥
[4]वेदना च परा बस्तौ वाताष्ठीलेति तां विदुः ॥ ८ ॥
वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ॥
निरुणद्धि मुखं तस्य बस्तेर्बस्तिगतोऽनिलः ॥ ९ ॥
मूत्रसङ्गो भवेत्तेन बस्तिकुक्षिनिपीडितः ॥
वातबस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ १० ॥
वेगं सन्धार्य मूत्रस्य यो भूयः स्रष्टुमिच्छति ॥
तस्य नाभ्येति यदि वा कथञ्चित्संप्रवर्तते ॥ ११ ॥
प्रवाहतो मन्दरुजमल्पमल्पं पुनः पुनः ॥
मूत्रातीतं तु तं विद्यान्मूत्रवेगविघातजम् ॥ १२ ॥
मूत्रस्य विहते वेगे तदुदावर्तहेतुना ॥
अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ १३ ॥

---

१ 'वायुर्बस्तौ सवेदनम्' इति हाराण० । २ 'स्रजेदल्पाल्प°' इति हा० । 'मूत्रमल्पाल्पमथवा सरुज संप्रवर्तते ।' इति पा० । 'सरुजं संप्रवर्तयेत्' इत्यपि पा० । ३ 'तां' इति हाराण० । ४ 'वेदना जायते बस्तौ' इति हाराण० ।

नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ॥
तं मूत्रजठरं विद्याद्[1]अधःस्रोतोनिरोधनम् ॥ १४ ॥
बस्तौ वाऽप्यथवा नाले मणौ वा यस्य देहिनः ॥
मूत्रं प्रवृत्तं [2]सज्जेत [3]सरक्तं वा प्रवाहतः ॥ १५ ॥
स्रवेच्छनैरल्पमल्पं सरुजं वाऽथ नीरुजम् ॥
विगुणानिलजो व्याधिः [4]स मूत्रोत्सङ्गसंज्ञितः ॥ १६ ॥
रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ॥
सदाहवेदनं कृच्छ्रं कुर्यातां मूत्रसंक्षयम् ॥ १७ ॥
अभ्यन्तरे बस्तिमुखे वृत्तोऽल्पः स्थिर एव च ॥
वेदनावानति [5]सदा मूत्रमार्गनिरोधनः ॥ १८ ॥
जायते सहसा यस्य ग्रन्थिरश्मरिलक्षणः ॥
स मूत्रग्रन्थिरित्येवमुच्यते वे[6]दनादिभिः ॥ १९ ॥
प्रत्युपस्थितमूत्रस्तु मैथुनं योऽभिनन्दति ॥
तस्य मूत्रयुतं रेतः सहसा संप्रवर्तते ॥ २० ॥
पुरस्ताद्वाऽपि मूत्रस्य पश्चाद्वाऽपि कदाचन ॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ २१ ॥
व्यायामाध्वातपैः पित्तं बस्तिं प्राप्यानिलावृतम् ॥
बस्तिं मेढ्रं गुदं चैव प्रदहन् स्रावयेदधः ॥ २२ ॥
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ॥
कृच्छ्रात् प्रवर्तते जन्तोरुष्णवातं वदन्ति तम् ॥ २३ ॥

---

१ 'अधोबस्तिनिरोधजम्' इति पा० । २ 'सज्येत' इति हाराण० । ३ 'ससक्तं चापि प्रवाहतः' इति पा० । ४ 'मूत्रोत्सगः स संज्ञित' इति हाराण० । ५ 'वेदनावानभिष्यन्दौ' इति हाराण० । ६ 'वेदवादिभिः' इति पा० ।

विशदं पीतकं मूत्रं सदाहं बहलं तथा ॥
शुष्कं भवति यच्चापि रोचनाचूर्णसन्निभम् ॥ २४ ॥
मूत्रौकसादं तं विद्याद्रोगं पित्तकृतं बुधः ॥
पिच्छिलं संहतं श्वेतं तथा [1]कृच्छ्रप्रवर्तनम् ॥ २५ ॥
शुष्कं भवति यच्चापि शङ्खचूर्णप्रपाण्डुरम् ॥
मूत्रौकसादं तं विद्यादामयं [2]द्वादशं कफात् ॥ २६ ॥
कषायकल्कसर्पींषि भक्ष्यान् लेहान् पयांसि च ॥
क्षार[3]मद्या(ध्वा)सवस्वेदान् बस्तींश्चोत्तरसंज्ञितान् ॥ २७ ॥
[4]विदध्यान्मतिमांस्तत्र विधिं चाश्मरिनाशनम् ॥
मूत्रोदावर्तयोगांश्च कात्स्न्र्ये[5]नात्र प्रयोजयेत् ॥ २८ ॥
कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ॥
धान्याम्लयुक्तं पीत्वैव मूत्रकृच्छ्रात् प्रमुच्यते ॥ २९ ॥
सुरां सौवर्चलवतीं मूत्रकृच्छ्री पिबेन्नरः ॥
मधु मांसोपदशं वा पिबेद्वाऽप्यथ गौडिकम् ॥ ३० ॥
पिबेत् कुङ्कुमकर्षं वा मधूदकसमायुतम् ॥
रात्रिपर्युषितं प्रातस्तथा सुखमवाप्नुयात् ॥ ३१ ॥
दाडिमाम्लां [6]युतां मुख्यामेलाजीरकनागरैः ॥
पीत्वा सुरां सलवणां मूत्रकृच्छ्रात् प्रमुच्यते ॥ ३२ ॥
पृथक्पर्ण्यादिवर्गस्य मूलं गोक्षुरकस्य च ॥
अर्धप्रस्थेन तोयस्य पचेत् [7]क्षीरचतुर्गुणम् ॥ ३३ ॥

---

१ 'कृच्छ्र प्रवर्तते' इति हाराण०। २ 'चापर इति हाराण०। ३ '"मध्वासव"' इति हाराण०। ४ 'अत· परं प्रवक्ष्यामि मूत्रदोषस्य भेषजम्' इति पा०। ५ 'कात्स्न्र्येनेह' इति पा०। ६ 'दाडिमाम्लयुतां' इति हाराण०। ७ 'क्षीर' इति हाराण०।

क्षीरावशिष्टं तच्छीतं सिता[1]क्षौद्रयुतं पिबेत् ॥
नरो मारुतपित्तोत्थमूत्राघातनिवारणम् ॥ ३४ ॥

निष्पीड्य वाससा सम्यग्वर्चो रासभवा[2]जिनोः ॥
रसस्य कुडवं तस्य पिबेन्मूत्ररुजापहम् ॥ ३५ ॥

मुस्ताऽभयादेवदारुमूर्वाणां मधुकस्य च ॥
पिबेदक्षसमं कल्कं मूत्रदोषनिवारणम् ॥ ३६ ॥

अभयामलकाक्षाणां कल्कं बदरसंमितम् ॥
अम्भसाऽलवणोपेतं पिबेन्मूत्ररुजापहम् ॥ ३७ ॥

उदुम्बरसमं कल्कं द्राक्षाया जलसंयुतम् ॥
पिबेत् पर्युषितं रा[3]त्रौ शीतं मूत्ररुजापहम् ॥ ३८ ॥

निदिग्धिकायाः स्वरसं पिबेत् कुडवसंमितम् ॥
मूत्रदोषहरं कल्कमथवा क्षौद्रसंयुतम् ॥ ३९ ॥

प्रपीड्यामलकानां तु रसं कुडवसंमितम् ॥
पीत्वाऽगदी भवेज्जन्तुर्मूत्रदोषरुजातुरः ॥ ४० ॥

धात्रीफलरसेनैवं सूक्ष्मैलां वा पिबेन्नरः ॥
पिष्ट्वाऽथवा सुशीतेन शालितण्डुलवारिणा ॥ ४१ ॥

तालस्य तरुणं मूलं [4]त्रपुसस्य रसं तथा ॥
श्वेतं कर्कटकं चैव [5]प्रातस्तु पयसा पिबेत् ॥ ४२ ॥

शृतं वा मधुरैः क्षीरं सर्पिर्मिश्रं पिबेन्नरः ॥
मूत्रदोषविशुद्ध्यर्थं तथैवाश्मरिनाश[6]नम् ॥ ४३ ॥

---

१ 'सिताघृतयुत' इति पा० । २ '°वाजिनाम्' इति हाराण० । ३ 'वारि' इति पा० । ४ 'त्रपुसस्वरस' इति हाराण० । ५ 'प्रातस्त' इति हाराण० । ६ 'शुक्रदोषहर परम्' इति हाराण० ।

बलाश्वदंष्ट्राक्रौञ्चास्थिकोकिलाक्षकतण्डुलान् ॥
शतपर्वकमूलं च देवदारु सचित्रकम् ॥ ४४ ॥
अक्षबीजं च सुरया कल्कीकृत्य पिबेन्नरः ॥
मूत्रदोषविशुद्ध्यर्थं तथैवाश्मरिनाशनम्[1] ॥ ४५ ॥
पाटलाक्षारमाहृत्य सप्तकृत्वः परिस्रुतम् ॥
पिबेन्मूत्रविकारघ्नं संसृष्टं तैलमात्रया ॥ ४६ ॥
[2]नलाश्मभेददर्भेक्षुत्रपुसैर्वारुबीजकान् ॥
क्षीरे परिश्रृतान् तत्र पिबेत् सर्पिःसमायुतान् ॥ ४७ ॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ॥
क्षारोदकेन मतिमान् त्वगेलोषण[3]चूर्णकम् ॥ ४८ ॥
पिबेद्गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथक् ॥
अत ऊर्ध्वं प्रवक्ष्यामि मूत्रदोषे क्रमं हितम् ॥ ४९ ॥
स्नेहस्वेदोपपन्नानां हितं [4]तेषु विरेचनम् ॥
ततः संशुद्धदेहानां हिताश्चोत्तरबस्तयः ॥ ५० ॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य दृश्यते[5] ॥
मैथुनोपरमस्तस्य बृंहणश्च विधिः स्मृतः ॥ ५१ ॥
ताम्रचूडवसा तैलं हितं चोत्तरबस्तिषु ॥
विधानं तस्य पूर्वं हि [6]व्यासतः परिकीर्तितम् ॥ ५२ ॥
क्षौद्रार्धपात्रं दत्त्वा च[7] पात्रं तु क्षीरसर्पिषः ॥
[8]शर्करायाश्च चूर्णं च द्राक्षाचूर्णं च तत्समम् ॥ ५३ ॥

---

१ 'तथैवाश्मरिशोधनम्' इति हाराण०। २ 'नलेक्षुदर्भाश्मभेद°' इति हाराण०। ३ '°लोषणसंयुतम्' इति कार्तिक०। ४ 'स्नेहविरेचनम्' इति पा०। ५ 'सिच्यते' इति हाराण०। ६ 'व्यापदः परिकीर्तिताः' इति पा०। ७ 'तु' इति हाराण०। ८ श्लोकार्धमिदं हाराण०ग्रन्थे न दृश्यते।

स्वयङ्गुप्ताफलं चैव तथैवेक्षुरकस्य च ॥
पिप्पलीचूर्णसंयुक्तमर्धभागं प्रकल्पयेत् ॥ ५४ ॥
[1]तदैकध्यं समानीय खजेनाभिप्रमन्थयेत् ॥
[2]ततः पाणितलं चूर्णं लीढ्वा क्षीरं ततः पिबेत् ॥ ५५ ॥
एतत् सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा ॥
मूत्रदोषाञ्जयेत् [3]सर्वानन्ययोगैः सुदुर्जयान् ॥ ५६ ॥
जयेच्छोणितदोषांश्च वन्ध्या गर्भं लभेत च ॥
नारी चैतत् प्रयुञ्जाना योनिदोषात् प्रमुच्यते ॥ ५७ ॥
बला कोलास्थि मधुकं श्वदंष्ट्राऽथ शतावरी ॥
मृणालं च कशेरुश्च बीजानीक्षुरकस्य च ॥ ५८ ॥
सहस्रवीर्याऽंशुमती पयस्या सह कालया ॥
शृगालविन्नाऽतिबला बृंहणीयो गणस्तथा ॥ ५९ ॥
एतानि समभागानि मतिमान् सह साधयेत् ॥
चतुर्गुणेन पयसा गुडस्य तुलया सह ॥ ६० ॥
द्रोणावशिष्टं तत् पूतं पचेत्तेन घृताढकम् ॥
तत् सिद्धं कलशे स्थाप्यं क्षौद्रप्रस्थेन संयुतम् ॥ ६१ ॥
सर्पिरेतत् प्रयुञ्जानो मूत्रदोषात् प्रमुच्यते ॥
[4]तुगाक्षीर्याश्च चूर्णानि शर्करायास्तथैव च ॥ ६२ ॥
क्षौद्रेण तुल्यान्यालोड्य प्रशस्तेऽहनि लेहयेत् ॥
तस्य खादेद्यथाशक्ति मात्रां क्षीरं ततः पिबेत् ॥ ६३ ॥
शुक्रदोषाञ्जयेन्मर्त्यः प्राश्य सम्यक् सुयन्त्रितः ॥
व्यवायक्षीणरेतास्तु सद्यः संलभते सुखम् ॥ ६४ ॥

---

१ 'एतदैकध्यमानीय' इति हाराण० । २ 'तस्य' इति हाराण० । ३ 'सर्वान् ये च स्युर्भृशदुर्जया·' इति पा० । ४ 'तुगाक्षीर्याश्च' इत्यत आरभ्य 'पिबन्नेव च हृष्यति' इति सार्धचतुःषष्टिश्लोकावधिग्रन्थो हाराण० ग्रन्थे नोपलभ्यते ।

ओजस्वी बलवान्मर्त्यः पिबन्नेव च हृष्यति ॥
चित्रकः सारिवा चैव बला कालानुसारिवा ॥ ६५ ॥

द्राक्षा विशाला पिप्पल्यस्तथा चित्रफला भवेत् ॥
तथैव मधुकं पथ्यां दद्यादामलकानि च ॥ ६६ ॥

घृताढकं पचेदेभिः कल्कैः[1] कर्षसमन्वितैः ॥
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् ॥ ६७ ॥

शीतं परिस्रुतं चैव शर्कराप्रस्थसंयुतम् ॥
तुगाक्षीर्यांश्च तत् सर्वं मतिमान् परिमिश्रयेत् ॥ ६८ ॥

ततो मितं पिबेत्काले यथादोषं यथाबलम् ॥
वातरेता श्लेष्मरेताः पित्तरेतास्तु यो भवेत् ॥ ६९ ॥

रक्तरेताः ग्रन्थिरेताः पिबेदिच्छन्नरोगताम् ॥
जीवनीयं च वृष्यं च सर्पिरेतद्बलावहम् ॥ ७० ॥

प्रज्ञाहितं[2] च धन्यं च सर्वरोगापहं शिवम् ॥
सर्पिरेतत् प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात् ॥ ७१ ॥

असृग्दोषाञ्जयेच्चापि योनिदोषांश्च संहतान् ॥
मूत्रदोषेषु सर्वेषु कुर्यादेतच्चिकित्सितम् ॥ ७२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते[3] कायचिकित्सातन्त्रे मूत्राघातप्रतिषेधो नाम (विंशोऽध्यायः, आदितः) अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

१ 'कल्कैरिक्षुसमन्वितैः' इति पा०। २ 'प्रजाहित' इति पा०। ३ "तन्त्रे मूत्रा" इति हाराण०।

# ऊनषष्टितमोऽध्यायः ।

अथातो मूत्रकृच्छ्रप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥[1]

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वातेन पित्तेन कफेन सर्वैस्तथाऽभिघातैः शकृदश्मरीभ्याम् ॥
तथाऽपरः शर्करया सुकष्टो मूत्रोपघातः कथितोऽष्टमस्तु ॥ ३ ॥

अल्पमल्पं समुत्पीड्य मुष्कमेहनबस्तिभिः ॥
फलद्भिरिव कृच्छ्रेण वाताघातेन मेहति ॥ ४ ॥

हारिद्रमुष्णं रक्तं वा मुष्कमेहनबस्तिभिः ॥
अग्निना दह्यमानाभैः पित्ताघातेन मेहति ॥ ५ ॥

स्निग्धं शुक्लमनुष्णं च मुष्कमेहनबस्तिभिः ॥
संहृष्टरोमा गुरुभिः श्लेष्माघातेन मेहति ॥ ६ ॥

दाहशीतरुजाविष्टो नानावर्णं मुहुर्मुहुः ॥
ताम्यमानस्तु[2] कृच्छ्रेण सन्निपातेन मेहति ॥ ७ ॥

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ॥
स्रोतःसु मूत्राघातस्तु जायते भृशवेदनः[3] ॥ ८ ॥

वातबस्तेस्तु तुल्यानि तस्य लिङ्गानि लक्षयेत् ॥
शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः ॥ ९ ॥

आध्मानं च सशूलं च मूत्रसङ्गं करोति हि ॥
अश्मरीहेतुकः पूर्वं मूत्राघात उदाहृतः ॥ १० ॥

अश्मरी शर्करा चैव तुल्ये[4] संभवलक्षणैः ॥
शर्करायां विशेषं तु शृणु कीर्तयतो मम ॥ ११ ॥

---

१ 'मूत्रोपघातप्रतिषेध°' इति पा० । २ 'ताम्यमान· सुकृच्छ्रेण' इति हाराण० । ३ 'भृशदारुणः' इति पा० । ४ 'तुल्यसभवलक्षणा' इति पा० ।

पच्यमानस्य पित्तेन भिद्यमानस्य वायुना ॥
श्लेष्मणोऽवयवा भिन्नाः शर्करा इति संज्ञिताः ॥ १२ ॥
हृत्पीडा वेपथुः शूलं कुक्षौ[1] वह्निः सुदुर्बलः ॥
ताभिर्भवति मूर्च्छा च मूत्राघातश्च दारुणः ॥ १३ ॥
मूत्रवेगनिरस्तासु तासु शाम्यति वेदना ॥
[2]यावदन्या पुनर्नैति गुडिका स्रोतसो मुखम् ॥ १४ ॥
शर्करासंभवस्यैतन्मूत्राघातस्य लक्षणम् ॥
[3]चिकित्सितमथैतेषामष्टानामपि वक्ष्यते ॥ १५ ॥
अश्मरीं च समाश्रित्य यदुक्तं प्रसमीक्ष्य तत् ॥
यथादोषं प्रयुञ्जीत [4]स्नेहादिमपि च क्रमम् ॥ १६ ॥
श्वदंष्ट्राश्मभिदौ कुम्भीं हपुषां कण्टकारिकाम् ॥
बलां शतावरीं रास्नां वरुणं गिरिकर्णिकाम् ॥ १७ ॥
तथा विदारिगन्धादिं संहृत्य त्रैवृतं पचेत् ॥
तैलं घृतं वा तत् पेयं तेन वाऽप्यनुवासनम् ॥ १८ ॥
दद्यादुत्तरबस्तिं च वातकृच्छ्रोपशान्तये ॥
श्वदंष्ट्रास्वरसे तैलं सगुडक्षीरनागरम् ॥ १९ ॥
पक्त्वा तत् पूर्ववद्योज्यं तत्रानिलरुजापहम् ॥
तृणोत्पलादिकाकोलीन्यग्रोधादिगणैः[5] कृ(शृ)तम् ॥ २० ॥
पीतं घृतं पित्तकृच्छ्रं नाशयेत् [6]क्षीरमेव वा ॥
दद्यादुत्तरबस्तिं च पित्तकृच्छ्रोपशान्तये ॥ २१ ॥

---

१ 'कुक्षावग्निश्च दुर्बलः' इति पा०। २ 'यावदस्याः' इति पा०। ३ 'चिकित्सितमतस्तूर्ध्वमष्टा°' इति हाराण०। ४ 'स्नेहादिकमपि क्रमम्' इति हाराण०। ५ '°गणे कृतम्' इति हाराण०। ६ 'क्षिप्रमेव वा' इति हाराण०।

एभिरेव कृतः [1]स्नेहस्त्रिविधेष्वपि बस्तिषु ॥
हितं विरेचनं चेक्षुक्षीरद्राक्षारसैर्युतम् ॥ २२ ॥
सुरसोषकमुस्तादौ वरुणादौ च यत् [2]कृतम् ॥
तैलं तथा यवाग्वादि [3]कफाघाते प्रशस्यते ॥ २३ ॥
यथादोषोच्छ्रयं कुर्यादेतानेव च सर्वजे ॥
फल्गुवृश्चीरदर्भाश्मसारचूर्णं च वारिणा ॥ २४ ॥
सुरेक्षुरसदर्भाम्बुपीतं कृच्छ्ररुजापहम् ॥
तथाऽभिघातजे कुर्यात् सद्योव्रणचिकित्सितम् ॥ २५ ॥
मूत्रकृच्छ्रे शकृज्जाते कार्या वातहरी क्रिया ॥
स्वेदावगाहावभ्यङ्गबस्तिचूर्णक्रियास्तथा ॥ २६ ॥
[4]ये त्वन्ये तु तथा कृच्छ्रे तयोः प्रोक्तः क्रियाविधिः ॥ २७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रा[5]न्तर्गते कायचिकित्सातन्त्रे मूत्रकृच्छ्रप्रतिषेधो नाम ( एकविंशतितमोऽध्याय , आदितः ) एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः ।

अथातो[6]ऽमानुषोपसर्गप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः ॥
इति यत् प्रागभिहितं विस्तरस्तस्य वक्ष्यते ॥ ३ ॥

---

१ 'स्नेहस्त्रिविधेष्वेव बस्तिषु' इति हाराण० । २ 'संस्कृतम्' इति हाराण० । ३ 'कफकृच्छ्रे प्रशस्यते' इति हाराण० । ४ 'ये द्वे त्वन्ये तथा' इति हाराण० । ५ '°तन्त्रे मूत्र°' इति हाराण० । ६ '°ऽमानुषप्रतिषेध°' इति हाराण० ।

गुह्यानागतविज्ञानमनवस्थाऽसहिष्णुता ॥
क्रिया वाऽमानुषी यस्मिन् सग्रहः परिकीर्त्यते ॥ ४ ॥
अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् ॥
हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि वा ॥ ५ ॥
असङ्ख्येया ग्रहगणा ग्रहाधिपतयस्तु ये ॥
व्यज्यन्ते विविधाकारा भिद्यन्ते ते तथाऽष्टधा ॥ ६ ॥

देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः ॥
रक्षांसि या चापि पिशाचजातिरेषोऽष्टको देवगणो ग्रहाख्यः ॥ ७ ॥
संतुष्टः शुचिरपि चेष्टगन्धमाल्यो निस्तन्द्री ह्यवितथसंस्कृतप्रभाषी ॥
तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति नरः स देवजुष्टः ॥८॥
संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः ॥
सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा [1]भवति च देवशत्रुजुष्टः ॥९॥
हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः ॥
[2]नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः १०
ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो [3]द्रुतमतिरल्पवाक् सहिष्णुः ॥
तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीडितो मनुष्यः ११

प्रेतेभ्यो विसृजति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ॥
मांसेप्सुस्तिलगुडपायसाभिकाम-
[4]स्तद्भक्तो भवति पितृग्रहाभिभूतः ॥ १२ ॥

---

१ 'भवति च य' स' इति हाराण० । २ 'नृत्यन् वा' इति हाराण० ।
३ 'द्रुतगति°' इति पा० । ४ '°स्तद्भक्तो भवति' इति हाराण० ।

भूमौ यः प्रसरति सर्पवत् कदाचित्
[1]सृक्किण्यौ विलिखति जिह्वया तथैव ॥
निद्रालुर्गुडमधुदुग्धपायसेप्सु-
र्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥ १३ ॥
मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ॥
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति च रक्षसा गृहीतः ॥ १४ ॥
उद्धस्तः कृशपरुषश्चिरप्रलापी
दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः ॥
बह्वाशी विजनहिमाम्बुरात्रिसेवी
[2]व्याविद्धो भ्रमति रुदन् पिशाचजुष्टः ॥ १५ ॥
स्थूलाक्षस्त्वरितगतिः स्वफेनलेही
निद्रालुः पतति च कम्पते च योऽति ॥
यश्चाद्रिद्विरदनगादिविच्युतः सन्
संसृष्टो न भवति वार्धकेन जुष्टः ॥ १६ ॥
देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि ॥
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ ॥ १७ ॥
[3]कृष्णक्षये च पितरः पञ्चम्यामपि चोरगाः ॥
रक्षांसि निशि पैशाचाश्चतुर्दश्यां विशन्ति च ॥ १८ ॥
दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा ॥
स्वमणिं भास्करस्योस्रा यथा देहं च देहधृक् ॥
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम् ॥ १९ ॥

---

१ 'सृक्कण्यौ विलिखति' इति हाराण०। २ 'व्याचेष्ट भ्रमति' इति हाराण०। ३ 'कृष्णपक्षे च' इति हाराण०।

तपांसि तीव्राणि तथैव दानं व्रतानि धर्मो नियमाश्च सत्यम्[1] ॥
गुणास्तथाऽष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च यथाप्रभावम् ॥२०॥
न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति ॥
ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः ॥ २१ ॥
तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः ॥
असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशन्ति ॥ २२ ॥

निशाचराणां तेषां हि ये देवगणमाश्रिताः[2] ॥
ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदञ्जनाः ॥ २३ ॥
देवग्रहा इति पुनः प्रोच्यन्तेऽशुचयश्च[3] ये ॥
देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते च देववत् ॥ २४ ॥
[4]स्वामिशीलक्रियाचाराः क्रम एष सुरादिषु ॥
निर्ऋतेर्या दुहितरस्तासां स प्रसवः स्मृतः ॥ २५ ॥
सत्यत्वादपवृत्तेषु वृत्तिस्तेषां गणैः कृता ॥
हिंसाविहारा ये केचिद्देवभावमुपाश्रिताः[5] ॥ २६ ॥
भूतानीति कृता संज्ञा तेषां संज्ञाप्रवक्तृभिः ॥
ग्रहसंज्ञानि भूतानि यस्माद्वेत्त्यनया भिषक् ॥ २७ ॥
विद्यया भूतविद्यात्वमत एव निरुच्यते ॥
तेषां शान्त्यर्थमन्विच्छन् वैद्यस्तु सुसमाहितः ॥ २८ ॥
जपैः सनियमैर्होमैरारभेत चिकित्सितुम् ॥
रक्तानि गन्धमाल्यानि बीजानि मधुसर्पिषी ॥ २९ ॥

---

१ 'निश्चयमस्य सत्यम्' इति हाराण०। २ 'देवगणसंसृताः' इति हाराण०। ३ 'शुचयश्च ये' इति हाराण०। ४ 'स्वामिशीलक्रियाचारक्रमा एव सुरादिषु। निर्ऋतेर्या दुहितरस्तासां सप्रसवाः स्मृताः' इति हाराणचन्द्रसमतः पाठः। ५ '°दिव्यं भावमुपाश्रिताः' इति हाराण०।

भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते ॥
[1]वस्त्राणि गन्धमाल्यानि मांसानि रुधिराणि च ॥ ३० ॥
यानि येषां यथेष्टानि तानि तेभ्यः प्रदापयेत् ॥
हिंसन्ति मनुजान् येषु प्रायशो दिवसेषु तु ॥ ३१ ॥
दिनेषु तेषु देयानि तद्भूतविनिवृत्तये ॥
देवग्रहे देवगृहे हुत्वाऽग्निं [2]प्रा(दा)पयेद्बलिम् ॥ ३२ ॥
कुशस्वस्तिकपूपाज्यच्छत्रपायससंभृतम् ॥
असुराय यथाकालं विदध्याच्चत्वरादिषु ॥ ३३ ॥
गन्धर्वस्य गवां मध्ये [3]मद्यमांसाम्बुजाङ्गलम् ॥
हृद्ये वेश्मनि यक्षस्य कुल्माषासृक्सुरादिभिः ॥ ३४ ॥
अतिमुक्तक[4]कुन्दाब्जैः पुष्पैश्च वितरेद्बलिम् ॥
नद्यां पितृग्रहायेष्टं कुशास्तरणभूषितम् ॥ ३५ ॥
[5]तत्रैवोपहरेच्चापि नागाय विविधं बलिम् ॥
चतुष्पथे राक्षसस्य भीमेषु गहनेषु वा ॥ ३६ ॥
शून्यागारे पिशाचस्य तीव्रं बलिमुपाहरेत् ॥
पूर्वमाचरितैर्मन्त्रैर्भूतविद्यानिदर्शितैः ॥ ३७ ॥
न शक्या बलिभिर्जेतुं योगैस्तान् समुपाचरेत् ॥
अजर्क्षचर्मरोमाणि शल्यकोलूकयोस्तथा ॥ ३८ ॥
हिङ्गु मूत्रं च बस्तस्य धूममस्य प्रयोजयेत् ॥
एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः ॥ ३९ ॥

---

१ 'वस्त्राणि मद्यमांसानि क्षीराणि' इति हाराण० । २ 'प्रापयेद्बलिम्' इति हाराण० । ३ 'मद्य मांसं च जाङ्गलम्' इति पा० । ४ '°कुन्दाब्जपुष्पैश्च' इति हाराण० । ५ 'तथैवोपहरे°' इति हाराण० ।

गजाह्वपिप्पलीमूलव्योषामलकसर्षपान् ॥
गोधानकुलमार्जारऋष्यपित्तप्रपेषितान्[1] ॥ ४० ॥
नस्याभ्यञ्जनसेकेषु विदध्याद्योगतत्त्ववित् ॥
खराश्वाश्वतरोलूककरभश्वशृगालजम् ॥ ४१ ॥
पुरीषं गृध्रकाकानां[2] वराहस्य च पेषयेत् ॥
बस्तमूत्रेण तत्सिद्धं तैलं स्यात् पूर्ववद्धितम् ॥ ४२ ॥
शिरीषबीजं लशुनं शुण्ठीं सिद्धार्थकं वचाम् ॥
मञ्जिष्ठां रजनीं कृष्णां बस्तमूत्रेण पेषयेत् ॥ ४३ ॥
वर्त्यश्छायाविशुष्कास्ताः सपित्ता नयनाञ्जनम् ॥
नक्तमालफलं व्योषं मूलं श्योनाकबिल्वयोः ॥ ४४ ॥
हरिद्रे च कृता वर्त्यः पूर्ववन्नयनाञ्जनम् ॥
सैन्धवं कटुकां हिङ्गु वयःस्थां च वचामपि ॥
बस्तमूत्रेण [3]संपिष्टं मत्स्यपित्तेन पूर्ववत् ॥ ४५ ॥
ये ये ग्रहा न सिध्यन्ति सर्वेषां नयनाञ्जनम् ॥
पुराणसर्पिर्लशुनं हिङ्गु सिद्धार्थकं वचा ॥ ४६ ॥
गोलोमी चाजलोमी च भूतकेशी जटा तथा ॥
[4]कुक्कुटा सर्पगन्धा च तथा काणविकाणिके ॥ ४७ ॥
वज्रप्रोक्ता[5] वयःस्था च शृङ्गी मोहनवल्लिका ॥
अर्कमूलं त्रिकटुकं लता स्रोतोजमञ्जनम् ॥ ४८ ॥
नैपाली हरितालं च रक्षोघ्ना ये च कीर्तिताः ॥
सिंहव्याघ्रर्क्षमार्जारद्वीपिवाजिगवां तथा ॥ ४९ ॥

---

१ "ऋष्यपित्तप्रभावितान्' इति हाराण० । २ 'गृध्रज क(न्य)ङ्कोर्वराहस्य' इति पा० । ३ 'संपिष्य' इति हाराण० । ४ 'कुक्कुटी सर्पगन्धा' इति हाराण० । ५ 'ऋष्यप्रोक्ता' इति हाराण० ।

श्वाविच्छल्यकगोधानामुष्ट्रस्य नकुलस्य च ॥
विट्त्वग्रोमवसामूत्ररक्तपित्तनखादयः[1] ॥ ५० ॥
अस्मिन् वर्गे भिषक् कुर्यात्तैलानि च घृतानि च ॥
पानाभ्यञ्जननस्येषु तानि योज्यानि जानता ॥ ५१ ॥
अवपीडेऽञ्जने चैव विदध्याद्गुटिकीकृतम् ॥
विदधीत परीषेके क्वथितं, चूर्णितं तथा ॥ ५२ ॥
उद्धूलने, श्लक्ष्णपिष्टं प्रदेहे चावचारयेत् ॥
एष सर्वविकारांस्तु मानसानपराजितः ॥ ५३ ॥
हन्यादल्पेन कालेन स्नेहादिरपि च क्रमः[2] ॥
न चाचौक्षं[3] प्रयुञ्जीत प्रयोगं देवताग्रहे ॥ ५४ ॥
ऋते पिशाचादन्यत्र प्रतिकूलं न चाचरेत् ॥
वैद्यातुरौ निहन्युस्ते ध्रुवं क्रुद्धा महौजसः ॥ ५५ ॥
हिताहितीये यच्चोक्तं नित्यमेव समाचरेत् ॥
ततः प्राप्स्यति सिद्धिं च यशश्च विपुलं भिषक् ॥ ५६ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते भूतविद्यातन्त्रेऽमानुषोपसर्गप्रतिषेधो नाम (प्रथमोऽध्यायः, आदितः) षष्टितमोऽध्यायः ॥ ६० ॥

---

## एकषष्टितमोऽध्यायः ।

अथातोऽपस्मारप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'विट्त्वग्रोमवसामज्जरक्तमूत्रनखत्वच.' इति पा० । २ 'क्रमात्' इति हाराण० । ३ 'न चायुक्त' इति पा० ।

स्मृतिर्भूतार्थविज्ञानमपश्च परिवर्जने ॥
अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥ ३ ॥
मिथ्यातियोगेन्द्रियार्थकर्मणाम[1]भिसेवनात् ॥
विरुद्धमलिनाहारविहारकुपितैर्मलैः ॥ ४ ॥
वेगनिग्रहशीलानामहिताशुचिभोजिनाम् ॥
रजस्तमोभिभूतानां गच्छतां च रजस्वलाम् ॥ ५ ॥
तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् ॥
चेतस्यभिहते पुंसामपस्मारोऽभिजायते ॥ ६ ॥
हृत्कम्पः[2] शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥
निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ ॥ ७ ॥
संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः ॥
रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥ ८ ॥
विक्षिपन् हस्तपादं च विजिह्मभ्रूर्विलोचनः ॥
दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ ॥ ९ ॥
अल्पकालान्तरं चापि पुनः संज्ञां लभेत सः ॥
सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्विधः ॥ १० ॥
वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः ॥
वेपमानो दशन्[3] दन्तान् श्वसन् फेनं वमन्नपि ॥ ११ ॥
यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति ॥
ततो मे चित्तनाशः स्यात् सोऽपस्मारोऽनिलात्मकः ॥ १२ ॥
तृट्तापस्वेदमूर्च्छार्तो धुन्वन्नङ्गानि विह्वलः ॥
यो ब्रूयाद्विकृतं सत्त्वं पीतं मामनुधावति ॥ १३ ॥

---

१ '°मतिसेवनात्' इति हाराण० । २ अयं श्लोको सार्धदशमश्लोकात् पर दृश्यते हाराण०ग्रन्थे । ३ 'दशेद्दन्तान्' इति हाराण० ।

ततो मे चित्तनाशः स्यात् स पित्तभव उच्यते ॥
शीतहृल्लासनिद्रार्तः पतन् भूमौ वमन् कफम् ॥ १४ ॥
यो ब्रूयाद्विकृतं सत्त्वं शुक्लं मामनुधावति ॥
ततो मे चित्तनाशः स्यात् सोऽपस्मारः कफात्मकः ॥ १५ ॥
हृदि तोदस्तृडुत्क्लेदस्त्रिष्वप्येतेषु संख्यया ॥
प्रलापः कूजनं क्लेशः प्रत्येकं तु भवेदिह ॥ १६ ॥
सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे ॥
अनिमित्तागमाद्व्याधेर्गमनादकृतेऽपि च ॥ १७ ॥
आगमाच्चाप्यपस्मारं वदन्त्यन्ये न दोषजम् ॥
क्रमोपयोगाद्दोषाणां क्षणिकत्वात्तथैव च ॥ १८ ॥
आगमाद्वैश्वरूप्याच्च स तु निर्वर्ण्यते बुधैः ॥
[1]देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित् ॥ १९ ॥
शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः ॥
स्थायिनः केचिदल्पेन कालेनाभिप्रवर्धिताः ॥ २० ॥
दर्शयन्ति विकारांस्तु विश्वरूपान्निसर्गतः ॥
अपस्मारो महाव्याधिस्तस्माद्दोषज एव तु ॥ २१ ॥
तस्य कार्यो विधिः सर्वो य उन्मादेषु वक्ष्यते ॥
पुराणसर्पिषः पानमभ्यङ्गश्चैव पूजितः ॥ २२ ॥
उपयोगो ग्रहोक्तानां योगानां तु विशेषतः ॥
[2]ततः सिध्यन्ति ते सर्वे योगैरन्यैश्च साधयेत् ॥
शिग्रुकट्वङ्गकिण्वाहिनिम्बत्वग्रससाधितम् ॥ २३ ॥

---

१ 'वर्षत्यपि यथा देवे' इति हाराण० ।　२ श्लोकार्धमिदं हाराणचन्द्रो न पठति ।

चतुर्गुणे गवां मूत्रे तैलमभ्यञ्जने हितम् ॥
गोधानकुलनागानां पृषतर्क्षगवामपि ॥ २४ ॥
पित्तेषु सिद्धं तैलं च पानाभ्यङ्गेषु पूजितम् ॥
तीक्ष्णैरुभयतोभागैः शिरश्चापि विशोधयेत् ॥ २५ ॥
पूजां रुद्रस्य कुर्वीत तद्गणानां च नित्यशः ॥
वातिक बस्तिभिश्चापि पैत्तिक तु विरेचनैः ॥ २६ ॥
कफजं वमनैर्धीमानपस्मारमुपाचरेत् ॥
कुलत्थयवकोलानि शणबीजं पलङ्कषाम् ॥ २७ ॥
जटिलां पञ्चमूल्यौ द्वे पथ्यां चोत्क्वाथ्य यत्नतः ॥
बस्तमूत्रयुतं सर्पिः [1]पचेत्तद्वातिके हितम् ॥ २८ ॥
काकोल्यादिप्रतीवापं सिद्धं [2]च प्रथमे गणे ॥
पयोमधुसितायुक्तं घृतं तत् पैत्तिके हितम् ॥ २९ ॥
कृष्णावचामुस्तकाद्यैर्युक्तमारग्वधादिके ॥
[3]पक्वं च मूत्रवर्गे तु श्लेष्मापस्मारिणे हितम् ॥ ३० ॥
सुरद्रुमवचाकुष्ठसिद्धार्थव्योषहिङ्गुभिः ॥
मञ्जिष्ठारजनीयुग्मसमङ्गात्रिफलाम्बुदैः ॥ ३१ ॥
करञ्जबीजशैरीषगिरिकर्णीहुताशनैः ॥
सिद्धं सिद्धार्थकं नाम सर्पिर्मूत्रचतुर्गुणम् ॥ ३२ ॥
कृमिकुष्ठगरश्वासबलासविषमज्वरान् ॥
सर्वभूतग्रहोन्मादानपस्मारांश्च नाशयेत् ॥ ३३ ॥
दशमूलेन्द्रवृक्षत्वङ्मूर्वाभार्गी[4]फलत्रिकैः ॥
[5]शम्पाकश्रेयसीसप्तपर्णापामार्गफल्गुभिः ॥ ३४ ॥

---

१ 'पिबेत्तद्वातिके' इति हाराण०। २ 'वा' इति हाराण०। ३ 'पक्वं तन्मूत्रवर्गेषु' इति हाराण०। ४ "फलत्रयैः' इति हाराण०। ५ 'सम्पाकश्रेयसीसप्तपर्ण्यपामार्ग" इति हाराण०।

शृतैः[1] कल्कैश्च भूनिम्बपूतीकव्योषचित्रकैः ॥
त्रिवृत्पाठानिशायुग्मसारिवाद्वयपौष्करैः ॥ ३५ ॥
कटुकायासदन्त्युग्रा[2]नीलिनीक्रिमिशत्रुभिः ॥
सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ॥ ३६ ॥
साधितं पञ्चगव्याख्यं सर्वापस्मारभूतनुत् ॥
चातुर्थकक्षयश्वासानुन्मादांश्च नियच्छति[3] ॥ ३७ ॥
भार्गीशृते पचेत् क्षीरे शालितण्डुलपायसम् ॥
त्र्यहं शुद्धाय [4]तं भोक्तुं वराहायोपकल्पयेत् ॥ ३८ ॥
ज्ञात्वा च मधुरीभूतं तं[5] विशस्यान्नमुद्धरेत् ॥
त्रीन् भागांस्तस्य चूर्णस्य किण्वभागेन संसृजेत् ॥ ३९ ॥
मण्डोदकार्थे देयश्च भार्गीक्काथः सुशीतलः ॥
शुद्धे कुम्भे निदध्याच्च संभारं तं सुरां ततः ॥ ४० ॥
जातगन्धां जातरसां पाययेदातुरं भिषक् ॥
सिरां विध्येदथ प्राशां मङ्गल्यानि च धारयेत् ॥ ४१ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रा[6]न्तर्गते भूतविद्यातन्त्रेऽपस्मार-
प्रतिषेधो नाम (द्वितीयोऽध्याय , आदित ) एकषष्टि-
तमोऽध्याय· ॥ ६१ ॥

---

१ 'एतै·' इति हाराण० । २ 'कटुकामदयन्त्युग्रा·' इति पा० । ३ अ-
स्याग्रे—'वातिक बस्तिभिश्चापि पैत्तिक तु विरेचनै । कफज वमनैर्धीमानपस्मा-
रमुपाचरेत्' इत्यधिकः पाठो हाराण०ग्रन्थे दृश्यते । ४ 'तद्भोज्य' इति
हाराण० । ५ 'त विशस्य तदुद्धरेत्' इति हाराण० । ६ '°तन्त्रे भूत°' —
हाराण० ।

# द्विषष्टितमोऽध्यायः ।

अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मदयन्त्युद्ध(द्ग)ता दोषा यस्मादुन्मार्गमाश्रिताः[1] ॥
मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः[2] ॥ ३ ॥
एकैकशः[3] समस्तैश्च दोषैरत्यर्थमूर्च्छितैः ॥
मानसेन च दुःखेन स पञ्चविध उच्यते ॥ ४ ॥
विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् ॥
स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥ ५ ॥
मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम् ॥
अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम्[4] ॥ ६ ॥
वायुनोन्मथनं चापि भ्रमश्चक्रगतस्य[5] वा ॥
यस्य स्यादचिरेणैव[6] उन्मादं सोऽधिगच्छति ॥ ७ ॥

रूक्षच्छविः परुषवाग्धमनीततो वा
[7]शीतातुरः कृशतनुः स्फुरिताङ्गसन्धिः ॥
आस्फोटयत्यटति[8] गायति नृत्यशीलो
विक्रोशति भ्रमति चाप्यनिलप्रकोपात् ॥ ८ ॥
तृट्स्वेददाहबहुलो बहुभुग्विनिद्र-
श्छायाहिमानिलजलान्तविहारसेवी ॥
तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की
पित्ताद्दिवा नभसि पश्यति तारकाश्च ॥ ९ ॥

---

१ 'तन्मार्गमाश्रिताः' इति पा० । २ 'कीर्त्यते' इति पा० । ३ 'एकशोऽथ' इति पा० । ४ 'कलुषमज्जनम्' इति पा० । ५ 'भ्रमश्च क्रमतस्तथा' इति पा० । ६ 'स्यादचिरेणैवमुन्माद' इति हाराण० । ७ 'श्वासातुरः' इति पा० । ८ 'आस्फोटयन् पठति' इति हाराण० ।

छर्द्यग्निसादसदनारुचिकासयुक्तो
योषिद्विविक्तरतिरल्पमतिप्रचारः ॥
निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी
रात्रौ भृशं भवति चापि कफप्रकोपात् ॥ १० ॥
[1]सर्वात्मके पवनपित्तकफा यथास्वं
संहर्षिता इव च लिङ्गमुदीरयन्ति ॥ ११ ॥
चौरैर्नरेन्द्रपुरुषैररिभिस्तथाऽन्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा ॥
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः ॥ १२ ॥
चित्रं स जल्पति मनोनुगतं विसंज्ञो
गायत्यथो हसति रोदिति मू[2]ढसंज्ञः ॥
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विष[3]क्कृतेऽथ भवेत् परासुः ॥ १३ ॥
स्निग्धं स्विन्नं तु मनुजमुन्मादार्तं विशोधयेत् ॥
तीक्ष्णैरुभयतोभागैः शिरसश्च विरेचनैः ॥ १४ ॥
विविधैरवपीडैश्च सर्षपस्नेहसंयुतैः ॥
योजयित्वा तु तच्चूर्णं घ्राणे त[4]स्य प्रयोजयेत् ॥ १५ ॥
सततं धूपयेच्चैनं श्वगोमांसैः सुपूतिभिः ॥
सर्षपाणां च तैलेन नस्याभ्यङ्गौ हितौ सदा ॥ १६ ॥
दर्शयेदद्भुतान्यस्य वदेन्नाशं प्रियस्य वा ॥
भीमाकारैर्नरैर्नागैर्दान्तैर्व्यालैश्च निर्विषैः ॥ १७ ॥

---

१ 'सर्वात्मके त्रिभिरपि व्यतिमिश्रितानि रूपाणि वातकफपित्तकृतानि विद्यात् । सम्पूर्णलक्षणमसाध्यमुदाहरन्ति सर्वात्मकं क्वचिदपि प्रवदन्ति साध्यम्' इति पाठोऽत्र हाराणचन्द्रः पठति । २ 'रोदिति चापि मूढः' इति हाराण० । ३ 'विषकृते च भवेद्विसंज्ञः' इति पा० । ४ 'नस्य' इति पा० ।

[१]भीषयेत् संयतं पाशैः कशाभिर्वाऽथ ताडयेत् ॥
यन्त्रयित्वा सुगुप्तं वा त्रासयेत्तं तृणाग्निना ॥ १८ ॥
[२]जलेन तर्जयेद्वाऽपि रज्जुघातैर्विभावयेत् ॥
बलवांश्चापि संरक्षेत् जलेऽन्तः परिवासयेत् ॥
प्रतुदेदारया चैनं मर्माघातं विवर्जयेत् ॥
[३]वेश्मनोऽन्तः प्रविश्यैनं रक्षंस्तद्वेश्म दीपयेत् ॥ १९ ॥
सापिधाने जरत्कूपे[४] सततं वा निवासयेत् ॥
त्र्यहात्र्यहाद्यवागूश्च तर्पणान्[५] वा प्रदापयेत् ॥ २० ॥
केवलानम्बुयुक्तान् वा कुल्माषान् वा बहुश्रुतः ॥
हृद्यं यद्दीपनीयं च तत्पथ्यं तस्य भो(यो)जयेत् ॥ २१ ॥
( विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ॥
श्यामैलवालुकैलाभिश्चन्दनामरदारुभिः ॥ २२ ॥
बर्हिष्ठरजनीकुष्ठपर्णिनीसारिवाद्वयैः ॥
हरेणुकात्रिवृद्दन्तीवचातालीसकेशरैः ॥ २३ ॥
द्विक्षीरं साधितं सर्पिर्मालतीकुसुमैः सह ॥
गुल्मकासज्वरश्वासक्षयोन्मादनिवारणम् ॥ २४ ॥
एतदेव हि संपक्वं जीवनीयोपसंभृतम् ॥
चतुर्गुणेन दुग्धेन महाकल्याणमुच्यते ॥ २५ ॥
अपस्मारं ग्रहं शोषं क्लैब्यं कार्श्यमबीजताम् ॥
घृतमेतन्निहन्त्याशु ये चादौ गदिता गदाः ॥ २६ ॥
बर्हिष्ठकुष्ठमञ्जिष्ठाकटुकैलानिशाह्वयैः ॥
तगरत्रिफलाहिङ्गुवाजिगन्धामरद्रुमैः ॥ २७ ॥

---

१ 'संतत' इति हाराण०। २ 'जलेन तर्जयेद्' 'बलवांश्चापि' इति श्लोकार्धे हाराणचन्द्रो न पठति। ३ श्लोकार्धमिदं हाराण०ग्रन्थे न दृश्यते। ४ 'कूपे चक्रपिधाने वा' इति पा०। ५ 'दद्यात्सक्तूञ्जलेन वा' इति हाराण०।

वचाऽजमोदाकाकोलीमेदामधुकपद्मकैः ॥
सशर्करं हितं सर्पिः पक्वं क्षीरचतुर्गुणम् ॥ २८ ॥

बालानां ग्रहजुष्टानां पुंसां दुष्टाल्परेतसाम् ॥
ख्यातं फलघृतं स्त्रीणां वन्ध्यानां चाशु गर्भदम्[1] ॥ )

ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गु सुरां जटाम् ॥
विषघ्नीं लशुनं रास्नां विशल्यां सुरसां वचाम् ॥ ३० ॥

ज्योतिष्मतीं [2]नागरं च अनन्तामभयां तथा ॥
सौराष्ट्रीं च समांशानि [3]गजमूत्रेण पेषयेत् ॥ ३१ ॥

छायाविशुष्कास्तद्वर्तीर्योजयेद्विधिकोविदः ॥
अवपीडेऽञ्जनेऽभ्यङ्गे नस्ये धूमे प्रलेपने ॥ ३२ ॥

उरोऽपाङ्गललाटेषु सिराश्चास्य विमोक्षयेत् ॥
अपस्मारक्रियां चापि ग्रहोद्दिष्टां च कारयेत् ॥ ३३ ॥

शान्तदोषं विशुद्धं च स्नेहबस्तिभिराचरेत्[4] ॥
उन्मादेषु च सर्वेषु कुर्याच्चित्तप्रसादनम् ॥
मृदुपूर्वां मदेऽप्येवं [5]क्रियां मृद्वीं प्रयोजयेत् ॥ ३४ ॥

शोकशल्यं व्यपनयेदुन्मादे पञ्चमे भिषक् ॥
विषजे मृदुपूर्वां च विषघ्नीं कारयेत् क्रियाम् ॥ ३५ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते भूतविद्यातन्त्रे उन्मादप्रतिषेधो नाम (तृतीयोऽध्याय., आदितः) द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

१ कोष्ठकस्थोऽयं पाठो हाराण०ग्रन्थेऽधिको दृश्यते । २ 'नागविन्नामन'' इति हाराण० । ३ 'अजामूत्रेण' इति पा० । ४ 'शोकशल्य' इत्यग्रिमतरं श्लोकार्धमत्र पठति हाराण० । ५ 'क्रियां विद्वान् प्रयोजयेत्' इति हाराण० ।

# त्रिषष्टितमोऽध्यायः।

अथातो रसभेदविकल्पमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

दोषाणां पञ्चदशधा प्रसरोऽभिहितस्तु यः ॥
त्रिषष्ट्या रसभेदानां तत्प्रयोजनमुच्यते ॥ ३ ॥
अविदग्धा विदग्धाश्च भिद्यन्ते ते त्रिषष्टिधा ॥
रसभेदत्रिषष्टिं तु वीक्ष्य वीक्ष्यावचारयेत् ॥ ४ ॥
[1]एकैकेनानुगमनं भागशो [2]यदुदीरितम् ॥
[3]दोषाणां, तत्र मतिमान् त्रिषष्टिं तु प्रयोजयेत् ॥ ५ ॥
यथाक्रमप्रवृत्तानां द्विकेषु मधुरो रसः ॥
पञ्चानुक्रमते योगानम्लश्चतुर एव तु ॥ ६ ॥
त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम् ॥
तिक्तः कषायमन्वेति ते द्विका दश पञ्च च ॥ ७ ॥

तद्यथा—मधुराम्लः १, मधुरलवणः २, मधुरकटुकः ३, मधुरतिक्तः, ४, मधुरकषायः ५, एते पञ्चानुक्रान्ता मधुरेण; अम्ललवणः १, अम्लकटुकः २, अम्लतिक्तः ३, अम्लकषायः ४, एते चत्वारोऽनुक्रान्ता अम्लेन; लवणकटुकः १, लवणतिक्तः २, लवणकषायः ३, एते त्रयोऽनुक्रान्ता लवणेन; कटुतिक्तः १, कटुकषायः २, द्वावेतावनुक्रान्तौ कटुकेन; तिक्तकषायः १, एक एवानुक्रान्तस्तिक्तेन; [4]एवमेते पञ्चदश द्विकसंयोगा व्याख्याताः ॥ ८ ॥

त्रिकान् वक्ष्यामः—

आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति ॥
षडम्लो लवणस्तस्मादर्[5]धमेकं तथा कटुः ॥ ९ ॥

---

१ 'एकैकेनानुगमनाद्भागशो य उदीरिताः' इति पा०। २ 'य उदीरिताः' इति हाराण०। ३ 'रसानां' इति पा०। ४ 'एवमेते पञ्चदश द्विकाः' इति पा०। ५ 'रसः' इति पा०।

तद्यथा–मधुराम्ललवणः १, मधुराम्लकटुकः २, मधुराम्लतिक्तः ३, मधुराम्लकषायः ४, मधुरलवणकटुकः ५, मधुरलवणतिक्तः ६, मधुरलवणकषायः ७, मधुरकटुकतिक्तः ८, मधुरकटुकषायः ९, मधुरतिक्तकषायः १०, एवमेषां दशानां त्रिकसंयोगानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुकः १, अम्ललवणतिक्तः २, अम्ललवणकषायः ३, अम्लकटुतिक्तः ४, अम्लकटुकषायः ५, अम्लतिक्तकषायः ६, एवमेषां षण्णामादावम्लः प्रयुज्यते; लवणकटुतिक्तः १, लवणकटुकषायः २, लवणतिक्तकषायः ३, एवमेषां त्रयाणामादौ लवणः प्रयुज्यते; कटुतिक्तकषायः १, एवमेकस्यादौ कटुकः प्रयुज्यते; एवमेते त्रिकसंयोगा विंशतिर्व्याख्याताः ॥ १० ॥

चतुष्कान् वक्ष्यामः ।—

चतुष्करससंयोगान्मधुरो दश गच्छति ॥
चतुरोऽम्लो[1]ऽनुगच्छेच्च लवणस्त्वेकमेव तु ॥ ११ ॥

मधुराम्ललवणकटुकः १, मधुराम्ललवणतिक्तः २, मधुराम्ललवणकषायः ३, मधुराम्लकटुकतिक्तः ४, मधुराम्लकटुकषायः ५, मधुराम्लतिक्तकषायः ६, मधुरलवणकटुकतिक्तः ७, मधुरलवणकटुकषायः ८, मधुरलवणतिक्तकषायः ९, मधुरकटुतिक्तकषायः १०, एवमेषां दशानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुतिक्तः १, अम्ललवणकटुकषायः २, अम्ललवणतिक्तकषायः ३, अम्लकटुतिक्तकषायः ४, एवमेषां चतुर्णामादावम्लः प्रयुज्यते, लवणकटुतिक्तकषायः १, एवमेकस्यादौ लवणः प्रयुज्यते, एवमेते चतुष्करससंयोगाः पञ्चदश कीर्तिताः ॥ १२ ॥

पञ्चकान् वक्ष्यामः ।—

पञ्चकान् पञ्च मधुर एकमम्लस्तु गच्छति ॥ १३ ॥

---

१ "°ऽम्लस्तु गच्छेच्च' इति हाराण० ।

मधुराम्ललवणकटुतिक्तः १, मधुराम्ललवणकटुकषायः २, मधुराम्ललवणतिक्तकषायः ३, मधुराम्लकटुतिक्तकषायः ४, मधुरलवणकटुतिक्तकषायः ५, एवमेषां पञ्चानामादौ[1] मधुरः प्रयुज्यते; अम्ललवणकटुतिक्तकषायः १, एवमेकस्यादावम्लः; एवमेते षट् पञ्चकसंयोगा[2] व्याख्याताः ॥ १४ ॥

षट्कमेकं वक्ष्यामः एकस्तु षट्कसंयोगः—मधुराम्ललवणकटुतिक्तकषायः, एष[3] एक एव षट्संयोगः ॥ १५ ॥

एकैकश्च षड्रसा भवन्ति—मधुरः १, अम्लः २, लवणः ३, कटुकः ४, तिक्तः ५, कषायः ६, इति ॥ १६ ॥

भवति[4] चात्र—

एषा त्रिषष्टिर्व्याख्याता रसानां[5] रसचिन्तकैः ॥
दोषभेदत्रिषष्ट्यां[6] तु प्रयोक्तव्या विचक्षणैः ॥ १७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे[7] तन्त्रभूषणाध्यायेषु रसभेदविकल्पाध्यायो नाम ( प्रथमः, आदितः ) त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ।

अथातः स्वस्थवृत्तमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सूत्रस्थाने समुद्दिष्टः स्वस्थो भवति यादृशः ॥
तस्य[8] यद्रक्षणं तद्धि चिकित्सायाः प्रयोजनम् ॥ ३ ॥

---

१ 'पञ्चानां संयोगानामादौ' इति इति हाराण०। २ 'पञ्चकरससंयोगा' इति हाराण०। ३ 'एवमयमेक षट्कसयोग.' इति हाराण०। ४ 'भवति चात्र' इति क्वचित्पुस्तके न पठ्यते। ५ 'रसानुरसचिन्तकैः' इति पा०। ६ 'दोषभेदद्विषष्टया तु' इति हाराण०। ७ "तन्त्रे रस" इति हाराण०। ८ 'तस्यादितो रक्षण हि चिकित्साया मयोदितम्' इति हाराण०।

तस्य यद्वृत्तमुक्तं हि रक्षणं च मयाऽऽदितः ॥
तस्मिन्नर्थाः समासोक्ता [2]विस्तरेणेह वक्ष्यते ॥ ४ ॥
यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ॥
तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥ ५ ॥
प्रक्लिन्नत्वाच्छरीराणां वर्षासु भिषजा खलु[3] ॥
मन्देऽग्नौ कोपमायान्ति सर्वेषां[4] मारुतादयः ॥ ६ ॥
तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय[5] च ॥
कषायतिक्तकटुकै रसैर्युक्तम[6]पद्रवम् ॥ ७ ॥
नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च ॥
देयमन्नं नृपतये यज्जलं चोक्तमादितः ॥ ८ ॥
तप्तावरतमम्भो वा पिबेन्मधुसमायुतम् ॥
अह्नि मेघानिलाविष्टेऽत्यर्थंशीताम्बुसङ्कुले ॥ ९ ॥
तरुणत्वाद्विदाहं च गच्छन्त्योषधयस्तदा ॥
मतिमांस्तन्निमित्तं च [7]नातिव्यायाममाचरेत् ॥ १० ॥
अत्यम्बुपानावश्यायग्राम्यधर्मातपांस्त्यजेत् ॥
भूबाष्पपरिहारार्थं शयीत च विहायसि ॥ ११ ॥
[8]शीते साग्नौ निवाते च गुरुप्रावरणे गृहे ॥
यायात्सङ्गं वधूभिश्च प्रशस्तागुरुभूषितः ॥ १२ ॥
दिवास्वप्नमजीर्णं च वर्जयेत्तत्र यत्नतः ॥
सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः ॥ १३ ॥

---

१ श्लोकार्धमिदं हाराण०पुस्तके न दृश्यते । २ 'विस्तरस्तस्य वक्ष्यते' इति हाराण० । ३ 'वर्षासु खलु देहिनाम्' इति हाराण० । ४ 'संहर्षात्' इति हाराण० । 'संघर्षात्' इति पा० । ५ 'दोषसंरक्षणाय च' इति पा० । ६ '°मथो द्रवम्' इति हाराण० । ७ 'नैव व्यायाममाचरेत्' इति हाराण० । ८ 'शीते साग्नौ' इत्यत आरभ्य 'वर्जयेत्तत्र यत्नतः' इत्यन्तः पाठो सार्धविंश-श्लोकात्पर पठति हाराण० ।

क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः ॥
[1]श्वेतस्रजश्चन्द्रपादाः प्रदोषे लघु चाम्बरम् ॥ १४ ॥
सलिलं च प्रसन्नत्वात् सर्वमेव तदा हितम् ॥
सरःस्वाप्लवनं चैव कमलोत्पलशालिषु ॥ १५ ॥
प्रदोषे शशिनः पादाश्चन्दनं [2]चानुलेपनम् ॥
तिक्तस्य सर्पिषः पानैरसृक्स्रावैश्च युक्तितः ॥ १६ ॥
वर्षासूपचितं पित्तं हरेच्चापि विरेचनैः ॥
नोपेयात्तीक्ष्णमम्लोष्णं क्षारं स्वप्नं दिवाऽऽतपम् ॥ १७ ॥
रात्रौ जागरणं चैव मैथुनं चापि वर्जयेत् ॥
( [3]स्वादुशीतजलं मेध्यं शुचिस्फटिकनिर्मलम् ॥ १८ ॥
शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम् ॥
प्रसन्नत्वाच्च सलिलं सर्वमेव तदा हितम् ॥ १९ ॥
सचन्दनं सकर्पूरं वासश्चामलिनं लघु ॥
भजेच्च शारदं माल्यं सीधोः पानं च युक्तितः ॥ २० ॥
पित्तप्रशमनं यच्च तच्च सर्वं समाचरेत् ॥
हेमन्तः शीतलो रूक्षो मन्दसूर्योऽनिलाकुलः ॥ २१ ॥
ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति ॥
कोष्ठस्थः शीतसंस्पर्शादन्तःपिण्डीकृतोऽनलः ॥ २२ ॥
रसमुच्छोषयत्याशु तस्मात् स्निग्धं तदा हितम् ॥ )
हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् ॥ २३ ॥
ससर्पिस्तैलमहिममशनं हितमुच्यते ॥
तीक्ष्णान्यपि च पानानि [4]पिबेद्गुरुभूषितः ॥ २४ ॥

---

१ नेदमप्यर्धं पठति हाराण०। २ 'चानुवासनम्' इति हाराण०।
३ अय पाठो हस्तलिखितपुस्तके नोपलभ्यते। पर हाराणचन्द्रस्तु पठति।
४ 'पिबेद्गुरुभूषितः' इति हाराण०।

[1]तैलाक्तस्य सुखोष्णे च वारिकोष्ठेऽवगाहनम्[2] ॥
[3]साङ्गारयाने महति कौशेयास्तरणास्तृते ॥ २५ ॥
शयीत शयने तैस्तैर्वृतो गर्भगृहोदरे ॥
स्त्रीः श्लिष्टाऽगुरुधूपाढ्याः पीनोरुजघनस्तनीः ॥ २६ ॥
प्रकामं च निषेवेत मैथुनं तर्पितो नृपः ॥
([4]मधुरं तिक्तकटुकमम्लं लवणमेव च ॥ २७ ॥
अन्नपानं तिलान् माषाञ्छाकानि च दधीनि च ॥
तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि ॥ २८ ॥
प्रसह्यानूपमांसानि क्रव्यादबिलशायिनाम् ॥
औदकानां प्लवानां च पादिनां चोपसेवयेत् ॥ २९ ॥
मद्यानि च प्रसन्नानि यच्च किञ्चिद् बलप्रदम् ॥
कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे ॥ ३० ॥
दिवास्वप्नमजीर्णं च वर्जयेत्तत्र यत्नतः ॥ )
एष एव विधिः कार्यः शिशिरे समुदाहृतः ॥ ३१ ॥
([5]हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम् ॥
औष्ण्याद्वसन्ते कुपितः कुरुते च गदान् बहून् ॥ ३२ ॥
ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च ॥
वर्जयेद्वमनादीनि कर्माण्यपि च कारयेत् ॥ ३३ ॥
षष्टिकान्नं यवाञ्छीतान् मुद्गान् नीवारकोद्रवान् ॥
लावादिविष्किररसैर्दध्याद्यूषैश्च युक्तितः ॥ ३४ ॥
पटोलनिम्बवार्ताकतिक्तकैश्च हिमात्यये ॥
सेवेन्मध्वासवारिष्टान् सीधुमाध्वीकमाधवान् ॥ ३५ ॥

---

१ 'तैलाभ्यक्तः' इति हाराण०। २ '°वगाहयेत्' इति हाराण०। ३ 'साङ्गारधाने' इति हाराण०। ४ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते। हाराण०ग्रन्थे चोपलभ्यते। ५ अयं पाठः क्वचित् पुस्तके न पठ्यते।

व्यायाममञ्जनं धूमं तीक्ष्णं च कवलग्रहम् ॥
सुखाम्बुना च सर्वार्थान् सेवेत कुसुमागमे ॥ ३६ ॥)
तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् ॥
यवमुद्गमधुप्रायं वसन्ते भोजनं हितम् ॥ ३७ ॥
व्यायामोऽत्र नियुद्धाध्वशिलानिर्घातजो हितः ॥
उत्सादनं तथा स्नानं वनिताः काननानि च ॥ ३८ ॥
सेवेत निर्हरेच्चापि हेमन्तोपचितं कफम् ॥
शिरोविरेकवमननिरूहकवलादिभिः ॥ ३९ ॥
वर्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान् ॥
व्यायाममुष्णमायासं मैथुनं परिशोषि[1] च ॥ ४० ॥
रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् ॥
सरांसि सरितो वापीर्वनानि रुचिराणि च ॥ ४१ ॥
चन्दनानि पराध्यानि स्रजः सकमलोत्पलाः ॥
तालवृन्तानिलाहारांस्तथा[2] शीतगृहाणि च ॥ ४२ ॥
घर्मकाले निषेवेत वासांसि सुलघूनि च ॥
शर्कराखण्डदिग्धानि[3] सुगन्धीनि हिमानि च ॥ ४३ ॥
पानकानि च सेवेत मन्थांश्चापि सशर्करान् ॥
भोजनं च हितं शीतं सघृतं मधुरद्रवम् ॥ ४४ ॥
श्रृतेन पयसा रात्रौ शर्करामधुरेण च ॥
प्रत्यग्रकुसुमाकीर्णे शयने हर्म्यसंस्थिते ॥ ४५ ॥
शयीत चन्दनार्द्राङ्गः स्पृश्यमानोऽनिलैः सुखैः ॥
तापात्यये हिता नित्यं रसा ये गुरवस्त्रयः ॥ ४६ ॥

---

१ 'चातिशोषि च' इति हाराण०। २ 'तालवृन्तानिलान् हारांस्तथा' इति हाराण०। ३ 'शर्कराखण्डदुग्धानि' इति पा०।

पयो मांसरसाः कोष्णास्तैलानि च घृतानि च ॥
बृंहणं चापि यत्किञ्चिदभिष्यन्दि तथैव च ॥ ४७ ॥
निदाघोपचितं चैव प्रकुप्यन्तं समीरणम् ॥
निहन्यादनिलघ्नेन विधिना विधिकोविदः ॥ ४८ ॥
([1]नदीजलं रूक्षमुष्णमुदमन्थं तथाऽऽतपम् ॥
व्यायामं च दिवास्वप्नं व्यवायं चात्र वर्जयेत् ॥ ४९ ॥
[[2]नवान्नरूक्षशीताम्बुसक्तूंश्चापि विवर्जयेत् ॥]
यवषष्टिकगोधूमान् शालींश्चाप्यनवांस्तथा ॥ ५० ॥
हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तराम् ॥
सविषप्राणिविण्मूत्रलालानिष्ठीवनादिभिः ॥ ५१ ॥
समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् ॥
वायुना विषदुष्टेन प्रावृषेण्येन दूषितम् ॥ ५२ ॥
तद्धि सर्वोपयोगेषु तस्मिन् काले विवर्जयेत् ॥
अरिष्टासवमैरेयान् सोपदंशांस्तु युक्तितः ॥ ५३ ॥
पिबेत् प्रावृषि जीर्णांस्तु रात्रौ तानपि वर्जयेत् ॥
निरूहैर्बस्तिभिश्चान्यैस्तथाऽन्यैर्मारुतापहैः ॥ ५४ ॥
कुपितं शमयेद्वायुं वार्षिकं चाचरेद्विधिम् ॥)
ऋतावृतौ य एतेन विधिना वर्तते नरः ॥ ५५ ॥
घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन ॥

अत ऊर्ध्वं द्वादशाशनप्रविचारान् वक्ष्यामः । तत्र शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिकद्विकालिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्थाः ॥ ५६ ॥

---

१ अयं पाठो हाराण०ग्रन्थेऽधिकः । २ श्लोकार्धमिदं हस्त. पु. त्वधिकं लभ्यते ।

तृष्णोष्णमददाहार्तान् रक्तपित्तविषातुरान् ॥
मूर्च्छार्तान् स्त्रीषु च क्षीणान् शीतैरन्नैरुपाचरेत् ॥ ५७ ॥
कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः ॥
अक्लिन्नकायांश्च[1] नरानुष्णैरन्नैरुपाचरेत् ॥ ५८ ॥
वातिकान् रूक्षदेहांश्च व्यवायोपहतांस्तथा ॥
व्यायामिनश्चापि नरान् स्निग्धैरन्नैरुपाचरेत् ॥ ५९ ॥
मेदसाऽभिपरीतांस्तु स्निग्धान्[2]मेहातुरानपि ॥
कफाभिपन्नदेहांश्च रूक्षैरन्नैरुपाचरेत् ॥ ६० ॥
शुष्कदेहान् पिपासार्तान् दुर्बलानपि च द्रवैः ॥
प्रक्लिन्नकायान् व्रणिनः शुष्कैर्मेहिन एव च ॥ ६१ ॥
एककालं भवेद्देयो दुर्बलाग्निविवृद्धये ॥
समाग्नये तथाऽऽहारो द्विकाल[3]मपि पूजितः ॥ ६२ ॥
औषधद्वेषिणे देयस्तथौषधसमायुतः ॥
मन्दाग्नये रोगिणे च मात्राहीनः प्रशस्यते ॥ ६३ ॥
यथर्तुदत्तस्त्वा[4]हारो दोषप्रशमनः स्मृतः ॥
अतः परं तु स्वस्थानां वृत्त्यर्थं सर्वं[5] एव च ॥
प्रविचारानिमानेवं द्वादशात्र प्रयोजयेत्[6] ॥ ६४ ॥

अत ऊर्ध्वं दशौषधकालान् वक्ष्यामः। तत्रा[7]भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरं चेति दशौषधकालाः ॥ ६५ ॥

---

१ 'प्रक्लिन्नदेहांश्च' इति हाराण०। २ 'स्थूलान्' इति हाराण०। ३ 'देयः कालमथोभयम्' इति हाराण०। ४ '°श्चाहारो' इति हाराण०। ५ 'सर्वमेव च' इति हाराण०। ६ 'द्वादशान्नप्रविचारानेतानेव प्रचक्षते' इति हाराण०। ७ 'तत्र निर्भक्तं तु' इति हाराण०।

तत्राभक्तं[1] तु यत् केवलमेवौषधमुपयुज्यते ॥ ६६ ॥
वीर्याधिकं भवति भेषजमन्नहीनं
हन्यात्तथाऽऽमयमसंशयमाशु[2] चैव ॥
तद्बालवृद्धवनितामृदवस्तु[3] पीत्वा
ग्लानिं परां समुपयान्ति बलक्षयं च ॥ ६७ ॥
प्राग्भक्तं नाम यत्[4] प्राग्भक्तस्योपयुज्यते ॥ ६८ ॥
शीघ्रं विपाकमुपयाति बलं न हिंस्या-
दन्नावृतं न च मुहुर्वदनान्निरेति ॥
प्राग्भक्तसेवितमथौषधमेतदेव[5]
दद्याच्च वृद्धशिशुभीरुकृशाङ्गनाभ्यः[6] ॥ ६९ ॥
अधोभक्तं नाम—यदधो[7] भक्तस्येति ॥ ७० ॥
मध्येभक्तं नाम—यन्मध्ये भक्तस्य पीयते[8] ॥ ७१ ॥
पीतं यदन्नमुपयुज्य तदूर्ध्वकाये
हन्याद्गदान् बहुविधांश्च बलं ददाति ॥
मध्ये तु पीतमपहन्त्यविसारिभावा-
द्ये मध्यदेहमभिभूय भवन्ति रोगाः ॥ ७२ ॥
अन्तराभक्तं नाम—यदन्तरा[9] पीयते पूर्वापरयोर्भक्तयोः ॥७३॥
सभक्तं नाम[10]—यत् सह भक्तेन ॥ ७४ ॥
पथ्यं सभक्तमबलाबलयोर्हि नित्यं
तद्द्वेषिणामपि तथा शिशुवृद्धयोश्च ॥

---

१ 'तत्र निर्भक्तं तु' इति हाराण० । २ 'तदामय°' इति पा० । ३ 'तद्बालवृद्धयुवतीमृदवोऽथ पीत्वा' इति हाराण० । ४ 'तद् यत्तु' इति हाराण० । ५ '°मथो बलमादधाति' इति हाराण० । ६ '°वराङ्गनाभ्यः' इति हाराण० । ७ 'यद्भुक्त्वा पीयते' इति पाठमादृत्य तस्याग्रे 'पीत यदन्न–' इति श्लोकार्धं पठति हाराण० । ८ अस्याग्रे–'मध्ये तु पीत–' इत्यर्धं पठति हाराण० । ९ 'तु यत् पूर्वापरयोर्भक्तयोरन्तरे' इति पा० । १० 'सभक्तं नाम औषधेषु यत् साध्यते भक्तम्' इति पा० ।

हृद्यं मनोबलकरं त्वथ दीपनं च
पथ्यं सदा भवति चान्तरभक्तकं यत् ॥ ७५ ॥
सामुद्गं [1]नाम—यद्भक्तस्यादावन्ते च पीयते ॥ ७६ ॥
दोषे द्विधा प्रविसृते तु समुद्गसंज्ञ-
माद्यन्तयोर्यदशनस्य निषेव्यते तु ॥ ७७ ॥
[2]मुहुर्मुहुर्नाम—सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते ॥ ७८ ॥
श्वासे मुहुर्मुहुरतिप्रसृते च कासे
हिक्कावमीषु स वदन्त्युपयोज्यमेतत् ॥ ७९ ॥
ग्रासं तु—यत्पिण्डव्यामिश्रम् ॥ ८० ॥
[3]ग्रासान्तरं तु यद्ग्रासान्तरेषु ॥ ८१ ॥
ग्रासे[4]षु चूर्णमबलाग्निषु दीपनीयं
वाजीकराण्यपि तु योजयितुं यतेत ॥
ग्रासान्तरेषु वितरेद्वमनीयधूमान्
श्वासादिषु प्रथितदृष्टगुणांश्च लेहान् ॥ ८२ ॥
एवमेते दशौषधकालाः ॥ ८३ ॥
विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ
विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ॥
तथाऽन्नश्रद्धायां [5]क्लमपरिगमे कुक्षौ च शिथिले
प्रदेयस्त्वाहारो भवति भिषजां कालः स तु मतः ॥ ८४ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे[6] तन्त्रभूषणाध्यायेषु स्वस्थवृत्ताध्यायो नाम (द्वितीयोऽध्यायः, आदितः) चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

१ 'तु' इति पा०। २ 'मुहुर्मुहुर्यत् सभक्तमभक्तं वा तन्मुहुर्मुहु' इति पा०। ३ 'ग्रासान्तरं नाम यदुभयोर्ग्रासयोर्मध्ये प्रयुज्यते' इति हाराण०। ४ 'ग्रासेषु पीतमुपयाति विपक्कमाशु वृद्धेऽबलेषु च हितं प्रवदन्ति सन्तः' इति हाराण०। ५ 'क्षुदुपगमने' इति हाराण०। ६ 'स्वस्थवृत्तं नाम' इति हाराण०।

# पञ्चषष्टितमोऽध्यायः ।

अथातस्तन्त्रयुक्तिमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति शास्त्रे । तद्यथा—अधिकरणं १, योगः २, पदार्थः ३, हेत्वर्थः ४, उद्देशः ५, निर्देशः ६, उपदेशः ७, अपदेशः ८, प्रदेशः ९, अतिदेशः १०, अपवर्गः ११, वाक्यशेषः १२, अर्थापत्तिः १३, विपर्ययः १४, प्रसङ्गः १५, एकान्तः १६, अनेकान्तः १७, पूर्वपक्षः १८, निर्णयः १९, अनुमतं २०, विधानम् २१, अनागतावेक्षणम् २२, अतिक्रान्तावेक्षणं २३, संशयः २४, व्याख्यानं २५, स्वसंज्ञा २६, निर्वचनं २७, निदर्शनं २८, नियोगः २९, विकल्पः ३०, समुच्चयः ३१, ऊह्यम् ३२, इति ॥ ३ ॥

अत्रासां तन्त्रयुक्तीनां किं प्रयोजनम् ? उच्यते—वाक्ययोजनमर्थयोजनं च ॥ ४ ॥

भवन्ति चात्र श्लोकाः—

असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् ॥
स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः[१] ॥ ५ ॥
व्यक्ता[२] नोक्तास्तु ये ह्यर्था लीना ये चाप्यनिर्मलाः ॥
लेशोक्ता ये च[३] केचित्स्युस्तेषां चापि प्रसाधनम् ॥ ६ ॥
यथाऽम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ॥
प्रबोधस्य[४] प्रकाशार्थं तथा तन्त्रस्य युक्तयः ॥ ७ ॥

---

१ 'तन्त्रयुक्तिभिः' इति पा० । २ 'व्यत्यासोक्ताश्च' इति पा० । 'व्यक्ता नोक्ताश्च' इति हाराण० । ३ 'क्वचित्तत्र' इति हाराण० । ४ 'प्रबोध्यस्य' इति हाराण० ।

तत्र यमर्थमधिकृत्योच्यते तदधिकरणं; यथा—रसं दोषं वा ॥८॥

येन वाक्यं युज्यते स योगः। यथा—

'तैलं पिबेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः ॥

सिद्धं बलाभ्यां च सदेवदारु हिताय नित्यं गलगण्डरोगे' ॥

इत्यत्र तैलं सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धमिति प्रयुक्तं, एवं दूरस्थानामपि पदानामेकीकरणं योगः ॥ ९ ॥

योऽर्थोऽभिहितः सूत्रे पदे वा[1] स पदार्थः, पदस्य पदयोः पदानां वाऽर्थः पदार्थः; अपरिमिताश्च पदार्थाः। यथा—स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणां वाऽर्थानामुपपत्तिर्दृश्यते, तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यः; यथा—'वेदोत्पत्तिमध्यायं व्याख्यास्याम' इत्युक्ते सन्दिह्यते[2] बुद्धिः—कतमस्य वेदस्योत्पत्तिं वक्ष्यतीति, यतः ऋग्वेदादयस्तु वेदाः; 'विद विचारणे, विद्लृ लाभे', इत्येतयोश्च धात्वोरनेकार्थयोः[3] प्रयोगात्, तत्र पूर्वापरयोगमुपलभ्य प्रतिपत्तिर्भवति—आयुर्वेदोत्पत्तिमयं विवक्षुरिति[4] एष पदार्थः ॥१०॥

यदन्यदुक्तमन्यार्थसाधकं[5] भवति स हेत्वर्थः। यथा—मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ११

समासवचनमुद्देशः[6]। यथा—शल्यमिति ॥ १२ ॥

विस्तरवचनं निर्देशः। यथा—शारीरमागन्तुकं[7] चेति ॥ १३ ॥

---

१ 'वा स पदार्थ०। अपरिमिताश्च पदार्था०' इति हाराण०। 'अस्यायमर्थः—यमर्थमधिकृत्य येऽर्था अभिधीयन्ते तदधिकरणसञ्ज्ञं सर्वस्याभिधेयस्येति। तमेवार्थमाह—यथा—रसं दोषं चेति, रसविज्ञाने रसमधिकृत्य दोषविज्ञाने दोषमधिकृत्य चोच्यत इति' इति पा०। २ 'संदिह्यते—कतमस्य वेदस्यायमुत्पत्तिं विवक्षुरिति' इति हाराण०। ३ 'धात्वोः प्रयोगात्' इति हाराण०। ४ '°रित्येवं पदार्थ०' इति हाराण०। ५ 'यदुक्तमुभयार्थसाधक' इति पा०। ६ 'समासकथन°' इति हाराण०। ७ '°मागन्तु चेति' इति हाराण०।

एवमित्युपदेशः। यथा—'तथा न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत्' इति ॥ १४ ॥

अनेन कारणेनेत्यपदेशः, [1]यथाऽपदिश्यते—मधुरः श्लेष्माणमभिवर्धयतीति ॥ १५ ॥

प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः। यथा—देवदत्तस्यानेन शल्यमुद्धृतं [2]तथा यज्ञदत्तस्याप्[3]ययमुद्धरिष्यतीति ॥ १६ ॥

[4]प्रकृतस्यानागतस्य साधनमतिदेशः। यथा-यतोऽस्य वायुरूर्ध्वमुत्तिष्ठते तेनोदावर्ती स्यादिति ॥ १७ ॥

अभिव्याप्यापकर्षणमपवर्गः। यथा—अस्वेद्या विषोपसृष्टाः, अन्यत्र [5]कीटविषादिति ॥ १८ ॥

येन पदेनानुक्तेन वाक्यं समाप्यते स वाक्यशेषः। यथा—शिरः पाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते [7]पुरुषग्रहणं विनाऽपि गम्यते पुरुषस्येति ॥ १९ ॥

यदकीर्तितमर्थादापद्यते साऽर्थापत्तिः। यथा—ओदनं भोक्ष्ये इत्युक्तेऽर्थादापन्नं भवति—नायं पिपासुर्यवागूमिति ॥ २० ॥

यद्यत्रा[6]भिहितं तस्य प्रातिलोम्यं विपर्ययः। यथा—कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति ॥ २१ ॥

प्रकरणान्त[8]रेण समापनं प्रसङ्गः, यद्वा प्रकरणान्तरितो [9]योऽर्थोऽ-

---

१ 'यथोपदिश्यते–मधुरः श्लेष्माभिवर्ध°' इति हाराण०। २ 'तस्मात्' इति हाराण०। ३ '°प्ययमेवोद्धरिष्यतीति' इति हाराण०। ४ हाराणचन्द्रस्तु 'इतरत्र विहितस्य विधेरितरत्र प्रयोगायोपदेशोऽतिदेश', यथा–एष एव विधिः कार्यः शिशिरे समुदाहृतः। इति' इति पठति, अयमेव साधुः पाठः। ५ 'कीटविषोपसर्गात्' इति। हाराण०। ६ 'यद्विहित' इति पा०। ७ 'पुरुषग्रहणमन्तरेणापि' इति हाराण०। ८ 'समान' इति पा०। ९ 'योऽर्थः पुनरुक्तः' इति हाराण०।

सकृदुक्तः समाप्यते स प्रसङ्गः। यथा—पञ्चमहाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय, भूतचि[1]न्तायां पुनरुक्तं—यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति; स खल्वेष कर्मपुरुषश्चि[2]कित्साधिकृत इति ॥ २२ ॥

(सर्वत्र[3]) यदवधारणेनोच्यते स एकान्तः। यथा—त्रिवृद्विरेचयति, मदनफलं वामयति(एव) ॥ २३ ॥

क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः। यथा—केचिदाचार्या ब्रुवते द्रव्यं प्रधानं, केचिद्रसं, केचिद्वीर्यं केचिद्विपाकमिति २४

आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः। यथा—कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥ २५ ॥

तस्योत्तरं निर्णयः। यथा—शरीर प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं विसृजति वातः, एवमसाध्या वातजा इति २६

तथा चोक्तम्—

कृत्स्नं शरीरं निष्पीड्य मेदोमज्जावसायुतः ॥
अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः ॥ २७ ॥

परमतमप्रतिषिद्धमनुमतम्। यथा—अन्यो ब्रूयात्—सप्त रसा इति, तच्चाप्रतिषेधादनुमन्यते कथञ्चिदिति ॥ २८ ॥

प्रकरणानुपूर्व्याऽभिहितं विधानम्। यथा—सक्थिमर्माण्येकादश प्रकरणानुपूर्व्याऽभिहितानि ॥ २९ ॥

एवं वक्ष्यतीत्यनागतावेक्षणम्। यथा—श्लोकस्थाने ब्रूयात्—चिकित्सितेषु वक्ष्यामीति ॥ ३० ॥

यत्पूर्वमुक्तं तदतिक्रान्तावेक्षणम्। यथा—चिकित्सितेषु ब्रूयात्—श्लोकस्थाने यदीरितमिति ॥ ३१ ॥

---

१ 'भूतविद्यायां' इति हाराण०। २ "श्चिकित्सायामधि" इति हाराण०। ३ अयं पाठः क्वचित्पुस्तके नोपलभ्यते।

[1]उभयहेतुदर्शनं संशयः । यथा—तलहृदयाभिघातः प्राणहरः, पाणिपादच्छेदनमप्राणहरमिति ॥ ३२ ॥

तत्रेऽतिशयोपवर्णनं व्याख्यानम् । यथा—इह पञ्चविंशतिकः पुरुषो व्याख्यायते, अन्येष्वायुर्वेदतन्त्रेषु भूतादिप्रभृत्यारभ्य चिन्ता[2] ॥ ३३ ॥

अन्यशास्त्रासामान्या स्वसंज्ञा । यथा—[3]मिथुनमिति मधुसर्पिषोर्ग्रहणं; लोकप्रसिद्धमुदाहरणं वा ॥ ३४ ॥

निश्चितं वचनं निर्वचनम् । यथा—आयुर्विद्यतेऽस्मिन्ननेन वा, आयुर्विन्दतीत्यायुर्वेदः ॥ ३५ ॥

[4]दृष्टान्तव्यक्तिर्निदर्शनम् । यथा—अग्निर्वायुना सहितः क[5]क्षे वृद्धिं गच्छति तथा वातपित्तकफदुष्टो व्रण इति ॥ ३६ ॥

इदमेव कर्तव्यमिति नियोगः । यथा—पथ्यमेव भोक्तव्यमिति ३७

[6]इदं चेदं चेति समुच्चयः । यथा—मांसवर्गे एणहरिणादयो लावतित्तिरिशारङ्गाश्च प्रधानानीति ॥ ३८ ॥

[7]इदं वेदं वेति विकल्पः । यथा—रसौदनः सघृता यवागूर्वा (भवत्विति) ॥ ३९ ॥

यदनिर्दिष्टं बुद्ध्या[8]ऽवगम्यते तदूह्यम् । यथा—अभिहितमन्न-

---

१ 'उभयथा दर्शन संशय, यथा–किं पित्तव्यतिरेकादन्योऽग्निः आहोस्वित् पित्तमेवाग्निरिति' इति हाराण० । २ 'भूतादिमारभ्य चिन्तेति' इति पा० । '°भूतादिप्रकृतिविकृत्यारब्धचिन्त°' इति च हाराण० । ३ 'यथा मिथुनीकृतयोर्वातपित्तयोर्वातश्लेष्मणोः पित्तश्लेष्मणोश्च द्वन्द्वशब्देन ग्रहण, तथाभूतयोश्च तैलसर्पिषोश्च यमकशब्देनेति' इति हाराण० । ४ 'दृष्टान्तेन दर्शन निदर्शनम्' इति पा० । 'दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम्' इति च हाराण० । ५ 'कोष्ठे' इति हाराण० । ६ हाराण०ग्रन्थे तु ३८–३९तममगद्ये व्युत्क्रमेण पठ्येते । ७ 'इद वेति' इति हाराण० । ८ 'बुद्धिगम्य तदूह्यम्' इति पा० । 'बुद्धिमता तदूह्यम्' इति च हाराण० ।

पानविधौ चतुर्विधं चान्नमुपदिश्यते—भक्ष्यं भोज्यं लेह्यं पेयमिति, एवं चतुर्विधे वक्तव्ये द्विविधमभिहितम्; इदमत्रोह्यम्[1]—अन्नपाने विशिष्टयोर्द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवतीति; चतुर्विध[2]श्चाहारः प्रविरलः प्रायेण द्विविध एव; अतो द्वित्वं प्रसिद्धमिति। किञ्चान्यत्—अन्नेन भक्ष्यमवरुद्धं, घनसाधर्म्यात्; पेयेन लेह्यं, द्रवसाधर्म्यात् ॥ ४० ॥

भवन्ति चात्र—

सामान्यदर्शनेनासां[3] व्यवस्था संप्रदर्शिता ॥
विशेषस्तु यथायोगमुपधार्यो विपश्चिता ॥ ४१ ॥
द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे ॥
मया सम्यग्विनिहिताः शब्दार्थन्यायसंयुताः[4] ॥ ४२ ॥
यो ह्येता विधिवद्वेत्ति दीपीभूतास्तु बुद्धिमान् ॥
स पूजार्हो भिषक्श्रेष्ठ इति धन्वन्तरेर्मतम् ॥ ४३ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे[5] तन्त्रभूषणाध्यायेषु तन्त्रयुक्तिर्नाम (तृतीयोऽध्यायः, आदितः) पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः।

अथातो दोषभेदविकल्प[6]मध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'अत्रोह्यम् अन्नपाने विशिष्टे तयोर्ग्रहणे कृते' इति हाराण०। २ 'किञ्चान्यत् अन्नेन भक्ष्यमवरुद्धमन्नसाधर्म्यात्, पेयेन लेह्य, द्रवसाधर्म्यात्; चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति' इति हाराण०। ३ 'सामान्यलक्षणेनैता व्यासतः सम्प्रदर्शिता.' इति हाराण०। ४ 'शब्दन्यायार्थसंयुताः' इति हाराण०। ५ 'तन्त्रयुक्तिर्नाम' इति हाराण०। ६ '°विकल्पनामा°' इति हाराण०।

[1]अष्टाङ्गवेदविद्वांसं दिवोदासं महौजसम् ॥
छिन्नशास्त्रार्थसंदेहं सूक्ष्मागाधागमोदधिम् ॥ ३ ॥
विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति ॥
द्विषष्टिर्दोषभेदा ये पुरस्तात्परिकीर्तिताः ॥ ४ ॥
कति तत्रैकशो ज्ञेया द्विशो वाऽप्यथवा त्रिशः ॥
तस्य तद्वचनं श्रुत्वा संशयच्छिन्महातपाः ॥ ५ ॥
प्रीतात्मा नृपशार्दूलः[2] सुश्रुतायाह तत्त्वतः ॥
त्रयो दोषा धातवश्च पुरीषं मूत्रमेव च ॥ ६ ॥
देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः ॥
पुरुषः षोडशकलः प्राणाश्चैकादशैव ये ॥ ७ ॥
रोगाणां तु सहस्रं यच्छतं विंशतिरेव च ॥
[3]शतं च पञ्च द्रव्याणां त्रिसप्तत्यधिकोत्तरम् ॥ ८ ॥
[4]व्यासतः कीर्तितं तद्धि भिन्ना दोषास्त्रयो गुणाः ॥
द्विषष्टिधा भवन्त्येते भूयिष्ठमिति निश्चयः ॥ ९ ॥
त्रय एव पृथक् दोषा द्विशो नव समाधिकैः ॥
त्रयोदशाधिकैकद्विसममध्योल्बणैस्त्रिशः ॥ १० ॥
पञ्चाशदेवं तु सह भवन्ति क्षयमागतैः ॥
[5]क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथाऽपरैः ॥ ११ ॥
द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा ॥
मिश्रा धातुमलैर्दोषा यान्त्यसंख्येयतां पुनः ॥ १२ ॥
तस्मात् प्रसङ्गं संयम्य दोषभेदविकल्पनैः ॥
[6]रोगं विदित्वोपचरेद्रसभेदैर्यथेरितैः ॥ १३ ॥

---

१ 'अष्टाङ्गायुर्वेदविदं' इति हाराण० । २ 'नरशार्दूल' इति पा० । ३ 'शतानि पञ्च द्रव्याणा त्रिसप्तत्यधिकानि च' इति हाराण० । ४ 'व्यासत' कीर्तितानीह' इति हाराण० । ५ 'क्षीणमध्याधिकद्व्येकक्षीणवृद्धास्तथाऽपरैः' इति पा० । ६ श्लोकार्धमिदं हाराणचन्द्रेण न पठितम् ।

भिषक् कर्ताऽथ करणं रसा दोषास्तु कारणम् ॥
कार्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा ॥ १४ ॥
अध्यायानां तु षट्षष्ट्या ग्रथितार्थपदक्रमम् ॥
एवमेतदशेषेण तन्त्रमुत्तरमृद्धिमत् ॥ १५ ॥
स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम् ॥
यथाविधि यथाप्रश्नं भवतां परिकीर्तितम् ॥ १६ ॥
सहोत्तरं त्वेतदधीत्य सर्वं ब्राह्मं विधानेन यथोदितेन ॥
न हीयतेऽर्थान्मनसोऽभ्युपेतादेतद्वचो ब्राह्ममतीव सत्यम् ॥ १७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे दोषभेदविकल्पो नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

**इति सौश्रुते आयुर्वेदशास्त्रे उत्तरस्थानं समाप्तम् ।**



# परिशिष्टम्।



## सुश्रुतसंहितोक्तयन्त्राणां परिचयः।

(पृ २५ पं ८) **यन्त्राणीति**—अत्राह **वाग्भटः**,—"नानाविधाना शल्याना नानादेशप्रबाधिनाम्। आहर्तुमभ्युपायो यस्तयन्त्र, यच्च दर्शने॥ अर्शोभगन्दरादीना, शस्त्रक्षाराग्नियोजने। शेषाङ्गपरिरक्षाया, तथा बस्त्यादिकर्मणि। घटिकालाबुशृङ्गं च जाम्बवौष्ठादिकानि च"—इति। (वा सू स्था अ. २५।)॥

(पृ २५ पं. ९) यानि यन्त्राणि मध्ये कीलबद्धत्वादुद्घाटितानि स्वस्तिका(Cross)काराणि जायन्ते तानि स्वस्तिकयन्त्राणि। 'स्वस्तिकमिव स्वस्तिकं, दक्षिणस्य बाहोर्वामे गमनं, वामस्य दक्षिणे इति स्वस्तिकता' इत्यष्टाङ्गसग्रहव्याख्यायामिन्दु.॥

(पृ २५ प ९) 'द्वे एव तालयन्त्रे' इत्येवकारेणास्य द्वित्वायोगव्यवच्छेदात्तत्सन्निधावनियमेन द्वित्वेनोपदिष्टस्य संदंशयन्त्रस्य बहुत्वमप्युररीकुर्वन्ति। अत एव शास्त्रमिदमनुवदता **वाग्भटेन** 'कीलबद्धविमुक्ताग्रौ' इत्यादिना चत्वारि सदंशयन्त्राण्युपदिष्टानि। एवं चोद्देशे सदंशयन्त्राणीति नानुपपन्नं, तद्गतभेदेन बहुत्वात्, तालयन्त्राणीति बहुवचनं तु नक्षत्रेषु फल्गुनीप्रोष्ठपदानामिवान्यतरस्यां भूम्नि विषयत्वादित्यवश्यं वक्तव्यं' इति **हाराणचन्द्रः**॥

(पृ २५ पं. १५) व्यालमुखसादृश्यं तु स्वस्तिकयन्त्राणा मुखान्तर्भाग एव ज्ञेय, न तु बाह्यतोऽपि॥

## सिंहमुखस्वस्तिकयन्त्रम् ।

Lion Forceps ( लायन् फोर्सेप्स् )



( पृ २५ पं. १६ ) 'प्रायशोग्रहणाद्विनाऽपि व्यालमुखसादृश्यं नाडीयन्त्रादीनि भवन्तीति दर्शयति, व्यालमुखसादृश्य तु वक्ष्यमाणस्वस्तिकयन्त्राणामेव । अन्ययन्त्रदर्शनं तु विनाऽपि सारूप्य शास्त्रवचनं वृद्धोपदेशं वा प्रामाणिककृतमिदं यन्त्रमिति कृत्वा यन्त्रकरणं, प्रयोजयतीति हेत्वन्तरं भवति' इति चक्रः ॥

( पृ २६ पं. १ ) 'सनिबन्धनोऽनिबन्धनश्च संदंशौ' इति हस्तलिखतपुस्तके पाठ उपलभ्यते, वृद्धवाग्भटेऽपि "सनिबन्धनो निर्निबन्धनश्च सदंशौ द्वौ षोडशाङ्गुलौ भवत "—इत्येव पठ्यते । सनिग्रहसदंशयन्त्रं सम्प्रति आङ्ग्लभाषायां Dissection forceps with catch इति नाम्ना प्रसिद्धम्, अनिग्रहसदंशयन्त्र च Dissection forceps without catch इति नाम्ना प्रसिद्धम् ॥

## सनिग्रहसंदंशयन्त्रम् ।

Dissection Forceps with catch



## अनिग्रहसंदंशयन्त्रम् ।

Dissection Forceps without catch



(पृ. २६ पं. २) वृद्धवाग्भटे संदशद्वयमधिकमुक्तम् । यथा,—"तथाऽन्य संदंश षडङ्गुलोऽर्धाङ्गुलविस्तृतो वक्रद्विबाहुरङ्गुष्ठाङ्गुलिप्रान्तसमागमाकृति· सूक्ष्मशल्याक्षिपक्ष्मव्रणाधिमासहरणे । तद्वच्च मुचुण्डी, सा तु ऋजुश्लक्ष्णा सूक्ष्मदन्ता सक्तद्विभुजा मूले रुचक(teeth)नद्धावलयपीडनाच्छिन्नामर्शेषगम्भीरव्रणाधिमासहरणे" अष्टाङ्गसंग्रहः, सूत्रस्थानम्, अध्याय ३४)—इति ॥ ये सनिग्रहसदंशयन्त्र मध्ये कीलबद्धं मन्यन्ते तेषा मते तस्य स्वस्तिकयन्त्राद्भेदो दुरुपपाद एव । सदंशयन्त्र सामान्यत आङ्ग्लभाषाया Pincers 'पिन्सर्स्' इति नाम्ना प्रसिद्धम् ॥

(पृ २६ पं ३) तालयन्त्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'स्कूप्' (Scoop) इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते । तालपदं च लोके गर्तवाचक ह्रदवाचकं वा दृष्टम्—यथा भीमतालादिपदे । 'मत्स्यतालवदिति मत्स्यचक्रवदेकतालमनबद्धे शल्ये, द्विताल तु अवबद्धे शल्ये' इति चक्र । 'मत्स्यगलतालकवत्' इत्यष्टाङ्गसंग्रहे ॥

## तालयन्त्रम् ।



(पृ २६ पं ५) 'नाडीवन्मध्यशुषिराणि नाडीयन्त्राणि' इति चक्रः। नाडीयन्त्रं सप्रति आङ्ग्लभाषाया 'टयुब्युलर्' (Tubular) इति नाम्ना प्रसिद्धम् ॥

(पृ २६ पं ५) रोगदर्शनार्थ व्यवह्रियमाणानि नाडीयन्त्राणि आङ्ग्लभाषायां 'स्पेक्युलम्' (Speculum) इति नाम्ना प्रसिद्धानि ॥

(पृ २६ पं १३) आचूषणार्थ व्यवह्रियमाणानि यन्त्राणि आङ्ग्ल-भाषाया सामान्यतः Aspirators 'ॲस्पिरेटर्स्' इति नाम्ना प्रसिद्धानि ॥

(पृ २६ पं ८) भगन्दरयन्त्रादीना तन्त्रान्तरोक्तलक्षणादिकं, प्रतिकृति·, संप्रति पाश्चात्यैस्तदर्थ व्यवह्रियमाणयन्त्रै सह सादृश्यादिकं च तत्र तत्रैव दर्शयिष्याम ॥

(पृ २६ प ८) **व्रणबस्तियन्त्रलक्षणं वृद्धवाग्भटे** एवं पठ्यते, यथा,—"नाडीव्रणप्रक्षालनाभ्यञ्जनयन्त्रे षडङ्गुले बस्तियन्त्राकारे मुखतोऽकर्णिके मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतसी मूले निबद्धमृदुचर्मणी च—" इति ॥

(पृ २६ पं ७) स्तन्यचूषणार्थ संप्रति पाश्चात्यै. 'ब्रेस्ट् पम्प्' वा 'ब्रेस्ट् रिलीव्हर-Brest pump, or 1elievei' इत्याख्यं नाडीयन्त्रमुपयुज्यते ॥

(पृ २६ पं १०) व्रणप्रक्षालनाद्यर्थ सप्रति व्यवह्रियमाणं **व्रणबस्तियन्त्रम्**—

Syringe (सिरिञ्ज्)



**वृद्धवाग्भटे** त्वेतानि नाडीयन्त्राण्यधिकान्युक्तानि । यथा,—"कण्ठशल्यदर्शनार्थं नाडी दशाङ्गुलायता पञ्चाङ्गुलपरिणाहाम् । द्विकर्णस्य तु वारङ्गस्य सग्रहार्थ त्रिच्छिद्रमुखां नाडी तत्प्रमाणत. कुर्यात्, तथा चतुष्कर्णस्य पञ्चच्छिद्रमुखाम् । शल्यनिर्घातनी तु पद्मकर्णिकाकारशीर्षा द्वादशाङ्गुला त्र्यङ्गुलसुषिराम् । तथाऽङ्गुलित्राणक( फिंगर् गार्ड् Finger-

guard ) मङ्गुलिप्रवेशनं(शितं) किंचित्स्थूलवृत्तौष्ठमूर्ध्वाधश्छिद्रं गोस्तनाकृति चतुरङ्गुलं दान्तं शार्ङ्गं वार्क्षं वा, तद्दृढेन सूत्रेण मणिबन्धप्रतिबद्धमास्यविवृतौ योज्यम्। योनिव्रणदर्शने यन्त्रं षोडशाङ्गुलं मध्ये सुषिरं चतुर्भित्तं चतु.शलाकं संचरिण्या मुद्रयोर्ध्व निबद्धमुत्पलमुकुलवक्त्रं मूले शलाकाक्रमणादूर्ध्वविकासि च"। एषा मध्ये वाग्भटोक्तयोनिव्रणे क्षणयन्त्रस्य संप्रति पाश्चात्यैर्योन्येक्षणार्थं व्यवह्रियमाणेन 'व्हॅजिनल् स्पेक्युलम्–Veginal speculum' इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते। एतच्च यन्त्रं संप्रति चतुर्भित्तं द्विभित्तं वृत्तमित्याद्यनेकविधं व्यवह्रियते तेषा मध्ये चतुर्भित्तस्येयं प्रतिकृतिः—

योन्येक्षणयन्त्रम्।



(पृ २६ पं ८) "अर्शोयन्त्रे द्वे स्त्रीपुंसावधिकृत्य; बस्तियन्त्राणि प्राधान्येन चत्वारि षडष्टदशद्वादशाङ्गुलप्रमाणभेदात्, उत्तरबस्तियन्त्राणि पुंसां द्वे मेढ्रायामचतुर्दशाङ्गुलत्वभेदात्, स्त्रीणां द्वे मूत्रापत्यमार्गोपयोगित्वभेदात्, कन्यानां चैकमिति पञ्च; दकोदरयन्त्रमेकं धूमयन्त्राणि पञ्च। तत्र त्रीणि प्रायोगिकस्नैहिकवैरेचनिकभेदात्, एकं कासघ्नवामनीययोर; विशेषात्, एकं च व्रणधूपनार्थं; निरुद्धप्रकशयन्त्रम्, अलाबुयन्त्रं, शृङ्गयन्त्रं चैकैकमिति विंशतिर्नाडीयन्त्राणि" इति हाराणचन्द्रः॥

(पृ. २६ पं ८) बस्त्यर्थं प्राचीनैर्व्यवह्रियमाणस्य यन्त्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'Ball syringe बॉल् सिरीञ्' इत्याख्येन यन्त्रेण सादृश्यमुपलभ्यते ॥

(पृ. २६ पं. १२) गण्डूपदमुखमेषणीयन्त्रमाङ्ग्लभाषायां 'ब्लन्ट् प्रोब्–Blunt Probe' इति नाम्ना प्रसिद्धम् ॥

एषणी ।

(पृ. २६ पं. १२) 'सर्पफणमुखे (Retractor and veetes) द्वे' इति एकं षोडशाङ्गुलमपरं द्वादशाङ्गुलमिति भेदेन सर्पफणमुखस्य द्वैविध्यं ज्ञेयं, यदाह वाग्भट·,—"उभौ तेषां षोडशद्वादशाङ्गुलौ । व्यूहनेऽहिफणावक्त्रौ—" (सू० अ० २६) इति ॥

(पृ. २६ पं. १२) 'शरपुङ्खमुखे द्वे' इति एकं दशाङ्गुलमपरं द्वादशाङ्गुलमिति भेदेन शरपुङ्खस्य द्वैविध्यं ज्ञेयम् । यदाह वाग्भटः,—"द्वौ दशद्वादशाङ्गुलौ । चालने शरपुङ्खास्यौ—" इति ॥

(पृ २६ पं १२) 'बडिशमुखे द्वे' इति स्वानतनात्यानतभेदेन बडिशमुखस्य द्वैविध्यं ज्ञेयम् । बडिशमाङ्ग्लभाषायां 'हुक्–Hook' इति नाम्ना प्रसिद्धम् ॥

बडिशं नात्यानतम् ।



बडिशं स्वानतम् ।



(पृ. २६ पं. १३) हाराणचन्द्रस्तु 'गण्डूपदशरपुङ्खसर्पफणबडिशमुखे द्वे द्वे' इति पठति, व्याख्याति च–एषणादिकर्मैषां यथायोगमेव बोध्यं न तु यथासंख्यम्' इति ॥

(पृ. ६ पं. १३) 'मसूरदलमात्रमुखे द्वे' इति एकमष्टाङ्गुलमपरं नवाङ्गुलं, यदाह **वाग्भटः**,—"स्रोतोभ्यः शल्यहारिणी ॥ मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले—" इति ॥

(पृ. २६ पं. १७) अस्य यन्त्रस्य संप्रति 'Sharp Spoon शार्प् स्पून्' इति नाम्ना व्यवह्रियमाणयन्त्रेण सह सादृश्यमुपलभ्यते। "नासेत्यादिनोक्तमप्यग्निकर्मस्वभिप्रेयते, यदुक्तं "कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् (वा. सू. अ. २५)" इति" **हाराणचन्द्रः** ॥

(पृ. २६ पं. १८) मूत्रमार्गशोधनार्थं सप्रति पाश्चात्यै 'युरिथ्रल् साउण्ड्-Urethral Sound' इत्याख्यं शलाकायन्त्रं, 'कॅथेटर्-Catheter' इत्याख्यं नाडीयन्त्रं च व्यवह्रियते ॥

**शलाकायन्त्रम्=Catheter कॅथेटर।**



(पृ. २६ पं. १९) **वाग्भटे** कर्णशोधनं, गर्भशङ्कुः, अन्त्रवर्ध्मशलाकेति शलाकायन्त्रत्रयमधिकमुक्तम्। यदाह—"कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम्"—इति। तथा "नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः। अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रिया —" इति। गर्भशङ्कोः संप्रति पाश्चात्यैर्मूढगर्भाहरणार्थं व्यवह्रियमाणेन 'क्रोचेट्-Crotehet' इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते। तथा—"शलाकामन्त्रवर्ध्मनि। मध्योर्ध्ववृत्तदण्डां च मूले चार्धेन्दुसन्निभाम्" इति। अन्त्रवर्ध्मशलाका अप्राप्तफलकोशायामन्त्रवृद्ध्यां दाहार्थमुपयुज्यते। यथोक्तं चिकित्सिते (अ. १९) 'तत्र या वंक्षणस्था तां दहेदर्धेन्दुवक्रया' इति ॥

(पृ. २६ पं. २२) 'एकविंशतिः शस्त्राणि, तद्यथा—मण्डलाग्रार्धः मण्डलकरपत्र°' इति ताडपत्रपुस्तके पाठः। **वाग्भटे** (सू. अ. २६) सर्पास्यं, लिङ्गनाशव्यधनी शलाका, कूर्चः, खजः, कर्णपालीव्यधनं,

कर्णवेधनी चेति षट्शस्त्राण्यधिकान्युक्तानि । तेषां लक्षणानि क्रमशो यथा—'सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले' इति, 'ताम्री शलाका द्विमुखी मुखे कुरुवकाकृतिः । लिङ्गनाशं तया विध्येत्', 'सर्ववृत्तास्ताश्चतुरङ्गुला । कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः । संयोज्यो नीलिकाव्यङ्गकेशशातेषु कुट्टने', ता सूच्यः; 'अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः खजः । पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक्', 'व्यधनं कर्णपालीना यूथिकामुकुलाननम्'; 'बहलायाश्च शस्यते । सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधनी' इति । सूचीकूर्चो वृत्तैकमूलोऽग्रे सुनिबद्धसप्ताष्टसूचिक कुष्ठश्वित्रेन्द्रलुप्तसुप्तादिषु । खजस्त्वर्धाङ्गुलायताष्टकण्टकमुखस्ताम्रो लौहो वा नासाभ्यन्तरगतशोणितमोक्षार्थः । कर्णव्यधनं त्र्यङ्गुलायतमङ्गुलशुषिरं घनं यूथिकामुकुलाग्रम्" (वृ. वा. सू. अ. ३४)॥ "कर्णव्यधनं शुषिरभागे भेर्याकृति" इति इन्दुः ॥

(पृ. २७ पं. २२) मण्डलाग्रलक्षणं **वाग्भटे** एव पठ्यते—"मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति । लेखने छेदने योज्यं पोथकीशुण्डिकादिषु—" इति । 'द्वे मण्डलाग्रे ये प्रोक्ते एकं वृत्तमुखं तयोः । तीक्ष्णाधार दृढं कार्यमेकं तच्च क्षुराकृति' इति **भानुमत्यां भोजः** । "मण्डलाग्रं प्रदेशिन्यन्तर्नखविस्तृतफलं, तल्लेखनच्छेदनयोर्वर्त्मरोगोत्सन्नदन्तमांसदुर्निविष्टव्रणगलशुण्डिकादिषु प्रयोज्यम्" (**अष्टाङ्गसंग्रह**, सू. अ. ३४)। 'अन्तर्नखं मांसनिकटं, तदाकृति फलं यस्य तत्तथोक्तम्' इति तद्व्याख्यायामिन्दुः । मण्डलाग्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'Sharp curette शार्प् क्युरेट्' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते ॥

**मण्डलाग्रम् ।**



(पृ. २७ प. २२) करपत्रलक्षणं **वाग्भटे** एवं पठ्यते,—"छेदेऽस्थ्नां

करपत्रं तु खरधारं दशाङ्गुलम् ॥ विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम्–" इति । "त्सरुर्मुष्टिः, बन्धनं ग्रहणं, शोभने त्सरुबन्धने यस्य तत् सुत्सरुबन्धनम् । अभिधानकोशे यद्यपि 'तत्सरुरसिमुष्टि' इत्यभ्यधायि, तथाऽपि मुष्टिमात्रस्येहोपलक्षणार्थत्वान्मुष्टावप्युपपन्नमेव" इति **अरुणदत्तः** ॥ 'द्वादशाङ्गुलदीर्घं स्यात्तनु चाचितकण्टकम् । करपत्रं विजानीयाद्भिषगाकृतिमानतः' इति **भोजवचनं भानुमत्याम्** । करपत्रमाङ्ग्लभाषायां 'सो Saw' इति नाम्ना प्रसिद्धम् ॥ 'अत्र तन्त्रान्तरं

**करपत्रम् ।**



'सप्ताङ्गुलं प्रमाणेन वृद्धिपत्रं द्विलक्षणम् । अञ्चितं चायताग्रं च कारयेत् कुशलो भिषक् ॥ सप्ताङ्गुलं विभज्यैतत् प्रमाणं वृद्धिपत्रयोः । अर्धमेकाधिकं वृन्तं फलं त्रिषु च कारयेत्' इति एकाधिकमिति एकाङ्गुलाधिकत्र्यङ्गुलरूपमर्धम्, एवं सप्ताङ्गुले वृद्धिपत्रे चतुरङ्गुलस्य वृन्तेन गतत्वात् त्र्यङ्गुलफलमुक्तमुपपन्नं भवति । अत्रैवायताग्रं वृद्धिपत्रं क्षुरमाहु, अत एव 'क्षुरकर्तरिकासंदंशैः' इत्याचार्यवचनं क्षुरसंज्ञान्तरवचनादुपपन्नं भवति' इति **चक्रः** । 'वृद्धिपत्रमिति वृद्धिरायतत्वेन समृद्धिपत्रे पत्राकारे फले यस्य तद्वृद्धिपत्रम्' इति **हाराणचन्द्रः** । वृद्धिपत्रलक्षणं **वाग्भटे** एवं पठ्यते,–"वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने । ऋज्वग्रमुन्नते शोथे, गम्भीरे च तदन्यथा ॥ नताग्रं पृष्ठतः–" इति । "वृद्धिपत्रं क्षुराकारं तत्तून्नते श्वयथौ ऋजु सूच्यग्रमिष्टं, विपरीते तु पृष्ठतोऽवनतधारम्" (अ. सं. सू. अ. ३४) । अञ्चिताग्रवृद्धिपत्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'Bistoury–बिस्तुरी' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते; प्रयताग्रस्य च वृद्धिपत्रस्य 'Scalpel–स्केल्पल्' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते ॥

अञ्चिताग्रं वृद्धिपत्रम् ।



प्रयताग्रं वृद्धिपत्रम् ।



(पृ. २७ पं. २२) नखशस्त्रलक्षणं वाग्भटे एवं पठ्यते,-"वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् । सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने"—इति । "नखानां छेदने कार्यं शस्त्रमष्टाङ्गुलायतम् । अर्धाङ्गुलं मुखं तस्य तीक्ष्णारं तु कल्पयेत्' इति भानुमत्यां भोजः । नखशस्त्रमाङ्ग्लभाषायां 'नेल् पेरर्-Nail Parer' इति नाम्ना प्रसिद्धम् ॥

(पृ. २७ पं. २८) 'तीक्ष्णाग्रं कुशपत्रार्धमङ्गुलं दैर्घ्यतः फलम् । वृन्तं स्यात्र्यङ्गुलं यस्य कुशपत्रं तदुच्यते" इत्युक्तलक्षणम्" इति हाराणचन्द्रः । "कुशपत्रे तन्त्रान्तरं-'वृन्तं स्यात्र्यङ्गुलं मध्ये कुशपत्रसलक्षणम्" इति चक्रः । कुश पत्राटीमुखयोर्लक्षणं वाग्भटे एवं पठ्यते—"कुशाटावदने स्राव्ये द्व्यङ्गुलं स्यात्तयो फलम्"—इति "कुशपत्राटामुखे द्व्यङ्गुलफले" इति वृद्धवाग्भटः । कुशपत्रस्याङ्ग्लभाषाया 'पेजेट्स् नाइफ्-Paget's Knife' इति प्रसिद्धेन शस्त्रेण सह सादृश्यमुपलभ्यते ॥

(पृ. २७ पं. २३) अत्र तन्त्रान्तरम्-'आनुपूर्व्यायतां तीक्ष्णां प्रमाणेन दशाङ्गुलाम् । त्रिभागे कीलयोगं हि जानीयात् कर्तरी भिषक्" इति, पाशवती बद्धकीलवती च कर्तरी' इति चक्रः । शरारिर्नाम पक्षी 'सरल' इति विज्ञायते, तन्मुखमिव मुखमस्येति शरारिमुखम् । शरारिमुखसादृश्यस्यात्र ऋजुत्वे तात्पर्यं नत्वायामे, 'शेषाणि तु षडङ्गुलानि' इत्यनन्तरोक्तेः' इति हाराणचन्द्रः । वाग्भटे तु शरार्यास्यं कर्तरी चेति पृथगेव शस्त्रद्वयं पठ्यते । यथा—"स्राव्ये शरार्यास्यत्रिकूर्चके",

तथा—"स्नायुसूत्रकचच्छेदे कर्तरि कर्तरीनिभा–" इति। "कर्तरी त्रिभागपाशा व्रणस्नायुकेशसूत्रच्छेदनार्था" इति वृद्धवाग्भटः। कर्माण्युभयोर्भिन्नमेवोक्तं शरार्यास्यस्य विस्रावणं, कर्तर्याश्च छेदनम्; अत्रापि शस्त्राणामष्टविधकर्मणि विषयभेदकथनावसरे 'सूचीकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे' इति वाक्येन शरारिमुखस्य विस्रावणमेव कर्मोक्तम्, कर्तर्यास्तु कर्म छेदनमेव, तस्मादेतच्छस्त्रद्वयं पृथगेव भवितुमर्हति॥

कर्तरी (Scissors–सीझर्स्)॥



(पृ. ७ पं. २४) कुठारिकालक्षणं वाग्भटे एवं पठ्यते,–"पृथु-कुठारी गोदन्तसदृशाऽर्धाङ्गुलानना। तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम्"—इति। कुठारिकाशस्त्रमाङ्ग्लभाषायां–'एक्सशेप्ड् नाइफ्' Axe shaped Knife इति, 'चिझल्–Chisle' इति वा नाम्ना प्रसिद्धम्॥

कुठारिका। (Chisle)



(पृ. २७ पं. २४) 'व्रीहिविस्तारं मुखस्येति व्रीहिमुखम्' इति हाराणचन्द्रः। व्रीहिमुखलक्षणं वृद्धवाग्भटे एवं पठ्यते,—"व्रीहिमुखमध्यर्धाङ्गुलफलं मांसलप्रदेशसिराव्यधार्थं वृद्ध्युदरगुल्मविद्रध्यादिव्यधनभेदनार्थं च–" इति। व्रीहिमुखमाङ्ग्लभाषायां 'ट्रोकर्–Trocar' इति नाम्ना प्रसिद्धम्॥

## व्रीहिमुखम् ( Trocar )



( पृ. २७ पं. २४ ) आरालक्षणं वाग्भटे एवं पठ्यते,—"आराऽर्धाङ्गुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः । चतुरस्रा तया विध्येच्छोफं पक्कामसंशये ॥ कर्णपालि च बहलाम्"—इति । आरा आङ्ग्लभाषायां 'ऑल्–Awl' इति नाम्ना प्रसिद्धा ॥

( पृ. २७ पं. २४ ) वेतसपत्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'नॅरो ब्लेडेड् नाइफ्–Narrow bladed Knife' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते ॥

## वेतसपत्रम् ।



( पृ. २७ पं. २४ ) बडिशलक्षणं वृद्धवाग्भटे एवं पठ्यते,—"बडिशोऽत्यवनतमुख· सूचीतीक्ष्णाग्रो ग्रहणे गलशुण्डिकार्मादे." इति । बडिशशस्त्रमाङ्लभाषायां 'शार्प् हुक्–Sharp Hook' इति नाम्ना प्रसिद्धम् ॥

( पृ. २७ पं. २४ ) दन्तशङ्कुशस्त्रं वाग्भटे दन्तलेखनकमिति नाम्ना प्रसिद्धम् । तल्लक्षणं च तत्रैवं पठ्यते,—"एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः । दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम्—" इति । दन्तशङ्कुरांग्लभाषायां Tooth Scaler–टूथ्-स्केलर्' इति नाम्ना प्रसिद्धः ॥

( पृ २७ पं. २४ ) एषणीलक्षणं वाग्भटे एवं पठ्यते—"गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषणी । भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा" इति । भेदनं त्वत्र क्षारक्तसूत्रप्रवेशनेन' इति तद्व्याख्यायां हेमाद्रिः । "एषण्यौ द्वे सुश्लक्ष्णस्पर्शे, तयोरेकाऽष्टाङ्गुला गतिकोथश-

ल्यस्राववत्सु व्रणेषु शुषिरान्वे, षणे, अन्या सूचीसंस्थाना क्षारात्तसूत्रप्रतिबद्धा नाडीनां भगन्दरगतीनां च भेदने" (वृ. वा. सू. अ. ३४)॥

(पृ. २८ पं. ५) एषणे इति अपाटितेऽविदीर्णे वा व्रणशोथे भेदनपूर्वकमेषणे तीक्ष्णकण्टकमुखी एषणी (शाप् प्रोब्–Sharp probe) स्यादित्यर्थ, पाटितानां विदीर्णानां वा व्रणानामेषणे तु यन्त्राध्यायपठिता गण्डूपदाकारमुखी (ब्लन्ट् प्रोब्–Blunt probe) एव प्रयुज्यते, आनुलोम्ये तु प्रथमयवपत्रमुखी (डायरेक्टर्–Director) स्यादिति ज्ञेयम्। 'अन्ये पुन· एषणीनां तीक्ष्णकण्टकमुखत्व-प्रथमयवपत्रमुखत्व-गण्डूपदमुखत्वभेदाद्बहुत्वं, तेन 'एषाण्यः एषणे' इति बहुवचनं पठन्ति' इति चक्रः। "आनुलोम्ये तेषामेव (भगन्दरादीना) छेदानुक्रमे, त एव ह्येषण्यनुसारिणा शस्त्रेण यथाक्रममामूलं छिद्यन्ते, वक्ष्यति च 'एषणीं (डायरेक्टर्) दत्त्वा शस्त्रं पातयेत्" इति हाराणचन्द्रः॥

(पृ. २८ पं. ८) "शस्त्राणि तु षड्विंशतिर्भवन्ति। तद्यथा—दन्तलेखनमण्डलाग्रवृद्धिपत्रोत्पलपत्राध्यर्धधारमुद्रिकाकर्तरीसर्पवक्त्रकरपत्रकुशपत्राटामुखान्तर्मुखशरारिमुखत्रिकूर्चककुठारिकाव्रीहिमुखशलाकावेतसपत्राराकर्णव्यधनसूचीसूचीकूर्चखजैषणीबडिशनखशस्त्राणि चेति। तत्र त्रयमाद्यं लेखनेवृद्धिपत्रादीनि त्रीणि पाटने, चत्वारि भेदने, मण्डलाग्रादीन्यष्टौ छेदने, कुशपत्रादीनि पञ्च प्रच्छाने, कुठारिकादीनि षट् व्यधने, तेषामाराव्रीहिमुखे भेदने छेदने च, सूच्यः सीवने सूचीकूर्चकुट्टने, खजो मथने, एषण्येषणे भेदने च, बडिशो ग्रहणे, नखशस्त्रमुद्धरणे छेद्यभेद्यलेख्यप्रच्छानेषु च; इति द्वादशविधे शस्त्रकर्मण्युपयोग." इति वृ. वा. सू. अ. ३४॥

(पृ. २८ पं. १६) चक्रस्तु 'नखवर्धन्येषण्यौ' इति पठति व्याख्याति च—'वर्धनी छेदनी, 'वृधु' छेदने, इत्यस्मात् साध्यम्' इति। "नखशस्त्रमष्टाङ्गुलमेकतोऽश्वकर्णमुखमन्यतो वत्सदन्तमुखं सूक्ष्मशल्योद्धृतौ" (वृ. वा. सू अ. ३४) इति अष्टाङ्गसंग्रहे॥

(पृ. २८ पं १६) "मुद्रिकायां निबद्धं स्याद्वृद्धिपत्रसलक्षणम् । द्व्यङ्गुलं मुद्रिकाशस्त्रं क्षुरसंस्थानमेव च" इति **भानुमत्यां भालुकिः ।** मुद्रिकाशस्त्रं **वाग्भटेऽङ्गुलिशस्त्रमिति** नाम्ना पठ्यते । तल्लक्षणं यथा– "कुर्यादङ्गुलिशस्त्रकम् । मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम् । योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् । सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने–" इति । "अङ्गुलीशस्त्रकं मुद्रिका निर्गतमुखं वृद्धिपत्रमण्डलाग्राध्यर्धधारान्यतमतुल्यार्धाङ्गुलायतधारं प्रदेशिनीप्रथमपर्वप्रमाणापर्णवृत्तमुद्रिकं दृढसूत्रप्रतिबद्धं कण्ठरोगेषु प्रयुज्यते" (वृ. वा. सू अ ३४) इत्यष्टाङ्गसंग्रहे ॥

**मुद्रिकाशस्त्रम्** Finger knife (फिंगर् नाइफ्) ।



(पृ २८ पं १९) 'प्रस्तुतानि शस्त्राणि व्याख्याय, अनन्तरमुपयोगित्वेनानुपेक्ष्यत्वाच्छरारिमुखावान्तरभेदभिन्नं शस्त्रान्तरमुपदिशति–दशेत्यादिना । कर्तरी रोमादिच्छेदार्थ. शस्त्रविशेष.' इति **हाराणचन्द्रः ॥**

(पृ २८ पं. १६) "वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने । मांसलानां प्रदेशानां त्र्यस्रा (Needle with triangular point) त्र्यङ्गुलमायता ॥ अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता ॥ व्रीहिवक्त्रा (Needle with round point) धनुर्वक्रा (Curved needle) पक्वामाशयमर्मसु । सा सार्धद्व्यङ्गुला" इति वाग्भटः (सू. अ. २६) । 'निगूढ· पाशो यस्याः, तस्या पाशस्य पार्श्वयोर्मग्नं सूत्रं न दृश्यते । धनुर्वक्राऽभ्यधिकं न प्रविशति, प्रविशत्येव द्वितीयेन व्रणौष्ठेनागच्छति' इति इन्दुः ॥

पृ. ८ पं. १८) अत्राह वाग्भटः,—"बाहुल्येनाङ्गुलानि षट्," तथा "खोन्मानार्धचतुर्थांशफलानि"—इति । बाहुल्येन प्रायेण विशेषप्रमाणानुक्तौ तानि शस्त्राणि षडङ्गुलानि कार्याणीत्यर्थः, यत्र विशेषप्रमाणमुक्तं तत्र तत्प्रमाणान्येव कार्याणि । खोन्मानार्धचतुर्थांशफलानीति खं च तदुन्मानं च खोन्मानम्, उन्मानं दैर्घ्यं, तस्मादर्धं चतुर्थांशं वा फलं येषा तानि खोन्मानार्धचतुर्थांशफलानि ॥

(पृ. २९ पं. ६) अत्रैषणीलक्षणे 'गण्डूपदाकारमुखी च' इति पाठोऽनार्षः, गण्डूपदाकारमुख्या एषण्या धारारहितत्वेन शस्त्रत्वाभावात् । तस्माद्गण्डूपदाकारमुखी एषणीयन्त्रमेव तीक्ष्णकण्टकमुखी 'शार्प प्रोब्–Sharp probe' प्रथमयवपत्रमुखी 'डायरेक्टर्–Director' चेति द्विविधमेव एषणीशस्त्रम् । 'अत्र शस्त्रे बडिशं पठ्यते यन्त्रे च उभयत्रापि चाहरणं कर्म कर्तव्यं, तथा एषण्यपि शस्त्रे यन्त्रे च पठ्यते, एषणं च उभयत्रापि कर्मोक्तं, तत् कथमनयोर्भेदः ?......परं यन्त्रकर्माहरणमेषणं च शरीरहिंसाव्यतिरेकेण क्रियमाणं ज्ञेयं, शस्त्रकर्माहरणमेषणं च शरीरहिंसायुक्तं, शस्त्रं हि शरीरहिंसकमिति 'शसु' हिंसायामिति धात्वर्थादपि भवति । तेन यंत्राहरणे एषणे वा शरीरावयवहिंसा तच्छस्त्रकर्म, शरीराहिंसकं तु यन्त्रकर्म, अनेनैव च कर्मभेदेन यन्त्रशस्त्रयोरपि भेद इति पश्याम.' इति चक्रः । **हाराणचन्द्रस्तु** 'बडिशं दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टप्रथमयवपत्रमुखे, एषणी गण्डूपदाकारमुखी' इति पठति व्याख्यानयति च–"शङ्कु कीलक इवेति शङ्कुः, दन्तशोधनः शङ्कुर्दन्तशङ्कुरिति शाकपार्थिवादित्वाद्रूपसिद्धिः । आनताग्रं बडिशमानताग्रश्च दन्तशङ्कुरित्यानताग्रे 'नपुंसकमनपुंसकेन' इति क्लीबशेषः । तेन पुनस्तीक्ष्णकण्टकप्रथमयवपत्रमुखे इत्यन्वयः । तथा च तीक्ष्णकण्टकमुखं बडिशं प्रथमयवपत्रमुखश्च दन्तशङ्कुरित्यर्थः । अत्र गण्डूपदाकारमुखत्वेन शस्त्राभावेऽप्येषण्या. शस्त्रत्वेन व्यपदेशः प्रणिधानदोषाच्छस्त्रवत्कार्यकरी भवतीत्याख्यातुं, अतोऽवहितेनैषा प्रणिधेयेति" ॥

'निर्वृत्तानां शस्त्राणां (अग्नितप्तानां) तत्क्षणाद्द्रवद्रव्येषु निर्वापणं पायना' इति हाराणचन्द्रः । (पायना=Tempering) ॥

(२९ प. ११) वाग्भटे शस्त्रसंपादनार्थं शस्त्रकोशोऽप्युक्तः । यथा,—'स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः । क्षौमपत्त्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः । शलाकापिहितास्यश्च शस्त्रकोशः (Surgical Case) सुसंचयः"—इति ॥ 'सान्तराणि–सव्यवधानानि, ऊर्णास्थानि यस्मिन् ससान्तरोर्णास्थशस्त्रकः' इति अरुणदत्तः ।

(पृ. २९ पं. १५) 'कुरुविन्दः—'कुरुन्द' (Corundum) इति प्रसिद्धोऽतिकठिनः पाषाणविशेषः ॥

